अष्टमः पादः

प्रतिषेधाद्बाधः पादार्थः

१. 'नानूयाजेषु येयजामहं करोति' इत्यस्य पर्युदासविधित्वम् 732
२. 'न तौ पशौ करोति' इत्यस्य प्रतिषेधत्वात् विकल्पाङ्गीकरणम् 734
३. अतिरात्रे षोडशिग्रहणाग्रहणयोर्विकल्पः 742
४. जर्तिलादिवाक्यस्य पयोविध्यर्थवादत्वमेव 742
५. आधाने होतव्यं न होतव्यं इत्यादीनां तूष्णींहोमार्थवादत्वम् 744
६. आधाने 'न ब्रह्मा सामानि गायति' इत्यस्य उद्गातुः गाननिषेधपरत्वम् 746
७. 'दीक्षितो न ददाति' इत्यस्य पर्युदासविधित्वम् 747
८. विशेषविहितपदादिना सामान्यशास्त्रविहिताहवनीयादिबाधः, वैधहिंसाया अदोषत्वम् 755
९. अनारभ्य श्रुतस्य सप्तदशत्वस्य मित्रविन्दादिगतवाक्येनोपसंहारः 757
१०. दर्विहोमेषु 'पृथिव्यैस्वाहा' इत्यादीनां नोपसंहारकत्वं अपि तु स्वाहा-पदस्य मन्त्रत्वसिद्ध्यर्थत्वम् 758
११. अग्न्यतिग्राह्यस्य विकृतौ अवश्यकर्तव्यता 760
१२. चतुरवत्तवाक्ये उपस्तरणाभिघारणाभ्यां सहैव चतुरवदानसंपत्तिः 763
१३. उपांशुयाजेपि चतुरवत्तस्यावश्यकत्वाभिधानम् 765
१४. पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् इत्यस्य विधित्वं कृत्वा-चिन्तायां पक्षभेदाः अर्थवादत्वसिद्धान्तश्च 771
१५. उपांशुयाजस्य ध्रौवाज्यमेव द्रव्यम् 773
१६. उपांशुयाजे मान्त्रवर्णिकदेवताप्राप्तिः 775
१७. एकपुरोडाशायामप्युपांशुयाजानुष्ठानम् 777

---

## एकादशाध्यायस्य प्रथमः पादः

तन्त्रं अध्यायार्थः प्रथमपादार्थस्तु केवलप्रधानार्थानामनुष्ठानतन्त्रता


| | | |
|---|---|---|
| १. | दर्शपूर्णमासयोः षड्यागेभ्यः एकैव फलव्यक्तिरुत्पद्यते | 781 |
| २. | क्रतूपकारं प्रति प्रयाजादीनां न विकल्पेन करणता किन्तु समुच्चयेन | 787 |
| ३. | काम्यानां भूयोभूयः फलकामनायां पुनःपुनरावृत्तिः | 793 |
| ४. | दृष्टार्थानामवघातादीनां यावत्फलनिष्पत्ति आवृत्तिः | 796 |
| ५. | प्रयाजाद्यङ्गानां सकृदेवानुष्ठानं आवृत्तेर्वैयर्थ्यं च | 796 |
| ६. | 'कपिञ्जलानालभेत' इत्यत्र बहुवचनस्य त्रित्वे पर्यवसानम् | 798 |
| ७. | 'तूष्णीमुत्तरा दोहयति' इत्यत्र सर्वासाङ्गवां दोहः | 799 |
| ८. | विनियोगविध्येकत्वे असति विशेषश्रवणे एक एव प्रयोगविधिः | 802 |
| ९. | आग्नेयकृष्णग्रीवयागयोः मध्ये सौम्येन व्यवधानात् न तन्त्रेण प्रधाना-नुष्ठानं किन्त्वावृत्त्या | 804 |


---

### द्वितीयः पादः

अङ्गप्रधानार्थानां देशादीनां तन्त्रता पादार्थः ।


| | | |
|---|---|---|
| १. | प्रयोगविधेरतिरिक्तस्य व्यवस्थापनम् | 807 |
| | उत्पत्त्यादिविधीनां लक्षणकथनम् | 810 |
| २. | व्यापकप्रयोगविधिसत्वे व्याप्यप्रयोगविधिसाधनम् | 814 |
| ३. | अध्वरकल्पायां निर्वापापकर्षविधानं प्रातः कालीनहविषामेव | 817 |
| ४. | प्राजापत्यवसाहोमानां तन्त्रत्वम् | 822 |
| ५. | भिन्नदेवताकपशुगणे भेदेनैव वसाहोमः | 822 |
| ६. | यूपाहुतेः यूपान्तिकदेशे अनुष्ठानपक्षेऽपि यूपैकादशिन्यां तन्त्रत्वं | 823 |
| ७. | साङ्गस्यैवावभृथस्याब्देशेऽनुष्ठानम् | 824 |
| ८. | वरुणप्रघासेषु अष्टहविषां मारुतीयागस्य च भेदेनाङ्गानुष्ठानम् | 826 |

९. तत्रैव ब्रह्मा होता आग्नीध्रश्च एक एव न भिन्नः 828

१०. तत्रैव आपराह्निकानां पत्नीसंयाजादीनां विहारद्वये भेदेनानुष्ठानम् 830

११. वाजपेये 'तान् पर्यग्निकृतानुत्सृजति' इत्यत्र न तदन्ताङ्गरीतिविधानं अपि तु आलम्भोत्कर्षमात्रम्। 832

१२. पञ्चशारदीये प्रतिसंवत्सरं कर्मभेदाङ्गीकरणम् 834

१३. राजसूये अभिषेचनीयदशपेययोः भिन्नतन्त्रता 838

१४. वरुणप्रघासेषु अवभृथस्य तुषांशे अर्थकर्मत्वं निष्कासांशे च प्रतिपत्तित्वम् 839

१५. प्रायणीयनिष्कासस्योदयनीयार्थत्वं अर्थाच्च प्रतिपत्तिः 841

---

## तृतीयः पादः

### भिन्नदेशकालानामङ्गानां तन्त्रत्वं पादार्थः

१. अङ्गानां क्वचिद्वचने सति प्रधानान्यकालकत्वम् 843

२. आधानस्य स्वतन्त्रस्य सर्वोद्देशेन तन्त्रता 843

३. ज्योतिष्टोमे यूपस्य पशुयागत्रयार्थं तन्त्रता 844

४. तत्रैव यूपसंस्काराणामपि तन्त्रता 845

५. स्वरुरपि सर्वपश्वर्थे तन्त्रेणैव 848

६. अहर्गणे कृष्णविषाणाप्रासनमन्त एव 849

७. नानाबीजेषु वाग्विसर्गस्यान्त एव करणम् 851

८. अग्नीषोमीयपशौ वाग्विसर्गः पुरोडाशकाल एव 853

९. अग्नियोगस्य प्रधानमात्रार्थत्वमिति भाष्यसिद्धान्तः 855

तस्य साङ्गप्रधानार्थत्वमिति वार्तिकसिद्धान्तः 856

१०. अहर्गणे उपसत्कालीनसुब्रह्मण्याह्वानस्य तन्त्रता 858

११. तत्रैव सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानम् 859

१२. देशस्य ऋत्विजां च प्रयोगभेदेपि पुन. पुनर्विनियोगः 861
१३. पात्राणां तु आन्तं धारणनियमः 862
१४. वाजपेये प्राजापत्याङ्गहविः प्रचारः सर्वसोमान्ते कर्तव्यः 867
१५. सवनीयपशौ सूक्तवाकोत्कर्षे पुरोडाशदेवतापदानामप्युत्कर्षः 870

---

चतुर्थः पादः

यत्र देशकालकर्तॄणां भेदाभेदौ न स्फुटौ तद्विषयतन्त्रावापचिन्ता पादार्थः

१. दक्षिणाभेदश्रवणे कर्तृत्वभेदात् प्रयोगभेदः 872
२. प्रयोगभेदेपि न कर्तृपुरुषभेदः 874
३. अवेष्टौ दक्षिणाभेदात्प्रयोगभेदः 875
४. पवमानेष्टिहविषां काम्यप्रयोगे प्रयोगभेदः 877
५. द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशाहता 878
६. तत्रैव सुत्याकालीनाङ्गानां भेदेनानुष्ठानम् 882
७. तत्रैव उपसत्कालीनसुब्रह्मण्याह्वानस्य न विकारः 884
८. प्राजापत्यपशुषु कुम्भ्यादीनां न भेदः 887
९. भिन्नदेवताकपशुष्वपि तेषां न भेदः 888
१०. भिन्नजातीयपशुषु तेषां भेद एव 888
११. अश्वप्रतिग्रहेष्टौ द्विव्याद्यश्वदाने चतुष्कपालभेदः 889
१२. अवघातमन्त्रस्य प्रतिप्रहारमनावृत्तिः 889
१३. नानाबीजेष्टौ प्रतिप्रहारं मन्त्रावृत्तिः 891
१४. निर्वापादौ प्रत्यभ्यासं मन्त्रावृत्तिः 892
१५. वेदिप्रोक्षणे प्रत्यभ्यासं न मन्त्रावृत्तिः 893
१६. कण्डूयने न मन्त्रावृत्तिः 893
१७. स्वापार्थमन्त्रस्य रात्रौ स्वापभेदेपि नावृत्तिः 894

१८. भृतिवननप्रयाणार्थमन्त्रस्य मध्ये विश्रमणेपि नावृत्तिः 895
१९. उपरवखननार्थमन्त्रस्तु प्रत्युपरवमावर्तते 896
२०. हविष्कृदादिमन्त्राणामावृत्तिः 897

---

## द्वादशाध्यायस्य प्रथमः पादः

प्रसङ्गनिरूपणमध्यायार्थः ।

तन्त्रमध्यपातस्थलीयः प्रसङ्गः प्रथमपादार्थः

१. अग्नीषोमीयप्रयाजादीनां पशुपुरोडाशयागे प्रसङ्गः 902
२. आज्यभागादीनां पुरोडाशे पृथगनुष्ठानम् 906
३. सोमे ऐष्टिकवेदिकरणस्य न पृथगनुष्ठानम् 909
४. सोमे सवनीयपश्वादिषु प्रकृतजुह्वादिपात्राक्षेपकत्वम् 911
५. दैक्षे शामित्राग्निः पुरोडाशपाके न प्रसज्यते 912
६. कुण्डपायिनामयने अग्निहोत्रद्रव्यस्य प्राजहित एव श्रपणम् 913
७. सोमे इष्टिविकाराणां हविर्धानशकटादन्यशकट एव व्रीहिनिर्वापः 915
८. प्रायणीयादिषु दीक्षाजागरणस्य न प्रसङ्गेनोपकारकत्वं 915
९. वरुणप्रघासेषु विहारभेदेन कर्तृभेदात् पृथक् मन्त्रोच्चारणम् 918
१०. दीक्षणीयादिषु न पृथक् अग्न्यन्वाधानम् 919
११. सोमाङ्गेष्ट्यादिषु न पृथक् व्रतग्रहणम् 921
१२. दीक्षणीयादिषु पुनरप्यन्वाधानाक्षेपसमाधानं 923
१३. प्रायणीयादिषु पत्नीसंनहनाभावः 925
१४. प्रायणीयादिषु अरण्याशनस्याप्यभावः 926
१५. तत्रैव शेषभक्षाणामावश्यकत्वम् 926
१६. तत्रैव प्राकृतान्वाहार्यदक्षिणाभावः 927

१७. ऋत्विजामपि शेषभक्षावश्यकत्वम् 928
१८. दीक्षणीयादिषु होतृवरणस्यावश्यकत्वम् 928
१९. आतिथ्याद्यर्थबर्हिषां न भेदेन छेदनाद्यनुष्ठानम् 931
२०. तत्रैव स्तरणमन्त्रस्यावृत्तिः 932
२१. सन्नहनहरणमन्त्रयोस्त्वनावृत्तिः 933

---

द्वितीयः पादः

तन्त्रमध्यपाताभावस्थलीयः प्रसङ्गः पादार्थः ।

१. आहवनीयादीनां श्रौतकर्ममात्रार्थत्वम् 935
२. सवनीयपशौ पशुपुरोडाशस्य सवनीयहविर्भिः न प्रसङ्गः 938
३. हविष्कृदाह्वानस्य सान्नाय्याद्यर्थत्वे सवनीयपशौ आहूतायाः सवनीयहविरुपकारकत्वम् 939
४. क्रत्वचिन्तायामेव तार्तीयसवनिकहविष्षु न हविष्कृदाह्वानम् 940
५. निशीथ्यौ दर्शतन्त्रस्य प्रसङ्गेनोपकारकत्वम् 941
६. विकृतिषु अन्वारम्भणीया कर्तव्या 944
७. विरोधे बहूनां धर्मानुष्ठानम् 944
तत्रैव भाष्यकारमतखण्डनम् 945
८. समसङ्ख्ययोर्विरोधे मुख्यधर्मानुष्ठानम् 947
९. अङ्गप्रधानधर्मयोर्विरोधे प्रधानधर्मानुष्ठानम् 948
१०. परिधेर्यूपकार्ये विधौ उभयधर्मानुष्ठानम् 949
११. विरोधे तु परिधिधर्माणामेवानुष्ठानम् 950
१२. सवनीयपशुसवनीयपुरोडाशयोः पशोरेव तन्त्रित्वम् 951
१३. समानतन्त्रप्रकृतिविकृत्यनुष्ठाने विकृतितन्त्रानुष्ठानम् 954

१४. आग्रयणे प्रसूनमयबर्हिषो ग्रहणम्–कांस्यभोजिन्यायोपपादनम् 956

१५. तत्रैव अविरुद्धधर्मांशे सर्वेषां तन्त्रिता 956

---

## तृतीयः पादः

### प्रसङ्गापवादतया अस्फुटविषये समुच्चयः पादार्थः

१. अग्निरात्रे वत्सत्वगहतवाससोः समुच्चयः 958

२. पशुपुरोडाशस्य तन्त्रित्वं अनुनिर्वाप्यहविषां च प्रसङ्गित्वम् 960

३. एकाघारार्थत्वेन विहितानां ऊर्ध्वत्वादीनां समुच्चयः 964

४. अवान्तरकार्यस्यैकत्वे गुणानां विकल्पः 964

५. एकस्मिन्वैगुण्ये विहितानामनेकेषां प्रायश्चित्तानां विकल्पः 967

६. अदोषनिर्घातार्थानां नैमित्तिकप्रायश्चित्तानां विकल्पः 968

७. कर्माङ्गभूतमन्त्राणां प्रयोगेऽनध्यायदोषाभावः 970

८. जपमन्त्रेषु मन्त्रकाण्डपठितस्वरस्यैव प्रयोगः 971

९. ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरेण प्रयोगः 972

१०. करणमन्त्राणां प्रयोगान्त एव कर्मारम्भः कर्तव्यः 973

११. वसोर्धारायामपि मन्त्रान्त एव कर्मारम्भः 975

१२. आघारेपि मन्त्रान्त एव कर्मारम्भः 979

१३. एकार्थानां करणमन्त्राणां विकल्पः 980

१४. सङ्ख्यायुक्तवचनविनियुक्तमन्त्राणां तु समुच्चयः 980

१५. सङ्ख्यां विना विनियुक्तमन्त्राणां विकल्पः 981

१६. क्रियमाणानुवादिनां हौत्रमन्त्राणां तु समुच्चयः 982

---

चतुर्थः पादः

अत्र स्फटविषये विकल्पसमुच्चयचिन्ता


१. जपस्तुत्याशीर्मन्त्राणां समुच्चयः 983

२. ऐन्द्राबार्हस्पत्ये द्वयोः याज्यानुवाक्यायुगळयोः विकल्पः 984

३. क्रयाणां दशभिः क्रीणातीति वचनात्समुच्चयः 985

४. पशुगणे गुदानां समुच्चयेनोपयाजप्रतिपाद्यत्वम् 987

५. आधानदक्षिणाभेदानां विकल्पः 988

६. पशुगणे जाघनीनां समुच्चयेन पत्नीसंयाजार्थत्वम् 988

७. चयने काम्येनाग्निना नित्योख्यस्य बाधः 990

८. अस्याहवनीयत्वाभावात् न गतश्रीधारणादयः 991

९. तत्र आधानादिसंस्काराभावः 992

१०. नित्योख्यस्य गतश्रीत्वेपि न धारणम् 993

११. अहीनादौ अनेकयजमानसमवाये शुक्रान्वारम्भादयः अनियमेन येन केनचित्कार्याः 994

१२. सत्रे तु गृहपतिरेव तानि कुर्यात् 994

१३. सत्रे यजमानसंस्काराः सर्वेषामेव 995

१४. ब्राह्मणस्यैव आर्त्विज्येऽधिकारः 996

# भाट्टदीपिका

## प्रभावलीसमेता ।

उत्तरषट्कम्

## सप्तमस्याध्यायस्य प्रथमः पादः ।

### जैमिनीयसूत्राणि

(१)—श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावस्स्यात् ॥ १ ॥ उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥ चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत ॥ ४ ॥ अविभागात्तु नैवं स्यात् ॥ ५ ॥ द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥ उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात् ॥ ७ ॥ यदि वाप्यभिधानवत् सामान्यात्सर्वधर्मः स्यात् ॥ ८ ॥ अर्थस्य त्वविभक्तत्वात् तथा स्यात् अभिधानेषु पूर्ववत्त्वात् प्रयोगस्य कर्मणः शब्दभाव्यत्वात् विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥ स्मृतिरिति चेत् ॥ १० ॥ न पूर्ववत्त्वात् ॥ ११ ॥ अर्थस्य शब्दभाव्यत्वात् प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावस्स्यात् ॥ १२ ॥

### भाट्टदीपिका

**एवं साधिकारे** उपदेशेऽवगतेऽधुना तदधीनसिद्धिरतिदेशो निरूप्यते ।

---

### प्रभावली

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुचित्तस्तं बालकृष्णं पितरं नमामि ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥

यद्यप्यत्र गुरोः कृतावपि मयाप्युद्भाव्यते काचना-
ऽसंभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणास्सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्विदं मे मतिः ॥ ४ ॥

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं स्यात्**। अत्र भाष्यकारेण पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तिता। उत्तरेणेदानीमविहितेतिकर्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यत इत्येवं षट्कद्वयसंगतिप्रदर्शनार्थमुक्तमापाततस्तावदयुक्तम्; 'द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन्' (३—५—४) इत्यधिकरणे तृतीयपञ्चमपादे सर्वपृष्ठायामप्रत्यक्षधर्मकायामपि किं स्विष्टकृते सकृदुत्तरार्धादवदेयं उत कर्मभेदात् प्रतिकर्म भेदेनावदेयमिति विचारकरणात्, तथा तत्रैवाष्टमपादे 'सन्निधानाविशेषादसंभवे तदङ्गानाम्' इत्यधिकरणे (३-८-२०) 'दृतिनवनीतमाज्यं भवति' इत्युदाहृत्याप्रत्यक्षधर्मके श्येने विचारकरणाच्च, उत्तरषट्केऽपि प्रत्यक्षधर्मकेषु दर्शपूर्णमासादिषु भूयसो विचारस्य करिष्यमाणत्वाच्च। अतस्तत्रत्ये प्रत्यक्षविहिताप्रत्यक्षविहितधर्मपदे उपदेशातिदेशपरे, न यथाश्रुते इत्यभिप्रेत्य पूर्वषट्कोत्तरषट्कयोर्हेतुहेतुमद्भावावसरसङ्गती दर्शयति—**उपदेशेऽवगते इति** ॥

अयमर्थः—पूर्वषट्के प्रकृतिविकृतिसाधारण्येन उपदेशमात्रं चिन्तितम्। उत्तरषट्के तु तत्साधारण्येनातिदेशचिन्ता करिष्यते। सर्वपृष्ठादिष्वानुमानिकेन वचनेन उपदिष्टानां स्विष्टकृदादीनामुपदेश एव चिन्त्यते—किमुत्तरार्धात्स्विष्टकृते समवद्यतीति वचनं प्रधानावदानदेशस्योत्तरार्धादवदानं विधत्ते? किं वा कृतकार्यस्य[1] द्रव्यस्योत्तरार्धादिति। यद्यप्ययमुपदेशार्थविचारः प्रकृतावपि संभवति, तथापि उभयथापि प्रकृतावनुष्ठानसाम्यात् तत्रानुपयुक्त इति सर्वपृष्ठाविकृतौ कृतः। एवमन्यत्राप्यूह्यम्। एवमुत्तरषट्के प्रकृतिविषयविचारोऽपि अतिदेशतत्प्रसङ्गागत एवेति न किञ्चिद्बाधकम्[2]।

1. A. कृतकरस्य 2. B. न किञ्चित्साधकम्

तथाचोक्तम्—यदपेक्षितधर्माणां प्रत्यक्षं प्रतिपादकम्।
प्रधानसन्निधौ शास्त्रमुपदेशस्स उच्यते ॥ इति।

यद्यप्युपदेशोऽवगते इत्यनेनापि पूर्वषट्कवृत्तप्रदर्शनं भवत्येव, तथापि पूर्वाध्यायार्थनिरूपण-सङ्गतिप्रदर्शनाय **साधिकार** इत्युक्तम्। तथा च सर्वेषामेवाध्यायानां प्रमाणलक्षणाधीनत्वात् प्रथमतः प्रमाणलक्षणे कृते, विनियोगप्रयोगविधिव्यापारनिरूपणपरयोः तृतीयचतुर्थाध्याययोः उत्पत्तिविधिमूलत्वात् उत्पत्तिविधिव्यापारनिरूपणार्थं भेदलक्षणस्य, तदनु विनियोगविधिव्यापार-निरूपणपरस्याङ्गत्वलक्षणस्य, तदनन्तरं शेषशेषिगोचरप्रयोगविधिव्यापारनिरूपणस्य प्रयोज्यत्व-लक्षणस्य चारम्भः। ततश्च प्रयोगविशेषनिरूपणात्मकक्रमलक्षणारम्भः। तत ईदृशैः भेदा-भेदशेषशेषिप्रयोजकाप्रयोजकैवंक्रमयुक्तैः कर्मभिः कोऽधिक्रियत इत्यधिकारनिरूपणे कृते, अव-सरत्वादतिदेशनिरूपणमारभ्यते। न ह्यधिकारनिरूपणं विना साकल्येनोपदेशनिरूपणं कृतं भवति, येन ततः प्रागतिदेशनिरूपणमारभ्येत, 'अयमधिकृतः इत्थं कुर्यात्' इत्याकारकोपदिष्ट-पदार्थविधानानन्तरमेव 'तद्वत् कुर्यात्' इति विधानसंभवात्। प्रायेणोपदेशप्रमाणनिरूपणपरस्य पूर्वषट्कस्य प्रायेणातिदेशप्रमाणनिरूणपरोत्तरषट्कं प्रति हेतुत्वात् हेतुहेतुमद्भावसङ्गतिः, अधिकार लक्षणानन्तरमारम्भे तु अवसरसङ्गतिरिति सङ्गतिद्वयं **अधुना तदधीनसिद्धिरिति** पदद्वयेन दर्शितम्। तत्राष्टमादिषु क्रियमाणं निरूपणमपि उपदिष्टपदार्थसापेक्षमस्त्येवेति तस्याप्यधि-कारलक्षणानन्तरं यद्यपि करणं प्राप्नोति, तथाप्यष्टमादिष्वध्यायेषु करिष्यमाणस्य विशेषविचारस्याति-देशसामान्यसिद्ध्यधीनत्वात् अतिदेशसामान्यं सप्तमेन निरूप्यत इति सूचयितुं **अतिदेशो निरूप्यते** इत्युक्तम्।

तथा च सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति सामान्यतः प्रतिपाद्यते। ततश्चाष्टमेन यो यस्य यतश्चेति विशेषातिदेशः, इत्थं प्रयोक्तव्या इति नवमेन, दशमेनातिदेशिकानां शेषाणां बाधाभ्युच्चयानुनिष्पादिनी इयत्ता, इयत्ताप्रसङ्गेनैव एकादशेन प्रयोगेयत्ता, तस्यामेव सर्वत्र प्राप्तायां तदपवादत्वेनान्यादृशीयत्ता प्रसङ्गादपि भवतीति प्रयोगपरिमाणमन्यादृशं द्वादशेनेति सर्वस्याप्यति-देशसामान्यमूलत्वात् तदेवादौ निरूप्यते।

यद्यपि तन्त्रावापप्रसङ्गा उपदिष्टातिदिष्टपदार्थसाधारणा इति पूर्वषट्के यत्र क्वापि, विशेषतश्च प्रयोगविशेषविचारात्मकत्वेन चतुर्थपञ्चमयोरुपर्येव तेषां निरूपणं कर्तुं युक्तम्, तथापि अतिदिष्टपदार्थविषयत्वेनोत्तरषट्के, विशेषतश्चातिदिष्टपदार्थेयत्ताविचारात्मकत्वात् तदुभयाधीनतया-ऽन्ते कृतं नासङ्गनमिति सर्वमनवद्यम्।

अतिदेशो नाम यः **पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनावधारितः तस्य पदार्थस्य तत्संबन्धित्वेन रूपेण तादृशोपकारद्वारैवान्याङ्गताबोधकं प्रमाणम्। भवति हि 'प्रकृतिवद्विकृतिः कर्तव्या' इत्येवमादिकं वाक्यं प्रयाजादिपदार्थानां यादृशोपकारद्वारा आग्नेयाङ्गत्वेनावधारितानामाग्नेयादिसम्बन्धित्वेन रूपेण तादृशोपकारद्वारा सौर्याद्यङ्गत्वबोधकम्।**

'एतद्ब्राह्मणान्येव **पञ्च हवींषि' इत्यपि च तदीयब्राह्मणवत्त्वज्ञापनद्वारा तदीयधर्माणां ब्राह्मणार्थभूतानामुक्तरीत्यैव विकृत्यङ्गत्वबोधकम्। 'मासमग्निहोत्रं' इत्यग्निहोत्रनामापि तदीयधर्मवत्त्वलक्षणया गौण्यैव वोक्तविधाङ्गत्वबोधकम्।**

---

अत्र परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशो येन भवति स अतिदेशः इत्यवयवयोगेनातिदेशपदार्थो भाष्यकारेण दर्शितः। तत्र प्राचां श्लोकोऽप्युदाहृतः—

प्रकृतात्कर्मणो यस्मात तत्समानेषु कर्मसु।
धर्मप्रदेशो येन स्यात सोऽतिदेश इति स्थितिः॥ इति।

तथाऽन्यत्रापि—अन्यत्र विहितायास्तु कृत्स्नाया धर्मसंहतेः।
अन्यत्र कार्यतःप्राप्तिरतिदेशोऽभिधीयते॥ इत्युक्तम्।

तमिममेवातिदेशपदार्थमतिप्रसङ्गपरिहारेण निर्दुष्टं लक्षणव्याजेन दर्शयति—**अतिदेशो नामेति।**

अत्र च **यद्यपि** प्राभाकरमते अपेक्षासन्निधियोग्यत्वैः उपकारातिदेशो प्रथमतः कल्पिते, पश्चात्तज्जनकपदार्थापेक्षया पृथक् पदार्थातिदेशः कल्प्यते। पार्थसारथिमते तु पदार्थविशिष्टोपकारणामेवातिदेशः, आर्थिकस्तु विशेषणानां पदार्थानामतिदेशः कल्प्यते। उभयथापि उपकाराणामङ्गत्वाभावात् पदार्थत्वाभावाच्च नोपकारातिदेशे लक्षणमिदं संभवति। अत एव **उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात्** (पू. मी ७ १. ७.) इत्यत्रत्यसिद्धान्तसूत्रं अन्ते व्याचक्षाणेन तन्त्ररत्नकृता य एव ह्यन्यत्र श्रुतस्योपकारस्य पदार्थस्य वा तत्संबन्धाबाधेन[1] तमतीत्यान्यत्र देशः स एवातिदेश इति अतिदेशलक्षणकथने **उपकारस्ये**त्यपि तत्र निवेशतम्।

**तथापि** दशमाद्ये 'तत्त्वं तु प्रकृतियोग्यताजनकैः विकृतियोग्यतां प्रकृतिवज्जनयेत्' इत्यादिना ग्रन्थेन उभयविषयकस्यैवातिदेशस्य कल्पनीयत्वेन स्वयं वक्ष्यमाणत्वात् उपकारवत्पदार्थातिदेशाभिप्रायेणेदमुक्तं लक्षणं न विरुद्ध्यत इति ज्ञेयम्।

वाचनिकब्राह्मणातिदेशे ब्राह्मणस्यापदार्थत्वेऽपि लक्षणसमन्वयं दर्शयति-**एतद्ब्राह्मणानीति।**

---

1. A. सम्बन्धबाधेन

एवं **स्थानापत्त्यतिदेश आश्रयतो धर्मातिदेशेऽपि च लक्षणसमन्वयो बोध्यः।**

अत्र च **दर्शपूर्णमासादीनां स्वर्गाद्यङ्गत्वेनावधारितानां तेनैव द्वारेण पापक्षयाद्यङ्गताबोधके यावज्जीवादिवाक्ये अतिप्रसङ्गवारणाय तत्सम्बन्धित्वरूपेणेति विशेषणम्। न हि दर्शादेस्स्वर्गसम्बन्धित्वेन रूपेण पापक्षयार्थता, प्रमाणाभावात्। अपि तु दर्शत्वादिनैव। प्रकृते तु प्रयाजादीनां आग्नेयेतिकर्तव्यतात्वेनैवानुगमात्तदेव विकृतिसम्बन्धितावच्छेदकम्। पुरोडाशकपालादेश्च पुरोडाशसम्बन्धित्वेनावधारितस्य तेनैव रूपेण तुषोपवापाङ्गत्वात् तद्बोधकवाक्येऽतिप्रसङ्गवारणार्थं तादृशोपकाराद्वारेति विशेषणम्, पुरोडाशे स्वप्रयोजकीभूतश्रपणाधिकरणत्वेन, तुषोपवापे स्वाप्रयोजकीभूतोपवापकरणत्वेनेति तत्र द्वारभेदात्।**

**केचित्तु सादृश्यकल्पितवाक्यत्वमतिदेशत्वमित्याहुः। तदतिदेशान्तरेष्वव्यापक-**

---

अत्र च ब्राह्मणस्य अथवा तदर्थस्यातिदेशो वक्ष्यते। उभयथाप्यर्थानामेवातिदेशः फलतीति न बाधकमित्यर्थः। **तदीयेति** पदद्वयस्य वैश्वदेवीयेत्यर्थः।

**एवमिति।** तत्र स्थानापत्त्यादिकल्पितातिदेशवाक्यमेवाङ्गताबोधकमित्यर्थः।

**अत्र चेति।** यद्यपि दर्शपूर्णमासजन्यं स्वर्गजनकं पापक्षयजनकं च अपूर्वं भिन्नं सामग्रीभेदेन तद्भेदावश्यंभावात्। काम्ये हि तत्तत्कामोल्लेखघटितसङ्कल्पपूर्विका यावद्वचनविहिता सर्वा सामग्री एका; तथापि सङ्कल्पभेदघटितत्वात् भिन्नैव सा। अशक्तं प्रति तु स्पष्टमेव भिन्ना। अत एव नित्ये शक्त्यशक्तिभेदेन पापक्षयतारतम्यम्। काम्यारम्भोत्तरमशक्तौ काम्यमानस्वर्गानुत्पत्तिश्च सामग्रीभेदादेवोपपादिता षष्ठे। न ह्यपूर्वभेदं विना फलतारतम्यं शक्यनिरूपणं, सर्वेषामेव धर्माणामपूर्व एव तारतम्यजनकत्वात्। एवंच काम्यदर्शपूर्णमासयोः स्वर्गजनने यः अपूर्वरूप उपकारः नासौ नित्यजन्यफलजनन इति **तादृशोपकारद्वारा** इत्यनेनैव भवत्येव तद्वारणम्।

तथापि दर्शपूर्णमासव्यक्तिनिष्ठकारणतारूपव्यापारैक्यमादाय प्रसक्तातिव्याप्तिवारणतात्पर्यकमेवैतत द्रष्टव्यम्। अथवा उभयत्राप्यपूर्वमेकमेव लाघवात्, सामग्रीभेदस्य परं तत्तद्विजातीयफलजननानुकूलतत्तदपूर्वनिष्ठातिशयाधायकत्वमेवेत्युपकारभेदाभावो द्रष्टव्यः।

वस्तुतस्तु गृहमेधीयाज्यभागपुनःश्रवणमेव निस्सन्दिग्धं **तत्संबन्धित्वेन रूपेणेति** पदकृत्योदाहरणं सुवचम्। न हि तत्र प्रकृतिसंबन्धित्वमपि विधेयतावच्छेदकं, अश्रवणात्; अपि तु आज्यभागत्वमेव, प्राकृतत्वेन क्लृप्तोपकारजनकत्वात। गृहमेधीयेष्ट्याकाङ्क्षाशामकत्वादिना

त्वादुपेक्षितम्। अतिदेशनिरूपणोपोद्घातत्वेनेदं निरूप्यते।

---

चोदकपरिलोपस्तु फलतस्तात्पर्यविषयीभूत एव, न तु शाब्द इति तदधिकरणे व्यक्तमिति न बाधकम्। उपेक्षितमिति। अत्र वक्तव्यं नामातिदेशनिरूपणे दर्शयिष्यते।

अत्र भाष्यकारादिभिः अतिदेशविचारोपोद्घातत्वेन विचारितम्[1]—किं यजिप्रयुक्ता धर्माः उतापूर्वप्रयुक्ता इति। यजिप्रयुक्तत्वे पारिप्लवता धर्माणां, अपूर्वप्रयुक्तत्वे तु यत्प्रकरणे श्रुतास्तदपूर्वेणैव संबध्यन्त इति न सा भवति। तत्राग्नेयादिवाक्यैराग्नेयादियागानामुत्पत्तेः विश्वजिन्न्यायेन स्वर्गफलस्य च प्राप्तत्वात् अनन्यगतिकं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यं फलवतो यागानुद्दिश्य समिदादिधर्मविधायकमिति यागत्वावच्छिन्नोद्देशेन धर्मविधानात् सर्वार्थत्वम्। दर्शपूर्णमासस्वर्गकामपदे च उद्देश्यविशेषणत्वादविवक्षिते। पर्वकालत्वाद्यागानां दर्शपूर्णमासपदं, स्वर्गपदं च अधिकृतमात्रोपलक्षणमित्यनुवादः। न च यागस्य करणत्वेनासाध्यत्वात् नेतिकर्तव्यतापेक्षित्वं, कर्तव्यस्यैव तदपेक्षित्वादिति शङ्क्यम्। करणभूतस्यापि यागस्य असिद्धस्य, फलार्थतया अपूर्वस्येव[2] कर्तव्यत्वेनावगतस्य तदपेक्षित्वसंभवात्। न च सन्निधिमात्रेणाग्नेयादीनामेवोद्देश्यत्वम्; अविशेषप्रवृत्तयजिश्रुत्या तद्बाधादित्येकः पूर्वः पक्षः।

अपरस्तु—फलवाक्यमेव धर्मविधायकं, परं तु फलसंबन्धप्राप्तिस्तु न विश्वजिन्न्यायलभ्या, तथात्वे तेनैव न्यायेनाविशेषात् समिदादीनामपि तत्फलकत्वापत्तौ परस्परं धर्मधर्मिभावानुपपत्त्या पारिप्लवताऽसंभवात्। अतः सर्वकामवाक्यादेव स्वर्गप्राप्तिमुपपाद्य यावत्समिदादीनां विश्वजिन्न्यायेन फलार्थत्वं कल्प्यं ततः पूर्वमेवानेन फलवाक्येनानन्यगतिना सर्वयागाङ्गत्वेन विनियोगः क्रियत इति पारिप्लवत्वमिति।

तृतीयस्तु—फलवाक्यस्य धर्मसंबन्धपरत्वे दर्शपूर्णमासपदफलपदयोरविवक्षितार्थत्वापत्तेः स्वर्गकामवाक्यं फलसंबन्धबोधकमेव। सर्वकामवाक्यमेव[3] तु स्वर्गातिरिक्तफलबोधकमिति स्वर्गकामवाक्ये फलोद्देशेन यागविधाने तस्योपादेयस्य धर्मान् प्रत्युद्देश्यत्वे च विरुद्धत्रिकद्वयापत्तिः; अतः प्रकरणकल्पितवाक्येन सामान्यरूपेण धर्माणां सर्वार्थत्वम्। न च तद्वाक्ये दर्शपूर्णमासपदमुद्देश्यविशेषणं भवति प्रामाणाभावात्। प्रकरणस्य चाविशेषकत्वात्। अत एव करणा-

---

1. A. विचारितः
2. A. अपूर्वस्यैव
3. A. omits वए

नुग्राहकत्वादितिकर्तव्यताया भावनासंबन्धेऽपि स्वतः तदनुग्राहकत्वासंभवे करणद्वारैवान्वयस्यावश्य-वाच्यत्वात् लाघवात् प्रथमत एव करणान्वयो युक्त इति सर्वयागरूपकरणद्वारा तज्जन्यसर्वापूर्वार्थत्व-मिति ।

सिद्धान्तस्तु—स्वर्गकामवाक्यस्य धर्मविधायकत्वं तावत् विरुद्धत्रिकद्वयापत्तेर्भवतैव दूषितम्। प्रकरणानुमितवाक्यकल्पनयापि न तत् संभवति । तथात्वेऽङ्गवाक्यानां प्रधानवाक्यानां च भिन्नवाक्यताकल्पनेन वाक्यभेदापत्तेः । यागस्य निर्ज्ञातोपायत्वेन इतिकर्तव्यताकाङ्क्षाभावेन प्रकारणस्यात्र वाक्यान्तरकल्पकत्वासंभावाच्च । अतः स्वर्गकामवाक्ये दर्शपूर्णमाससंज्ञकयाग-करणकभावनायाः फलोद्देशेन विधानात् भावनायाः भाव्यकरणाकाङ्क्षया भाव्यकरणयोरिव कथ-[1] मित्यपेक्षया इतिकर्तव्यताया अपि भावनयैवान्वयो युक्तः, न तु भाव्यकरणयोः, कथमिति हि प्रकारापेक्षेयम्; सामान्यस्य भेदको विशेषः प्रकार इत्युच्यते । नह्यत्र फलगतो विशेषोऽ-पेक्षितः कीदृशं फलमिति । नाप्यपूर्वं, नापि कीदृशेन यागेनेति । अपि तु यागानुरक्तफलानुकूल-व्यापारविशेषः अपेक्षितः—कीदृशे व्यापारे यागगतेऽनुष्ठिते यागेनापूर्वं कृतं भवतीति भावनाया एव तदाकाङ्क्षा; न यागापूर्वफलानां स्वयं भावनामनपेक्ष्य इत्थमित्याकाङ्क्षास्ति । भाव्यनिष्ठत्वात्तु भावनायाः तत्संबद्धं धर्मजातं भाव्यप्रयुक्तं भवति भाव्यं चापूर्वमित्यपूर्वप्रयुक्तत्वाभिधानम् । न हि स्वरूपेणापूर्वस्य इत्थं भावसंबन्धोऽस्ति, किंतु इत्थं कर्तव्यमिति कृतिद्वारेणैवापूर्वसंबन्धः । अत एव द्रव्यदेवतादिषु व्यापारसंपादकत्वात् तद्द्वारेणैवेतिकर्तव्यताव्यवहारः न स्वरूपेण । यद्यपि च श्रुतत्वात् पुरुषार्थत्वाच्च विधेयभावनाभाव्यत्वेन स्वर्गादेरेवान्वयात् भाव्यमानफलप्रयुक्तत्व-मेव युक्तम् , नत्वपूर्वप्रयुक्तत्वं; तथापि फलस्य कालान्तरभावित्वेन प्रयोगासमवेतस्य कर्तव्यत्वा-संभवे तत्सिध्यर्थापूर्वस्यैव कर्तव्यनावधारणात् यागेनापूर्वं कृत्वा फलं भावयेदिति श्रुतानुमितैकदेश-निष्पन्नवाक्यार्थे जाते अपूर्वे कृते तत एव कालान्तरे फलं भविष्यतीति निश्चयेनापूर्वपर्यन्तमेव व्याप्रियते कथं च तन्निर्वर्तयामीति । तदर्थं चेतिकर्तव्यतामाकाङ्क्षति । ततश्च तस्या-माकाङ्क्षायामुपदिश्यमानं धर्मजातमपूर्वप्रयुक्तं भवति ।

तेनायमत्र क्रमः— यागेन फलं भावयेत् । कथम्? अपूर्वं कृत्वा । कथमपूर्वं कर्तव्यम्? अनया अग्न्यन्वाधानादिकयेतिकर्तव्यतयेति ।

एवञ्चापूर्वभावनायाः प्रकाराकाङ्क्षित्वात् समिदादियागानां च भाव्याकाङ्क्षित्वात् इति-कर्तव्यताकाङ्क्षारूपप्रकरणेनाप्रत्यक्षमप्येकवाक्यत्वं 'समिधो यजति इत्थं दर्शपूर्णमासाभ्यां यजेत इत्येवं प्रधानाङ्गवाक्यानां कल्प्यत इति न वाक्यान्तरकल्पनायां प्रमाणं, येन सर्वयागार्थत्वमा-

1. A. इत्थमित्य

किं प्रयाजादीनामुपदेशेन प्रकृतिमात्रार्थत्वं उत प्रकृतिविकृतिसाधारण्यमिति। साधारण्ये हि अतिदेशवैयर्थ्यमित्युपोद्घातता। तत्र यद्यपि प्रयाजादिषु आग्नेयादिमात्रविषय-प्रकरणादेर्विशेषविषयत्वम्, तथाऽपि तत्कल्प्यस्य वाक्यस्य 'प्रयाजादिभिर्यजेत' इत्येतादृशस्यैव कल्पना, न तु प्रयाजादिभिराग्नेयादिः कार्य इति; आग्नेयादिभेदेनानेकवाक्य-कल्पनापत्तेः। नापि दर्शपूर्णमासौ कार्याविति; तथात्वे उद्देश्यवाचकस्य विधिवाचकस्य च पदद्वयस्य कल्पनापत्तेः। तत्र च यागत्वस्यैवोद्देश्यतावच्छेदकत्वात्सर्वार्थत्वसिद्धिः।

न हि तत्र प्रयाजादिविशिष्टयागकरणकप्रकृतभावनाविधिः येन विशिष्टक्रयविधिवत्[1] प्रयाजादीनां प्रकृतभावनायामेवान्वयात्पार्ष्ठिकान्वयेऽपि प्रकृतयाग एवान्वयस्स्यादित्याशङ्क्येत।

भावनानामुत्पत्तिवाक्यादेव प्राप्तत्वान्न च विशिष्टविध्याशङ्का। उत्पत्तिवाक्येष्वेव तु प्रयाजादिवैशिष्ट्यं भिन्नवाक्यत्वादेवासंभवि।

---

पद्येत। विधेयफलभावनान्वये तु यागस्य प्रकृतस्य फलविशेषाकाङ्क्षिणः आग्नेयादेर्विजातीयस्यैव विधिबलाद्विधेयत्वावगतेः प्रत्युत दर्शपूर्णमासनामतश्च इतरव्यावृत्तस्यैव यागविशेषस्य भावना-करणत्वेनान्वयात् शब्दान्तरादिना भावनाया अपूर्वस्य च भेदात् दर्शपूर्णमाससंज्ञकयाग-करणकभावनान्वयित्वमेव धर्माणामिति तन्मात्रजन्यापूर्वार्थत्वमेव। न च भावनान्वयित्वे परस्परनियमासंभवे करणानुग्राहकत्वानुपपत्तिः। प्रथमतो भावनान्वयेऽपि भावनायाः साधनगत-व्यापारविशेषत्वेनैव तदपेक्षणात्। अरुणैकहायनीन्यायेन पार्ष्ठिकपरस्परनियमसंभवेन करणानु-ग्राहकत्वोपपत्तेरिति।

तदिदं यागप्रयुक्तत्वाप्रयुक्तत्वं धर्माणां विचारितं पूर्वसिद्धान्तपक्षयोरविशेषकरत्वा-दयुक्तमिति वक्ष्यते। अतस्तदुपेक्ष्य यज्यर्थत्वाङ्गीकारेणैव विचारमतिदेशविचारोपोद्घातरूपं दर्शयति—**किं प्रयाजादिनामिति।** **उपदेशेनेति।** उपदेशो नाम 'अन्यसंबन्धानपेक्षमेव पदार्थानां कार्याणां वा प्रत्यायकं प्रत्यक्षं अनुमेयं वा शास्त्रम्' इत्येवंरूप उक्तः। तेन विधीय-मानानां धर्माणामित्यर्थः। **तत्र चेति।** यागत्वावच्छिन्नस्योद्देश्यत्वेनेतरयागेष्विवाग्नेयादि-यागेष्वपि धर्मलाभादितिकर्तव्यताकाङ्क्षाशान्तेस्तद्विषयकेतिकर्तव्यताकाङ्क्षारूपस्य प्रकरणस्य कल्प्य-मानवाक्यकल्पकस्य नैव बाध इति भावः।

**नहि तत्रेति।** कल्पितवाक्यं तत्रपदार्थः। **भावनानामिति।** आग्नेयादियागभावनाना-मित्यर्थः। प्रधानवाक्यैकवाक्यतामङ्गवाक्यानामङ्गीकृत्य तत्प्रधानमात्रार्थत्वं सिद्धान्त्यभिमतं दूषयति-

---

1. अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीत्यत्र आरुण्यादिविशिष्टविजातीयक्रयभावना-विधानात् पार्ष्ठिकबोधे एकहायन्यामेवारुण्यनिवेशः न तु वास आदौ; तद्वदित्यर्थः।

नहि तत्तद्वाक्यार्थबोधवेलायामनन्वितस्य प्रयाजादेर्वाक्यैकवाक्यतावेलायामन्वयस्संभवी। सकृदुच्चरितस्य विधेरैकरूप्येणैकशाब्दबोधजनकत्वनियमात्। अतः प्रयाजादीनां न प्रकृतिमात्रगामित्वम्। अथवा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यं न स्वर्गसंबन्धपरं, सार्वकाम्यवाक्येनैव प्राप्तेः; अपि तु समिदादिवाक्यैकवाक्यतया यागोद्देशेन प्रयाजादिविधिपरम्। अतश्च तत्र यागत्वस्यैवोद्देश्यतावच्छेदकत्वात् सर्वार्थता। न च तत्र दर्शपूर्णमासपदं उद्देश्यविशेषणं उद्देश्यसमर्पकं वाऽस्त्विति शङ्क्यं, विशिष्टोद्देशे वाक्यभेदापत्तेः। धातोरुद्देश्यपरत्वे सम्भवति उपपदस्यान्याय्यत्वाच्च। अतश्च तत्रत्यं दर्शपूर्णमासपदं रूढ्या कालपरमेव सत् सर्वयागेषु 'य इष्ट्या' इति वाक्यप्राप्तकालानुवादकम्। अधिकरणस्यापि करणत्वाच्च तृतीया। तथा स्वर्गकामपदं च अवयुत्यानुवादः, सर्वथा सर्वधर्माणां सर्वफलवदर्थत्वमुपदेशेनैवेति न क्वचिदतिदेशसिद्धिः। एवं च 'समानमितरच्छ्येनेन' इत्याद्यनुवाद एव। 'अग्निहोत्रं' इत्यादिनामापि 'सिंहो देवदत्त' इतिवत्सिद्धसादृश्यं तत्प्रख्यन्यायमेव वाऽऽदायानुवाद इति प्राप्ते।

यद्यपि यागानुवादेन धर्मविधिः तथाऽप्यनुवादस्य सति सम्भवे सन्निहितगामित्व-

---

**न हि तत्तदिति।** **ऐकरूप्येणेति।** प्रधानवाक्यैरेकवारं तत्तद्यागमात्रकरणकभावनाविशेष्यकबोधजननानन्तरं पुनःप्रयाजादिविशिष्टत्वेन बोधजनने एकरूपार्थबोधजनकत्वनियमभङ्गापत्तिरित्यर्थः। इदानीमङ्गवाक्यानां प्रधानवाक्यैकवाक्यतामङ्गीकृत्यैव सर्वार्थत्वं धर्माणां पक्षान्तरेण साधयति— **अथवेति।** स्पष्टार्थमन्यत्। अत्र चाधिकारवाक्यस्य धर्मविधायकत्वेन उपदेशादेव सर्वत्र तल्लाभात् अतिदेशानारम्भपूर्वपक्षकरणं एकवाक्यतामङ्गीकृत्यापि दर्शपूर्णमासार्थत्वं नास्तीति क्वचित्प्रदर्शनमात्रार्थम्। न तु तद्बलेनैव पूर्वपक्षप्रतिपादनतात्पर्यम्। अन्यथा राजसूयाश्वमेधद्वादशाहप्रकरणपठितानां धर्माणां पारिप्लवत्वानुपपत्तेः। न हि तत्राधिकारवाक्यस्यानन्यगतित्वेनैकवाक्तया धर्माणां सर्वार्थत्वप्रतिपादकत्वं संभवति। तत्र प्रजादिरूपफलसंबन्धस्यान्यतः अप्राप्तत्वेन तद्विधानावश्यकत्वात्। अत एव तन्त्ररत्ने प्रकरणानुमितवाक्यबलादेवान्ते पूर्वपक्षो दृढीकृत इति।

पक्षद्वयेनाप्युपपादितं पूर्वपक्षमेकहेलयैव दूषयति—**यद्यपीति।** अत्र च व्रीहिभिर्यजेतेतिवदिति दृष्टान्तो नोभयवादिसम्प्रतिपन्नः; तत्रापि पूर्वपक्षे औषधद्रव्यकप्रकृतिद्रव्यसापेक्षयागमात्रोद्देशेनैव व्रीहिविधानाङ्गीकारेण प्रकृतमात्रग्रहणस्यानभिमतत्वात्। एवं 'अपूर्वसाधनत्वलक्षणार्थं विशेषतः प्रकरणानुग्रहोऽपेक्षितः' इत्यपि शिथिलम्। यागत्वावच्छिन्नोद्देशेन धर्मविधानपूर्वपक्षे आनर्थक्यपरिहारार्थं लक्षणावश्यकत्वेऽपि यावत्फलवदपूर्वसाधनत्वावच्छिन्नलक्षणाङ्गीकारेण प्रकृतापूर्वसाधनत्वलक्षणायां प्रमाणाभावात्। न ह्यत्र लौकिकव्रीह्यादिव्यावर्तकापूर्वसाधनत्वबोधस्याव-

**नियमात् 'व्रीहिभिर्यजेत' इतिवत् प्रकृतमात्रगामित्वम्, विशेषतश्च नवमाद्यन्यायेन याग-स्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणार्थमपि प्रकरणानुप्रवेशः ।**

**वस्तुतस्तु उत्पत्तिवाक्येषु आकाङ्क्षाबलेनेष्टसामान्यस्य भाव्यत्वकल्पनावत् इति-कर्तव्यतासामान्यस्यापीत्थमिति पदकल्पनयाऽन्वयस्वीकारात्स्वर्गादिवाक्यवच्च प्रयाजादि-**

---

घातादिवाक्ये प्रकरणाधीनत्वस्येवेह यागगतापूर्वसाधनताबोधस्य तदधीनत्वं, अधिकारलक्षणस्य प्रकरणस्य अविशेषप्रवृत्तयजिश्रुत्या बाधात्; इतिकर्तव्यताकाङ्क्षालक्षणस्य च तस्य सर्वयागेष्व-विशिष्टत्वात् । किन्तु जुह्वादिन्यायेन यजिपदेन स्वार्थोपस्थितिद्वाराऽव्यभिचरितसंबन्धात् उपस्थित-मपूर्वसाधनत्वं शाब्दत्वसिद्ध्यर्थं लक्ष्यते । तच्च रूपं सर्वयागेष्वविशिष्टमिति सर्वत्र धर्मा भवन्त्येवेति क्व प्रकरणानुप्रवेशस्यावश्यकत्वम्? अतो यजिपदेन प्रकृतयागोपस्थितिरित्यर्थस्यैव साधन-मत्र मुख्यतया कर्तव्यम् । तदनु अपूर्वसाधनत्वलक्षणापि प्रकृतापूर्वविषये व्यवस्थिता भवतीति **व्रीहिभिर्यजेतेतिवत्** इति दृष्टान्तः **विशेषतश्चेति** ग्रन्थश्च न तथा पूर्वपक्षखण्डनोपयोगीत्यव-धेयम् । अतो यजिश्रुतेः सामान्याभिधायिन्याः प्रकृतफलवदितिकर्तव्यताकाङ्क्षियागाभिधानेऽपि तेषु यागत्वानपायादुपपत्तेः सन्निहितोपस्थित्यबाधेन यजिपदार्थस्योद्देश्यत्वोपपत्तौ न सर्वयागग्रहणं युक्तमित्येव व्रीहिभिर्यजेतेति दृष्टान्तसाधारण्येन वक्तुं साधु ।

**वस्तुतस्त्विति** । अत्र च पूर्वोक्तैकवाक्यतापन्नाधिकारवाक्येनांशत्रयविशिष्टभावना-विधाने सति अरुणैकहायनीन्यायेन प्रकृतदर्शपूर्णमासान्वयिन्येवेतिकर्तव्यता भवतीति सिद्धान्ते भाष्यादिषु तादृशभावनाविधानेऽपि यजिपदेन श्रुत्या सर्वयागाभिधाने सति पदान्तरोपात्तत्वेन विलम्बितोपस्थितदर्शपूर्णमासार्थेन विशेषणविधया सङ्कोचायोगात् सर्वयागकरणकानां सर्वासामेव भावनानां विशिष्टवेषेण विधानापत्त्या सर्वयागार्थत्वमितिकर्तव्यताया भविष्यतीत्याशङ्क्य, पूर्वोक्तरीत्या यजिपदेन प्रकृतानामेव दर्शपूर्णमासनामकानां ग्रहणात, तदुत्तरप्रत्ययेन तद्विषयक-भावनानामेव ग्रहणात् प्रकृतभावनाग्राहित्वमिति परिहृतम् । एवञ्च यजिपदेन प्रकृतग्रहणात् तन्मूलकं भावनानां प्रकृतत्वं साधितं भवति । तत्र भावनानां प्रकृतत्वसाधनमूलकमपि यागानां प्रकृतानां ग्रहणं युक्त्यन्तरेण साधयितुं शक्यत इति ज्ञापयितुमनेन युक्त्यन्तरं सूचितं द्रष्टव्यम् । तथा चाग्नेयाद्युत्पत्तिवाक्येषु सिद्धभेदभावनानां यथा इष्टसामान्यस्य विशेषापेक्षया स्वर्गवाक्यैक-वाक्यतया स्वर्गरूपविशेषान्वयित्वम्,[1] एवं इत्थमिति सामान्यस्य विशेषापेक्षया समिदादिवाक्य-बोधितेतिकर्तव्यताविशेषान्वयित्वमेव तदेकवाक्यतया कल्पनीयमिति त्रयाणां वाक्यानामेक-वाक्यतायां नान्ययागेषु तत्प्रसक्तिः ।

---

1. A. त्वमेव सिद्धम् etc.

**वाक्यानां विशेषसमर्पकतया तद्वदेव वाक्यैकवाक्यत्वोपपत्तेरंशत्रयविशिष्टविजातीय-भावनाया एव विधानात् पार्ष्ठिकान्वये च प्रकृत एव तद्भावनाकरणीभूते यागेऽनुग्राह-कत्वकल्पनान्न सर्वार्थत्वमौपदेशिकम्।**

उत्पत्तिवाक्य **इतिकर्तव्यतासामान्यान्वयाच्च न सकृदुच्चरितस्य विरूपानेकबोध-जनकता।** वाक्यैकवाक्यता**जन्यबोधस्तु न श्रुतशाब्दबोध**[1] **इति न सरूपनानाबोधजन-कत्वमप्येकस्य। अतः पारिप्लवत्वाभावादधर्मकाणामैन्द्राग्नादीनां धर्माकाङ्क्षायामतिदेश-सिद्धिः। यत्तु मूले अतिदेशसिद्ध्यर्थं यजिप्रयुक्तत्वं वा धर्माणामपूर्वप्रयुक्तत्वं वेति चिन्तान्तरं कृतम्;** तत् यजिप्रयुक्तत्वेऽपि **प्रकृतयजिप्रयुक्तत्वोपपत्तेः इतरथाऽपूर्वप्रयुक्तत्वेऽपि**

---

यद्यप्यन्ययागोत्पत्तिवाक्यविहितभावनानामपि इत्थमितीतिकर्तव्यतासामान्यान्वयेन तद्विशे-षापेक्षाऽस्ति, तथापि सन्निधानात्प्रयाजादिवाक्यानामाग्नेयोत्पत्तिभावनापेक्षितविशेषविधानद्वारा तदेकवाक्यतया प्रयोजनाकाङ्क्षाशान्तेः न पुनरितरयागोत्पत्तिवाक्यैकवाक्यत्वं संभवति। न ह्येकवाक्यतायामाकाङ्क्षामात्रमेव प्रयोजकम्; अपि तु सन्निधानमपि। अतः स्वर्गकामवाक्ये आग्नेयादिभावनानामेव फलान्वयार्थमभिधाने धर्मान्वयस्य ताभिरेव युक्तत्वात् तद्विषयकयागानामेव यजिपदेन ग्रहणमिति तात्पर्यार्थः। प्राचीनैस्तु उत्पत्तिवाक्यैकवाक्यतानङ्गीकारेणैव केवल-मङ्गवाक्याधिकारवाक्यैकवाक्यतया पूर्वोत्तरपक्षौ साधिताविति भेदो द्रष्टव्यः।

**उत्पत्तिवाक्ये इति।** यद्युत्पत्तिवाक्येन धात्वर्थविशिष्टभावनाबोधानन्तरं गुणवाक्यैक-वाक्यतया तेनैवेतिकर्तव्यताविशिष्टत्वेन पुनस्तस्या बोधजननं तदा विरूपानेकबोधजनकता एकस्योत्पत्तिवाक्यस्यापद्येत; यदा तूत्पत्तिवाक्ये इतिकर्तव्यतासामान्यान्वयः तदा गुणवाक्यैक-वाक्यतयापि तथैव बोधजननात् न विरूपानेकबोधजनकतेति भावः।

ननु तर्हि एकस्योत्पत्तिवाक्यस्य सरूपानेकबोधजनकता स्यादित्यत आह— **वाक्यैक-वाक्यतेति। तद्यजिप्रयुक्तत्व इति।** अयं भावः। सिद्धान्ते फलवाक्ये यागकरणकभावना-विधानेन इतिकर्तव्यताया भावनान्वयद्वारा अपूर्वार्थत्वाङ्गीकारेऽपि अविशेषप्रवृत्तयजिश्रुत्या सर्वयागाभिधाने तदुत्तरप्रत्ययेन सर्वभावनानां विधानोपपत्तेः पदान्तरोपात्तत्वेन विलंबितोपस्थितिक-दर्शपूर्णमासपदार्थेन सङ्कोचानुपपत्तेः संभवत्येव पारिप्लवत्वमित्याशङ्कापरिहारार्थं भाष्याभिप्रायं वर्णयद्भिः वार्तिकतन्त्ररत्नकारादिभिः प्रकृतफलवदितिकर्तव्यताकाङ्क्षियागानामेव सन्निधानात् ग्रहणम्। यागत्वस्य सामान्यस्य तत्राप्यविशेषेण यजिश्रुतिबाधाभावात्। विशेषतश्च समानाधिकरणदर्शपूर्णमासनाम्ना आग्नेयादीनामेवेति प्रतिप्रकरणं व्यवस्थेत्युक्तम्। ततश्च

---

1. किन्तु कल्पितवाक्यान्तरजन्य इत्यर्थः।

**तदनापत्तेः** नावमिकेन **पौनरुक्त्यापत्तेश्चोपेक्षितम्।**

**स चातिदेशो द्विविधः** वचनातिदेशो **नामातिदेशश्चेति। आद्योऽपि द्विविधः—**

सन्निधानादेव प्रकृतयागानां ग्रहणे अवश्यसाधनीये किमपूर्वप्रयुक्तत्वेन धर्मव्यवस्थोपपादनक्लेशेन प्रयोजनम्। अनेनैव च न्यायेन यागस्योद्देश्यत्वेऽपि प्रकृतग्रहणसिद्धेः यागप्रयुक्तत्वेन पारिप्लवत्व-पूर्वपक्षकरणमपि न सिद्ध्यतीति अपूर्वप्रयुक्तत्वेन सिद्धान्तकरणं यागप्रयुक्तत्वेन पूर्वपक्षकरणं उभयमप्यसङ्गतमेव। अत एवोक्तं **तन्त्ररत्ने** "विधीयमानभावनान्वयित्वेनेतिकर्तव्यताया न पारिप्लवत्वमित्येतत् पारमार्थिकं कथितं; पारिप्लवत्वं तु यागसंबन्धाभ्युपगमेन सुपरिहरम्" इत्यादिना। अतो यजिप्रयुक्तत्वमादायापि पूर्वपक्षसिद्धान्तयोः पूर्वोक्तरीत्योपपत्तेः नापूर्वप्रयुक्तत्वपर्यन्तमपि चिन्तान्तरमारंभणीयम्।

**यद्यपि** फलवाक्ये भावनाविधानाश्रयणेन इतिकर्तव्यतायास्तदन्वयित्वाङ्गीकारेऽपि सर्व-यागभावनानां विधानमाश्रित्य पारिप्लवत्वं धर्माणां, उत प्रकृतभावनामात्रविधानेन यथाप्रकरणं तेषां व्यवस्था इत्यपि युक्तिसाम्यात् विचारयितुं शक्यते; तथापि यागोद्देश्यत्वमादाय पूर्वपक्ष-करणे प्रकरणानुमितवाक्येनापि पारिप्लवत्वं लभ्यते; तत्र भावनाविधानाभावेन यागस्योद्देश्यत्वात्। अतो युक्त्यन्तरोपपादनार्थं यागोद्देश्यत्वमादायैव पूज्यपादैः पूर्वोत्तरपक्षद्वयं दर्शितमिति।

**नावमिकेनेति।** नवमाद्ये हि सर्वधर्माणामपूर्वार्थत्वं साधयिष्यते। तत्र सप्तमसिद्धमेवा-पूर्वार्थत्वं स्मार्यते प्रथमसूत्रेणेति च वक्ष्यते प्रथमे वर्णके। तदिदं स्मारकविधया प्रथम-सूत्रव्याख्यानं नातीव समञ्जसं वैयर्थ्यात्। अतः सप्तमेन पूर्वरीत्या प्रकृतयागमात्रार्थत्वे साधिते नवमेनापूर्वार्थत्वं प्रतिपाद्यत इत्यभिप्रायवर्णने पौनरुक्त्याभावात् समञ्जसं व्याख्यानं भवतीति नात्रापूर्वार्थत्वसाधनक्लेशः कर्तव्य इत्यर्थः।

**वचनातिदेश इति।** ननु वचनेनैव धर्माणां प्राप्तौ कथमतिदेशत्वकथनं? तस्योपदेशत्वा-दिति चेत्; परिहृतमेतत् **तन्त्ररत्ने** "न हि प्रत्यक्षविहितमात्रेणौपदेशिकत्वं; य एव ह्यन्यत्र श्रुतस्योपकारस्य पदार्थस्य वा तत्संबन्धाबाधेन तमतीत्यान्यत्र देशः स एवातिदेशः; स तु प्रत्यक्ष-वचनेन वा भवतु, अन्येन वाक्येन वा, नात्रादरः" इति

तु अन्यसंबन्धानपेक्षमेव पदार्थानां कार्याणां वा प्रत्यायकं शास्त्रं तत्सर्वमुपदेशः। तच्छास्त्रं प्रत्यक्षमनुमेयं वेति नात्रादरः। एवञ्चासङ्कीर्णविषयत्वादुपदेशातिदेशरूपं प्रमाणद्वयं मिथः प्रतिपक्षं भवति। न हि श्रौतमेवौपदेशिकं भवति, विश्वजित्यधिकारस्य तद्बललब्धस्य च कर्मफलसंबन्धस्याश्रुतस्यापि औपदेशिकत्वात्। अतः यदन्यसंबन्धमनादृत्य ग्रन्थात् श्रुत्याऽर्थाद्वावगम्यते तदौपदेशिकमिति।

**प्रत्यक्षवचनातिदेशो**ऽनुमितवचनातिदेशश्चेति । **अनुमितवचनातिदेशोऽपि त्रिविधः—सादृश्यकल्पितवचनातिदेशः स्थानापत्तिकल्पितवचनातिदेशः आश्रयोपस्थितिकल्पित-वचनातिदेशश्चेति** ॥ १ ॥

---

**अनुमितवचनातिदेशश्चेति** । अनुमितपदेन श्रुतार्थापत्तिकल्पितत्वं नानुमानकल्पितत्वं, तस्य व्याप्त्याद्यभावेनात्राप्रसरात् । तस्या च 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति वचनं इति-कर्तव्यताऽलाभादपरिपूर्णं येन प्रकृतिवद्वचनेन वाक्यशेषभूतेन परिपूर्यते तादृशमर्थापत्तिप्रमाण-कल्पितं वचनं अनुमितवचनातिदेश इत्यर्थः ।

**पार्थसारथिना** तु—तर्कपादे श्रुतार्थापत्तिप्रमाणनिरूपणे आग्नेयवच्छब्दमप्रकल्प्यैव आग्नेयगतसमस्तेतिकर्तव्यताकाण्डस्य व्यवहितस्यापि चोदनालिङ्गोपस्थापितस्य विकृतिविधिना सहार्थापत्त्या कल्पितैकवाक्यताया एवातिदेशत्वं पक्षान्तरेणोक्तम् ।

अत्र भाष्यकारेण 'तत्र नाम त्रिविधमतिदेशकं कर्मनाम संस्कारनाम यौगिकमिति' इति त्रैविध्यमुक्तमपि केवलस्य यौगिकस्य नाम्नोऽतिदेशकत्वाभावात् न प्रकृतोपयोगीत्यतः स्वयं तदुपेक्ष्य नामातिदेशश्चेति सामान्यरूपेणैवोक्तम् । तत्र नामातिदेशे वत्यर्थो न श्रुतः प्रत्यक्षवचने तु सोऽपि श्रुतः इति नामातिदेशप्रत्यक्षवचनातिदेशयोर्भेदः तत्तदधिकरणे दर्शयिष्यते इत्यवश्यं धर्माणां प्रतिप्रकरणं व्यवस्थायामतिदेशनिरूपणं कर्तव्यमिति ।

---

1. B अधिकरणश

## (२)—समाने पूर्ववत्त्वादुत्पन्नाधिकारस्यात् ॥ १३ ॥ श्येनस्येति चेत् ॥१४॥ नासन्निधानात् ॥ १५ ॥ अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्ताचकं समानं स्यात् ॥ १६ ॥

तत्र **प्रत्यक्षवचनातिदेशो निरूप्यते**। इषुर्नामैकाहो **ज्योतिष्टोमविकारः। तत्र प्राकृते साम्नि** वषट्कारनिधनमाम्नातम्। **प्राकृतविष्टुतौ**[1] **च इष्वाकारत्वं स्तोत्रे प्राकृते सप्ताहाख्यं साम, ततः 'समानमितरच्छ्येनेन' इति श्रुतम्। तत् किमनुवादः उतातिदेशविधिरिति चिन्तायाम्।**

**इतरशब्दस्य सन्निहितवचनत्वेन लोके प्रसिद्धत्वान्नास्यासन्निहितश्येनवैशेषिकधर्मवाचित्वं, तेषामसन्निहितत्वात्। अपि तु ये ज्योतिष्टोमातिदेशेन सन्निहितास्तत्परत्वमेव। तेषां च श्येनेऽप्यतिदेशप्राप्तत्वेन श्येनसादृश्योपपत्तेरनुवाद एवायमिति न श्येनवैशेषिकाणां वचनातिदेश इति प्राप्ते,**

**इतरशब्दस्य सन्निहितवाचित्ववत् पूर्वोक्तेतरतत्सदृशवाचित्वमपि लोकसिद्धम्। चैत्रमैत्रयोः कम्बळकौशेये प्रदेये, इतरद्विष्णुमित्राय' इत्यत्र सन्निहितपूर्वोक्तेतरतत्सदृशवस्त्रादेरेव प्रतीतेः।** अतश्च वार्तिककारीया **पूर्वोक्तसादृश्यस्यावाच्यत्वोक्तिरुपेक्षणीयैव।**

---

**समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात्।** पूर्वोक्तेष्वतिदेशेषु सुगमत्वात् प्रथमं प्रत्यक्षवचनातिदेशः सप्रपञ्चो निरूप्यते। नामातिदेशस्तु वत्यर्थकल्पनया क्लेशगम्यत्वात् पश्चादित्यभिप्रायेणाह—**तत्रेति**। यद्यपि षड्विंशब्राह्मणे कल्पसूत्रेषु च आभिचारिके त्रिवृदग्निष्टोमसंज्ञके यागे अभिचारविषयीभूतानि वाक्यानि वक्ष्यमाणानि दृश्यन्ते; तथापि भाष्यकारेण इषौ समाम्नानस्य प्रदर्शनात् तदभिप्रायेण-**इषुर्नामेति**। श्येनवदाभिचारिकः 'इषुणाभिचरन् यजेते'त्येवं विहितः इषुसंज्ञो याग इत्यर्थः।

**वषट्कारनिधनमिति**। वषट्कारः निधनं सामान्तिमो भागः यस्मिन् तथाभूतं वषट्कारनिधनसंज्ञं सामेत्यर्थः। तथा च "वषट्कारनिधनं भवति, इषुं विष्टुतिं करोति, सप्ताहं भवति" इति वाक्यैः पूर्वं गुणत्रयं वषट्कारनिधनसंज्ञं साम इषुसंज्ञा विष्टुतिः सप्ताहसंज्ञं सामेति विधाय पश्चात समानमिति पठितमित्यर्थः। **अनुवाद एवेति**। उभयोरपि ज्योतिष्टोमविकारत्वात् श्येनेनेदं समानं, अतस्तद्वदेवाभिचरता कर्तव्यं, इत्येवमिषुस्तुत्यर्थमनुवाद एवेत्यर्थः। **अतश्च वार्तिककारीयेति**। यद्यप्युपयुक्तादवशिष्टं सदृशमेव प्रतीयते क्वचिदिति सादृश्यमितर-

---

1. कुशपदवाच्याः औदुम्बरशलाकाः स्तोत्रगणनार्थं प्रसार्यन्ते; सा विष्टुतिः तत्र इष्वाकारतेत्यर्थः

**ततश्च यत्सन्निहितं प्राकृतं न तत्पूर्वोक्तसदृशं अप्राकृतानां सत्राहादीनां पूर्वोक्तत्वात्, यच्च सदृशं श्येनवैशेषिकं अप्राकृतत्वसाधर्म्यात् न तत्सन्निहितम्। ततश्चावश्यहातव्ये ऽन्यतरस्मिन् वचनस्यार्थवत्त्वाय सन्निहितं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणामेव तच्छब्देन ग्रहणम्। न ह्यन्यथा विध्यन्तराशेषभूतस्यानुवादस्यार्थवत्त्वं संभवति। ततश्च श्येनसादृश्यवत् यत्पूर्वोक्तसदृशं सत् पूर्वोक्तभिन्नं** तदिषौ कुर्यादिति वाक्यार्थः। **श्येन-**

---

शब्दार्थः कल्प्यते। तथापि[1] इतरः कम्बलो दीयतामित्यादिषु सादृश्यं विनापि तत्प्रयोगात् न तन्नियमेन तच्छब्दार्थः कल्पयितुं शक्यते। अत एव सादृश्यप्रतीतेर्व्यभिचारित्वात् अव्यभिचरिते उपयुक्तादवशिष्टे सन्निहितमात्र एव तत्पदशक्तिकल्पनमुचितं; तत्सन्निहितं सदृशं असदृशं वा यथाविवक्षमस्तुः नैतावता तत्रापि शक्तिः, गौरवात्। एवञ्च 'य एतेनानिष्ट्वा अथान्येन यजेत' इत्यत्रान्यशब्दस्य सन्निहितमात्रवाचित्वात् उक्थ्यादिसंस्थानामिव इतरयागानामपि ग्रहणं पाञ्चमिकं न विरुद्ध्यते। इतरथा अग्निष्टोमसदृशानां तद्भिन्नानां संस्थानामेव ग्रहणापत्तेः; अतो नेतरशब्दस्य सादृश्यमपि वाच्यमिति वार्तिककारीयं वचनमपि नोपेक्षितुमर्हम्[2] तथापि शक्तिकल्पने अभियुक्तव्यवहारस्यैव प्रमाणत्वेन भाष्यकारापेक्षया इतरस्याभियुक्तत्वे विश्वसनीयत्वाभावात् भाष्यकाररीत्या सन्निहितमिव पूर्वोक्तसदृशमपि भवत्येव तस्य वाच्यम्। न च सादृश्यप्रतीतेर्व्यभिचारित्वं; सजातीयविजातीयसाधारणहिरण्यव्रीहिवसनकम्बलादिसमुदायस्य देयत्वेनोपक्रमे 'हिरण्यं देवदत्ताय 'इतरद्व्रीह्यादि विष्णुमित्राय दीयताम्' इत्यादौ हिरण्यादिगतविशेषसादृश्याभावेपि तद्गतस्य दानसाधनत्वेन सामान्यरूपेण सङ्कल्पितस्य सङ्कल्पितत्वेन रूपेण हिरण्यसादृश्यस्य तत्रापि संभवात्। एवं अन्येन यजेतेत्यत्रापि उपक्रमगतार्थवादे यज्ञत्वेन सर्वेषामेव सङ्कीर्तनात् सर्वयज्ञसाधारणयज्ञत्वधर्मेणैव सादृश्यं शक्यत एवोपपादयितुमिति न बाधकम्। अतो युक्तमुक्तं **वार्तिककारीया पूर्वोक्तसादृश्यस्यावाच्यत्वोक्तिरुपेक्षणीयैवेति।** अत एवाग्रे तन्त्ररत्ने तदपि सूचितं "यद्यपि पूर्वोक्तसादृश्यमप्यस्य वाच्यं, तथापि पूर्ववाक्ये ज्यौतिष्टोमिक्या विष्टुतेर्विकारसिद्ध्यर्थमुक्तत्वात् तत्सदृशानां ज्यौतिष्टोमिकानामेवेतरशब्देन निर्देशो युक्त" इति ग्रन्थेन। सादृश्यवाचकत्वमङ्गीकृत्यापि सिद्धान्तोपपादनमेतदभिप्रायमेवेति भावः। **इषौ कुर्यादिति वाक्यार्थ इति।** यद्यपि भाष्य-

---

1.A. तथा इतरः

2. B. मर्हति

**सादृश्यं च श्येननिष्ठाङ्गवृत्तिधर्मसमानजातीयधर्मवत्वम्। भवति हि श्येननिष्ठाङ्गानां कण्टकवितोदनादीनां ये धर्माः कण्टकवितोदनत्वादयः तत्समानजातीयास्त एव तद्धर्त्वं कण्टकवितोदनादौ। अत एव श्येनपदं श्येनाङ्गपरं. न तु यथाश्रुतम्। न हि श्येनप्रतियोगिकं सादृश्यं [1]कण्टकवितोदनादौ सम्भवति। अतश्च फलतःश्येनधर्मा एव** पूर्वोक्तसदृशाः **पूर्वोक्तभिन्नाश्च कार्या इति पर्यवसितोऽर्थः।**

पूर्वोक्तसादृश्यं **च अप्राकृतत्वेन प्राकृताङ्गमुद्दिश्य विहितत्वेन वा। तेन श्येने ये**

---

कारमतोपपादने तन्त्ररत्ने "अधिकवचनत्वे हि इतरपदस्य नोद्देश्यसमर्पकता सम्भवति, अधिकानामप्राप्तत्वात्। किन्तु विधेयसमर्पकम्। तदेषा वचनव्यक्तिः–श्येनेन यत्समानमित्युद्देशः इतरदिति विधिः यादृगत्र क्रियमाणं श्येनेन सदृशं भवति तादृगधिकमत्र कर्तव्यम्। श्येने यद्विहितं तदत्रापि कर्तव्यमित्यर्थः" इति ग्रन्थेन श्येनेन समानमित्युद्देश्यसमर्पकं प्रतिपादितमिति तस्य विधेयकोटिनिवेशेन इषुवाचकपदकल्पनया इषोरुद्देश्यत्वोक्तिः तद्विरुद्धेव भाति, [2]तदत्रायमभिप्रायः—यथैव हि इतरशब्दार्थस्याप्राप्तत्वात् नोद्देश्यत्वसंभवः, तथैव श्येनसदृशस्याप्यप्राप्तत्वात नोद्देश्यत्वसंभवः। अतः श्येनेन समानमिति क्रियाविशेषणत्वेनैव तन्त्ररत्नकृतः उद्देश्यत्वमभिमतम्। अत एव तन्त्ररत्ने यादृगत्र क्रियमाणमित्यादिना तद्विवृतम्। तथा च 'श्येनेन समानं यथा भवति तथा इतरत् कर्तव्यम्' इत्यर्थे सिद्धे श्येनेन समानं कथं भवति? यदा श्येने यद्विहितं तच्चेदिषौ क्रियतेः अतोऽर्थात् श्येने यद्विहितं तदितरत् कर्तव्यमित्यर्थो वाच्यः। तथा च श्येने विहितस्य इषुसंबन्धित्वेन इतरत्वेन विधानात् तदभिप्रायिकैव श्येनेन समानमित्यस्योद्देश्यत्वोक्तिः। तत्रानेनैव न्यायेन इतरपदार्थस्याप्युद्देश्यत्वोपपत्तेः उभयत्राप्यप्राप्तत्वदोषस्य समानत्वात श्येनेन समानमित्यस्योद्देश्यत्वपरत्वोक्तिः इतरपरस्य विधेयसमर्पकतोक्तिश्च आपातत एवेति पदद्वयस्यापि विधेयसमर्पकतैव भाष्यसंमता उद्देश्यवाचकं च प्रकरणलभ्यमिषुपदमिति न कोऽपि विरोध इति।

**पूर्वोक्तसदृशा इति।** इषुं विष्टुतिमित्यादिना ये उक्तास्ते पूर्वोक्तशब्दार्थः। अत्र पूर्वोक्तसादृश्यमप्राकृतत्वेन रूपेणाङ्गीकृत्य लोहितोष्णीषादिधर्मवत् कण्टकवितोदनादिधर्माणामपि भाष्यकारमते आपत्तिः वार्तिककारेणोपन्यस्ता; तां परिहतुं सादृश्यं निरूपयति—**पूर्वोक्तसादृश्यं चेति। उपेक्षितमिति।** यथैवाप्राकृतत्वेन सादृश्यमादाय कण्टकवितोदनादीनां

---

1. दक्षिणार्थगवां कण्टकैः वेधनं कण्टकतोदनम्।

2. A. तत्रायमभि

अपूर्वा धर्माः कण्टकवितोदनादयस्त इहाप्यतिदिश्यन्ते, ये वा श्येने प्राकृताङ्गानुवादेन विहिताः लोहितोष्णीषादयस्त एवातिदिश्यन्ते ।

यत्तु—अस्मिन् पक्षे नैतेषामेव[1] नियम इति तन्त्ररत्नोक्तं, तदवान्तरसादृश्ययागे प्रमाणाभावादुपेक्षितम् । अस्मिंश्च पक्षे इषुयागोद्देशेनानेकपदार्थविधानायोगात् पदद्वयेन[2] लक्षणया श्येनीयप्राकृताङ्गसम्बन्धिविकारमात्रस्येषूद्देशेन विधानम् ।

---

प्राप्तिरापाद्यते, तथा पूर्वं 'इषुं विष्टुति'मित्यादिना प्राकृताङ्गानुवादेनैवापूर्वाङ्गानां विधानात्, प्राकृताङ्गमुद्दिश्य विहितत्वेन रूपेणानतिप्रसक्तेन विशेषसादृश्यमादाय कण्टकवितोदनादीनां प्राप्तिर्निवारयितुमपि शक्यत एवेति, सम्भवत्येव भाष्यकारमतेन पूर्वोक्तसदृशवाचित्वपक्षेऽपि लोहितोष्णीषादिधर्मप्राप्तिनियम इति भावः ।

**अस्मिंश्च पक्ष इति ।** अप्राकृतत्वेन सादृश्यस्वीकारपक्षे यथा वाक्यभेदपरिहाराय समानमितरदिति पदद्वये लक्षणया विशिष्टविधानं, तथा पूर्वोक्तावान्तरसादृश्यपक्षेऽपि लक्षणया विशिष्टविधानमित्यर्थः चशब्देनोक्तः । तेन पूर्वस्मिन् पक्षे लक्षणा नास्तीति न भ्रमितव्यम्; वाक्यभेदपरिहारस्योभयत्राप्यपेक्षितत्वात् । एवं च पूर्वस्मिन् पक्षे यथा प्राथमिकशक्यार्थबोधानुपपत्त्या श्येनपदं लक्षणया सामान्यतः श्येनाङ्गपरं, यथा वा यद्वेतिवक्ष्यमाणपक्षे तत्पदं श्येनप्राकृताङ्गमात्रपरं, तथैवास्मिन् पक्षे श्येनीयप्राकृताङ्गसंबन्धिविकारपरं द्रष्टव्यम् । तादृशलक्षणया च तत्तत्पदार्थोपस्थित्यनन्तरं तेषां विध्यन्वयानुपपत्त्या विशिष्टैकरूपेऽर्थे लक्षणान्तरं, अथवा पूर्वमेव विशिष्टलक्षणामाश्रित्यैकैव लक्षणेत्यन्यदेतत् ।

अत्र चेतरपदस्य सन्निहितसदृशेतरवाचिनोऽपि सन्निहितत्वार्थासम्भवात् केवलं सदृशेतरवाचित्वमात्राङ्गीकरणेन भाष्यकाररीत्योपपादितः सिद्धान्तपक्षः । सदृशवाचित्वं नास्तीति वार्तिककारीयोक्तिश्च खण्डिता । यत्तु वार्तिककृता सदृशवाचितानङ्गीकारेण सन्निहितभिन्नमात्रवाचित्वेन 'इषुं विष्टुति'मित्यादिना यदुद्देश्यत्वेन स्तोत्रसामविष्टुत्यादि अतिदेशप्राप्तं पूर्वोपस्थितं तदतिरिक्तं यज्ज्योतिष्टोमातिदेशेन सन्निहितं तदुद्देशेन श्येनसादृश्यं विधीयत इति सिद्धान्त-

---

1 प्राकृताङ्गानुवादेन विधीयमानानामेवेति न नियमः; किन्तु अप्राकृतत्वेन कण्टकवितोदनादीनामपीत्यर्थः

2 समानं इतरत् इति पदद्वयेन । श्येनपदं साम्यनिरूपकमात्रपरम् ।

यद्वा—**इतरपदे** सन्निहितत्वत्यागे प्रामाणाभावात्प्राकृताङ्गानामपि चोद्देश्यतया पूर्वमुक्तत्वात् पूर्वोक्तप्राकृताङ्गभिन्नतत्सदृशप्राकृताङ्गान्तराणामेवेतरपदेन ग्रहणम्। तेषामति-देशेन सन्निहितत्वात्तादृशप्राकृताङ्गोद्देशेनैव च श्येनसादृश्यविधिः। सादृश्यं चास्मिन्पक्षे श्येनीयप्राकृताङ्गवृत्तिधर्मसमानधर्मवत्त्वम्। स च धर्मः श्येनप्राकृताङ्गानुवादेन विहितो विकारो लोहितोष्णीषादिः। अत एव सादृश्यं न श्येननिरूपितं, अपि तु श्येनीयप्राकृताङ्ग-निरूपितमेव। उपमानतावच्छेदकसम्बन्धेन[1] श्येनवृत्तिधर्मस्य लोहितोष्णीषादेस्तेनैव सम्बन्धेन प्राकृताङ्गेष्वभावात्, उपमानतावच्छेदकसम्बन्धेनोपमेयवृत्तित्व एव उपमानियमात्।

अत एवास्मिन् पक्षे श्येनपदं श्येनीयप्राकृताङ्गपरम्। ततश्च फलतस्तादृशधर्मा एवेष्व-पूर्वसाधनीभूततादृशप्राकृताङ्गोद्देशेन विधीयन्ते। अत एव विधेयसामर्थ्यानुरोधेन श्येने यो विकारो यत्प्राकृताङ्गे विहितस्तत्प्राकृताङ्ग एव सोऽत्र विधीयते। इतरथा अप्राकृतकार्यकारितापत्तेः। अतोऽस्मिन्नपि पक्षे विवक्षितगत्या इषुसम्बन्धित्वेनैव तादृश-श्येनीयविकारविधिः। न चैवमस्यातिदेशस्य कल्पितत्वाभावादानुमानिकवचनातिदे-शापेक्षया प्राबल्येऽपि श्येनेन समानमिति पदद्वये तादृशविकारलक्षणायाश्चावश्यकत्वा-न्नामातिदेशापेक्षया प्राबल्ये मानाभावः। नामातिदेशस्थले अग्निहोत्रपदेनानभिहिताना-मेव धर्माणां लक्षणा। वचनातिदेशे तु समानपदेनोक्तानामेव तादृशधर्माणां विधेयता-वच्छेदकीभूतश्येनीयप्राकृताङ्गवृत्तिविकारत्वावच्छिन्नत्वसिद्ध्यर्थं लक्षणेति तस्य तदपेक्षया प्राबल्यात् ॥ २ ॥

---

पक्षः उपपादितः। तमिमं पक्षमधुना सदृशवाचितामङ्गीकृत्याप्युपपादयति—यद्वेति। **सन्निहितत्वत्यागे प्रमाणाभावादिति**। तथा च भाष्यकारमते यथा सन्निहितत्वरूपार्थबाधापत्तिर्दोषः, तथैव वार्तिककारमते प्रमाणायातसदृशरूपार्थबाधापत्तिर्दोषः समान इत्युभयोक्तपक्षपरित्यागेन सन्निहितसदृशभिन्नरूपविशिष्टार्थमादायैवोपपादितोऽयं पक्षः साधुरित्यर्थः। **उपमानतावच्छेद-कसंबन्धेनेति**। यदि श्येनयागः प्रधानमेवोपमानं, उपमेयं चातिदेशप्राप्तं इषुसम्बन्धिप्राकृताङ्गं इतरपदवाच्यं, तदा श्येनरूपोपमानवृत्तिधर्मः साक्षात् कण्टकवितोदनादिरूपः येन संबन्धेन श्येन-रूपोपमाने वर्तते, नैव तेन संबन्धेन इषुसंबन्धिन्युपमेये प्राकृताङ्गे वर्तते, साक्षात्प्रधानाङ्गाना-मितरप्राकृतप्रधानाङ्गवृत्तित्वासंभवादिति नोपमानोपमेयभावसंबन्धः एकः सिद्ध्यति। यदा तु श्येनपदेन लक्षणयोपात्तं श्येनप्राकृताङ्गमुपमानं तदा श्येनप्राकृताङ्गभूतऋत्विगादिवृत्तिनो लोहितोष्णीषादिरूपस्य धर्मस्य येन संबन्धेन श्येनीयप्राकृताङ्गवृत्तित्वं तेनैव संबन्धेनेषुसंबन्धिनि तस्मिन् प्राकृताङ्गे वृत्तित्वं संभवतीत्युपपद्यत इति भावः।

**तादृशधर्मा एवेति**। श्येनीयप्राकृताङ्गवृत्तिलोहितोष्णीषादयो धर्माः न तु साक्षात् श्येनाङ्गभूताः कण्टकवितोदनादय इत्यर्थः। **सिद्ध्यर्थं लक्षणेति**। समानपदोपात्तानामेव

---

1. स्वाङ्गाङ्गत्वरूपेण

(३)—पञ्चसञ्चरेष्वर्थवादातिदेशस्सन्निधानात् ॥ १७ ॥ सर्वस्य वैक-
शब्द्यात् ॥ १८ ॥ लिङ्गदर्शनाच्च ॥ १९ ॥ विहिताम्ना-
नान्नेति चेत् ॥ २० ॥ नेतरार्थत्वात् ॥ २१ ॥

**चातुर्मास्येषु वैश्वदेवे पर्वणि** आद्यानि **पञ्च हवींषि सधर्मकाणि विधाय वरुण-प्रघासेषु वि॒तानि**[1] । तेषां **च** [2]**विनिगमनाविरहेणाभ्यासात्कर्मान्तरत्वम्। वरुण-प्रघासस्थहविस्सन्निधौ च 'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इति श्रुतम्। इतराणि वैश्वदेविकानीत्यर्थः। अत्र च ब्राह्मणस्यैवातिदेशः। यद्यपि चान्यत्रोपकारस्य तत्पृष्ठभावेन पदार्थानामेव चातिदेशो न तु पदार्थबोधकशास्त्राणां**

---

धर्माणामत्र विधानं, इतरपदोपात्तानां प्राकृताङ्गानामतिदेशप्राप्तत्वादुद्देश्यत्वम्। अत एव विधेयानेकत्वाभावात् न पूर्ववत् समानमितरदिति पदद्वये लक्षणा; अपि तु विवक्षितगत्या समान-पदोपातधर्माणां श्येनीयप्राकृताङ्गवृत्तिविकारत्वेन रूपेण विधिसिद्ध्यर्थं श्येनेन समानमिति पदद्वये परमजहत्स्वार्थलक्षणाश्रयणमिति श्येनीयविकारस्य साक्षात्पदेनैवोक्तत्वात् नामाति-देशापेक्षया वचनातिदेशस्य प्राबल्यमुपपद्यत एवेति भावः।

**पञ्चसञ्चरेषु ॥ आद्यानीति ।** "आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुमि"त्यन्तेन पञ्चहविस्साध्यानि कर्माणि विहितानि। तत्रैव "त्रेधा सन्नद्धं बर्हिर्भवति त्रेधा सन्नद्ध इध्मः नव प्रयाजानूयाजाः[3]" इत्येवमादिविधिविधेया धर्मा आम्नाताः। अर्थवादा अपि "वार्तघ्नानि वा एतानि हवींषि" इत्यादयः तत्रैव पठिताः। एवं वैश्वदेवे पर्वणि सधर्मकाणि पञ्च हवींषि विधाय पुनः केवलानि वरुणप्रघासादिपर्वत्रये विहितानि। अत एव इमानि पञ्चसङ्ख्यानि हवींषि चतुर्ष्वपि पर्वसु सञ्चरन्तीति योगेन पञ्च-सञ्चरपदवाच्यानि; तत्र विचार इत्यर्थः। यद्येतान्यभिन्नानि कर्माणि ततः केषामतिदेश इति विचारो नोपपद्यते अतः कर्मान्तरत्वमेषां साधयति - **तेषामिति** । न च कर्मान्तरत्वे पञ्च-सञ्चरसमाख्यानुपपत्तिः, एकीभूतानामेव पञ्चानां पर्वसु सञ्चारप्रतीतेरिति वाच्यम्। कर्मणां भेदेऽपि हविषां पञ्चानामेकजातीयत्वेन तद्गतसञ्चाराभिप्रायेण तत्समाख्योपपत्तेः न बाधकमिति

---

1. अधर्मकाणीति भावः

2. कः उत्पत्तिविधिः इत्यत्रेत्यादिः

3. A नव प्रयाजा इज्यन्ते न वानूयाजाः

प्रयोजनाभावात्[1], **तथाऽपीह लक्षणायां प्रमाणाभावाच्छास्त्रस्यैवातिदेशः**। न च शास्त्राति-**देशे तद्बोधितपदार्थानां प्राकृतोपकाराभावे** उपकारान्तरकल्पनापत्तेरूहबाधानुपपत्तिः[2]; **शास्त्रस्यापि विजातीयोपकारजनकविजातीयपदार्थप्रतिपादकतया निरूपितरूपस्यैवाति-देशादुपकारान्तरकल्पनानुपपत्त्या ऊहबाधोपपत्तेः**। वस्तुतस्तु **ब्राह्मणपदेनार्थविधायक-वाक्यस्योक्तत्वाल्लाघवादपेक्षितत्वाच्चात्राप्यर्थस्यैवातिदेशः**। अत **एवातिदेशलक्षणमपि** नासङ्गतम्।

**तदिह हविर्विधायकवाक्यस्यैवैतद्ब्राह्मणपदेनोक्तत्वात्सार्थवादकस्यैव विधायकत्वा-**दाकाङ्क्षाऽभावेन **प्रधानातिदेशाभावेऽपि**।

---

भावः। **प्रयोजनाभावादिति**। यद्यपि शास्त्रातिदेशपक्षे प्राकृतोपकाराभावेऽपि शास्त्रबलात् दृष्टादृष्टप्रयोजनान्तरकल्पनया तद्बोधितपदार्थातिदेशोपपत्तेः ऊहबाधासंभवोऽपि दूषणं नवमदशमादौ उपपादितमस्ति, तथापि वक्ष्यमाणविधया शास्त्रातिदेशपक्षेऽपि तयोरुपपत्तेः तन्निरासे प्रयोजनाभाव एव मुख्या युक्तिः, अतस्तदभिप्रायेण प्रयोजनाभावादित्युक्तम्। अत एव शास्त्राति-देशाभावे सप्तमाध्यायादौ विध्यन्तातिदेश उक्तः कथं सङ्गच्छत इत्याशङ्का शास्त्रातिदेश-मङ्गीकृत्यापि तत्रैवोहबाधसिद्ध्यनुकूलत्वेन परिहरिष्यते। प्रकृते शास्त्रातिदेशपक्षे तामेवो-हबाधानुपपत्तिं प्राप्तामाशङ्क्य परिहरति-**न च शास्त्रेति**। प्रयोजनाभावेऽपि वचनान्यथा-नुपपत्त्या शास्त्रातिदेश इह स्वीकार्यः; तत्तु वचनं वैश्वदेविकानि ब्राह्मणानि यदुपकारद्वारा यदर्थ-बोधकानि तदर्थरूपाण्यङ्गानीह तथैव कर्तव्यानीत्येवमर्थातिदेशविधानेऽप्युपपद्यत एवेतीहापि प्रयोजनाभावात् न शास्त्रपर्यन्तातिदेशपरत्वकल्पनं युक्तमित्याह—**वस्तुतस्त्विति**। तथा च शास्त्रस्यातिदेशे स्वतः शास्त्रस्यानुष्ठानाभावेन उपकाराकाङ्क्षाशान्त्यभावात् तदर्थं तज्जनकपदार्थ-द्वारैव तदतिदेशावश्यकत्वे तावन्मात्रातिदेशपरत्वकल्पने लाघवं, अपेक्षितकल्पनञ्चेत्यर्थः। **नासङ्गतमिति**। अङ्गत्वघटितमतिदेशलक्षणं प्रागुक्तं शास्त्रस्याङ्गत्वाभावात्[1] असङ्गतं प्राप्तं तदस्मिन् पक्षे नेत्यर्थः।

**आकाङ्क्षाभावेनेति**। अत्र च वारुणप्रघासिकपञ्चहविष्कयागानां उपकारजनकपदार्था-काङ्क्षा तावत् क्लृप्तोपकारजनकपदार्थविषयदार्शपौर्णमासिकातिदेशेनैव शान्तेति न तदपेक्षया 'एतत्

---

1. तद्विषये विकृत्याकाङ्क्षाऽभावात्
2. A & B कल्पनादूह
3 B. यदसङ्गतम्।

स्तुतिमात्रस्यातिदेशो न त्वङ्गानाम्। एतेषां स्वस्याङ्गविधिविधेयत्वेन हविर्विधिविधेयत्वाभावात्। अत एव वरुणप्रघासेषु 'अग्निं मन्थति, प्रसुवो भवन्ति'[1] इत्यादिविधयोऽप्युपपद्यन्ते ; अन्यथा अतिदेशादेव प्राप्तत्वेन वैयर्थ्यापत्तेरिति प्राप्ते

अङ्गविधीनामप्येतद्धविस्सम्बन्ध्यङ्गविधायकत्वेनैतद्ब्राह्मणत्वोपपत्तेश्शास्त्रस्य महाविषयत्वसिद्ध्यर्थमङ्गानां स्तुतेश्चातिदेशः। न चापेक्षाक्रमेणैव सर्वत्रान्वयादर्थभावनाया इति कर्तव्यतापेक्षायामङ्गातिदेशेऽवगते पश्चात्तद्विशिष्टार्थभावनाया विधिसम्बन्धावगमोत्तरं तस्य स्तुत्यपेक्षायां स्तुत्यतिदेश इति विरम्यव्यापारापत्तिः। इष्टसामन्यव-

---

ब्राह्मणानी'ति विधिः प्रवर्तते। न च यावत् कल्प्यातिदेशेन दार्शपौर्णमासिकपदार्थप्राप्तिः तत पूर्वप्रवृत्तेनानेन प्रत्यक्षविधिना वैश्वदेविकब्राह्मणातिदेशविधानात् तन्निवृत्तिरिति युक्तम्। तथात्वे परिसङ्ख्यापत्तेः। वैश्वदेविकब्राह्मणस्यापि अतिदेशप्राप्ततत्तत्प्रयाजाद्युद्देशेनैव तत्तद्गुणविधायकतया अतिदेशोत्तरप्रवृत्तेः उपजीव्यातिदेशबाधकत्वायोगाच्च, वैश्वदेवे तद्ब्राह्मणस्य गुणविधायकत्वात्; अत्र तत्तद्गुणविशिष्टाङ्गविधायकत्वकल्पने वैरूप्यापत्तेश्च। अतो दार्शपौर्णमासिकधर्माणामतिदेशे विद्यमान एव वैश्वदेविकवैशेषिकशास्त्राणां तद्बोधितपदार्थानां वाऽयमपूर्वविधिरेव।

वस्तुतस्तु अत्र न पृथक् दर्शपूर्णमासातिदेशकल्पनमिति निरूपयिष्यते। तथा च वचनातिदेशबलात् वैश्वदेविकपञ्चहविर्विधायकब्राह्मणस्याप्यतिदेशः प्राप्तः ; तथापि तस्योत्पत्तिरूपोपकारबोधनद्वारा प्राप्तेर्वक्तव्यत्वात् तस्याश्चोत्पत्तेरिह तदुत्पत्तिविधायकवाक्यान्तरैरेव सिद्धेः प्रयोजनाभावेन बाधात् न तद्बोधकशास्त्रस्यातिदेशः। यद्यपि च[2] वैश्वदेविकब्राह्मणविहितानां पञ्चहविस्संज्ञकानां पदार्थानामतिदेशः प्राप्नुयात्, तथापि तेषां पञ्चहविष्कयागानां यादृशोपकारद्वारा फलजनकत्वं तादृशफलस्यैव वरुणप्रघासेऽभावे तज्जनकतादृशोपकाराभावादेव न स इति भावः। अत एवेह यस्यापेक्षास्ति तस्य हविर्विधायकब्राह्मणैकवाक्यतामापन्नस्य भवत्येवातिदेश इति पूर्वपक्षं दर्शयति—स्तुतिमात्रस्येति। महाविषयत्वसिद्ध्यर्थमिति। न केवलं स्तुतिमात्रातिदेशपरत्वेनास्य तात्पर्यं कल्पयितुं शक्यते, तस्य विध्युद्देशादपि सिद्धेः अन्यथासिद्धत्वात्। अपि तु अङ्गविध्यतिदेशपरत्व एव। एवंचाप्राप्तवैश्वदेविकाङ्गविध्यतिदेशार्थं प्रवृत्तेनानेन वचनेन स्तुतिसाधारण्येन प्रवृत्तेन स्तुतेरप्यतिदेशतः प्राप्तिबोधनेन तदंशे न विधिव्यापारकल्पनं, गौरवात् इत्यानुषङ्गिकं स्तुत्यतिदेशोऽपि फलं भवति। मुख्यं तु अनन्यसिद्धं बह्वङ्गातिदेश एव फलमिति शास्त्रस्य

---

1. दर्भाः पुष्पिताग्रा भवन्तीत्यर्थः

2. A. यद्यपि वा

**दितिकर्तव्यतासामान्याक्षेपादेव तद्विशिष्टभावनाविधिसिद्धेः** स्तुत्यपेक्षावेलायामेवातिदेश-**प्रवृत्तेः**। अत एवानुमानिकवचनातिदेशेऽप्यर्थवादातिदेशसिद्धिः। **या त्वेवं सति विश्वजित्यातिदेशिकार्थवादिकफलकल्पनाप्रसक्तिः सा** कौस्तुभ एव निरस्ता।

---

महाविषयत्वमित्यर्थः। **स्तुत्यपेक्षावेलायामेवेति**। प्रयाजाद्यङ्गविशेषप्राप्तेः पूर्वमेवेतिकर्तव्यतासामान्यान्वयेन अंशत्रयविशिष्टार्थभावनाया विधिसंबन्धोपपत्त्या पश्चादर्थभावनाया इतिकर्तव्यताविशेषापेक्षायां विधेश्च प्राशस्त्यापेक्षायां एकेनैवातिदेशेन एकस्मिन्नेव काले उभयप्राप्त्युपपत्तेः, नैकस्यैव वचनातिदेशस्य पूर्वमङ्गविशेषप्रापकत्वं, पश्चात्तु स्तुतिविशेषप्रापकत्वमित्येवं विरम्यव्यापारापत्तिरित्यर्थः। **अत एवेति**। पूर्वोक्तविरम्यव्यापारापत्तिपरिहारादेवेत्यर्थः। **कौस्तुभ एव-निरस्तेति**। अर्थवादानामतिदेशप्राप्तानां न फलकल्पकत्वं, अप्राकृतकार्यकारितापत्तेः। न च फलाकाङ्क्षायां सत्यां अप्राकृतकार्यकारिताकल्पनं न दोषः। यूपावटास्तरणबर्हिषि धर्माकाङ्क्षायां बर्हिर्धर्माणां तत्कल्पनापत्तेः। अथ तत्र लौकिकोपायाक्षेपकल्पनात् तन्निवृत्तिः, सा प्रकृतेऽपि स्वर्गकल्पनयेति तुल्यमिति युक्त्या अर्थवादाधिकरणे कौस्तुभे निरस्तेत्यर्थः।

वस्तुतस्तु विश्वजिति अतिदेशप्राप्तार्थवादिकफलकल्पनायां सर्वथा प्राकृतार्थवादानां प्राकृततत्कार्यकारित्वहानिर्दूषणं उत तत्सत्वेऽपि विश्वजित्यधिकतात्पर्यकल्पनं तत्? आद्ये प्राशस्त्यद्वारा तद्बोधकत्वेन प्राप्तानां तेषामिहापि तद्द्वारैव बोधकत्वाङ्गीकारेण तदप्रसक्तेः। नहि तेषां प्राशस्त्यलक्षणां विहाय केवलं फलविशेषलक्षणया फलपरत्वमुच्यते; अपि तु प्राशस्त्यबोधकत्वेन प्राप्तेषु फलपरपदानामुपलम्भात् उपस्थितिलाघवात् इतरफलापेक्षया उपस्थितं तदेव फलत्वेन पदान्तरकल्पनया सम्बध्यत इति न प्रशस्त्यार्थपरत्वहानिः। यूपावटास्तरणबर्हिषि सर्वथा प्राकृतकार्यलोप इत्यन्तरम्। अत एव नान्त्यः, अर्थवादोपस्थितत्वात् विधिः तदेव सन्निहितं फलत्वेन गृह्णातीत्यर्थकल्पने अर्थवादानां तत्र तात्पर्याकल्पनात् अधिकत्वाभावात्।

किञ्चाधिककल्पनं गौरवत्वेन दोषः; तच्चानुपस्थितस्वर्गकल्पनेऽपि तुल्यमित्यपरिहार्ये गौरवे उपस्थितिकल्पनाऽभावकृतं लाघवं प्रत्युत गुण एव लभ्यते। अत एवास्मिन्नधिकरणे चोदनालिङ्गातिदेशादर्थवादप्राप्तिपक्षे विश्वजित्यतिदेशप्राप्तार्थवादिकफलनिरासः तन्त्ररत्ने अप्राकृतकार्यकारितापत्तिदूषणत्यागेनान्यथैव कृतः।

तथाहि—विधिर्हि त्र्यंशपरिपूर्णां अनुष्ठानयोग्यां भावनां प्राप्य पश्चात् पुरुषं प्रवर्तयितुं प्रवर्तमानोऽपेक्षावशात् प्राशस्त्यज्ञानमुखेन अर्थवादान् यत्र क्वचन स्थितान् अतिदेशेन सन्निधापयति।

विधेयभावना तु ततः प्रागेव स्वांशान् गृह्णाति; तस्यां वेलायामुपदेशेनातिदेशेन वा अर्थवादस्यासन्निधानात् तदुपात्तसन्निहितफलाभावात् स्वर्गमेव गृह्णातीति न स्वर्गन्यायबाधः। तेन सत्यप्यर्थवादातिदेशे न दोष इति। न चात्रापि प्रथमत इष्टसामान्यान्वयेनार्थभावनायां त्र्यंशपरिपूर्णायां विध्यन्वयसम्भवात् विधेः प्राशस्त्यज्ञानापेक्षायां कल्पितार्थवादातिदेशेनैव इष्टविशेषापेक्षायामुपस्थितार्थवादिकफलविशेषान्वयसम्भवात् न स्वर्गफलकल्पना युक्तेति वाच्यम्। विध्यन्वयात्प्रागेवार्थभावनाया भाव्याकाङ्क्षायामिष्टसामान्यापेक्षया सर्वाभिलषितत्वेन स्वर्गरूपस्यैवोपस्थितस्य भाव्यत्वेनान्वये बाधकाभावात्। अत एवात्र आद्याधिकरणपूर्वपक्षोपपादने स्वर्गकामवाक्यस्य धर्मसंबन्धमात्रविधायकत्वपक्षे उत्पत्तिवाक्येष्वेव विश्वजिन्न्यायेन स्वर्गप्राप्तेः तस्यैव भाव्यत्वेनान्वय अङ्गीकृतः। तस्माद्यथैवेष्टसामन्यान्वयेनार्थभावनायाः भाव्यांशपूर्णत्वं वक्तव्यं तथैव तस्यामेव वेलायां स्वर्गान्वयेनापि तत्सुवचमिति विधेयार्थभावनाया अतिदेशकल्पनादशायां फलविशेषाकाङ्क्षायाः क्षीणत्वात् न तत्प्रापितार्थवादोपस्थितफलकल्पनं प्रमाणवत्। अत एव यत्र सौर्यादिवाक्ये फलविशेषः उत्पत्तिवाक्य एवाम्नातः, तत्रापि विशेषफलस्यैव भाव्यत्वेनान्वयात् नेष्टसामान्यस्य तत्त्वेनान्वयः। किन्तु यत्राग्नेयादियागेषु प्रत्यक्षवचनेनैव स्वर्गादिरूपफलविशेषसंबन्धो बोधितः तत्रानुपपत्तेः क्षीणत्वात् न विश्वजिन्न्यायप्रवृत्तिः। तत्रोत्पत्तिवाक्येषु इष्टसामान्यान्वयेनैवार्थभावनाया भाव्यांशपूर्णत्वमुपपादनीयम्। नचास्यां वेलायां विश्वजिद्वत् स्वर्गविशेषस्यैव भाव्यत्वेनान्वयोऽस्त्विति युक्तम्। तथात्वे तत्तत्प्रातिस्विकफलविशेषविध्याम्नानवैयर्थ्यापत्तेः। अतो यत्रोत्पत्तिवाक्यातिरिक्ततया तत्तत्फलविशेषविध्यन्तराम्नानं तत्रोत्पत्तिवाक्येषु विध्यन्वयात्प्राक् करणातिरिक्तांशद्वयपूर्णत्वं सामान्यान्वयेनार्थभावनाया वक्तव्यम्। यत्र तु न तत् तत्रोत्पत्तिवाक्य एव भाव्यविशेषान्वयेन तत्पूर्णत्वम्। स च विशेषः क्वचित् ब्रह्मवर्चसादिपदेन श्रुतेनैव, क्वचिदध्याहृतपदेनेति न विश्वजिन्न्यायभङ्ग इति न बाधकम्।

यत्त्वत्र तन्त्ररत्नकृता चोदनालिङ्गातिदेशस्थले अर्थवादानामनतिदेशोपपादनं पक्षान्तरेण कृतं—"यत्रैव प्रत्यक्षं वचनं तत्रैवार्थवादातिदेशः, अन्यत्र तु विधित एवान्यनिरपेक्षात् प्राशस्त्यज्ञानोत्थापनसम्भवात् नातिदेश" इति; तत् पूर्वोक्तरीत्यांशत्रयविशिष्टभावनाया विध्यन्वयानन्तरं तस्य प्राशस्त्यापेक्षायामर्थभावनागतेतिकर्तव्यताविशेषापेक्षया अवश्यकल्प्येनैकेनैवातिदेशेनोभयोः प्राप्त्युपपत्तेः विधेः प्राशस्त्यपरत्वकल्पनायां प्रमाणाभावादित्यादियुक्त्या तत्रैव पूज्यपादैः कौस्तुभे खण्डितं द्रष्टव्यम्।

वस्तुतस्तु—वाचनिकातिदेशस्य भिन्नवाक्यविधया प्रमाणत्वादुत्पत्तिवाक्ये इति-

---

कदाचिदानुमानिकवचनातिदेशस्येतिकर्तव्यतासामान्यान्वयेन विरम्य[1]व्यापारापत्तिपरिहारासम्भवेऽपि वचनातिदेशे तत्परिहारस्सुलभ इत्याह—वस्तुतस्त्विति । अनेन च युक्त्यन्तरेण आनुमानिकवचनातिदेशे नार्थवादानामतिदेश इति तन्त्ररत्नोक्तमपि समर्थयितुं शक्यत इति सूच्यते ।

तस्यायमाशयः—अतिदेशवाक्यस्य सर्वत्र 'अन्यतः उपकारालाभे प्रकृतिवत्' इत्येवंरूपस्यैव कल्पनात् विध्युद्देशेनैव प्राशस्त्यज्ञानरूपोपकारलाभे न तद्विषयत्वमप्यतिदेशवाक्यस्य कल्पनीयम् । गौरवापत्तेः । न च वैपरीत्यम् । तथात्वे प्रकृतिवच्छब्दस्य सौर्यादिवाक्यशेषत्वेनैव कल्पनात् "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः प्रकृतिवत्" इत्येवमेकवाक्यत्वेनार्थभावनायां ब्रह्मवर्चसादिपदोपात्तभाव्यविशेषकरणविशेषयोरिव प्रकृतिवच्छब्दोपात्ताग्नेयादिविशेषधर्माणामेवान्वयात् विध्यन्वयात्पूर्वमङ्गविशेषप्रापकत्वेन कृतार्थस्य विध्यन्वयोत्तरं विध्यपेक्षितप्राशस्त्यप्रापकत्वकल्पने प्रकृतिवच्छब्दस्य पूर्वोक्तविरम्य[2]व्यापारापत्तेरेव नियामकत्वात् । अतश्चोदनालिङ्गातिदेशस्थले पूर्वं नेतिकर्तव्यतासामान्यान्वयः युज्यते, येन तेन रूपेण त्र्यंशपूर्णत्वं तस्यां सम्भवेत् । वचनातिदेशे तु उत्पत्तिवाक्यापेक्षया तस्य पृथग्भूतत्वेन उत्पत्तिवाक्यावगतार्थभावनायाः इष्टसामान्यान्वयवत् इतिकर्तव्यतासामान्यान्वयेनैव त्र्यंशपरिपूर्णत्वं कल्पनीयमिति पूर्वोक्तरीत्या विध्यन्वयोत्तरं प्रवृत्तेन वचनातिदेशेन युगपत् अङ्गविशेषप्राशस्त्ययोरुभयोः प्राप्त्युपपत्तौ तस्य विरम्य[3]व्यापाराभावादिति वैधर्म्यम् ।

न चेहापि उत्पत्तिवाक्येषु दर्शपूर्णमासधर्मप्राप्त्यर्थप्रकृतिवच्छब्दकल्पनेन प्राकृताङ्गविशेषाणामेवेतिकर्तव्यताविशेषतयान्वयात् नेतिकर्तव्यतासामान्यान्वय इति वाच्यम् । तथात्वेपि पूर्वोक्तदिशा ज्ञातेन[3] प्रकृतिवच्छब्देन चोदनालिङ्गातिदेशरूपेण विरम्यव्यापारापत्तिभयेन दार्शपौर्णमासार्थवादानतिदेशात् वचनातिदेशस्योपहोमन्यायेन वैश्वदेविकब्राह्मणप्रापकस्याविशेषेण सुतरामर्थवादप्रापकत्वे विरम्यव्यापारापत्त्यभावात् ।

वस्तुतस्तु वचनातिदेशेनैव सकलब्राह्मणातिदेशे वैश्वदेविकहविर्विधायकब्राह्मणैकवाक्यत्वेन ब्राह्मणान्तःपातवशात् अर्थवादानामिव तदेकवाक्यत्वाविशेषात् तत्तद्ब्राह्मणशेषभूतस्य प्रकृति-

---

1. B. विरुद्ध

2. A. विरुद्ध 3. ज्ञानेन

वच्छब्दस्याप्यतिदेशात् वचनातिदेशः एक एव। तेनैव च दार्शपौर्णमासिकाङ्गप्राप्त्युपपत्तेः नोत्पत्तिवाक्येषु तदर्थं प्रकृतिवदिति पृथगतिदेशाश्रयणं युक्तं, प्रयोजनाभावात्।

अत एवैतदध्यायान्त्याधिकरणे प्रत्यक्षवचनातिदेशसत्त्वे चोदनालिङ्गातिदेशस्य नैव कल्पनेति वक्ष्यते। एवमपि दर्शपूर्णमासाङ्गानां बाधो नापद्येत। अतस्सिद्धमानुमानिकवचनातिदेशे विरम्य-व्यापारापत्तिभिया विधितः तत्संभवाच्च नार्थवादातिदेशः। वचनातिदेशे तु विरम्यव्यापारापत्त्यभावात् तदतिदेशो युक्त इति। न च वचनातिदेशे विधितस्तत्संभवे किमित्यतिदेशवचनस्य तद्विषयत्वकल्पनमिति वाच्यम्। इष्टापत्तेः। अत एवोक्तमेतदधिकरणान्ते तन्त्ररत्ने—"स्वल्पं चेदं कार्यं प्राशस्त्यज्ञानं विध्युद्देशादेव कथञ्चिल्लभ्यते इति तन्मात्रपरत्वे मन्दफलं वचनं स्यात्। कृत्स्नातिदेशे तु भूयः कार्यमनन्यलभ्यं चेति तत्परं वचनमर्थवत्तरं भवतीति तस्मात् कृत्स्नातिदेश" इति। तथाचाङ्गविधिप्राप्त्यर्थत्वेनैव वचनातिदेशसार्थक्यात् अङ्गविधिप्राप्तये प्रवृत्तं वचनं अपेक्षितप्राशस्त्य-द्वारा अर्थवादानपि प्रापयितुं शक्नोतीत्यन्यतः प्रयोजनसिद्धेः न तदर्थं विधेरपि तत्र व्यापारकल्पनम्। चोदनालिङ्गातिदेशे तु विरम्यव्यापारापत्तिभयात् विधेरेव तत्कल्पकत्वमित्युक्तमेव। न च वचनातिदेशस्थले उत्पत्तिवाक्येषु कथमितिकर्तव्यतासामान्यान्वयेनार्थभावनायास्त्र्यंशपरिपूर्णत्वं; अर्थ-भावनागतकथमित्याकाङ्क्षाया विशेषणविषयिण्याः सामान्यान्वयनिवर्त्यत्वासंभवादिति वाच्यम्। सामग्रीविशेषत्वादिना सामान्यरूपेण तदन्वये तन्निवर्तकत्वोपपत्तेः। तथाच सामग्रीविशेष-सहितेन[1] आग्नेयादियागेनेष्टं भावयेदित्युत्पत्तिवाक्यार्थबोधानन्तरं कोऽसौ सामग्रीविशेष इत्यपेक्षया वचनातिदेशः प्रवर्तत इति न बाधकम्।

अत एव नामातिदेशस्थलेऽप्युत्पत्तिवाक्य एव अग्निहोत्रवज्जुहोतीत्येवमतिदेशकनाम्नो-ऽन्वयान्नेतिकर्तव्यतासामान्यान्वयः, किन्तु अग्निहोत्रधर्मविशेषाणामेवान्वय इति नित्याग्निहोत्रे यथा प्राशस्त्यज्ञानपूर्वकं प्रधानं अङ्गानि चानुष्ठितानि तथैवेहानुष्ठेयानीत्यतिदेशेन प्राशस्त्यादीनां प्राप्तेः तत्पृष्ठभावेनेतराङ्गानामिवार्थवादानामतिदेशः पूज्यपादैरुपपादित एव।

तन्त्ररत्नकृता तु एतादृशे विषयेऽपि विध्युद्देशादेव तदर्थसिद्धेर्नार्थवादातिदेश इत्यभिप्रेत्य यत्र प्रत्यक्षमेव वचनं तत्रैवार्थवादातिदेश इत्युक्तम्। न ह्यत्र वचनातिदेशवत् ब्राह्मणवाक्या-तिदेशो नाम्ना क्रियते येनार्थवादानामेवातिदेशप्राप्तानां प्राकृतप्रयोजनानुरोधेन विकृतिविध्यपेक्षित-प्राशस्त्यज्ञानजनकत्वं तद्वत् कल्प्येत, नत्विह तथाऽस्ति उपकारमात्रातिदेशकत्वस्यैव लाघवेन नाम्नि स्वीकारात् तज्जनकपदार्थानामर्थादपि तत्सिद्धेः एतद्व्यापारकल्पने प्रयोजनाभावात्।

---

1. B सन्निहितेन

**कर्तव्यतासामान्याक्षेप आवश्यक एव । नच प्राशस्त्यातिदेशे तस्य निरुक्तात्व-सत्त्वे प्रमाणाभावादतिदेशलक्षणस्याव्याप्तिः ; लक्षणेऽङ्गत्वपदेन भावनेतिकर्तव्यतात्वे-नान्वितस्य विवक्षितत्वात् । अतश्चार्थभावनेतिकर्तव्यतात्वस्य तत्करणोपकारजनक-त्वरूपस्य शब्दभावनेतिकर्तव्यतात्वस्य च रुचिरूपतत्करणोपकारजनकज्ञानविषयत्वा-ख्यस्य द्विविधस्यापि संग्रहः । अन्वितपदोपादानाच्च आर्थिके प्रासङ्गिके चोपकार-जनकेऽपि नातिदेशः । तस्य प्रकृतिभावनानन्वितत्वात् । तस्मादुभयातिदेशः । अग्निमन्थनादीनां तु दक्षिणविहारे प्राप्त्यभावात् युक्तस्तदर्थे पुनर्विधिः । अत एव नवप्रयाजत्वादेरतिदेशात् 'वाजिनो यजन्ति आहुतीनां सम्पत्त्यै त्रिंशत्त्वाय' इति लिङ्गमप्युपपद्यते । इतरथा त्रिंशत्त्वानुपपत्तेरिति सूत्रकारभाष्यकारौ ।**

---

अतश्च प्राशस्त्यज्ञानजनकान्यथानुपपत्तेः विधिना एव लब्धत्वेन क्षीणत्वात् नार्थवादातिदेशकल्पकत्व-मिति विवेक इत्यलं विस्तरेण ।

प्राशस्त्यातिदेशेऽतिदेशलक्षणानुपपत्तिमाशङ्क्य परिहरति— **न चेति । तथाच यः** पदार्थो यादृशोपकारद्वारा यद्भावनायामितिकर्तव्यतात्वेनान्वितः तस्यैव पदार्थस्य तादृशोपकारद्वारा तद्भिन्नभावनान्वितत्वबोधकं प्रमाणमिति लक्षणकरणात् भावनापदेन चार्थशाब्दभावनयोरुभयो-रपि सङ्ग्रहान्न लक्षणासङ्गतिरिति भावः ।

अत्र चाङ्गविधीनामप्यतिदेश इति सिद्धान्तसाधकतया "लिङ्गदर्शनाच्चे"ति सूत्रं त्रिंशत्त्वा-येतिलिङ्गदर्शनपरत्वेन भाष्यकारेण व्याख्यातम् । अङ्गविधीनामतिदेशपक्षे अग्निमन्थनादि-विधीनां वैयर्थ्यं पूर्वपक्ष्युपपादितं "विहिताम्नानान्नेति चेदि"त्यनेनानूद्य "नेतरार्थत्वा" दिति तत्परिहारसूत्रं दक्षिणवैहारिकमारुतीयागाङ्गत्वेनाग्निमन्थनविधानान्न तद्विध्याम्नानवैयर्थ्यमित्येवं व्याख्यातम् । तदेतत्सूत्रभाष्याभिप्रायमनुवदति—**अग्निमन्थनादीनान्त्विति ।** अत्र च वरुण-प्रघासे आग्नेयादीनि पञ्च हवींषि ऐन्द्राग्न एकादशकपालः ततो वारुणी आमिक्षा काय एककपाल इत्यष्टौ हवींषि उत्तरविहारे ; दक्षिणविहारे च मारुत्यामिक्षेति नव हवींषीति नवाऽऽहुतयः । तथा दक्षिणविहारे करम्भपात्रहोम इत्येकाऽऽहुतिः आमिक्षायागानुनिष्पन्नवाजिनयागद्वयेनाऽऽहुति-द्वयम् । एवं द्वादशाहुतीनां वैश्वदेविकनवप्रयाजनवानूयाजसंबन्ध्यष्टादशाहुतिमेलने सति त्रिंशत्त्वं वरुणप्रघासे भवति नान्यथेति त्रिंशत्त्वलिङ्गदर्शनं वैश्वदेविकनवप्रयाजत्वाद्यङ्गविध्यतिदेशे उपपद्यते । तथाच[1]दक्षिणविहारे पञ्चसञ्चराणामभावात् वैश्वदेविकधर्मातिदेशाभावे तदङ्गभूताग्निमन्थनस्य अन्य-

1. B तथाद

**वस्तुतस्तु - मारुतियागस्यापि वैश्वदेविकामिक्षायागविकारत्वान्नवप्रयाजत्वादिवद्वैखाग्निमन्थनादीनामपि प्राप्तिसंभवान्नायं वैयर्थ्यपरिहारः, आमिक्षैककपालानुरोधेनैव च नवप्रयाजत्वादिसिद्धेः त्रिंशत्त्वस्याप्युपपत्तिः। न च भूयसां दर्शपूर्णमासविकारत्वात्तदनुरोधेन पञ्चप्रयाजत्वं, पशुपुरोडाशवन्नावृत्तावपि पञ्चत्वाविरोधात्। अतो भाष्यमनादृत्य सूत्रमेवं व्याख्येयम्। अग्निमन्थनादिवाक्यानामौचित्येनातिदेशविधिस्तुत्यर्थत्वात् नेतरार्थत्वादिति सूत्रं** विधायकत्वातिरिक्तस्तावकत्वरूपप्रयोजनकथनार्थः **तदेव चातिदेशवाक्यस्याङ्गविधिपरत्वे लिङ्गमिति लिङ्गदर्शनसूत्रस्यार्थः।**

तोऽप्राप्तस्य मारुतियागाङ्गत्वेन विधानान्न वैयर्थ्यमिति भावः। तदेतत्सूत्रव्याख्यानं भाष्यकारीयं दूषयति—**वस्तुतस्त्विति**।

अयमर्थः—सर्वेऽप्यामिक्षैककपाल्यागाः "स्वरसामैककपालामिक्षं च लिङ्गदर्शना"दित्यत्रैव तृतीयपादे वैश्वदेविकामिक्षायागद्यावापृथिव्यैककपालविकारा इति वक्ष्यते। तथा च दक्षिणवैहारिकमारुत्यामिक्षायागस्योत्तरवैहारिकवारुण्यामिक्षायागस्य कायैककपालस्य च वैश्वदेवपर्वसंबन्ध्यामिक्षायागैककपालयागविकृतित्वेन वैश्वदेविकाङ्गानां नवप्रयाजाग्निमन्थनादीनां वैश्वदेविकामिक्षैककपालयागातिदेशेन प्राप्तत्वात् तदर्थं मारुतियागे अग्निमन्थनपुनर्विधानं व्यर्थमेव। एवं वारुण्यामिक्षायागे कायैककपालयागे च वैश्वदेविकातिदेशेन नवप्रयाजत्वादीनां प्राप्तेः तैरेव आग्नेयादिपञ्चसञ्चरोपकारसिद्धेः त्रिंशत्त्वोपपत्तिः सुलभैवेति द्वादशद्वितीयपादान्त्याधिकरणन्यायेन कांस्यभोजि[1]न्यायापवादकेनाशङ्क्य विरोधे तत्प्रवृत्तावप्यविरोधे तदप्रवृत्त्या परिहरति—**न चेति**। एवञ्च भाष्यकारेण 'नेतरार्थत्वादि'तिसूत्रं इतरपदेन दक्षिणवैहारिकमारुतियागग्रहणमभिप्रेत्य व्याख्यातम्। तदनादृत्य स्वयं व्याचष्टे—**विधायकत्वातिरिक्तेति**। तथा च विधायकत्वातिरिक्तं यत् स्तावकत्वं तत् इतरपदेनोच्यते। तथा च यत्पूर्वपक्षिणा "अग्निं मन्थती"त्यादीनां विधित्वमङ्गीकृत्य वैयर्थ्यमापादितं तन्न, वाचनिकातिदेशस्तुत्यर्थत्वादित्यर्थेन उत्तरसूत्रं व्याख्येयम्। लिङ्गदर्शनाच्चेत्याद्यं सूत्रं वचनातिदेशस्याङ्गविधिपरत्वे लिङ्गमपि यत इतरवैश्वदेविकाङ्गसाधारण्येनाग्निमन्थनमपि लभ्यत इत्येवमनुवादकं सत् लिङ्गमिति व्याख्येयमित्यर्थः।

यद्यपि 'अग्निं मन्थती'त्यस्यैव लिङ्गताप्रदर्शनपरत्वेन लिङ्गदर्शनसूत्रं प्रथममिति व्याख्याने 'विहितानामिति चेत्' इत्यनुवादकमध्यमसूत्रस्य तदुत्तरस्य 'नेतरार्थत्वादि'ति परिहारसूत्रस्य चानुत्थानमेवेति सूत्रद्वयं तद्व्यर्थमिव, तथापि लिङ्गदर्शनत्वेनोक्तस्यैवाक्षेपसमाधानपरतया कथञ्चिद्योज्यमिति।

1. १२-२-१४.

**अतस्सिद्धमङ्गानामप्यतिदेश इति।** न चामिक्षैककपालयागानुरोधेनैव वैश्वदेविकधर्म-**प्राप्तिसिद्धेरतिदेशविध्यानर्थक्यं; यत्र धाय्याविराजादिविरुद्धनानाधर्मविषये मुख्यत्व-भूयस्त्वाभ्यां** दार्शिकधर्मप्रसक्तिस्तद्विषये वैश्वदेविकधर्मप्राप्त्यर्थत्वेन सार्थक्यात् ॥ ३ ॥

———

अङ्गविधीनां वाचनिकातिदेशान्तराभावेऽपि पञ्चसञ्चरेषु वैश्वदेविकाङ्गप्राप्त्युपपत्तेः तद्वैयर्थ्य-मित्याशङ्कां निराकरोति—**न चेति**। तथाचामिक्षैककपाल्यागार्थमनुष्ठितैरग्निमन्थननवप्रयाजापूर्वाङ्गैः **प्रसङ्गेन पञ्चसञ्चरेषूपकारसिद्धेः** अतिदेशाम्नानवैयर्थ्यमिति शङ्कार्थः। **दार्शिकधर्मप्रसक्तिरिति.**

अयमर्थः—दर्शपूर्णमासयोस्तावत् पञ्चदशसङ्ख्या सामिधेनीषु श्रुता। वैश्वदेवे पर्वणि तु 'धाय्ये विराजा' विति आश्वलायनवचनात् धाय्यापदस्य तेनैव सूत्रकारेण "पृथुपाजा अमर्त्य इति द्वे धाय्ये इत्युक्ते एते प्रतीया"दितिसङ्केतकरणात् 'पृथुपाजा अमर्त्य' इत्येतदधिकं ऋग्द्वयं विहितमिति सप्तदशसङ्ख्या विहिता। तत्र वरुणप्रघासे आमिक्षैककपाल्यागानुरोधेन वैश्वदे-विकामिक्षैककपालातिदेशात् सप्तदशत्वं संपादनीयम्? अथवा पञ्चसञ्चराणां प्रथमत्वात् भूयस्त्वाच्च तदनुरोधेन दर्शपूर्णमासातिदेशात् पाञ्चदश्यमनुग्राह्यम्? इति विरोधप्रसक्तिः। तत्र सर्ववैश्व-देविकयागार्थत्वेन विहितस्य धाय्याद्वयस्येहाप्यनुष्ठानेन साप्तदश्यमेव संपाद्यं, न तु भूयसामनु-ग्रहेऽपि पाञ्चदश्यमित्यर्थबोधेन सार्थकं ब्राह्मणातिदेशवाक्यमिति।

वस्तुतस्तु यथैवैकादशसङ्ख्याकप्रयाजान्तर्गतपञ्चप्रयाजजन्योपकारैरेव पशुपुरोडाशे प्रसङ्ग-सिद्धेः न तदर्थं पृथक् दर्शपूर्णमासातिदेशः। यथा वा अनेनैव न्यायेन आमिक्षैककपालार्थानुष्ठि-तनवप्रयाजान्तर्गतपञ्चप्रयाजजन्योपकारैरेव वरुणप्रघासीयपञ्चसञ्चरेषु प्रसङ्गसिद्धेरविरोधेन न तदर्थं दर्शपूर्णमासातिदेशः पञ्चप्रयाजविषय इत्युक्तमदूरेणाधस्तात्। यथा वा गवामयनीयभूयोऽ-हरन्तरानुरोधेन द्वादशोपसदनुष्ठाने तदन्तर्गतत्वेन त्र्युपसत्त्वस्यापि लाभात् न ज्योतिराद्येकाहेषु नामातिदेशप्राप्तस्यापि त्र्युपसत्त्वस्य विरोध इति न पृथक् तस्यानुष्ठानमित्यत्रैवाध्यायान्ते वक्ष्यते। तथैव कांस्यभोजिन्यायेन एककपालानुरोधेन प्रसूनमयत्वस्येवेहापि आमिक्षैककपाला-नुरोधेन सप्तदशसङ्ख्यानुग्रहस्यैवोचितत्वात् तदन्तर्गतत्वेन पञ्चदशसङ्ख्याजन्योपकारैरेव पञ्च-सञ्चरेषु प्रसङ्गसिद्धेः विरोधप्रसक्त्यभावेन न दार्शिकपाञ्चदश्यप्रसक्तिः येन तन्निवारणाय साप्त-दश्यलभाय च वचनातिदेशोऽपेक्ष्यते, अतो यद्यपि न धाय्यामादाय विरोधः सम्भवति, तथापि वैश्वदेवे पर्वणि 'धाय्ये विराजा' वित्युक्तसूत्रेण पृथक्पदेन धाय्ययोरिव विराजयोरपि पृथक् विधा-नात् तद्विषये विरोधप्रसक्तिर्द्रष्टव्या। विराजपदेन च "प्रेद्धो अग्ने" "इमो अग्ने" इति ऋग्द्वयं स्विष्टकृतः पुरोनुवाक्यायाज्यात्वेन विधीयते। पूर्वमाश्वलायनेन 'संयाज्ये इत्युक्ते

## (४)—एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

**एवं साकमेधे श्रुतयोरैन्द्राग्नैककपालयोरपि "एतद्ब्राह्मण ऐन्द्राग्नः यद्ब्राह्मण इतरः"। "एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरः" इति वाक्याभ्यां सार्थवादिक-साङ्गविधिकाण्डस्यातिदेश इत्युत्तरविचक्षणा स्मार्यते ॥ ४ ॥**

---

सौविष्टवतीं प्रतीयादि'ति परिभाषाकरणेन संयाज्ये इति पदेन स्विष्टकृत्संबन्धिऋग्द्वयोक्तेः। तत्किमृग्द्वयं ? इत्यपेक्षायां "प्रेद्धो अग्ने इमो अग्ने इति संयाज्ये" इत्यनेन ऋग्द्वयस्य संयाज्ये इति सङ्केतं कृत्वा अनन्तरमेव 'विराजावित्युक्ते एते प्रतीयादि'ति वचनेन 'प्रेद्धो अग्ने इमो अग्ने' इति ऋग्द्वयस्य संयाज्ये इति परिभाषितस्यैव विराजाविति सङ्केतकरणेनेहापि तस्यैव ऋग्द्वयस्य प्रतीतेः। तथाचामिक्षैककपाल्यागानुरोधेन स्विष्टकृति 'प्रेद्धो' इति ऋग्द्वयप्राप्तावपि मुख्यत्वभूयस्त्वाभ्यां पञ्चसञ्चरानुरोधेन दर्शपूर्णमासातिदेशेन प्राप्तं "पिप्रीहि देवान्" "यदद्य विशो अध्वरस्य" इति ऋग्द्वयमेव कर्तव्यमिति अनुष्ठानबाधनार्थं अतिदेशवचनं सार्थकम्। एवं सति धाय्याविराजादीतिमूले धाय्यापदं न विरुद्धधर्मज्ञापनार्थं, अपि तु 'धाय्येविराजा'विति सूत्रस्थ-पदप्रतीकोपादानमात्रेण विराजादिविषय एव तत्प्रतिपादनतात्पर्यं द्रष्टव्यम्। अथवा प्रयाजगतपञ्चत्वसङ्ख्यायाः प्रचयमात्रशिष्टत्वेन परिच्छेदकत्वेनान्वितपाञ्चदश्यस्य साप्तदश्येनानुग्रहायोगात्; इतरथा प्रकृतावेवाविरोधेन साप्तदश्यनिवेशापत्तेरस्त्येव विरोधः। श्युपसत्त्वानुग्रहोऽपि वक्ष्यमाणः कथञ्चित् उपकारकतामात्राभिप्रायक एव न वास्तवतयेति ध्येयम्। आदिपदेन चानूयाजेषु शुद्धाज्यपृषदाज्ययोर्विरोधप्रसक्तिः सङ्गृह्यते। तत्रापि वचनातिदेशसत्त्वे पृषदाज्येनैवानूयाजानुष्ठानम्। तथा दर्शपूर्णमासयोरासन्नहविषां यजमानकर्तृकाभिमर्शने आग्नेयादियागेषु पृथक् पृथक् मन्त्राम्नानानन्तरं चतुर्होतृमन्त्राः पौर्णमास्यां, पञ्चहोतृमन्त्राः अमावास्यायामाम्नाताः। तथैव वैश्वदेविकपञ्चसञ्चरेषु तदतिदेशेन प्राप्ता अपि "पञ्चहोता यजमानः सर्वाणि हवींष्यासन्नानि अभिमृशति" इत्यापस्तंबवचनान्न क्रियन्ते। इदं हि वचनं अमावास्यातन्त्रत्वादेव पञ्चहोतृप्राप्तेः पुनरुपादानं इतरमन्त्रपरिसङ्ख्यार्थम्। अथवा अबाधेनोपपत्तौ बाधायोगात् तत्तदितरमन्त्रान्ते प्रत्येकं पञ्चहोतृमन्त्रविधानार्थं, आगन्तुकस्यान्ते निवेशसंभवात् इति द्वेधा तद्भाष्ये व्याख्यातम्। एवञ्च वरुणप्रघासीयपञ्चसञ्चरेषु वचनातिदेशाभावे प्रकृत्यतिदेशेन यथावस्थितमन्त्राणामेव प्राप्तिः स्यात्। तत्सत्त्वे तु वैश्वदेविकपञ्चसञ्चरेष्विव इहानुष्ठानं भवतीति तत्सार्थक्यं द्रष्टव्यम्। एवं वैश्वदेविकपञ्चसञ्चरार्थवादप्राप्तिरप्यत्र वचनातिदेशप्रयोजनं ज्ञेयमिति दिक्।

**एककपालैन्द्राग्नौ च तद्वत्** ॥ (८-१-४) स्पष्टार्थम् ॥

## (५)—एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनाद्वभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ २३ ॥

एककपालस्य **प्रकृतिभूत एककपालो वारुणप्रघासिक एव, न तु धर्मभूयस्त्वेऽपि वैश्वदेविकः;** वक्ष्यमाणात्सर्वैककपालेषु **चोदनालिङ्गातिदेशादेव वैश्वदेविकधर्मप्राप्तिसिद्धेः अनन्यलभ्यकतिपयधर्मप्राप्त्यर्थं वारुणप्रघासिक एव। एवं चैन्द्राग्नप्रकरणपाठोऽप्युपपद्यते।** तत्र हि **न दार्शिकैन्द्राग्ना**तिदेशविधिः, **चोदनालिङ्गातिदेशादेव सिद्धः। नाप्यैन्द्राग्नान्तराणां, अनुपस्थितत्वात्। अत एव चातुर्मास्यप्रकरणस्थत्वेनोपस्थितत्वाद्वैश्वदेवे चैन्द्राग्नाभावाद्वारुणप्रघासिकस्यैव। अतस्तत्प्रायपाठादपि साकमेधैककपालस्य वारुणप्रघासिकैककपालप्रकृतिकत्वम्। धर्माश्च 'हिरण्मय्यः स्रुचो भवन्ति' इत्यादयस्सामान्यविहिता इति भाष्यकारः।**

**वस्तुतस्तु—साकमेधस्थपञ्चसञ्चरेषु अतिदेशविधिरस्ति न वा? अन्त्ये दर्शपूर्णमासविकारत्वापत्तेः भूयोऽनुग्रहाय न** हिरण्मयत्वादिप्रसक्तिः। आद्येऽप्येतदधिकरणन्या**यस्यान्यलभ्यत्वस्याभावात् धर्मभूयस्त्वलाभाय वैश्वदेविकपञ्चसञ्चराणामेव धर्मातिदेशात् तथैव वारुणप्रघासिकहिरण्मयत्वाद्यप्राप्तिः।**

---

**एककपालानां वैश्वदेविकः प्रकृतिः** ॥ पूर्वमैन्द्राग्नैककपालयागयोस्साकमेधस्थयोरितरैन्द्राग्नैककपालब्राह्मणे वचनात् अतिदेश्येते इत्युक्तम्। तत्रैन्द्राग्ने वैश्वदेवपर्वणि ऐन्द्राग्नस्याभावात् वैश्वदेविकब्राह्मणातिदेशः, अथवा वारुणप्राघासिकैन्द्राग्नब्राह्मणस्येति संशयासंभवस्याग्रे सूचनात्, एककपाले संभवत्संशयनिरासपूर्वकं सिद्धान्तमेव दर्शयति—**एककपालस्येति।** साकमेधस्थस्येति पूर्वं शेषः। **वक्ष्यमाणादिति।** 'स्वरसाम्नैककपालामिक्षं च लिङ्गदर्शनादि'त्यग्रे अत्रैव तृतीयपादे वक्ष्यमाणादित्यर्थः। **तत्र हीति।** साकमेधस्थे इति शेषः। **अतिदेशविधिरिति।** यथा वरुणप्रघासस्थपञ्चसञ्चरेषु वैश्वदेविकपञ्चसञ्चरब्राह्मणातिदेशप्रापकं प्रत्यक्षं वचनं तथैव साकमेधस्थपञ्चसञ्चरेष्वस्ति न वेत्यर्थः।

**न हिरण्मयत्वादिप्रसक्तिरिति।** यथैव वैश्वदेविकपञ्चसञ्चरेषु अन्यातिदेशकप्रत्यक्षवचनाभावे दर्शपूर्णमासयोरेवातिदेशात् तदीया एव धर्मा भवन्ति तद्वत् साकमेधस्थपञ्चसञ्चरेषु तदभावे दर्शपूर्णमासधर्मा एव तदतिदेशाद्भवन्ति। ऐन्द्राग्नैककपालयोस्तु पूर्वोक्तवचनात् वारुणप्राघासिकैन्द्राग्नैककपालयोरतिदेशः। तत्र यद्यप्येतदतिदेशेन वारुणप्राघासिकानां हिरण्मयत्वादीनां धर्माणां प्राप्तिः, तथापि मुख्यत्वभूयस्त्वाभ्यां पञ्चसञ्चरानुरोधेन दर्शपूर्णमासातिदेशप्राप्ता नानावृक्षीयत्वादय एव धर्मा आपद्येरन्निति नैन्द्राग्नैककपालानुरोधेन हिरण्मयत्वादिधर्मप्राप्तिरित्यर्थः।

**आद्य इति।** अयं भावः, सत्यप्यतिदेशविधिः "एतद्ब्राह्मणान्येव पञ्चहवींषि यद्ब्राह्मणा-

**वस्तुतस्तु—याज्ञिकास्त्वत्राद्यत्र वरुणप्रघासेषु स्रुगन्तरोत्पत्तिप्रसक्तिस्तत्रैव हिरण्मयत्वशमीमयत्वादेर्विध्यौचित्येन दक्षिणविहार एव तन्निवेशादैन्द्राग्नैककपालयोरपि न-**

---

नीतराणि" इति वैश्वदेविकातिदेशविधिसरूप एव भवेत् तत्र साकमेधस्थैककपाले ब्राह्मणातिदेशकवाक्ये इतरपदेन वैश्वदेविकैककपालग्रहणे चोदनालिङ्गातिदेशादेव तद्धर्मप्राप्तेरन्यलभ्यत्वात् तद्वैयर्थ्यापत्त्या न तद्ब्राह्मणम् । अपि तु अनन्यलभ्यवारुणप्राघासिकधर्मप्राप्त्यर्थं वारुणप्राघासिकैककपालस्यैव ग्रहणमित्येतदधिकरणे साधितम् । न ह्यनेन न्यायेन साकमेधस्थपञ्चसञ्चरातिदेशवाक्ये इतरपदेन न वैश्वदेविकपञ्चसञ्चराणां ग्रहणम् ; किन्तु वारुणप्राघासिकानामिति वक्तुं शक्यम् । दर्शपूर्णमासातिदेशेन तद्धर्माणामन्यलभ्यत्वेऽपि साकमेधस्थपञ्चसञ्चराणां वैश्वदेविकपञ्चसञ्चरविकृतित्वे मानाभावेन तदीयचोदनालिङ्गातिदेशाप्रवृत्त्या तद्धर्माणामप्राप्तेरन्यलभ्यत्वाभावात् । वारुणप्राघासिकपञ्चसञ्चरेषु धर्मभूयस्त्वाभावाच्च । अतो नैतदधिकरणसिद्धान्तेन वैश्वदेविकपञ्चसञ्चराणामितरपदेन ग्रहणं निवारयितुं शक्यते । किन्तु एतदधिकरणपूर्वपक्षयुक्त्या वैश्वदेविकपञ्चसञ्चरधर्माणामेवातिदेशापत्त्या अन्त्यपक्षवदेव भूयसामनुग्रहाय नानावृक्षीयत्वादिधर्माणामेव प्राप्तेर्न हिरण्मयत्वादिप्राप्तिरिति ।

यद्यपि वा सन्निधानात् वारुणप्राघासिकपञ्चसञ्चराणामेवेतरपदेन ग्रहणात् तदतिदेशो भवेत्, तथापि पञ्चसञ्चरातिदेशेनैव हिरण्मयत्वादिधर्मप्राप्तेः सुतरामेककपालातिदेशविधेः वारुणप्राघासिकहिरण्मयत्वादिधर्मप्राप्तिर्नैव फलं वक्तुं शक्यम् । प्रत्युत तदानीमेककपालैन्द्राग्नातिदेशविधेः फलाभावेन वैयर्थ्यापत्तेः तत्परिहाराय साकमेधस्थपञ्चसञ्चरेषु वैश्वदेविकपञ्चसञ्चरातिदेशविधायकत्वमेव तत्राङ्गीकर्तुमुचितमिति पुनस्तथैव न हिरण्मयत्वादिप्रसक्तिरिति तु स्पष्टत्वात्पूज्यपादैर्नोक्तम् ।

अस्तु वा एककपालैन्द्राग्नयोरिवेहपञ्चसञ्चरेष्वपि वारुणप्राघासिकतत्तद्धर्मातिदेशः, तथापि न तेषु हिरण्मयत्वादिधर्मप्रसक्तिः, तेषां वारुणप्राघासिकपञ्चसञ्चरैन्द्राग्नैककपालाङ्गत्वाभावादित्याह[1]—**वस्तुतस्त्विति**। अयमर्थः, वरुणप्रघासे विहारद्वयम्-अध्वर्युसञ्चारार्थमेक उत्तरः ; प्रतिप्रस्थातृसञ्चारार्थमपरो दक्षिणः ; उत्तरविहारे आग्नेयाद्यष्टौ यागाः । दक्षिणे मारुत्यामिक्षामारुणीमेषीद्रव्यकयागद्वयम् । उत्तरविहारे वैश्वदेविकधर्मातिदेशात् नानावृक्षीयाण्येव यथावस्थितानि प्राकृतान्येव पात्राणीति न तत्र पात्रान्तरापेक्षा । अस्ति च प्राकृतपात्राणामुत्तर-

---

1. B इत्यत आह

**हिरण्मयत्वाद्यतिदेशः। अस्तु वा सः। तथाऽपि यथैन्द्राग्नाद्यतिदेशविधिवैयर्थ्यमि-
त्थैव भूयसामनुग्रहमप्यनङ्गीकृत्य हिरण्मयत्वाद्यभ्यनुज्ञानमित्युच्येत। तत्र ऐन्द्राग्नैक-
कपालयोर्मध्येऽन्यतरातिदेशेनैव तत्प्राप्तिसिद्धेरितरानर्थक्यं, अतोऽवश्यं तत्तद्विशेष-**

---

विहारे व्यापृतत्वात् दक्षिणविहारे तदपेक्षेति तत्रैव नानावृक्षीयत्वबाधेन विशेषवचनेन हिरण्मयत्वादिधर्मविधानं युक्तम्, नोत्तरविहारे, तथात्वेऽनाकाङ्क्षितविधित्वापत्तेः, बहुधर्मबाधापत्तेश्च। अतो दक्षिणविहार एव हिरण्मयत्वादिधर्माणामनुष्ठानं याज्ञिकैः क्रियत इति वरुणप्रघासे पञ्चसञ्चरेष्विव ऐन्द्राग्नैककपालयोरपि हिरण्मयत्वादिधर्माणामङ्गत्वाभावे सति तदतिदेशेन न साकमेधस्थयोरपि तयोः हिरण्मयत्वादिधर्मप्राप्तिः। एतेनातिदेशविधिर्नास्तीत्यन्त्यपक्षे येषु तन्त्रेणानुष्ठीयमानेष्वङ्गेषु पात्राणामपेक्षया बहुप्रधानातिदेशप्राप्तनानावृक्षीयत्वस्य एककपालैकप्रधानातिदेशप्राप्तस्य हिरण्मयत्वस्य च विरोधप्रसक्तिः तत्र भूयोनुग्रहप्राबल्येऽपि केवलैककपालप्रधान एव हिरण्मयत्वानुष्ठाने विरोधाप्रसक्तौ भूयोनुग्रहस्य नियामकत्वासंभवात्, तत्प्रधान[1] एव हिरण्मयत्वप्राप्तिः एककपालातिदेशविधेः प्रयोजनं भाष्योक्तं शक्यत एव वक्तुमित्यपि परास्तं वेदितव्यमिति।

**अस्तु वा स इति**। दक्षिणोत्तरविहारसाधारण्येन हिरण्मयत्वाद्युपदेश इत्यर्थः। **याज्याद्य इति**। दर्शपूर्णमासयोः "गोभिर्विप्रः प्रमतिमिच्छमानः" इत्यैन्द्राग्ने याज्या, वारुणप्राघासिकैन्द्राग्ने तु 'श्नथद्वृत्रमुत सनोति वाजम्' इति याज्या। अस्याः साकमेधस्थैन्द्राग्ने प्राप्त्यर्थमतिदेशविधिरित्यर्थः। आदिपदेन च ऐन्द्राग्नहविरभिमर्शने प्राकृतमन्त्रबाधेन वैश्वदेविकपञ्चहोतृमन्त्रा गृह्यन्ते। न हि ते वैश्वदेवातिदेशाल्लभ्यन्ते, तत्रैन्द्राग्नाभावात्। न वा दर्शातिदेशात्। यद्यपि वैश्वदेवे ऐन्द्राग्नाभावात् न तत्प्रकृतित्वेन वारुणप्रघासिकैन्द्राग्ने वैश्वदेविकधर्मसाधारण्येन तदभिमर्शनमन्त्रो लभ्यते, येन साकमेधस्थैन्द्राग्नहविरभिमर्शने तन्मन्त्रप्राप्तिरतिदेशफलमुच्येत, तथापि वरुणप्रघासीयसर्वयागेषु "तस्य वैश्वदेववत्कल्पो व्याख्यातः" इत्यापस्तंबेन सामान्यतो वैश्वदेवधर्माणामतिदेशकरणात् वारुणप्राघासिकैन्द्राग्नहविरभिमर्शने तन्मन्त्रप्राप्तेरिह तत्प्राप्तिरतिदेशफलं शक्यत एव वक्तुम्। तथा वारुणप्रघासीयौषधद्रव्यकयागीयद्रव्यतुषाणामवभृथे प्रतिपत्तिर्विहिता। तदतिदेशेनैव साकमेधीयैन्द्राग्नतुषाणामपीतरतुषसाधारण्येनावभृथे प्रतिपत्तौ प्राप्तायामपि 'ऐन्द्राग्नतुषानप्सु प्रतिपादयती'ति पुनर्वचनादैन्द्राग्नतुषाणामेव तत्प्रतिपत्तिविधानद्वारा इतरतुषाणां तत्परिसङ्ख्या भवति। तत्रैन्द्राग्नतुषाणां प्रज्ञात[2]पूर्वकं निधानं याज्ञिकैः क्रियते; प्रणीताविमोकान्ते ऐन्द्राग्नतुषाणां प्रतिपत्तिकरणात्। तदिदं प्रणीताविमोकोत्तरकाले तदनुष्ठानं वारुणप्रघा-

---

1. B प्रधान 2. A. प्रज्ञान

विहितधर्मप्राप्तिसिद्ध्यर्थमेवेदमतिदेशद्वयम्। विशेषविहितधर्माश्च ऐन्द्राग्ने याज्यादयः। एककपालेऽपि केचिच्छाखान्तरेष्वनुसन्धेया इति ध्येयम्॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
सप्तमस्याध्यायस्य
प्रथमः पादः

---

सिकैन्द्राग्नातिदेशे सति लभ्यते। वारुणप्रघासिकैन्द्राग्नतुषप्रतिपत्तेः तदानीमेव विधानेन तदतिदेशेनेहापि तथैवानुष्ठानात्। इतरथा तुषोत्पत्तिसमय एव। अथवा सूक्तवाकीयाशासनमन्त्रोत्तरं "ऐन्द्राग्नतुषानप्सु प्रतिपादयती"ति वचनाम्नानात् तदुत्तरमेव तदनुष्ठानापत्तेः। अत एतादृशविशेषधर्मप्राप्त्यर्थं युक्तोऽतिदेशविधिः। आपस्तम्बसूत्रे वारुणप्रघासिकैककपाले वैश्वदेविकैककपालापेक्षया विशेषधर्माणामाम्नानाभावेऽपि शाखान्तरे ते द्रष्टव्या इत्याह—**एककपालेऽपीति**। अत्र च साकमेधस्थपञ्चसञ्चरेषु अतिदेशविधिसद्भावे एतदधिकरणन्यायस्यान्यलभ्यत्वाभावात् यत् भूयस्त्वलाभाय वैश्वदेविकपञ्चसञ्चराणामेवातिदेशादित्युक्तम् तत्रेदमवधेयम्—यद्यपि चोदनालिङ्गातिदेशेन वैश्वदेविकपञ्चसञ्चरधर्माणामन्यलभ्यत्वं न, तथापि वारुणप्राघासिकपञ्चसञ्चराणां सन्निधानेनातिदेशाङ्गीकारे दर्शपूर्णमासधर्मसहित वैश्वदेविकपञ्चसञ्चरधर्माणामन्यलभ्यत्वमस्त्येव। न ह्येककपाले साकमेधस्थे चोदनालिङ्गातिदेशेन वैश्वदेविकधर्माणां प्राप्तेः वारुणप्रघासिकैककपालातिदेशस्वीकारसिद्धान्ते चोदनालिङ्गातिदेशो बाध्यते। किन्तु तस्मिन् विद्यमान एवानन्यलभ्यविशेषधर्मलाभप्रयोजनको वारुणप्रघासिकैककपालातिदेशोऽपि स्वीक्रियते। अबाधेनोपपत्तौ बाधाऽयोगात्। एवञ्चैककपाले वैश्वदेविकैककपालधर्मा वारुणप्रघासिकैककपालीयसामान्यविशेषधर्मा अप्यनुष्ठातव्या भवन्ति। तथैव वारुणप्रघासीयपञ्चसञ्चरेषु वैश्वदेविकब्राह्मणस्यातिदेशात् प्राकृतदर्शपूर्णमासधर्माणां वैश्वदेविकधर्माणां वारुणप्रघासीयसामान्यविशेषधर्माणाञ्च समुच्चयेनानुष्ठाने सति साकमेधस्थपञ्चसञ्चरेषु वारुणप्रघासीयपञ्चसञ्चरातिदेशस्वीकारे तेषां सर्वेषामेव धर्माणामनुष्ठानं लभ्यत इति वैश्वदेविकधर्माणामन्यलभ्यत्वम्। प्रत्युत वैश्वदेविकपञ्चसञ्चरातिदेशपक्षे वारुणप्रघासिकपञ्चसञ्चरधर्माणामप्राप्तेः अनन्यलभ्यतदीयधर्मलाभार्थं ऐन्द्राग्नप्रायपाठाच्च वारुणप्रघासिकपञ्चसञ्चरातिदेशस्यैव युक्तत्वात् भूयोधर्मानुग्रहोऽस्मिन्पक्षे संपद्यते। अनेनैव न्यायेन एककपालेऽपि वैश्वदेविकैककपालधर्माणामन्यलभ्यत्वं बहुधर्मानुग्रहश्चोपपादनीयः। अत एव "ततो महाहविषस्तन्त्रं प्रक्रामति। तस्य वारुणप्रघासिनोत्तरविहारेण कल्पो व्याख्यातः" इत्यापस्तंबसूत्रे साकमेधस्थपञ्चसञ्चराद्यष्टानां सर्वेषामेव महाहविस्संज्ञकानां वारुणप्रघासिकपञ्चसञ्चरादिप्रकृतिकत्वमुक्तम्। एतदापस्तम्बसूत्रबलादेव साकमेधस्थे

षष्ठे ऐन्द्रचरुद्रव्यके यागे 'वैश्वदेववत्कल्प' इति सूत्रबलात् वारुणप्रघासीयैन्द्राग्ने वैश्वदेविकाभि-मर्शनमन्त्रादिलाभ इव वरुणप्रघासस्थहविरभिमर्शनमन्त्रादिरूपविशेषधर्मलाभः सिद्ध्यति। अन्यथा दार्शिकातिदेशप्राप्तस्यैव तन्मन्त्रस्य प्राप्त्यापत्तेः। नहि ऐन्द्रे चरौ 'एतद्ब्राह्मण ऐन्द्रश्चरुः यद्ब्राह्मण इतर' इत्येवमेककपालातिदेशकविधिसरूपमतिदेशकवचनं संभवति। इतरस्य ऐन्द्रचरुद्रव्यकयागस्य वैश्वदेवे वरुणप्रघासे वा पर्यप्यभावात्। अतस्तत्र पञ्चसञ्चराद्यनुरोधेन वारुणप्रघासिक---सामान्यविहितधर्मप्राप्तावपि तद्धविरभिमर्शनमन्त्रादिविशेषधर्मप्राप्तये 'वैश्वदेववत्' अथवा 'वरुणप्रघा-सवत्' इत्येकतरमतिदेशकं वाक्यं कल्पनीयम्। तत्रैन्द्राग्नप्रायपाठात् 'वरुणप्रघासव'दित्येव वचन-मस्तीति कल्पयित्वा अष्टावपि प्रत्यक्षवचनातिदेशविधीन् श्रौतानुपलभ्यापस्तम्बेन वारुणप्रघास-कल्पः साकमेधीयप्रधानयागेषु सामान्यधर्माणामुत्तरवेदिपाशुकाग्निप्रणयनादिरूपाणां पूर्वोक्तानां विशेषधर्माणां च प्राप्त्यर्थमतिदिष्टः। दर्शपूर्णमासधर्मा वैश्वदेवधर्माश्चाविरुद्धास्तु समुच्चिता भवन्त्येव। साकमेधपुरस्कारेण विशेषतो विहिता धर्मा अपि समुच्चिता इति तु निर्विवाद-मेवेत्यलं विस्तरेण।

**श्रीमत्खण्डदेवान्तेवासिकविमण्डनशम्भुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां सप्तमाध्यायस्य**
**प्रथमः पादः**

---

## अथ सप्तमस्याध्यायस्य द्वितीयः पादः

(१)—साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टम् ॥ १ ॥ शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिःस्यात्पृथग्भावात्क्रियाया ह्यभिसम्बन्धः ॥ २ ॥ स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥ शब्दमात्रमिति चेत् ॥ ४ ॥ नौत्पत्तिकत्वात् ॥ ५ ॥ शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥ स्वरस्येति चेत् ॥ ७ ॥ नार्थाभावाच्छ्रुतेरसम्बन्धः ॥ ८ ॥ स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥ अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥ शब्दानां चासामञ्जस्यम् ॥ १२ ॥ अपि तु कर्मशब्दस्स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ अद्रव्यं चापि दृश्यते ॥ १४ ॥ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥ तस्मिन् संज्ञाविशेषास्स्युर्विकारपृथक्त्वात् ॥ १६ ॥ योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥ अयोनौ चापि दृश्यतेऽतथायोनि ॥ १८ ॥ ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥ १९ ॥ स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥ २० ॥ शब्दानां च सामञ्जस्यम् ॥ २१ ॥

प्रकृतौ ज्योतिष्टोमे अभिवत्यामुत्पन्नं रथन्तरं विकृतिविशेषे अविवाक्यादौ कवतीषु कर्तव्यत्वेन श्रूयते 'कवतीषु रथन्तरं गायति' इत्यादिना। तथा 'यद्योन्यां गायति तदु-

**स्तरयोर्गायति' इति च श्रुतम्।** तत्र रथन्तरादिशब्दानां **गीतिविशेषविशिष्टायां ऋचि** प्रयोगा**द्विशिष्टवाचित्वे प्राप्ते—**

**आकृत्यधिकरणन्यायेनैव गीतिविशेषमात्रं** विजातीयगीतित्वमात्रं **वा वाच्यम्। एवं सामशब्दस्यापि गीतिमात्रं**[1] **गीतित्वमात्रं वा वाच्यं न तु गीतिस्तद्विशिष्टा वा ऋक्। तस्या व्यक्तिन्यायेन** अरुणापद इव **सति मुख्यार्थबाधे लक्षणया बोधोपपत्तेः।**

---

**साक्षोऽभिधानशब्देन॥ रथन्तरादिशब्दानामिति।** 'यद्योन्यां तदुत्तरयो'रिति वाक्ये यच्छब्देन साममात्रस्यैवोक्तेरादिपदेन सामशब्दस्य ग्रहणम्। **प्रयोगादिति।** 'रथन्तर-मधीष्व' 'सामाधीष्व' इति प्रयोगेण प्रेषितस्य प्रगीतमन्त्राध्ययने प्रवृत्तिदर्शनादित्यर्थः। **विजातीयगीतित्वमात्रं वेति।** यथैव गीतिविशिष्टऋग्वाचित्वे

'गीतौ सत्यां प्रयुक्तत्वात् असत्यां चाप्रयोगतः।
आकृतिन्यायसद्भावात् गीतेरेवाभिधेयता ॥'

इति प्राचीनोक्तरीत्या गीतेरेव वाच्यत्वं तथा गीतावपि गीतित्वसद्भावात् आकृत्यधिकरणन्यायेनैव अनन्तशक्तिकल्पनापत्तेश्च विजातीयगीतित्वमेव वाच्यं लाघवादिति पक्षान्तराभिप्रायः। **आरुण्य-पद इवेति।** अरुणगुणस्य सर्वत्र विद्यमानस्यैकत्वेन लाघवात् अरुणगुण एवारुणपदस्य शक्तिः। यथा वा तस्य नानात्वे अरुणात्वजातौ सा स्वीक्रियते। तत्राद्ये पक्षे 'अरुणा गौ'रिति सामानाधि-करण्यनिर्वाहाय साक्षात्संबन्धेन व्यक्तिमात्रलक्षणा। द्वितीये च परम्परासंबन्धेन तल्लक्षणा यथा, तथैवेहापि पक्षद्वये विशिष्टबोधसंभवात् न तत्र शक्तिकल्पनमित्यर्थः।

अत्र च 'गीतिषु सामाख्या' (पू. मी. २-१-११)इति द्वितीये निर्णयात् पौनरुक्त्यमिहाशङ्क्य प्राचीनैः "स्थूणानिखननन्यायेन दार्ढ्यं क्रियते—द्वितीये हि मन्त्रलक्षणप्रसङ्गेन तद्भेदानां 'अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचस्सामानि यजूंषि (तै-शा-१-१) इति दर्शितत्रैविध्यसिद्ध्यर्थमृगादीनां लक्षणमात्रमुक्तम्। तत्र यदि प्रगीतो मन्त्रः साम यदि वा गीति-क्रियामात्रं उभयथापि त्रैविध्यमुपपन्नमिति न तत्र गीतिवचनत्वं साधितम्, विवेकप्रयोजनाभावात्। लक्षणन्तु कथयता अत्रत्यन्यायावष्टम्भेनैव गीतिवचनत्वमाश्रित्य गीतिषु सामाख्येति कथितम्। एवं कथनादेव यद्गीतिवचनत्वमर्थादवगतं तदेवेदानीं न्यायेन पूर्वपक्षपूर्वकं दृढीक्रियते। वाच-निकातिदेशसिद्ध्यर्थतया इदानीं प्रयोजनसद्भावात्" इति परिहृतम्।

---

1. गीतेरेकत्वपक्षे इति भावः नानात्वे तु पक्षान्तरम्

आकृत्यधिकरणस्यैव तु प्रयोजनकथनार्थानि सूत्राणि। यदि हि ऋग्वाचित्वं भवेत् तदा ऋचि ऋगतिदेशासम्भवात् कवतीशब्दः कार्यलक्षणार्थः, तत्कार्यमर्थप्रकाशनं लक्षणादिना अभिवत्या कुर्यादिति कवतीकार्ये ऋगन्तरस्यातिदेशः। देशलक्षणार्थो वा, कवतीदेशे[1] अभिवतीं पठेदिति। जघन्यं रथन्तरपदं वा तद्धर्मलक्षणार्थं सत्तद्धर्मातिदेशार्थं, कवतीषु सम्मीलनादीन् रथन्तरधर्मान् कुर्यादित्यर्थः। अन्ये तु भाष्यस्थाः पक्षाः असम्भवदुक्तिकत्वान्न लिखिताः।

सिद्धान्ते तु लक्षणायां प्रमाणाभावात् ऋच इह बोधस्यैवाभावेन गीतिमात्रस्यैव कवतीष्वतिदेश इति प्रयोजनम्। प्रसङ्गादाकृत्यधिकरणसिद्धस्यैव गीतिवाचित्वस्योपोद्बलकानि कानिचिल्लिङ्गदर्शनसूत्राणीति द्रष्टव्यम्। न च 'यद्योन्यां गायति' इत्यादौ योनिसम्बन्धित्वेन रूपेण विधेयत्वादतिदेशलक्षणोपपत्तावपि 'कवतीषु रथन्तरं गायति' इत्यादौ रथन्तरत्वस्यैव विधेयतावच्छेदकत्वादतिदेशत्वानुपपत्तिरिति वाच्यं, तत्रापि धर्मग्राहकक्लृप्तोकारलाभार्थं अभिवतीसम्बन्धित्वस्यैव विधेयतावच्छेदकत्वात्।

---

तत्र येन केनापि प्रसङ्गेन लक्षणकरणेनैव स्वरूपज्ञानसिद्धौ पुनस्तत्करणवैयर्थ्यापत्तितादवस्थ्यात् परिहारे पूर्वोक्ते नातीव समञ्जसतेति तं परिहारमुपेक्ष्य आकृत्यधिकरणविचारप्रयोजनस्य तदधिकरणे सूत्रकारेणानुक्तेः तत्कथनमेवात्रसूत्रकृता क्रियते वाचनिकातिदेशप्रसङ्गेनेत्येवं पौनरुक्त्यपरिहारं युक्तं मत्वा यदाकृत्यधिकरणे स्वयं प्रयोजनमेतदधिकरणस्थमुक्तं तदेवेदमिति स्मारयति —आकृत्यधिकरणस्यैवेति। अत्र च 'साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम्' (जै-सू ७-२-१) इत्याद्येकविंशतिसूत्रैः भाष्यकारेण नानापूर्वपक्षा दर्शिताः। तत्र केचन पक्षा भाष्य एव फल्गुतया दर्शिताः। तानत एवोपेक्ष्य सयुक्तिकत्वेन तदुक्तेन पक्षत्रयेण पूर्वपक्षं सिद्धान्तं च दर्शयन् तदधिकरणप्रयोजनं तावद्विविनक्ति—यदि हीति। गीतिमात्रस्यैवेति। पूर्वपक्षे जघन्ये रथन्तरपदे धर्मलक्षणया गीतिं विहाय धर्ममात्रातिदेशवत् न सिद्धान्ते धर्ममात्रातिदेशः अपि तु गीतेरेव सः। धर्मलाभस्य तदनुनिष्पादित्वादित्येवकारेण सूचितम्। प्रयोजनमात्रकथने गीतिमात्रवाचित्वसाधकतयाऽत्र लिङ्गदर्शनसूत्रोपन्यासवैयर्थ्यं परिहरति-प्रसङ्गाच्चेति। प्रयोजनप्रसङ्गादित्यर्थः। [2]सूत्राणि विस्तरभयात् प्रयोजनाभावाच्च नार्थपुरस्सरं प्रदर्शितानि। अतिदेशत्वानुपपत्तिरिति। अतिदेशलक्षणे तत्सम्बन्धित्वेनैव रूपेणान्याङ्गताबोधकप्रमाणत्वस्य निवेशात् तदनुपपत्तिरित्यर्थः। न चास्योपदेशरूपत्वेनादृष्टार्थमेव कवतीषु रथन्तरसामाध्ययनोपपत्तेः

---

1. कवतीकाले इति भावः

2. A adds तानि च

**वस्तुतस्तु—गृहमेधीये** आज्यभागविधेरतिदेशत्वाभाववदस्याप्यतिदेशत्वाभावे न काचित् क्षतिः। लाघवेनाभिवर्तीषु येन रूपेणोपकारकत्वं तेनैव रूपेण कवतीषूपकारकत्वस्वीकारेणोहोपपत्तेः ॥ १ ॥

इति श्रीखण्डदेवविरचितायां
भाट्टदीपिकायां
सप्तमस्याध्ययस्य
द्वितीयः
पादः

---

स्तोत्रसाधनीभूतरथन्तर[1]सामधर्मलाभासंभवात् कवतीवृत्तितत्तदक्षराभिव्यक्त्यर्थत्वानुपपत्तावूहानुपपत्तिरित्याशङ्कां परिहरति-लाघवेनेति ।

**येन रूपेणेति ।** स्तोत्रापूर्वसाधनीभूतऋगक्षराभिव्यक्तिरूपेणोपकारकत्वं क्लृप्तम् । तेनैवोपस्थितेन रूपेणात्रोपकारकत्वं लाघवात् कल्प्यत इति भावः

इति भाट्टदीपिकाप्रभावल्यां
सप्तमस्याध्यायस्य
द्वितीयः
पादः

---

1. B omits साम

# अथ सप्तमस्याध्यायस्य तृतीयः पादः

(१)—उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यात् ॥१॥ अपूर्वे वाऽपि भागित्वात् ॥२॥ नाम्नस्त्वौत्पत्तिकत्वात् ॥३॥ प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥

इदानीं नामातिदेशः प्रस्तूयते। "मासमग्निहोत्रं जुहोति" इत्यादौ नैयमिकाग्निहोत्रवाचिनो नाम्नो न तावत्कर्मान्तरवाचकत्वं, अनेकशक्तिकल्पनापत्तेः। दर्वीहोमत्वेन चोदनालिङ्गातिदेशाभावात् नामातिदेशाभावेऽग्निदेवताकत्वे प्रमाणाभावेन तत्प्रख्यन्याया-

———

उक्तं क्रियाभिधानम्। अत्र च नामत्वस्य सामानाधिकरण्यनिमित्तत्वात् तस्य च नित्याग्निहोत्र इवेहापि कर्मान्तरे कौण्डपायिनामयने सत्त्वात् उभयत्रापि मुख्यनामधेयत्वात् नाग्निहोत्रपदस्यात्र गौणत्वमाश्रयणीयमिति न नामातिदेश इति पूर्वपक्षं सिद्धान्तोपक्रमेणैव दूषयति—न तावदिति। किञ्च नित्याग्निहोत्रे यथा तत्प्रख्यन्यायेनाग्निहोत्रशब्दो मुख्यया वृत्त्या नामधेयं तथेह न संभवति। अस्मिन् कर्मान्तरे प्रमाणान्तरेणाग्निगुणस्याप्राप्त्या तत्प्रख्यन्यायाभावात्। नामातिदेशस्य त्वयाऽनङ्गीकारात्। जुहोतिचोदनाचोदितेषु चोदनालिङ्गातिदेशस्याष्टमान्त्ये निराकरणाच्च। अतो द्रव्यदेवतादिरूपविशेषप्राप्त्यभावे कर्मविशेषाप्रतिपत्तौ नामधेयानुपपत्तेः जुहोतिसामान्यस्य च विशेषसंज्ञाऽयोगात् न मुख्यनामत्वं संभवतीत्यभिप्रेत्याह—दर्वीति।

ननु मास्त्वग्निदेवताक[1]त्वाप्राप्त्या तादृशयोगेन एतत्कर्मणस्तन्नामधेयं, तथापि उभयसाधारण्येन एकेनैव योगेनोभयनामधेयं मुख्यमस्तु; होत्रशब्दस्य 'हुयामाश्रुभसिभ्यस्त्रन्' (उ-सू ६१७) इत्यौणादिककर्मार्थकत्रन्प्रत्ययान्तस्य हूयमानद्रव्यपरत्वात्, 'सप्तमी विशेषणे बहुव्रीहौ' (पा-सू-२-२-३५) इति ज्ञापकबलेन कण्ठेकाल इतिवत् व्यधिकरणबहुव्रीहेः सूत्रानुशिष्टत्वात्। 'यदाहवनीये जुहोती'त्यनेनाग्न्यधिकरणप्राप्तेश्च, अग्नौ होत्रं यस्मिन्नित्यवयवयोगस्यैवोभयत्र संभवादि-

1. A तावत्व

नुपपत्तेश्च। न च 'यदाहवनीये जुहोति' इत्यनेनाग्नेः प्राप्तत्वादग्न्यधिकरणत्वेन योगोपपत्तिः। तस्यातिप्रसक्तत्वेन रूढ्यादिकल्पने पुनर्गौरवतादवस्थ्यात्, अन्तोदात्तस्वरस्य

---

त्याशङ्क्ते—न च यदिति। तादवस्थ्यादिति। उभयत्रापि योगकल्पनेऽप्यतिप्रसङ्गपरिहारार्थमुभयत्र रूढेः, प्राचीनप्रयोगस्य सहकारिताया वा कल्पने एकत्र मुख्या वृत्तिः इतरत्र गौणीति सिद्धान्तपक्षापेक्षया तव लाघवाभावात् गौरवतादवस्थ्यमित्यर्थः। तत्पुरुषे हि 'समासस्य' (पा—सू—६—१—२२३) इति सूत्रेण अन्तोदात्तस्वरो विहितो भवति। बहुव्रीहौ तु पूर्वपदप्रकृतिस्वर एव। अग्निहोत्रपदे तु त्रकारोत्तरमकार उदात्तस्तैत्तिरीयैः पठ्यत इति पठ्यमानस्वरस्य बहुव्रीहावनुपपत्तिरिति दूषणान्तरमाह—अन्तोदात्तेति। अत एवान्तोदात्तस्वरानुपपत्तिबलादेव तत्प्रख्याधिकरणसिद्धान्ते एतादृशयोगबलादग्निहोत्रशब्दस्य नामत्वोपपादनं केचिन्मतत्वेनोपन्यस्य पूज्यपादैस्तदधिकरणे कौस्तुभे निराकृतम्। परन्तु एतादृशयोगमादाय नित्याग्निहोत्रे तन्नामकत्वोपपादनपरैतन्मते यत् तत्र दूषणान्तरमुक्तम् "अग्निदेवताकत्वमादाय योगाश्रयणे मासाग्निहोत्रे तद्देवताऽप्राप्तेर्मुख्यत्वासम्भवात् तच्छब्दस्य गौणत्वाश्रयणेन नामातिदेशोपपत्तावपि अग्न्यधिकरणत्वयोगस्योभयत्र समानत्वे मासाग्निहोत्रेऽपि तेनैव योगेन प्रवृत्त्युपपत्तौ प्रायणीयपदवदतिदेशकत्वानुपपत्ति"रिति तत् प्रायणीयपदस्य योगेनैवोभयत्र प्रवृत्त्युपपत्तेः अतिरिक्तरूढिकल्पने प्रमाणाभावेऽपि इह येन केनापि प्रकारेण सिद्धान्ते योगाश्रयणे अतिप्रसङ्गपरिहारार्थं रूढिकल्पनस्यावश्यकत्वात्; अग्न्यधिकरणत्वयोगाश्रयणेऽपि प्रचुरप्रयोगेण नित्याग्निहोत्र एव रूढिकल्पने सति मासाग्निहोत्रे गौणत्वोपपत्तेः नातीव समञ्जसम्। यथैवाग्नेर्होत्रमिति[1] षष्ठीतत्पुरुषाश्रयणस्योभयत्रोपपन्नत्वेऽपि प्रचुरप्रयोगेण नित्याग्निहोत्र एव निरूढलक्षणात् मासाग्निहोत्रे गौणत्वमुपपन्नं भवन्मतेऽत्रैवानुपदं वक्ष्यते तथैवेहाप्युपपद्यत एव तत्।

यदि तु प्रयोगस्याप्युभयत्र वेदे समानत्वात् रूढेरेव सन्देहे कुतो मासाग्निहोत्र एव गौणत्वमित्युच्येत, तदग्नेर्होम इति षष्ठीतत्पुरुषाश्रयणेऽपि तुल्यमेव। अतोऽग्निहोत्रपदादग्निदेवताकत्वेनैव होमविशेषप्रतीतिरेव झटिति जायत इति तद्वत्त्वं यत्र प्रमाणप्रमितं तत्रैव योगस्य लब्धात्मकत्वात् अतिप्रसङ्गपरिहाराय रूढिकल्पनं निरूढलक्षणा वा नान्यत्रेत्येव वक्तव्यमिति मासाग्निहोत्रे सिद्ध्यति तस्य गौणता; तेनैव न्यायेनाग्न्यधिकरणत्वबोधो न भवत्येवाग्निहोत्रपदादित्येव केचिन्मते दूषणं युक्तम्। इह तु अग्निदेवताकत्वयोगेन नित्याग्निहोत्रे तच्छब्दप्रवृत्तावपि मासाग्निहोत्रे तादृशयोगासंभवेऽपि योगान्तरेण तच्छब्दप्रवृत्तिसंभवे न गौणत्वमित्याशङ्कापनोदाय

---

1. B अग्निहोत्र

**सप्तमीबहुव्रीहावनुपपत्तेश्च । सप्तमीतत्पुरुषस्य शौण्डादिगणे पाठाभावेनानुपपत्तेश्च । यदि तु नित्याग्निहोत्र इव अग्नेः होत्रं होम इति व्युत्पत्त्या अधिकरणत्वं षष्ठ्यर्थमङ्गीकृत्य मासाग्निहोत्रेऽपि योग आश्रीयेत तदाऽपि प्रचुरप्रयोगादग्निहोत्रपदस्य** निरूढलक्षणया **नित्याग्निहोत्रे प्रयोगात् तस्याश्च शक्तितुल्यत्वेन मासाग्निहोत्रे तदसंभवात् गौणत्वमावश्यकम् ।**

**अनयैव च दिशा 'मासं दर्शपूर्णमासाभ्यां' इत्यादौ गौणत्वोपपादनं द्रष्टव्यम् । अन्यथा 'य इष्ट्या' इत्यादिना पौर्णमासीकालकत्वप्राप्तेरुभयत्र लाक्षणिकत्वाविशेषात् । दर्शादिकालप्राप्तावपि वा एकत्र मुख्यस्यापरत्र गौणत्वनियमात् प्रसिद्धदर्शादौ निरूढलक्ष-**

---

प्रयास इति न बाधकमिति । अन्तोदात्तस्वरप्राप्त्यर्थं सप्तमीतत्पुरुषाशङ्कां निरस्यति— **सप्तमीति ।** 'सप्तमी शौण्डैः (पा-सू-२-१-४०) इति सूत्रेण शौण्डादिगणपठितैरेव सह सप्तमीतत्पुरुषविधानेन इह होत्रशब्दस्य तद्गणे पाठाभावेन तद्योगेन तत्समासाप्राप्तेरित्यर्थः । **निरूढलक्षणयेति ।** पङ्कजादिपदे केवलयोगाश्रयणे मण्डूकादावप्रयोगात् तादृशप्रयोगापत्तिवारणार्थं रूढिकल्पनवत् नेह तत्कल्पनं युक्तम् । मासाग्निहोत्रे तत्प्रयोगदर्शनेन तदापत्तिनिवारणासंभवात् । अतो योगस्योभयसाधारण्येऽपि प्रचुरप्रयोगादग्निहोत्रशब्दस्य नित्याग्निहोत्रे निरूढलक्षणैव, यजमानपदे योगस्य स्त्रीपुंसाधारणत्वेऽपि प्रचुरप्रयोगात् पुंसि निरूढलक्षणावत् । तावतापि मासाग्निहोत्रादिव्यावृत्ततत्प्रयोगस्योपपत्तौ अतिरिक्तरूढिकल्पने प्रयोजनाभावात् । अत एव मासाग्निहोत्रे निरूढलक्षणया प्रयोगासंभवे विद्यमानप्रयोगनिर्वाहाय गौण्याश्रयणम् । पङ्कजपदस्य यौगिकत्वाश्रयणेऽपि अन्यत्राप्रयोगदेव पद्म एव रूढिकल्पनमिति विशेषः ।

अस्तु वा अनेन न्यायेन पङ्कजपदेऽपि निरूढलक्षणैव, सर्वथापि तु मासाग्निहोत्रे गौणत्वमावश्यकमिति भावः ।

ननु सिंहो देवदत्त इत्यादौ मुख्यवृत्त्या वाचकानामेव गौणत्वदर्शनात् प्रकृते निरूढलाक्षणिकस्याग्निहोत्रपदस्य मासाग्निहोत्रे गौणत्वं प्राचीनानामुक्तं कथं युक्तमित्यत आह— **अनयैव चेति ।** काले मुख्यस्य दर्शपूर्णमासपदस्य आग्नेयादियागेष्वपि तद्योगेन लाक्षणिकस्यैव एतद्वाक्यविधेयकर्मान्तरे गौणत्वाङ्गीकारात् न तावन्मुख्यस्यैवेतरत्र गौणत्वमिति नियमः संभवति । किञ्चाग्नेयादिषु कालयोगेन लाक्षणिकत्वे तथैवैतद्वाक्यविधेयकर्मान्तरस्यापि 'य इष्ट्येति' वाक्यप्राप्ततत्कालयोगेन लाक्षणिकत्वोपपत्तेः गौणत्वे प्रमाणाभावात् सिद्धान्ते नामातिदेशासिद्धिः । अतः आग्नेयादिषु प्रचुरप्रयोगात् निरूढलाक्षणिकस्यैव तस्य स्वीकारात्

णाऽऽवश्यिकत्वेव । सौमिकचोदनालिङ्गातिदेशादेव रूपलाभोपपत्तौ तदभावस्याप्यतत्साधकत्वाच्च । एतेन गौणत्वाभावेऽप्येकनामकत्वसादृश्येन चोदनालिङ्गातिदेशादेवाग्निहोत्रधर्मलाभ इत्यपास्तं, उभयत्र निरूढलक्षणायां प्रमाणाभावेनैकनामकत्वाऽसिद्धेः[1] । न च तथाऽपि देवताकालादिरूपगुणविधायकत्वेनैवोपपत्तौ गौणत्वे प्रमाणाभावः । तत्प्रख्याधिकरणोक्तकौस्तुभो[2]क्तरीत्या समासासम्भवेन देवताविध्यनुपपत्तेः । कालस्य प्राप्तत्वादिना विध्यनुपपत्तेश्च । अतश्चाग्निहोत्रादिशब्दाः कर्मान्तरे गौणाः । तत्र वत्यर्थरूपधर्मलक्षणापूर्वकं कर्मान्तरे गौणीति प्राञ्चः । तत्सिद्धिसूत्रोक्तकौस्तुभरीत्या तु गौणीज्ञानकार्यता-

---

तादृशस्य कर्मान्तरेऽसंभवादगत्या गौणत्वमुपपादनीयं प्राचीनैरिति, तथैवाग्निहोत्रपदेऽपि तदुपपादने न बाधकमित्यर्थः ।

[3]नन्वाग्नेयादिषु दर्शपूर्णमासपदस्य केवललाक्षणिकत्वस्वीकारेऽपि कर्मान्तरे तत्पदस्य गौणत्व[4]मावश्यकम् । अन्यथा नामातिदेशाभावे कर्मान्तरे रूपाप्रसिद्धेः, कर्मान्तरविधानस्यैवाप्रसिद्धेः इत्यत आह—**सौमिकेति** । अव्यक्तत्वसादृश्येन सोमयागातिदेशेन रूपलाभोपपत्तौ रूपाभावस्य 'मासं दर्शे'ति वाक्यविहितकर्मान्तरे नामातिदेशासाधकत्वादित्यर्थः । **एकनामकत्वासिद्धेरिति** । एकनामकत्वज्ञानोत्तरं हि तत्प्रतियोगिकसादृश्यज्ञानं भवेत्; तच्च निरूढलक्षणया नित्याग्निहोत्रस्यैव नान्यस्य संभवतीति बाधनिश्चयेऽनुपपन्नमिति यावदेकनामकत्वं गौण्या वृत्त्या प्रसाध्य तत्सादृश्यज्ञानं भवति, ततः सादृश्यज्ञानात्पूर्वमेव गौणीज्ञानवेलायां तद्धर्मवत्वज्ञानोपपत्तौ किमिति पुनस्तदर्थं चोदनालिङ्गातिदेशकल्पनमित्यर्थः । **एतेन** एकनामकत्वासिद्धावपि अग्निहोत्रादिपदोच्चारणीयत्वधर्मसादृश्येन चोदनालिङ्गातिदेशादेव धर्मलाभ इत्यपास्तम् । विधिवाक्यश्रवणानन्तरं तदर्थावगमवेलायामेव नामत्वानुपपत्त्या कल्प्यमानतद्धर्मवत्वलक्षणाजन्यबोधेनैव तल्लाभे पुनर्विशेषसादृश्यमूलातिदेशकल्पने वैयर्थ्यात् ।

**कालस्येति** । 'य इष्ट्वे'ति वाक्येन कालस्य प्राप्तत्वात् विध्यनुपपत्तिरित्यर्थः ।

अत्र चाग्निहोत्रादिशब्दानामग्निहोत्रादिधर्मवत्वगुणयोगेन गौणानामपि अग्निहोत्रधर्माणामुपस्थापकान्तरवत्यादिप्रत्ययाभावे अग्निहोत्रपदशक्यार्थाग्निहोत्ररूपार्थसंबन्धात् अग्निहोत्रपदे लक्षणयोपस्थितिः । पश्चात्तादृशोपस्थितगुणयोगेन कर्मान्तरे 'अग्निर्माणवक' इत्यादिवत् गौणी परशब्दस्य लक्षणां विना परत्र सामानाधिकरण्यासंभवादिति प्राचां मतमनुवदति—**तत्र वत्यर्थेति** । **तत्सिद्धिसूत्रोक्तेति** । अयमर्थः—स्वशक्यगुणवत्ता हि गौणी वृत्तिः । गुणवत्ता च तत्समान-

---

1. B. मकत्वासिद्धेः 2. B. कौस्तुभरीत्या
3. B. reads नच 4. A. गौणत्वमेव

वच्छेदकमेवाग्निहोत्रीयधर्मविशिष्टकर्मान्तरशाब्दबोधत्वमित्यपि शक्यं वक्तुम्।

तत्र च सिंहो देवदत्त इतिवत् प्रमाणान्तरसिद्धसादृश्येन गौणत्वासम्भवेऽप्य-स्मिन्नेव वाक्ये तदीयधर्मविशिष्टकर्मान्तरविधानेन साध्यसादृश्येन गौणत्वोपपत्तिरिति सिद्धो नामातिदेशः। पदार्थातिदेशेऽपि च निरूपितरूपस्यैवातिदेशादूहबाधसिद्धिः॥

---

जातीयगुणवत्तासंबन्धेन। यथा सिंहो देवदत्त इत्यत्र सिंहपदवाच्ये सिंहे विद्यमानैः प्रसह्यकारित्वादिगुणैः समानजातीया गुणाः देवदत्ते सन्तीति तत् तत्र गौणम्। अतश्च सिंहवृत्तिगुणसमानजातीयगुणप्रकारकदेवदत्तविशेष्यकशाब्दबोधत्वावच्छिन्नं प्रति सिंहपदशक्यवृत्तिगुणवत्ताज्ञानं कारणम्। तत्र सिंहपदोच्चारणे सति शक्त्यैव प्रतीयमानेन सिंहेन स्ववृत्तिगुणानामेकसंबन्धिस्मरणेनेतरसंबन्धिस्मरणमिति न्यायेनोपस्थापनात् तैश्च तेनैव न्यायेन तत्समानजातीयगुणवत्ताज्ञापनात् एवंविधगुणवत्ताज्ञाने सति सिंहपदादुक्तविधशाब्दबोधोत्पत्तौ न किञ्चिद्बाधकम्। अत एव गुणादीनामुक्तविधकार्यतावच्छेदककोटिप्रविष्टत्वादेव नाशाब्दत्वम्। एवमिहापि गौणीवृत्त्यैव तद्धर्मविशिष्टकर्मान्तरबोधोपपत्तेः न धर्मबोधार्थं पूर्वमपि लक्षणान्तराश्रयणं, प्रयोजनाभावात्; न च सर्वत्र सिंहपदश्रवणानन्तरं तदर्थसंबन्धे विद्यमानेऽपि न नियमेन तद्वृत्तिगुणानामुपस्थितिर्भवतीति प्रकृते तद्बोधार्थं लक्षणा आवश्यिकीति वाच्यम्। इतरपदासमानाधिकरणकेवलसिंहपद नियमेन तेषामनुपस्थितावपि देवदत्तादिपदसमभिव्याहृतसिंहादिपदश्रवणानन्तरं तदर्थसम्बन्धेन तेषां नियमेनोपस्थितिसम्भवात्। इतरथा उपस्थितार्थस्यैव शाब्दत्वमात्रसिद्ध्यर्थं लक्षणाङ्गीकारात्। सर्वथा गुणानामनुपस्थितौ भवदभिमतलक्षणाया अप्यसम्भवाच्च। अतः कथमप्युपस्थितानां तेषां शाब्दत्वसिद्ध्यर्थं लक्षणान्तरकल्पने मानाभावात् गौण्यैव तेषां तद्विशिष्टस्य च बोधसंभवात् गौणीमात्राश्रयणमेव युक्तमिति।

**तदीयेति**। नित्याग्निहोत्रीयेत्यर्थः। **सिद्ध इति**। अत्र दर्शपूर्णमासवाक्ये प्रकरणान्तरसहकृत[1]द्वित्वसङ्ख्यया यागत्रिकद्वयरूपे प्रत्येकं भिन्ने कर्मद्वये दर्शपूर्णमासपदाभ्यां नामातिदेशकाभ्यां त्रिकत्रिकेतिकर्तव्यतायाः परस्परं विरुद्धत्वेन प्राप्तौ, सौर्ये विकल्पेनाग्नेयद्वयेतिकर्तव्यताया इव विकल्पेन निवेशसंभवात् नासंभवत्तत्समुच्चयानुरोधेन आग्नेययागयोरिव षोढा कर्मभेदः सिद्ध्यति; तथापि तस्या एकदर्शपूर्णमासपदेन लक्षणयाऽभिधाने समुच्चयप्रतीतेः तदसंभवानुरोधेन प्रत्येकं कर्मत्रयभेदः आवश्यक एव; सौर्ये तु समुच्चयस्याप्रतीतेः कल्प्यमानस्य चोदनालिङ्गाति-

---

1. A. तद्द्वित्व

## (२)—अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिस्स्यात् ॥ ५ ॥

**द्वादशाहे प्रथममहः प्रायणीयं सधर्मकं विधाय गवामयने 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति' इति श्रुतम् ।** तदेते द्वे कर्मणी विनिगमनाविरहादिति निर्णीतं प्रकर-

---

देशस्य 'दर्शाग्नेयवत्' 'पूर्णमासाग्नेयवत्' इत्येवं वाशब्दयुक्तस्यैव कल्पनात् न तदतिदेशप्रयुक्त-भेदापत्तिः ; अतः षट्सु भिन्नेषु कर्मसु नामातिदेशेन षण्णामितिकर्तव्यतातिदेशः । एवं दर्शपूर्ण-मासपदवाच्यसमस्तयागेतिकर्तव्यतासमुच्चये सत्यपि नैन्द्राग्नस्य नित्यवदनुष्ठानम् । प्रकृति-वद्भावबोधितसोमप्राक्कालव्यवस्थानुपपत्त्या तद्बाधापत्तेरिति **बालप्रकाशे** उपपादितस्य द्वित्वसङ्ख्यया त्रिकद्वयभेदस्य सोमप्राक्कालत्वव्यवस्थानुपपत्त्या ऐन्द्राग्नाननुष्ठानस्य च दूषणं पूज्यपादैः प्रकरणान्त-राधिकरणे कौस्तुभे कृतम् । तत्रैव द्रष्टव्यम् । [1]ननु नाम्नाऽग्निहोत्राङ्गभूतधर्माणां पदार्थ-भूतानामतिदेशे तथैव तेषामनुष्ठानापत्तौ ऊहबाधानुपपत्तिरित्याशङ्कां निरस्यति— **पदार्थाति-देशेऽपीति ।**

---

**अपि वा सत्रकर्मणि ।**

अत्र द्वादशाहिकप्रायणीयापेक्षया गावामयनिकप्रायणीयस्य कर्मान्तरत्वसाधने भाष्यकारेण 'प्रकरणान्तरे प्रयोजनान्यत्व' ( जै-सू-२-३-११ ) मिति न्यायोपन्यसनं कृतम् । तद्यथाश्रुत-मनुपपन्नम् । अनुपादेयगुणस्यात्राभावेन तत्सहकृतानुपस्थितिरूपप्रकरणान्तरन्यायासम्भवात् । अतः स्वयं तद्भेदं साधयति—**तदेते इति । इति निर्णीतमिति । अयमर्थः**—प्रकरणान्तर-कृतभेदसाधको नानुपादेय एव, अपि तु उपादेयगुणाभावमात्रम् । अत एव गृहमेधीये 'आज्यभागौ यजती'त्यत्र कर्मान्तरत्वपूर्वपक्षे प्रकरणान्तरोपन्यासो युज्यते । एवञ्च गावामय-निके प्रायणीयवाक्ये द्वादशाहिकप्रायणीयानुवादेन न तावद्वैश्वानरविधानम् ; वैश्वानरदेवत्यस्य ग्रहस्य प्राकरणिकवचनान्तरेण प्राप्तत्वात् । अत एव तदीयदेवतयैव प्रसङ्गेनोपकारसम्भवेन न देवताविधानमपि । एतच्च पूज्यपादोक्तमनुसृत्योक्तम् ।

वस्तुतस्तु वैश्वानरग्रहविधेर्विशिष्यैतत्प्रकरणे क्वाप्यनुपलंभात् प्रत्युत वैश्वानरेण अग्निना दृष्ट इत्यर्थस्यैव वेदभाष्यकारैः कपर्दिस्वामिभिश्च प्रदर्शनात् न तदंशे विधेयत्वाशङ्कापीति ध्येयम् । नापि ज्योतिष्टोमधर्मकत्वम् । तस्य चोदनालिङ्गातिदेशादेव प्राप्तत्वात् । प्रायणी-

---

1. B नच

णान्तराधिकरणे कौस्तुभे । तदत्र गावामयनिकं प्रायणीयपदं पूर्वन्यायेनैव द्वादशाहिकप्रायणीयधर्मातिदेशार्थम् । न च चोदनालिङ्गातिदेशादेव तत्प्राप्तिसिद्धेर्नामातिदेशवैयर्थ्यं, गणत्वसाम्येऽपि द्वादशाहान्तर्गतदशाहस्यैव चोदनालिङ्गातिदेशेन धर्मप्राप्तेर्वक्ष्यमाणत्वादिति प्राप्ते—

येनैव प्रथमं यन्ति अनेनेति व्युत्पत्त्या प्राथम्यगुणयोगेन द्वादशाहिकेऽहनि प्रवृत्तिस्तेनैव गावामयनिकेऽपीति प्राथम्ययोगेनोभयत्रापि मुख्यतयैव प्रवृत्तौ गौणत्वे

---

यपदार्थस्य प्राथम्यस्यापि तद्वाक्यगतप्रायणीयपदेनैव प्राप्तत्वाच्च । अतस्सर्वेषामेषां नामधेयत्वात् विधेयगुणाभावात् धात्वर्थविधानावश्यकत्वे सति विनिगमनाविरहात् कर्मान्तरमेव । अत एवैतद्वाक्यविहितकर्मानुवादेन द्वादशाहिकवाक्ये अतिरात्रसंस्थामात्रविधानोपपत्तेः न कर्मान्तरमित्यपास्तम् । गवामयनप्रकरणेऽपि षड्विंशब्राह्मणे प्रथमेऽहनि अतिरात्रसंस्थाकत्वेनैव विधेः सत्त्वात् । अतोऽत्र भाष्यकारीया प्रकरणान्तरन्यायेन भेदोक्तिः अप्राप्तोपादेयगुणाभावविशिष्टासन्निधिपरेति कौस्तुभे तदधिकरणे निर्णीतमित्यर्थः । **तत्प्राप्तिसिद्धेरिति** । द्वादशाहविकृतिर्हि गवामयनम्; तत्र प्रथमात् द्वादशाहिकात् प्रायणीयादह्नो गावामयनिकप्रायणीये प्रथमेऽहनि चोदनालिङ्गातिदेशात् धर्मलाभोपपत्तेः न नामातिदेशो विशेषकर इत्यर्थः । **वक्ष्यमाणत्वादिति** । गणत्वसामान्याद्धि द्वादशाहविध्यन्तो गवामयन इति यद्यप्यष्टमे साधयिष्यते, तथापि दशमपञ्चमपादे 'चोदनासु त्वपूर्वत्वाल्लिङ्गेन नियमः स्यादि'त्यधिकरणे (जै-सू-१०-५-४) कतिपयलिङ्गदर्शनज्ञापकबलात् प्रायणीयोदयनीये अहनी आद्यन्ते वर्जयित्वा मध्यमस्य पृष्ठ्यषडहछन्दोमत्रयाविवाक्यात्मकस्य दशरात्रस्यैव विध्यन्त इति निर्णयस्य वक्ष्यमाणत्वात् गावामयनिके प्रथमेऽहनि अप्राप्तद्वादशाहिकप्रायणीयधर्मप्राप्त्यर्थं नामातिदेशः प्रयोजनवानेव । अतश्च गणत्वसामान्यात् द्वादशाहान्तर्गतदशरात्रधर्मेषु सत्स्वपि यथा ज्योतिष्टोमनामातिदेशात् तद्धर्मा भवन्ति तथा प्रायणीयनामातिदेशादपि तद्धर्मा भवन्त्येवेति पूर्वपक्ष्याशयः ।

**प्रथमं यन्त्यनेनेति** । यद्यपि भाष्यकारेण प्रयन्त्यनेनेति[1] योगो दर्शितः; तत्र च न प्रोपसर्गस्य प्राथम्यमर्थः प्रतीयत इति प्रकृष्टार्थत्वं प्रसिद्धं विहाय न प्रथमं यन्तीति व्युत्पत्तिप्रदर्शनं युक्तम्; तथापि गत्यर्थस्येण्धातोरेव करणार्थानीयर्प्रत्ययान्तत्वेनास्य प्रयोगस्य साधनात्, तस्य चोपसर्गस्य बलेन प्राथम्यार्थकत्वस्यापि वक्तुं शक्यत्वात् शास्त्रदीपिकायां प्राथम्यगुणयोगेनैव योगस्य प्रदर्शितत्वात् तदभिप्रायेणेदमुक्तं द्रष्टव्यम् । इदञ्च व्युत्पत्तिप्रदर्शनं व्याकरणमर्यादामतिक्रान्तमपि

---

1. B प्रथमं यन्त्यनेन

**प्रमाणाभावः। न चात्र**[1] **पूर्ववत् द्वादशाहिके प्रचुरतरप्रयोगो, येन तत्रैव रूढिर्निरूढ-लक्षणा वा अन्यत्र गौणीत्याश्रीयेत। अतोऽत्र न नामातिदेशः** प्रायणीयपदे। **वैश्वानरपदं तु प्रकरणे वैश्वानरग्रहविधानात्** तत्प्रख्यन्यायेन **नामधेयमपि वैश्वानरसंज्ञकस्य**[2] **कर्मान्तरस्याप्रसिद्धेः नैवातिदेशकम्।** ज्योतिष्टोमपदं तु **ज्योतिष्टोमधर्म**प्रतिप्रसवार्थं **सद्भवत्येवातिदेशिकम्। तेनैतत्सुत्यायां विरोधे न गणत्वसामान्यात् द्वादशाहिक-द्वितीयाहधर्माः।** अपि तु **ज्यौतिष्टोमिकाः। साधारणास्तु** भूयोऽनुग्रहाय **द्वादशाहिका एव।**

---

भाष्यकारलिखनात् छान्दसत्वेनैव परिहर्तव्यम्। वस्तुतस्तु प्रकर्षेण सत्रिणामेतुं प्राप्तुं योग्यः इत्येवान्वाख्यानं युक्तम्। प्रकर्षश्च इतराहरपेक्षया प्राथम्येनैवेति ध्येयम्।

**तत्रैवेति**। तथाच योगस्यातिप्रसक्तत्वेनान्यत्र प्रयोगापत्तिपरिहाराय रूढ्यादिकल्पनावश्य-कत्वेऽपि यत्र यत्र प्रयोगः प्रायणीयपदस्य तत्र सर्वत्रैव योगरूढ्याश्रयणात् एकत्र रूढिः अपरत्र गौणीति नाश्रीयत इत्यर्थः। **प्रायणीयपद इति**। यद्यपि नामातिदेशाभावेऽपि योगरूढ्या प्रायणीय-पदस्योभयनामत्वाविवादात् एकनामकत्वसादृश्येन चोदनालिङ्गातिदेशो दुर्निवार इति न नामाति-देशखण्डने विशेषप्रयोजनम्, तथापि प्रायणीयनाम्नोऽस्मिन् कर्मान्तरे प्राथम्यगुणानुवादकत्वेनाप्युप-पत्तेः, अरूपतायाश्च द्वादशाहातिदेशेन ज्योतिष्टोमनामातिदेशेन च परिहर्तुं शक्यत्वात्, न तत्सादृश्यस्यातिदेशकल्पकत्वम्। कल्पकेतिकर्तव्यताकाङ्क्षायाः अन्यतः शान्तेः, प्रयोजना-भावात्, गौरवापत्तेश्चेति न बाधकम्। अत एव वैश्वानरप्रायणीयसंज्ञयोरेकस्मिन् कार्ये विकल्पात् सङ्कल्पे उल्लेखेऽपि विकल्प एव। ज्योतिष्टोमसंज्ञायास्तु अतिदेशकत्वेनाप्युपपत्तेः न ताभ्यां सह विकल्प इति सूचितं संज्ञाधिकरणे कौस्तुभे। **तत्प्रख्यन्यायेनेति**। वैश्वानर-ग्रहणाङ्गभूतायाः वैश्वानरदेवतायाः[3] यागे प्रसङ्गेनोपकारकतया प्राप्तेरित्यर्थः। **प्रतिप्रसवार्थमिति**। गणत्वसामान्येन प्राप्तद्वादशाहिकातिदेशेन बाधितानां ज्योतिष्टोमधर्माणां प्रतिप्रसवार्थमित्यर्थः[4]। **अपि त्विति**। चोदनालिङ्गातिदेशापेक्षया विरोधे नामातिदेशप्राबल्यस्यान्ते वक्ष्यमाणत्वादित्यर्थः। **भूयोऽनुग्रहायेति**। सर्वसुत्यासाधारणानां धर्माणां बहुसुत्यानुरोधेनेहापि प्रायणीयसुत्यायां द्वादशोपसत्त्वादीनामनुष्ठानम्; न त्वेतत्सुत्यानुरोधेन ज्यौतिष्टोमिकसुत्याधर्मत्र्युपसत्त्वानुग्रहेणेतर-

---

1. B. अपूर्ववत्–
2. B & C add सधर्मकस्य
3. B. देवताकयागे
4. B. र्थमिति

इदं चाधिकरणं गावामयनिके प्रथमेऽहनि प्रायणीयपदस्य भाष्यकारादिलेखनादवगन्तव्यम्। यदा तु छन्दोगसूत्रानुसारेण प्रायणीयपदस्य गावमयनिके द्वितीये चतुर्विंशेऽहनि प्रयोगः तदाऽतिदेशो भवत्येवेति ध्येयम्॥ २॥

---

बहुसुत्यानुरोधस्त्याज्य इत्यर्थः। इदञ्चेति। इदञ्च गावामयनिके प्रथमेऽहनि प्रायणीयपदं भाष्यकारेण लिखितमप्ययुक्तम्, छन्दोगसूत्रे द्वितीयेऽहनि तत्पाठादित्येवं भाष्यकारमते न दूषणप्रकटनार्थम्; श्रुत्यन्तरे स्पष्टमेव प्रथमेऽहनि प्रायणीयपदस्य पाठेन भाष्यलिखितस्य निर्मूलत्वाभावात्। अपि तु यत्र प्रथमेऽहनि प्रायणीयपदमस्ति तत्र न नामातिदेश इति पूर्वाधिकरणापवाद इदमधिकरणम्। यत्र तु "चतुर्विंशः प्रायणीयो भवतीति" तैत्तिरीयवचनछन्दोगसूत्रानुसारात् द्वितीयेऽप्यहनि तत्पदप्रयोगः, तत्र प्राथम्यगुणयोगाभावेनामुख्यतया वृत्तिनः प्रायणीयपदस्य अवश्यं गौणत्वात् भवत्येव नामातिदेश इति नैतादृशं प्रायणीयपदं पूर्वाधिकरणापवादविषय इति तात्पर्यकमेव।

गौणत्वञ्च[1] यथा द्वादशाहादौ प्रथममारभ्यमाणः प्रायणीयोऽतिरात्रः तथेदमप्यहर्गवामयनादौ आरभ्यमाणमिति प्रथममारभ्यमाणत्वयोगेनैव द्रष्टव्यम्। यद्यपि गवामयने प्रायणीयातिरात्र एव प्रथममारभ्यमाणः; तथापि तस्य सर्वसत्रसाधारणतया नासाधारण्येन गवामयनादौ आरम्भणीयत्वम्। तत्तु अस्यैवेति चतुर्विंशाहप्रापक[2]ब्राह्मणभाष्य एव परिहृतं द्रष्टव्यम्। वस्तुतस्तु "प्रायणीयेन वा अह्ना देवाः स्वर्गं लोकं प्रायन्। यत्प्रायन् तत्प्रायणीयस्य प्रायणीयत्वं" इत्यर्थवादानुगृहीतस्य प्रकर्षेण यन्ति गच्छन्ति स्वर्गमनेनेत्यवयवयोगस्य वेदभाष्यकारैरिहापि प्रदर्शनात् योगसाम्ये सति कस्मिन् योगार्थे शक्तिरिति निर्धारणासंभवे कथमत्रत्यप्रायणीयपदे गौणत्वमिति चिन्त्यम्। अत एव न केषामपि याज्ञिकानां प्रायणीयातिरात्रधर्मानुष्ठानम्। अपि तु यावत्तदीयताण्डिकब्राह्मणोपदिष्टधर्माणामेव। अत एव न द्वितीयाहर्गतं प्रायणीयपदं प्रत्युदाहरणम्। अपि त्वन्यदेव। अत एवोक्तं तन्त्ररत्ने 'यत्र तु पञ्चमः षष्ठो वा प्रायणीयपदेनोक्तः तस्य योगाभावादनुदाहरणत्वं, तत्र पूर्वाधिकरणन्यायेन भवत्येवातिदेशः तस्मात्तादृशो न पूर्वाधिकरणावाद[3]इति।

---

1. B तत्त्वं च
2. A. विधायक
3. पवादार्थः

(३)—विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्योतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ षडहाद्वा तत्र हि चोदनाः ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥ द्वयोर्विधिरिति चेत् ॥ १० ॥ न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

'विश्वजित् सर्वपृष्ठोऽतिरात्रः' इत्यत्र सर्वपृष्ठशब्दोऽनुवादः? अथवा षाडहिकानां रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानां साम्नां विधिरिति चिन्तायां— पृष्ठशब्दस्य स्तोत्रवाचित्वात् सामपरत्वे विधौ लक्षणापत्तेः ज्योतिष्टोमे च 'पृष्ठैस्स्तुवते' इत्यनेन षण्णां पृष्ठस्तोत्राणां विधानस्य चित्राधिकरणे कौस्तुभे व्युत्पादितत्वादिहातिदेशेन बहुत्वप्राप्त्युपपत्तेः विशिष्टविधिगौरवाच्च अनुवाद एवायमिति प्राप्ते—

अनुवादत्वे वैयर्थ्यापत्तेः पवमाने रथन्तरमार्भवे बृहत् मध्यत इतराणि[1] वैरूपं होतुः पृष्ठे वैराजं मैत्रावरुणस्य रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्य' इति सन्निवेशमात्रविधिरूपतात्पर्यग्राहकबलेन सर्वपृष्ठशब्दस्य निरूढलक्षणया षाडहिकरथन्तरादिसामपरत्वावगतेस्तेषामेव विधिः। निरूपितश्च पृष्ठशब्दस्य निरूढलक्षणान्वाख्यानार्थोऽर्थवादः कौस्तुभे। अत एव सर्वपदेनातिदेशप्राप्तयोर्वैकल्पिकयोः बृहद्रथन्तरयोस्समुच्चयविधिरित्यपास्तम्। होतुः पृष्ठे वैरूपस्यौपदेशिकत्वेन तयोर्बाधात्। सर्वशब्दस्य बहुत्वापेक्षत्वेन द्वयोरसम्भवाच्च। अतष्षाडहिकानां विधिः।

यन्मते तु एकमेव प्रकृतौ पृष्ठस्तोत्रं पृष्ठद्वयं वा तन्मतेऽप्राप्तत्वादपि नानुवादः। अयं च यद्यपि न नामातिदेशः, सर्वपृष्ठशब्दस्य षडहवाचित्वाभावात् विश्वजिति

---

। विश्वजिति सर्वपृष्ठे।

अत्र प्राचीनैः ज्योतिष्टोमे पृष्ठबहुत्वाभावात् तदतिदेशेन सर्वपृष्ठाप्राप्तेः सर्वपृष्ठपदानुवादासंभवात् षाडहिकानामेव पृष्ठस्तोत्रसाधनभूतानां बृहद्रथन्तरादिषण्णां साम्नां लक्षणया विधानमिति सिद्धान्तितम्। तत्र च स्वमते चित्राधिकरणे ज्योतिष्टोमे पृष्ठबहुत्वस्य समर्थनात् तत्प्राप्तानुवादो भविष्यत्येवेति प्राचीनोक्तरीत्यात्र सिद्धान्तानुपपत्तिं प्राप्तां केवलं सर्वपृष्ठपदवैयर्थ्यानुपपत्त्यैव स्वमते परिहरति— अनुवादवैयर्थ्यापत्तेरिति। अत्र तन्त्ररत्ने 'पृष्ठशब्दश्चात्र पृष्ठसाधनीभूतरथन्तरादिसामाभिधायी न स्तोत्राभिधायीति वेदितव्य'मिति लिखनात् पृष्ठशब्दस्येह लाक्षणिकत्वप्रतीतौ विशेषमाह—निरूपितश्चेति। 'आपो वै ऋत्वियमार्च्छन्' इत्यर्थवादे

---

[1] मध्यत इतराणि इत्येतद्विवृणोति—वैरूपमिति।

**बहुव्रीहिणैव प्रवृत्तेर्गौणत्वाभावाच्च ; न वाऽयं वचनातिदेशः, गृहमेधीये 'आज्यभागौ यजति' इतिवदेव षडहीयत्वस्य विधेयतानवच्छेदकत्वात्। तथाऽप्युपदेश एवायं रथन्तरादीनाम्। अत एव न षडहधर्मान्तराणामिह करणम्। अन्यकर्माङ्गत्वस्यैत-द्वाक्यप्रवृत्तेः पूर्वावगमसाम्यात्, कर्मसामानाधिकरणपदगम्यत्वसाम्याच्च सप्तमे नामाति-**

---

पितृस्थानीयत्वेनोक्तात् वामदेव्यात् पुत्ररूपषाडहिकबृहद्रथन्तरादिसाम्नां पृष्ठतयोत्पत्तिकथनात् वैदि-कान्वाख्यानवशात् पृष्ठशब्दस्य तेषु निरूढलक्षणैव युक्ता। तत्र यद्यपि तेषां षडहे षट्स्व-हस्सु क्रमेण माहेन्द्राख्यहोतुः पृष्ठ एव निवेशोऽस्तीति इहापि तत्रैव सर्वपृष्ठशब्देन विधानं कर्तुं शक्यते ; तथापि "सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वा"दिति दशमषष्ठ-पादाधिकरणन्यायेन माहेन्द्राख्यपृष्ठदेशे अनुष्ठाने 'पवमाने रथन्तर'मिति पूर्वोक्तलिङ्गानुपपत्तेः, तत्साधनभूतसाम्नां विधानेऽपि न माहेन्द्रपृष्ठस्थाने विधिः;अपि तु पवमानसाधारण्येन सर्वज्योति-ष्टोमिकपृष्ठेष्वेव साधनत्वेन विधिरित्यर्थः।

अत्र च तन्त्ररत्ने "पृष्ठान्येन चात्र षाडहिकानि; विध्यन्तस्तु ज्योतिष्टोमिक एव, एकाहत्वसामान्यात्, गणधर्मानपेक्षणाच्चे"त्युक्त्वा "नन्वसति षडहविध्यन्ते कथं तदीयपृष्ठलाभः ? न ह्युपकारानपेक्षः पदार्थातिदेशः संभवति" इत्याशङ्क्य "वचनादिति ब्रूमः। न हि वचनस्याति-भारोऽस्ति। वचनं पृष्ठानि विदधाति नोपकारं तज्जनकं विध्यन्तं वा, यदि हि षडहवदिति श्रूयेत ततः तदीयप्रकारस्य पदार्थानाञ्च विधानं लभ्येत नत्वेवं श्रूयते। सर्वपृष्ठो भवतीत्ये-तावच्छ्रूयते। तेन पृष्ठानां रथन्तरादीनां केवलं विधानं 'कण्वरथन्तरं पृष्ठं भवती'तिवत्। तेषां तु पृष्ठत्वं षडहे विज्ञातमित्यन्यदीयानामन्यत्र विधानात् अतिदेशत्वं, उत्तरषट्कान्तर्भावश्च। न ह्यस्माकमेकदेशिवत् कार्यतः प्राप्तिः उत्तरषट्कार्थः, किन्त्वतिदेशतः; स चात्रापि विनाप्युप-कारप्राप्त्या अस्तीति नासङ्गति" रिति परिहृतम्। अस्मिंश्च परिहारे सूत्रभाष्यारूढमतिदेशत्व-मङ्गीकृत्य वचनातिदेशत्वमुक्तं यत्तदनूद्य दूषयति—न वाऽयमिति[1]। यथा गृहमेधीये 'आज्य-भागौ यजती'ति विधिना न दर्शपूर्णमाससंबन्धित्वेन रूपेणाज्यभागविधानं क्रियते। तस्योत्तरकाल-प्रमितत्वेऽपि विधेयतावच्छेदकतयोपस्थित्यभावात्। अपि त्वाज्यभागत्वेनैवेति तत्संबन्धित्वेन रूपेणान्याङ्गताबोधकप्रमाणत्वाभावात नातिदेशत्वं, एवमिहापीति भावः। अत एवेति। षडहीय-त्वसामान्येनोपदेशाभावादेवेत्यर्थः। यद्यपि सर्वपृष्ठपदेन लक्षणया पृष्ठस्तोत्रसाधनीभूतरथन्तरादि-साम्नां विश्वजिदङ्गत्वेन विधानात् षाडहिकपृष्ठस्तोत्रसंबन्धित्वेनावगतानां साम्नां तत्संबन्धित्वेनैव रूपेण

---

1 B नचायम्

**देशप्रस्तावे समारम्भः। 'प्रधानं नीयमानम्' इति न्यायेनैव च रथन्तरादिधर्माणामावश्यकस्तोभादीनां पवमानादिकार्यान्तरोपयोगिरथन्तरादिसाधनत्वेनापि प्राप्तिरविरुद्धा ॥**

---

विधेयताऽस्त्येव; **तथापि** सर्वपृष्ठपदेनोपस्थितानामपि तेषां साम्नां पृष्ठसाधनत्वेन रूपेण लक्षणायां प्रयोजनाभावात् केवलं रथन्तराद्यन्यतमत्वेन तदङ्गीकारात् रथन्तराद्येव विधेयतावच्छेदकं, इतरथा पृष्ठसाधनत्वस्यापि विधेयतावच्छेदकत्वेन विधिसंस्पर्शे माहेन्द्रस्तोत्र एव तन्निवेशापत्त्या दाशमिकपूर्वपक्षोद्धा[1]रापत्तिः। तथात्वेऽपि वा तादृशोपकारद्वारेत्यस्यातिदेशलक्षणान्तर्गतविशेषणस्याप्यभावात् नातिदेशत्वमित्यपि ध्येयम्। न च [2]रथन्तरादीनामुपदेशेनैव प्राकृतोपकारनिरपेक्षतयाऽङ्गताबोधनात् प्राकृतोपकारप्रयुक्तधर्माणामिह कथं लाभ इत्याशङ्कां परिहरति—**प्रधानमिति**। सर्वपृष्ठपदेन पृष्ठस्तोत्रसाधनतया यादृशानि रथन्तरादीन्युपस्थितानि तादृशानामेव सधर्मकाणां लक्षणया पवमानाद्यपूर्वसाधनत्वेनेह विधानोपपत्तेः तल्लाभोपपत्तिः। अत एव षडहाङ्गत्वेनोत्तरग्रन्थे यदि रथन्तरादीनां योन्युत्तरयोर्विधानमस्ति तर्हि कण्वरथन्तरवत्तास्वेव ऋक्षु गानात् इहापि तास्वेव गानं तेषाम्। अन्यथा तु प्राकृतऋगधिकरणत्वमेवेति वक्ष्यते दशमे पूज्यपादैः। न चात्रातिदेशत्वानङ्गीकारे[3] '**तथावभृथस्सोमादि**' त्यग्रिमसूत्रविरोधः; यथा षडहात् पृष्ठानामतिदेशः एवं सौमिकादवभृथादिह धर्मातिदेश' इति भाष्यकृतव्याख्याने तथा शब्दानुरोधेन विश्वजिति उपमानभूतषडहातिदेशप्रतीतेरिति वाच्यम्। कर्मसमानाधिकरणपदगम्यत्वेन यथा षडहसामानि विश्वजिति, एवं कर्मसमानाधिकरणपदगम्यत्वात् सौमिकधर्मा अवभृथे इत्येतावतापि अतिदेशत्वानङ्गीकारेऽपि षाडहिकानामुपमानत्वोपपत्तौ बाधकाभावात्।

---

1. A पूर्वपक्षोत्थानानापत्तिः
2. A ननु
3. A नङ्गीकारात्

(४)—तथाऽवभृथस्सोमात् ॥ १२ ॥ प्रकृतेरिति चेत् ॥ १३ ॥ न भक्तित्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥ द्रव्यादेशे तद्द्रव्यं श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति श्रुतम्। तत्र दार्शपूर्णमासिकमपां व्युत्सेकमवभृथपदेनानूद्य लाघवात्तुषनिष्कासौ विधीयेते षष्ठीबलात् च शब्दस्य निपातत्वाच्च परस्परान्वयस्य व्युत्पन्नत्वेन न विधेयानेकता दोषाय। अस्ति चापां व्युत्सेकेऽप्यवभृथपदप्रयोगः 'एष वै दर्शपूर्णमासयोरवभृथः' इत्यादौ। अतो नात्र विशिष्टकर्मान्तरविधिः न वाऽवभृथशब्दस्य च विधौ गौणत्वमङ्गीकृत्य नामातिदेशकत्वमिति प्राप्ते —

अनेकशक्तिकल्पनाभिया अपां व्युत्सेके आर्थवादिकावभृथशब्दस्य जलसम्बन्धित्वसादृश्येन गौणत्वात् प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेश्च कर्मान्तरविधिरेवायम्।

सत्यामपि च निपातस्योपपदार्थान्वयव्युत्पत्तौ उपपदार्थद्वयस्य परस्परान्वयव्युत्पत्त्यभावात् विधेयानेकता स्पष्टैव। अतश्च गुणात्प्रकरणान्तराद्वाऽत्र कर्मभेदः

---

तथावभृथस्सोमात्। (७–३–४–१२) निष्कासेनेति। उखालग्नं निष्कासपदार्थः। कर्मान्तरविधिरेवायमिति। अत्र च न केवलं वाक्यभेदापत्तिरेव कर्मान्तरत्वसाधिका। अपि तु यन्तिपदानुपपत्तिरपि द्रष्टव्या। न ह्यपां व्युत्सेकरूपावभृथानुवादेन निष्कासादिविधानपक्षे यन्तिपदं गमनपरं यागपरं वा संभवति; तस्य यागत्वाभावेन तेन रूपेणानुवादासंभवात्। यस्तु सौमिकोऽवभृथो [1]यागोपलक्षणतया यन्तिपदेन शक्त्याऽनुवादः तदुद्देशेन तु तुष [2]द्रव्यविधानमिति तु एकादशे निराकृत्य कर्मान्तरं साधयिष्यते। अत एवान्यतरविचारस्य न पौनरुक्त्यमिति ध्येयम्। प्रकरणान्तराद्वेति। अयं भावः—भाष्यकारेण तावत् अत्रायमपूर्वोऽवभृथो विधीयत इत्युक्ते [:] तन्त्ररत्ने शास्त्रदीपिकायाञ्च प्रकरणान्तरात्कर्मभेद इत्युक्तम्। तदयुक्तम्। अनुपादेयगुणस्यात्राभावात्। अप्राप्तोपादेयगुणसमान्याभावस्याप्यभावाच्च। अतः केवलासन्निधानमात्रादेव प्रकरणान्तरात् भेदो वाच्यः। न ह्यनुपादेयगुणाभावे केवलासन्निधिमात्रं भेदकं भवति। तथात्वे आहवनीये जुहोतीत्यत्रापि भेदापत्तेः। अतो दूरस्थत्वेन कर्मासन्निधानेऽपि यत्र कथञ्चित् पदान्तरोपस्थानेन बुद्धौ विपरिवर्त्य तदनुवादेनोपादेयो गुणो विधातुं

---

1. B. यागोऽलक्षणया

2. B. तु नात्र द्रव्य

वारुणीनिष्कासस्य **वैमृधन्यायेन पदान्तरकल्पनया संस्कार्यत्वादेकादशे वक्ष्यमाणमर्थकर्मत्वं परं तुषांश इत्युक्तं प्रकरणान्तराधिकरणे कौस्तुभे।** अतश्च तत्रावभृथनाम्ना सौमिकाव-

---

शक्यते, तत्राहवनीये जुहोतीत्यादौ न कर्मभेदः यत्र तु अनुपादेयो मासाख्यो गुणः अस्ति, तत्र कथञ्चित् जुहोत्युपस्थापितदूरस्थहोमानुवादसंभवेऽपि मासस्य उपादेयतयाविधानासंभवात्, अगत्या उपादेयतासमानाधिकरणविधेयतासिद्ध्यर्थं धात्वर्थ एव विधेयतापादनात्, विहितस्य विधानायोगागात्, अपूर्वतयैव कर्मविधानमित्येव प्रकरणान्तरशरीरमुपपादितं तदधिकरणे शास्त्रदीपिकायाम्। एवञ्च प्रकृते अनुपादेयगुणाभावे एतादृशप्रकराणान्तरन्यायानवतारात् वाक्यभेदापादकगुणादेव भेदमभिप्रेत्य **गुणादित्युक्तम्**।

यदि तु यथा अनुपादेयगुणस्थले दूरस्थकर्मानुवादेन उपादेयतासमानाधिकरणविधेयतासंभवात् धात्वर्थे विधेयतापादनं प्रकरणान्तरव्यापारः, तथैवोपादेयगुणानेकत्वेऽपि असन्निहितकर्मानुवादेनोपादेयगुणद्वयस्य वाक्यभेदापत्त्या विधानासंभवात् धात्वर्थे विधेयतापादनमपि प्रकरणान्तरस्यैव व्यापारः। गुणप्रकरणान्तरभेदस्तु सन्निध्यसन्निधिकृत एवेत्युच्येत, तदा अस्तु प्रकरणान्तराद्भेद इत्यभिप्रेत्य **प्रकरणान्तराद्वेत्युक्तम्**। यदा तु सन्निधाविवासन्निधानेऽपि समानन्यायेन गुणस्यैव भेदकत्वोपपत्तेः, अतिरिक्तप्रकरणान्तरस्वरूपस्य एतादृशे विषये उपपादनानर्हत्वं, तदा प्रकरणान्तरन्यायमनुपादेयगुणसत्वेनोपपादयितुं निष्कासांशे संस्कार्यतामुपपादयति— **वारुणीनिष्कासस्येति**। यद्यपि वारुणीनिष्कासस्य तृतीयया तुषाणामिव गुणत्वं प्रतीयते तथापि **वैमृधन्यायेन पदान्तरकल्पनया** प्राधान्यमङ्गीकृत्य तत्संस्कार्यसंबन्धात् प्रकरणान्तरात् कर्मान्तरमित्यर्थः। ननु अवभृथस्य संस्कारकर्मत्वे एकादशे **निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदाने विप्रकर्षः स्यात्** इति द्वितीयपादाधिकरणे **प्रतिपत्तेरिति चेन्न कर्मसंयोगादिति** गुणसूत्रे (११—२—६३) निष्कासांशे प्रतिपत्तिनिराकरणप्रतिपादनविरोधः; तथात्वेऽपि वा तुषांशेऽपि प्रतिपाद्यत्वाविशेषात् प्रतिपत्तित्वापत्तिरित्याशङ्कानिराकरणायाह— **एकादशे इति**। इदं हि कौस्तुभे तत्र प्रतिपादितम् —निष्कासपदस्योत्तरार्धादिपदवत् ससंबन्धिकवचनत्वात् वारुण्या इत्यनेन विशेषणाच्चार्थकर्मत्ववादिमतेऽपि परप्रयुक्तद्रव्योपजीवित्वस्यावश्यकत्वेन लौकिकनिष्कासग्रहणानुपपत्तेरुपयुक्तनिष्कासस्यैव तेन ग्रहणात् प्रयाजशेषन्यायेन युक्तं तस्य संस्कार्यत्वं; तुषपदस्य तु जाघनीपदवत् अवयवविशेषवाचित्वेऽपि उत्तरार्धादिपदवत् ससंबन्धिकवचनत्वाभावेन परप्रयुक्तद्रव्योपजीवकत्वाभावात् लौकिकतुषग्रहणेनापि करणत्वोपपत्तेः नावश्यकं तुषाणां संस्कार्यत्वं, उपयुक्ततुषाणान्तु प्राकृत्येव प्रतिपत्तिः। यद्यपि निष्कासांशेऽपि प्राकृतप्रतिपत्तिरस्त्येवेति तद्बाधेन

नानपेक्षितप्रतिपत्त्यन्तरविधानं युक्तम्, **तथापि** तद्बाधस्यार्थकर्मत्वपक्षेऽपि सत्त्वात् प्रयाजशेषेऽनपेक्षितप्रतिपत्तिविधानवत् इहापि तद्विधानोपपत्तेर्न बाधकम्। अतो निष्कासंस्कारार्थत्वेनावभृथविधानम्।

**यद्यपि** तत्संस्कारार्थत्वपक्षे तद्गततृतीयाया एव कर्मत्वलक्षणासंभवेन तद्वाचकपदान्तरकल्पना आवश्यिकी, **तथापि** प्रथमशब्दबोधे त्यागं प्रति करणत्वेनान्वये अयोग्यत्वाभावात् न तदाश्रयणम्। पश्चात्तु प्रयोजनकल्पनायामुपस्थित्याधिक्यात् तद्वाचकपदान्तरकल्पनया प्रक्षेपांशेन तत्संस्कारकत्वं कल्प्यत इति सैव साधीयसी। अत एव तुषाणामप्यत्रोपयुक्तानामेवोपादानमङ्गीकृत्य उभयोरपि संस्कार्यत्वमिति न्यायसुधोक्तमपास्तम्। तथात्वे कर्मान्तरविधानेऽपि उद्देश्यानेकत्वप्रयुक्तवाक्यभेदस्यापरिहार्यत्वापत्तेः। न चैकादशे अर्थकर्मभूतसौमिकावभृथसादृश्यस्य संस्कारकर्मण्यस्मिन्नवभृथे अर्थकर्मत्वाभावेनानुपपत्तेः गौण्या वृत्त्याप्यवभृथपदानुपपत्तेः तदनुरोधेनार्थकर्मत्वमेव न प्रतिपत्तिकर्मत्वमित्युक्तं विरुद्ध्यतेति वाच्यम्। अग्निहोत्रशब्दवत् कार्यकृतसादृश्यासंभवेऽपि तद्धर्मवत्त्वरूपस्य साध्यसादृश्यस्येहापि संभवेनावभृथशब्दानुपपत्त्यभावात्। निष्कासांशे प्रतिपत्तित्वं तुषांशेऽर्थकर्मत्वमिति कल्पने बाधकाभावेन तुषांशे प्रतिपत्तिनिराकरणार्थत्वपरतया तद्विरोधाभावात्। अत एव बौधायनकल्पे लौकिकतुषग्रहणमेवोपदिष्टमिति।

**मम तु प्रतिभाति।** यदि प्रथमशाब्दबोधे निष्कासस्य करणत्वं पश्चात् पदान्तरकल्पनया संस्कार्यत्वं कल्प्यते तदैकरूप्याय तुषसंस्कारार्थत्वमपि दुर्निवारम्। न चोद्देश्यानेकतापत्तिः, पदान्तरकल्पनावश्यकत्वे उभयवाचकसमस्तपदस्यैव कल्पनात्। एकोद्देश्यत्वेन तदभावात्। ऐकरूप्यानुरोधेन प्राचीनप्रयाजशेषन्यायेन त्यागांशे करणत्वानुवादिकयोस्तृतीययोरेव प्रथमबोध एवोभयविशिष्टैककर्मत्वलक्षणायां बाधकाभावाच्च। आर्थिकप्रतिपत्तिविधिकल्पनारूपेण भवदुपपादितप्रयाजशेषन्यायेनेह तत्कल्पने सुतरां तदप्रसक्तेश्च। न ह्युपयुक्ततुषग्रहणेनैकरूप्ये संभवति लौकिकग्रहणं युक्तं। न च तेषां परप्रयुक्तत्वेनोपादानाभावात् संस्कारानावश्यकत्वमिति वाच्यम्। यतः किमुपयुक्तप्रतिपत्तिरूपसंस्कारसंस्कार्यत्वे परप्रयुक्तत्वेनोपादनं पदेनावश्यकं? उतोपयुक्तत्वमात्रं वास्तवम्? आद्ये कृष्णविषाणायास्तदभावेन तत्संस्कार्यत्वानापत्तिः। तत्रापि द्वितीयायास्तृतीयार्थलक्षणया लौकिककृष्णविषाणाकरणकप्रासनविध्यापत्तेः। यदि तु उपयुक्तप्रकृतकृष्णविषाणामादाय परप्रयुक्तत्वेनोपादानाभावेऽपि संस्कार्यत्वपरद्वितीयोपपत्तौ न लक्षणामङ्गीकृत्य लौकिकग्रहणं युक्तमित्येवं द्वितीयपक्षावलम्बनं, तदा इहापि तृतीययोरैकरूप्यस्य च निर्वाहाय करणत्वं संस्कार्यत्वञ्चोभयोरप्युपयुक्तयोः तुषनिष्कासयोराश्रयितुं युक्तमिति न लौकिकतुषग्रहणप्रसक्तिः।

वस्तुतस्तु तैत्तिरीयब्राह्मणे 'वरुणगृहीतं वा एतद्यज्ञस्य यद्यजुषा गृहीतस्यातिरिच्यते तुषाश्च निष्कासश्च' इत्येवं यज्ञोपयुक्तातिरिक्ततुषाणामेव निष्कासवत्साधनताप्रतीतेर्न लौकिकतुषप्रसक्तिः; अतः एकसंस्कारकत्वस्वीकारे उभयसम्स्कारकत्वानिवारणात्, अर्धजरतीयपरिहारेण उभयसंस्कारकत्वमेव न्यायसुधोक्तं यद्यपि युक्तम्; तथापि अवभृथपदानुपपत्तेरर्थकर्मत्वमेव सूत्रभाष्यारूढमाश्रयणीयम्। न हि संभवतः कार्यकृतसादृश्यस्य त्यागेन एकदेशसादृश्यमादायैवावभृथपदोपपत्त्याश्रयणं युक्तम्। तथात्वे संभवद्यावत्सादृश्यप्रतीतेर्बाधापत्त्या अवभृथपदसङ्कोचापत्तेः। अत एव निष्कासांशे प्रतिपत्तित्वाङ्गीकारे तुषांशे प्रतिपत्तिनिराकरणपरमेकादशाधिकरणसूत्रमिति तदविरोधप्रदर्शनमप्यसङ्गतम्। पूर्वोल्लिखितैकादशाधिकरणसूत्रे निष्कासपदस्यैवोपदानेनाधिकरणीयमुख्यपूर्वपक्षसिद्धान्तयोः तद्विषयत्वस्यैव प्रतीतेः, तत्रैव प्रतिपत्तिविधित्वाशङ्कासमाधानयोः प्रतीत्या तुषमात्रांश एव तत्प्रतिपादकत्वायोगात्। भवन्मते तु तुषांशे परप्रयुक्तद्रव्योपजीवित्वावश्यकत्वाभावे प्रतिपत्त्याशङ्काया असंभवदुक्तिकाया एव परिहारे वैयर्थ्याच्च। प्रकृतानां तुषाणां साधनत्वमभिप्रेत्य प्रतिपत्त्याशङ्का तत्समाधानञ्च 'न कर्मसंयोगा'दित्यनेन क्रियत इति चेत्; न, भवदुक्तरीत्या तद्विषयप्रतिपत्त्याशङ्कायाः लौकिकतुषग्रहणेनापि साधनत्वोपपत्तौ प्रकृतग्रहण एव मानाभाव इत्येवमपि परिहर्तुं शक्यत्वे 'न कर्मसंयोगादि'ति हेतूपादानवैयर्थ्यापत्तेः। अतः सूत्रस्वारस्यमनुगृह्णता भाष्यकारेण अवभृथशब्दानुपपत्तिपरतयैवैतत्सूत्रव्याख्यानात्। तस्याश्चासाधारण्येन निष्कासप्रतिपत्त्याशङ्कानिराकरण एव हेतुत्वप्रतीतेः तद्विषयकमेव तदधिकरणम्। निष्कासार्थमुक्तेनावभृथपदानुपपत्तिरूपेण हेतुना तुषांशेऽपि प्रतिपत्त्याशङ्कानिराकरणं सुकरमिति मत्वा तन्त्ररत्नादौ तुषांशेपि एतत्सूत्रविवरेण समानन्यायात् प्रतिपत्त्याशङ्कानिराकरणं कृतम्। लौकिकतुषव्यावृत्तिस्तु अन्यदीयनिष्कासद्रव्यसाहचर्यादेवावसेया। अतोऽग्निहोत्रे कार्यकृतसादृश्यासंभवे साध्यसादृश्यमादाय कथञ्चिदग्निहोत्रनामकत्वस्वीकारेऽपीह कार्यकृतसादृश्यस्यापि संभवतः त्यागायोगादवभृथनामकत्वानुरोधेन प्रतिपत्तित्वानुपपत्तेः वाक्यभेदापादकगुणात् कर्मान्तरमेतत उभयद्रव्यगुणकमर्थकर्मैवेति सूत्रभाष्याद्यनुगुणं साधु। एतत्सर्वमभिप्रेत्यैव प्रकरणान्तराधिकरणे पूज्यपादैः निष्कासांशे प्रतिपत्तित्वं तुषांशे तु अर्थ कर्मत्वमिति स्वोपपादितसिद्धान्तान्ते', अस्तु वा तत्रत्यभाष्याद्यनुसारात् निष्कासांशेऽप्यर्थकर्मत्वं, तथापि प्राप्तकर्मानुवादेन द्रव्यद्वयविधाने वाक्यभेदापत्तेः गुणादेव कर्मभेदो न तु प्रकरणान्तरादित्यवधेयम्''इत्युक्तं कौस्तुभे। तन्मया प्रसङ्गादत्र व्याख्यातमिति द्रष्टव्यम्। तदेतद्वरुणप्रघासिकावभृथस्य सौमिकावभृथापेक्षया कर्मान्तरत्वं मीमांसानयसिद्धमप्यनङ्गीकृत्य याज्ञिकाः "पूर्णपात्रस्य स्थाने सौमिकोऽवभृथः" (आ.श्रौ-८-७-१२) इत्यापस्तंबसूत्रानुसारात् 'वारुण्या

**भृथधर्मातिदेशः।** अत एव 'नायुर्दा जुहोति **न साम गायति न गमनमन्त्रं जपति' इत्यादि-निषेधोऽपि सङ्गच्छते।** अतिदेशेऽपि च **न तदीयद्रव्यस्यैककपालस्यातिदेशः। औपदेशिकेन विशेषविहितेन च तुषनिष्कासद्रव्येण** लाक्षणिकस्य **सामान्यविहितस्यातिदेशप्राप्तस्य द्रव्यस्य बाधात्।**

---

निष्कासेन तुषैश्चावभृथं यन्ति' इति वाक्येन 'यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्ति' इत्यत्र सहयोगे तृतीयाभ्युपगमेन अवभृथदेशं प्रति सोमलिप्तसाहित्येन यानमात्रविधानस्येवेहापि तथैव स्वीकारेणाकर्मान्तरत्वमेवाश्रयन्ते। ततश्च तस्मिन्नेव सौमिकावभृथयागे संयोगपृथक्त्व-न्यायेन वरुणप्रघासप्रधानाङ्गत्वस्याङ्गीकारात्, वरुणप्रघासपुरस्कारेण कतिपयविशेषाङ्गानां विधानात् वारुणैककपालेन, वारुणीनिष्कासेन वा हविषा प्रधानानुष्ठानं; तुषाणान्तु अवभृथदेशे सहानी-तानां सौमिकर्त्जीषधर्मानुष्ठानपूर्वकं स्थाल्यां संभृतानां ऋजीषवदप्सु प्रक्षेपः; न तेषां हविष्ट्वम्। वारुणीनिष्कासस्य तु वारुणैककपालाभावे हविष्ट्वमेव। तत्सत्वे तु तस्यापि तुष-वत्प्रक्षेप इत्यनुष्ठानमपि कुर्वन्तीत्यलं विस्तरेण।

**अत एव नायुर्दा जुहोतीति।** सौमिकावभृथे हि अवभृथगमने मध्ये आयुर्दाहोम-त्रयं, 'ऊँ हिराजे'ति ऋचि सामगानमासीत्, तस्यायं निषेधः सौमिकावभृथाद्धर्माणां प्राप्तिद्योतकः। इतरथा अप्राप्तिनिषेधानुपपत्तेः। अत्र च निषेधपदं पर्युदासपरम्। इतरथा 'न तौ' इति-वद्विकल्पापत्तेः इति भावः। अत्र चैतदधिकरणानन्तरं 'द्रव्यादेशे तद्द्रव्यं श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वादि'ति सूत्रान्तरेण पुरोडाशद्रव्यकत्वमाशङ्क्य निराक्रियते। ततश्च तदधिकरणान्तरपरतया प्राचीनैर्व्याख्यातमपि पूर्वपक्षस्य निर्युक्तिकत्वात् तदर्थमत्रैवानुवदति— **अतिदेशेऽपि चेति। लाक्षणिकस्येति।** गौणनाम्ना प्राप्यमाणत्वात् लाक्षणिकत्वं, उभय-साधारणत्वात् सामान्यविहितत्वमेककपालस्येत्यर्थः।

---

## (५)—गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥

सोमे आतिथ्येष्टिः 'वैष्णवो नवकपालः' इत्यनेन वैशेषिकधर्मयुक्ता विहिता। राजसूये च 'वैष्णवस्त्रिकपाल' इति श्रुतम्। तत्र वैष्णवशब्दस्य न धर्मातिदेशकत्वं, सत्यप्युत्पत्तिशिष्टगुणावरोधादिनोभयत्र कर्मविधित्वे वैष्णवशब्दस्योभयत्रापि देवताविधायकत्वेन धर्मातिदेशकत्वानुपपत्तेः। न चातिदेशेनैव देवतायाः प्राप्तिसंभवेन बह्वर्थलाभाय धर्मातिदेशकत्वाङ्गीकरणं, गौणत्वे प्रमाणाभावात्। बह्वर्थलाभाय जघन्यवृत्त्यङ्गीकारेऽतिप्रसङ्गात ॥ ५॥

## (६)—निर्मन्थ्यादिषु चैवम् ॥ १८ ॥

अग्नौ ,निर्मन्थ्येनेष्टकाः पचन्ति' इति; पशौ 'बर्हिषा यूपावटमवस्तृणाति, आज्येन पशुमनक्ति' इति श्रुतम्। तत्र पूर्ववदेव निर्मन्थ्यशब्दो मन्थनक्रियाविधायकत्वेन गौणत्वायोगान्न पाशुकानां मथनधर्माणामतिदेशार्थः। बर्हिराज्यशब्दौ च द्रव्यविधित्वान्न दार्शपूर्णमासिकबर्हिराज्यधर्मातिदेशार्थौ। न च त्रिकपालस्य नामातिदेशेन धर्मप्राप्त्यभावेऽपि ऐष्टिकधर्मातिदेशेन निराकाङ्क्षत्वान्न गौणत्वाङ्गीकारः; प्रकृते तु धर्माकाङ्क्षयैव गौणत्वाङ्गीकारान्नामातिदेशोपपत्तिरिति वाच्यं, लोकतोऽपि मथनादिधर्मलाभेन श्रुत्यर्थत्यागे, प्रमाणाभावात् ॥ ६ ॥

---

### गुणविधिस्तु।

वैशेषिकधर्मेति। ते चाश्ववालादयः। अत्र च प्रायणीयनामधेयस्येवेहापि अवयवयोगेनैव प्रवृत्त्या न धर्मातिदेशकत्वमिति तदधिकरणेनैव सिद्धे तन्त्ररत्ने विशेषाशङ्का दर्शिता। तत्र हि यागविधिपरे वाक्ये सत्यां गतौ अनेकार्थविधानायोगात् प्रायणीयशब्दस्य च क्लृप्तेनैव योगेन कर्मनामधेयतयाऽनुवादकत्वसंभवात् न धर्मातिदेशकत्वेन विधानार्थत्वं युक्तम्। इह तु वैष्णवादिपदानामवश्यं विधायकत्वमङ्गीकर्तव्यम्। तद्वरं धर्मातिदेशकत्वं बह्वर्थसमर्पकतया प्रयोजनभूयस्त्वलाभादिति। तामिमामाशङ्कामनूद्य परिहरति—नचेति। अतिप्रसङ्गादिति। सोमेन यजेतेत्यत्रापि बह्वर्थलाभाय सोमपदे गौण्यापत्तेरित्यर्थः।

### निर्मन्थ्यादिषु चैवम्।

इहाप्यधिकरणान्तरकरणे विशेषाशङ्कां दर्शयति—नचेति।

(७)—प्रणयनं तु सौमिकमवाच्यं हीतरत् ॥ १९ ॥ उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥ प्राकृतं वाऽनामत्वात् ॥ २१ ॥ परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥२२॥ प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २३ ॥ मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥ औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २५ ॥

**चातुर्मास्येषु 'वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि।** तत्र 'द्वयोः **प्रणयन्ति द्वाभ्यामेति'** इति श्रुतम्। तत्र भाष्यकारः **सप्तभिस्सूत्रैरधिकरणद्वयमेवं व्याचख्यौ। तत्राद्ये तावत् सौमिकं** सधर्मकं **प्रणयनमिदं उत प्राकृतमधर्मकं गार्हपत्यादाहवनीयं** प्रतीति **चिन्तायां** —

**प्राकृतस्य चोदकेनैव प्राप्तत्वेन विधिवैयर्थ्यापत्तेर्वचनार्थवत्त्वाय प्रणयतिरयं सौमिकप्रणयनपरस्तद्विधानार्थः।** अत एव तत्रो**त्तरवेदेस्सत्त्वेन तत्प्राप्तौ 'न वैश्वदेवे उत्तरवेदिमुपवपति न शुनासीरीये' इति तत्पर्युदासोऽपि सङ्गच्छते।** तेन तयो**रुत्तरवेदिव्य-**

---

**सौमिकन्तु प्रणयनम्।**

**तत्र द्वयोरिति।** अत्र च द्वयोः प्रणयनविध्यनन्तर**'मुत्तरवेद्यामग्निं निदधाति'** इति वचनान्तरेण अग्न्याधारत्वेनोत्तरवेदिर्विनियुक्ता। **'उपात्र वपन्ति'** इतिवाक्यान्तरेण चोत्तरवेद्युत्पत्तिर्विहिता। **'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये'** इति च पर्वद्वये सा निषिद्धा। तत्र च 'द्वयोः प्रणयन्ती'ति वाक्ये विचारद्वयमधिकरणद्वयेन भाष्यकारोक्तं प्रथमतो दर्शयति—**तत्र भाष्यकार इति। सधर्मकमिति।** 'अग्नये प्रणीयमानायानुब्रूहि' इत्यादिप्रैषपूर्वकमग्निप्रणयनानन्तरमुत्तरवेदेरुपरि धार्यमाणेऽग्नौ जुह्वां पञ्चगृहीतेनाज्येन समन्त्रकव्याघारणप्रभृतयो ये धर्मा आम्नाताः तद्धर्मकमाहवनीयापादानकमित्यर्थः। **आहवनीयं प्रतीति।** यद्गार्हपत्यादाहवनीयं प्रति अधर्मकं प्राकृतं प्रणयनमासीत् तदेवेदमतिदेशप्राप्तं वेत्यर्थः। यथाश्रुते सिद्धान्ते आहवनीयदेशं प्रति प्रणयनाभावेन सिद्धान्तपक्षत्वेन तादृशोल्लेखानुपपत्तेः। प्राकृतमेव प्रणयनमिति सिद्धान्तपक्षे प्रकृतावुत्तरवेदेरभावेनेहाप्राप्तेः 'न वैश्वदेव' इति निषेधानुपपत्तेः। अत एवेदं सौमिकं प्रणयनम्, तत्र चोत्तरवेदिप्राप्तेः निषेधोपपत्तिरित्याह—**अत एव तत्रेति।** भाष्यकारप्रदर्शिते पूर्वपक्षे तदनुक्तं स्वयं विशेषं दर्शयति —**तेन तयोरिति।** 'न गिरे'ति निषेधानुवादबलात् इरापदस्य गिरापदस्थानकत्ववत् इहापि 'न वैश्वदेव' इत्यनुवाद-

**तिरिक्तास्सौमिकप्रणयनधर्माः कार्याः। यत्तु 'उपात्र वपन्ति' इत्युत्तरवेदेरुत्पत्तिवाक्यं यच्च 'उत्तरवेद्यामग्निं निदधाति' इति तस्याः विनियोगवाक्यं तन्मध्यमयोः पर्वणोः प्राकृतप्रणयनकाल एवोत्तरवेदिमात्रविधायकमिति प्राप्ते—**

---

बलात् द्वयोः प्रणयन्तीति वाक्यस्थस्याविशेषप्रवृत्तस्यापि 'द्वयो'रिति पदस्य आद्योत्तमपर्वपरत्वमिति तद्विषयमेवोत्तरवेदिव्यतिरिक्तधर्मकं प्रणयनं सौमिकमित्यर्थः। यत्त्विति।

अत्रेदमवधेयम्। यद्यु'पात्र वपन्ति' इत्युत्तरवेद्युत्पत्तिवाक्यं वरुणप्रघासावान्तरप्रकरणपठितमपि मध्यमपर्वद्वये निविशते चातुर्मास्यमहाप्रकरणात्, तदा आद्योत्तमपर्वणोरपि उत्तरवेदेस्तेन प्राप्ताया 'न वैश्वदेव' इति पर्युदासोपपत्तेः एतदुत्तरवेदिपर्युदासानुपपत्त्या सौमिकप्रणयनपरत्वं सूत्रभाष्यानुसारेण स्वोक्तमनुपपन्नम्।

यदि तु अवान्तरप्रकरणात् वरुणप्रघास एव तत्प्राप्तेः आद्योत्तमपर्वणोस्तत्प्राप्त्यभावात् पर्युदासानुपपत्तिः शङ्क्येत; तदाऽवान्तरप्रकरणात् वरुणप्रघासविषयमेव उत्तरवेद्युत्पत्तिविनियोगविधानं वक्तुमुचितम्; न वार्तिकतन्त्ररत्नोपपादितप्रकारेण भवदभिमतेन तृतीयपर्वविषयमपि। अत एवास्मिन् पक्षे तृतीये पर्वणि नोत्तरवेदिर्न वा सौमिकं प्रणयनमिति ध्येयम्। अत एव भाष्यकारेणैतत्पूर्वपक्षोपपादनं 'उपात्र वपन्ती'ति वाक्यव्यवस्थामनादृत्यैव सूत्रस्वारस्येन कृतमिति। न चावान्तरप्रकरणात् उत्तरवेदेर्वरुणप्रघासमात्रविषयत्वकल्पने 'न वैश्वदेव' इति द्वयोर्निषेधानुवादवत् तृतीयस्याप्यनुवादकरणा[1]पत्तिरित्यतो[2]ऽत्रावान्तरप्रकरणबाधेन मध्यमपर्वविषयत्वमेव कल्पयितुं युक्तमिति वाच्यम्। एतत्पूर्वपक्षे 'न वैश्वदेव'इत्यादीनां सौमिकप्रणयनपृष्ठभावेन प्राप्ताया उत्तरवेदेः पर्युदासार्थत्वस्वीकारेण 'उपात्र वपन्ती'त्येतद्वाक्यप्राप्तोत्तरवेदिपर्युदासार्थत्वानभ्युपगमात्। एतद्वाक्यविहितोत्तरवेदेः अवान्तरप्रकरणेनैव वरुणप्रघासातिरिक्तपर्वत्रयाङ्गत्वपर्युदासात् वरुणप्रघासमात्रविषयत्वकल्पने बाधकाभावात्। अत एव द्वयोः प्रणयन्तीत्यस्य 'उपात्र वपन्ती'ति वाक्यविहितोत्तरवेदेर्विकल्पापत्त्यापि न मध्यमपर्वविषयत्वम्। तथा सति सौमिकप्रणयनपृष्ठभावेनैव मध्यमपर्वणोरुत्तरवेदिप्राप्तेरु'पात्रवपन्ती'ति पुनरुत्तरवेदिविधानस्य वैयर्थ्यापत्तेः; तत्परिहारायाद्योत्तमपर्वविषयत्वकल्पने तत्रैव पर्युदासेन विकल्पापत्तेः। अतोऽवान्तरप्रकरणा'दुपात्रऽवपन्ती'ति विधिविहितोत्तरवेदितद्विनियोगयोः वरुणप्रघासमात्रविषयत्वं; द्वयोः प्रणयन्तीत्यस्य तु आद्योत्तमपर्वविषयत्वमित्येव पूर्वपक्षोपपादनं युक्तमिति।

---

1. B. करणानुपपत्तिः

2. A. रित्यत्र

न प्रणयतिस्सौमिकप्रणयनस्यैव विशिष्योपस्थापकः सन्निहितत्वात्तु प्राकृतमेवोपस्थापयति। ततस्तस्यैवातिदेशप्राप्तेः पूर्वप्रवृत्त्या विधिरनुवाद एव वा। तत्प्रयोजनं च यद्यपि नेतरयोः परिसङ्ख्या त्रैदोष्याद्यापत्तेः, प्रणयनाभावे इतरपर्वणोरग्न्यभावेन यागानुपपत्तेश्च। नाप्यर्थवादोपपत्तिः विध्यभावेऽर्थवादत्वस्यैवानुपपत्तेः, तथाऽप्युत्तरवेदिरूपगुणार्थं पुनश्श्रुतिः। एतदभावे हि चतुर्ष्वपि प्राकृतप्रणयनप्राप्तौ देशापेक्षायामुत्तरवेदिविधानं चतुर्ष्वपि प्राप्नुयात्। एतत्सत्त्वे तु पर्वद्वयवृत्तिप्रणयनस्यैव विशिष्योपदेशेनोपस्थितत्वात्तत्रैवोत्तरवेदिस्तदीयाग्निनिधानमेव च द्वारमिति सिद्ध्यति। अतः इतरपर्वणो-

---

**सन्निहितत्वादिति।** अतिदेशेनेति शेषः। अत्र भाष्यकारेण प्राकृतस्य प्रणयनस्यात्र पुनर्विधानं यद्यपि नोक्तम्, तथाप्यतिदेशप्रवृत्तेः पूर्वप्रवृत्त्या विधित्वसंभवे उक्तेऽपि अनुवादत्वपक्षापेक्षया गुणसंबन्धलाभप्रयोजनातिरिक्तप्रयोजनान्तरस्यादर्शनात् गुरुभूतविधित्वकल्पनापेक्षया अनुवादत्वमेव युक्तं, गुणसंबन्धप्रयोजनस्य तदानीमपि संभवादित्यभिप्रेत्य पक्षान्तरत्वेनाह— **अनुवाद एव वेति।**

**अयमाशयः**—भाष्यकारेण हि 'प्राकृतं वाऽनामत्वादिति (७-३-२१) सिद्धान्तसूत्रविवरणेन अस्य पुनर्विधित्वमनुवादत्वञ्चोक्तम्; तथापि 'परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा' (७-३-२२) इति प्रयोजनसूत्रोपन्यस्तप्रयोजनविवरणे पूर्वपूर्वप्रयोजनास्वरससूचनपूर्वकं अर्थवादप्रयोजनमेवान्तिमोक्तत्वेन दृढीकृतम्। न हि तदसाधारणं प्रयोजनं प्रणयनवाक्यस्य विधित्वाभावे मन्देनापि वक्तुं शक्यते। किमुत सूत्रभाष्यकाराभ्याम्। अतस्सूत्रभाष्यकारयोरभिप्रेतस्य विधित्वमित्यभिप्रेत्य सोपपत्तिकं तस्य विधित्वमुपपादितम्। तादृशार्थवादवशेन द्वयोरिति पदस्य मध्यमपर्वविषयत्वसिद्धावपि पुनर्विधिप्रयोजनं **औत्तरवेदिकोऽनारभ्यवादप्रतिषेध** इति (७-३-२५) द्वितीयाधिकरणगुणसूत्रान्ते उपपादितं भाष्यकारेण। गुणसंबन्धरूपं प्रयोजनमग्रे उच्यते। तत्तु उभयथापि संभवति। एवं स्थिते यदनुवाद एवेत्युक्तम् तच्छास्त्रदीपिकादिग्रन्थानुरोधेनोच्यमानं अनुवादत्वे अर्थवादत्वानुपपत्तेरित्यनेन दूषणेन निरसनीय[1]प्रायं सत् विध्यङ्गीकारस्यैव बलवत्साधकतयाऽनास्थयोपन्यस्तमिति ध्येयम्। एतेन विधित्वाभावे अर्थवादत्वानुपपत्तेः अर्थवादार्थमनुवाद इत्यनुपपन्नमिति वार्तिकोक्तं भाष्यदूषणमपास्तम्।

मास्तु वाऽर्थवादोपपत्तिः प्रयोजनं तथापि गुणसंबन्धरूपं प्रयोजनान्तरं संभवतीत्याह— **तथापीति।** **उपस्थितत्वादिति।** एतेनापि दध्ना जुहोतीतिवत् स्ववाक्ये गुणिनमुद्दिश्य

---

1. A नीयंसत्

रुत्तरवेदिपरिसङ्ख्यैवानुवादप्रयोजनमिति ।

---

गुणाम्नानाभावात् वाक्यान्तरोपात्तगुणार्थता न संभवतीति वार्तिकोक्तं भाष्यदूषणमपास्तम् । स्ववाक्ये गुणोपादानाभावेऽपि वाक्यान्तरोपात्तगुणसंबन्धे फलतः प्रयोजनत्वाङ्गीकारस्य, 'वाग्वा एषा यदैन्द्रवायवः' 'द्वे आहवनीये जुहोति' 'पुरोडाशं प्रथयति' इत्येवमादिषु दृष्टत्वेनेहापि तदुपपत्तेः । **उत्तरवेदिपरिसङ्ख्यैवेति** । फलत इति शेषः । विधित्वाभवे अर्थवादार्थत्वासंभवेऽपि अनुवादत्वाङ्गीकारेऽपि वार्तिकोक्तदूषणपरिहारेण भवत्ये[1] वेतत्प्रयोजनमित्यभिप्रेत्योक्तं —**अनुवादप्रयोजनमितीति** ।

अत्रैतदधिकरणानन्तरं भाष्यकृता कतरयोर्द्वयोरिति सन्दिह्य उत्सूत्रानियमपूर्वपक्षोत्तरत्वेन **प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति** सूत्रमवतारयता द्वितीयाधिकरणमारब्धम् । अयं हि तदर्थः-प्रणयनेनाग्निः प्राप्यते, अतो यत्र प्रणयनं तत्राग्निः तत्रैवोत्तरवेदिः प्राप्नोति, अग्निसंस्कारकत्वात्तस्याः; तेन सा यत्र वैश्वदेवशुनासीरीययोः प्रथमोत्तमयोः प्रतिषिध्यते तत्राग्निर्विद्यते; प्राप्तिपूर्वको हि प्रतिषेधः । स च वैश्वदेवशुनासीरीययोरुपलभ्यते—'न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये'—इति । तेन तस्याः प्राप्तिरनुमीयते तत्प्राप्त्या चाग्निः । नह्यसत्यग्नौ अग्निसंस्कारिकायाः प्राप्तिर्घटते । तत्रैव प्रणयनमनुमीयते—न हि प्रणयनमन्तरेणाग्निर्भवति । तदनेनोत्तरवेदिप्रतिषेधेन लिङ्गेन अनुमानपरम्परया प्रथमोत्तमयोः प्रणयनमवसीयत इति । एतच्च दूषितं वार्तिककारेण ।

तथाहि—प्राकृतमेव प्रणयनमिति पूर्वाधिकरणे सिद्धेऽर्थे प्राकृतस्य प्रणयनस्य पर्वचतुष्टये सत्त्वात् कतरयोर्द्वयोरिति सन्देहस्यैवासंभवः; पर्वद्वयपरिसङ्ख्यापरत्वस्य पूर्वमेव निरस्तत्वात् । तदसंभवादेवानियमपूर्वपक्षस्य, तन्निरासेन प्रथमोत्तमनिवेशपूर्वपक्षस्य चानुपपत्तिः । न च प्रणयनस्वरूपं कतरयोर्द्वयोरिति न सन्दिह्यते, किन्तु यत् द्वयोः प्राकृतमेव प्रणयनमनूद्यते तत्कतरयोरिति सन्दिह्यत इति वाच्यम् । अनुवादमात्रविचारस्यानुष्ठानोपयिकत्वाभावेन निष्प्रयोजनत्वात् । ननु उत्तरवेदिविषयनिरूपणं प्रयोजनम्; यत्र हीदं प्रणयनमनुकीर्तितं तत्रोत्तरवेदिः, अस्यानन्तरं 'उत्तरवेद्यामग्निं निदधाति' इति विहितेति चेत् । मैवम् । अग्निनिधानानुवादेन विधीयमानायाः उत्तरवेदेः महाप्रकरणाच्चोदकप्राप्ताग्निप्रणयनसद्भावाच्च चतुर्ष्वपि पर्वसु प्राप्तायाः सन्निधिमात्रेण दुर्बलेन द्वयोः प्रणयन्तीत्येतदनूदितप्रणयनविषयत्वकल्पने

---

1. A भवत्येतत्

द्वितीयाधिकरणे तु **सोऽयमनुवादः प्रथमोत्तमयोः मध्यमयोर्वेति चिन्तायां** मध्यमविषयत्वे **तत्रैवोत्तरवेदिप्राप्तेः प्रथमोत्तमयोस्तत्पर्युदासानुपपत्तिप्रसङ्गात् प्रथमोत्तमविषयत्वमेव।**

---

प्रमाणाभावात्। अतः प्राकृतप्रणयनानुवादमात्रविचारस्य निष्फलत्वात्, प्राकृतप्रणयने चोत्तरवेदेरभावात्, प्राकृतप्रणयनपृष्ठभावेन प्रसक्तोत्तरवेदिनिषेधबलेन प्रथमोत्तमपर्वविषयत्वपूर्वपक्षानुपपत्तेः, पूर्वोक्तरीत्याऽर्थवादत्वस्य चासंभवात्, **मध्यमयोर्वा गत्यर्थवादा**दिति सूत्रेण मध्यमविषयत्वसिद्धान्तकरणमयुक्तमित्येवंरीत्यानुत्थानं द्वितीयाधिकरणस्येति।

तदिदं वार्तिकोक्तं दूषणं प्रणयनानुवादस्यावान्तरप्रकरणसंपादनद्वारा उत्तरवेदेः पर्वद्वयपरिसङ्ख्यारूपप्रयोजनेन पूर्वाधिकरणनिरूपितेन परिहृतमभूदित्यभिप्रेत्य निश्शङ्कं द्वितीयाधिकरणमुपपादयति- **द्वितीयाधिकरणे त्विति।** तथाचोत्तरवेदिप्राप्तिफलकं प्राकृतमेव प्रणयनं यत् द्वयोरनूदितं तत् कतरयोर्द्वयोरिति सन्देह संभवात् उत्तरविचारस्सर्वोऽपि संभवतीति भावः। अनियमपूर्वपक्षस्तु प्रथमोत्तमयोरिति सूत्रानुशिष्टपूर्वपक्षवर्णनेनैव निरस्तत्त्वात् सूत्रानुशिष्टत्वाभावाच्च नोक्तः। अत्र च द्वयोरिति[1] कयोरिति सन्देहे **सन्दिग्धेषु वाक्यशेषा**दित्यधिकरणेनैव (पूमी-१-४. १९) गत्यर्थवादवशेन निर्णयः संभवत्येव। 'ऊरू वा एतद्यज्ञस्य यद्वरुणप्रघासास्साकमेधाश्चे'त्यर्थवादे ऊरुसंस्तुते ते वरुणप्रघाससाकमेधपर्वणी। ऊरू च गमनसाधने। तत्रैवं स्तुतिसंबन्धो भवति—ऊरू यज्ञस्य वरुणप्रघासास्साकमेधाश्चेति तयोर्द्वयोः प्रणयन्ति; तस्माद्वाभ्यामूरुभ्यां यज्ञः समाप्तिं याति प्रणयनेन हि तौ बलवन्तौ भवतः अङ्गभूयस्त्वात् इत्येवमर्थकोऽत्रार्थवादः। तथा च तेन न्यायेनात्रापि निर्णयसंभवात् व्यर्थमेतदधिकरणं इत्याशङ्कां अधिकाशङ्कया निरस्यन् पूर्वपक्षमारचयति— **मध्यमविषयत्वे इति**। अत्र चार्थवादे लक्षणापत्त्या विधिकल्पनभयाच्च[2] 'द्वयोः प्रणयन्ती'त्ययं मध्यमपर्वद्वयविषय एवानुवादः उत्तरवेद्युपसंहारार्थ इति सिद्धान्त[3]प्रसाधनानन्तरं भाष्यकारेण "कथं तर्हि अप्राप्तोत्तरवेदेः 'न वैश्वदेव' इति निषेध" इत्याशङ्कोत्तरत्वेन **औत्तरवेदिकोऽनारभ्यवादप्रतिषेध** इति सूत्रं उपात्र वपन्तीत्यस्य पर्वविशेषमनारभ्याम्नानात् महाप्रकरणेन तद्विहितोत्तरवेदेः पर्वचतुष्टयाङ्गत्वप्राप्तौ, 'न वैश्वदेव' इत्ययं पर्युदासस्संभवतीति व्याख्याय, 'उपात्र वपन्ती'त्यस्य वरुणप्रघासावान्तरप्रकरणपाठात् तत्रैवोत्तरवेदिप्राप्तेः पुनरप्यप्राप्तपर्युदासानुपपत्तिः इत्याशङ्क्य परिहृतम्—यद्युपात्र वपन्तीति वाक्येऽवान्तर-

---

1. A. द्वयो. कयोः
2. A. विकल्पभयाच्च
3. A. प्रणयनानन्तरं

ततश्च तत्रैवोत्तरवेदिप्राप्तौ तत्रैवायं निषेध इति तयोरुत्तरवेदेर्विकल्पः। 'द्वाभ्यामेति ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्च' इति प्रणयनार्थवादस्तु लक्षणया प्रथमोत्तमपर इति प्राप्ते—

लक्षणाया विकल्पस्य चान्याय्यत्वात् मध्यमविषय एवायमनुवादः उत्तरवेद्युप-

---

प्रकरणात् अत्रेति पदं वरुणप्रघासमात्रपरमुच्येत, तदा अर्थादेवेतरपर्वत्रयेऽप्राप्तत्वादुत्तरवेदिपर्युदा-सप्राप्ते'र्न वैश्वदेव' इत्यनयोः नित्यानुवादत्वमेव प्राप्नोति; तत्र यथा द्वयोर्नित्यानुवादः कृतः तथा तृतीयस्यापि स कृतः स्यात्। अतो ज्ञायते उभयत्रानुवाददर्शनात् अवान्तरप्रकरणं बाधित्वा तद्विहितोत्तरवेदिः महाप्रकरणात् सर्वपर्वसु निविशते। तथा चाविशेषेण प्राप्तोत्तरवेदिः प्रथमो-त्तमयोः पर्युदस्यते, 'नानूयाजेषु येयजामहं करोती'तिवत्। वरुणप्रघासविषयत्वे हि नायं पर्युदा-सस्संबध्यते। न हि संभवति-वरुणप्रघासेषु उत्तरवेदिमुपवपेत् वैश्वदेववर्जमिति। संभवति तु चातुर्मास्येषु उत्तवेदिमुपवपेत् प्रथमोत्तमवर्जमिति। तस्मात् एतद्बलादवान्तरप्रकरणं बाधित्वा चातुर्मास्यानामेव अत्रेति वाद इति।

तदेतद्भाष्यकारोक्तं वार्तिककृता दूषितम्। तथाहि—यदि प्राकृतस्य प्रणयनस्य पुनः श्रवणं अर्थवादद्वारेण मध्यमयोः पर्वणोः उत्तरवेद्याख्यगुणविधानार्थमिति पूर्वाधिकरणे स्थितं, तदा प्रथमोत्तमयोस्तेनैवोत्तरवेदेरप्राप्तत्वादेवैतत्पर्युदासाभिधानमयुक्तम्। अनुवादरूपप्रतिषेधत्वस्यापि इतरस्तुत्यर्थत्वाभावेन कल्पयितुमशक्यत्वेन वैयर्थ्यापत्तिश्च। यदा तु 'उपात्र वपन्ती'त्यनेनैव पर्युदाससहितेन मध्यमयोरुत्तरवेदिर्विहिता नेतरयोः तदा यत्रोत्पत्तिः तत्रैव विनियोग इत्यु'त्तरवेद्या-मग्निं निदधति' इतीदमपि विनियोगविधानं मध्यमयोः पर्वणोः निविशत इति, द्वयोः प्रणयन्तीति व्यर्थमेव। अतोऽवश्याङ्गीकर्तव्येऽन्यतरस्यानुवादत्वे, 'द्वयोः प्रणयन्ती'त्यस्यैवानुवादत्वमङ्गीकर्तुं युक्तम्। न तु 'न वैश्वदेव' इत्यनयोः। द्वयोः प्रणयन्तीत्यनेनार्थवादद्वारेण मध्यमयोरुत्तर-वेद्युपसंहारः क्लिष्टः स्यात्। पर्युदासविधिपक्षे तु स्पष्टः स इति तदपेक्षया पर्युदासविधिरेव युक्त इति।

एवञ्च वार्तिके 'न वैश्वदेव' इत्यस्यैव पर्युदासविधित्वमभ्युपेत्य 'द्वयोः प्रणयन्ती'त्यस्यैव प्राकृतप्रणयनानुवादेऽपि प्रयोजनानुपलब्धेर्वैयर्थ्यमापादितम्। प्रत्युत 'न वैश्वदेव' इत्यस्यैवानु-वादत्वाङ्गीकारेणैव 'द्वयोः प्रणयन्ती'ति वाक्यस्योत्तरवेद्युपसंहारार्थतया अर्थवत्तां ये मन्यन्ते तन्मते सूत्रभाष्यविरोधापादनेन तन्मतं खण्डितम्। तदेतन्मतसमर्थनव्याजेन वार्तिकोक्तदूषणं

संहारार्थः। एवं च प्रथमोत्तमयोरुत्तरवेदिप्राप्त्यभावात्तत्र तत्प्रतिषेधो नित्यानुवादः। तत्प्रयोजनं च 'उपात्र वपन्ति' इत्यादेर्वरुणप्रघासावान्तरप्रकरणबाधः। एतदभावे हि तदवान्तरप्रकरणे पठितायाः उत्तरवेदेस्तन्मात्राङ्गत्वप्रसक्तौ तदितरेषु त्रिषु पर्वसु नित्यानुवादस्स्यात्, न द्वयोः; अतो द्वयोर्नित्यानुवादबलादवान्तरप्रकरणबाधेन महाप्रकरणात्सर्वाङ्गत्वप्रसक्तौ 'द्वयोः प्रणयन्ति' इत्यनेन मध्यमयोरुत्तरवेद्युपसंहारो युज्यते। न चैवमपि प्रथमोत्तमयोः पर्युदासवशेनावान्तरप्रकरणबाधवन्मध्यममात्रविषयत्वस्याप्युत्तरवेद्युत्पत्तिविनियोगयोस्सिद्धेः 'द्वयोः प्रणयन्ति' इत्यस्य वैयर्थ्यमिति वाच्यम्। 'उत्तरवेद्यामग्निं निदधाति' इत्यनेन हि न निधानानुवादेनोत्तरवेदिर्विधीयते अतिप्रसङ्गात्। नाप्यग्निनिधानानुवादेन, विशिष्टोद्देशापत्तेः। नाप्यग्निमात्रोद्देशेन, गार्हपत्यादावप्युत्तरवेद्यापत्तेः। किन्तु अतिदेशप्राप्तं पूर्वप्रवृत्त्या उत्तरवेदिविशिष्टप्राकृतनिधानमेवाग्न्युद्देशेन विधीयते उत्तरवेदिमात्रफलकः। अतश्चौपदेशिकप्रणयनविध्यभावे प्रणीताग्निनिधान इव कपालतापार्थाग्निनिधानेऽपि तदापत्तिः।

---

परिहरन् सिद्धान्ते 'न वैश्वदेव' इत्यस्यैवानुवादत्वमुपपादयति—**एवञ्चेति**। यदुक्तं नित्यानुवादवैयर्थ्यं इतरस्य स्तुत्यस्य विधेयत्वाभावादिति तत् प्रयोजनकथनेन परिहरति—**तत्प्रयोजनमिति। अतो द्वयोरिति**। अयमर्थः—द्वयोरेवार्थप्राप्तप्रतिषेधानुवादो न तु तृतीयस्येति हेतोस्तावत् वरुणप्रघासावान्तरप्रकरणेन वरुणप्रघासमात्राङ्गत्वबोधनेनार्थप्राप्तोत्तरवेदिप्रतिषेधस्यायं नानुवाद इति प्रतीतेरवान्तरप्रकरणबाधेन इयमुत्तरवेदिः न वरुणप्रघासमात्राङ्गम्। न वा आद्योत्तमयोः प्रतिषेधानुवादबलात् वरुणप्रघाससाकमेधोभयाङ्गम्। वरुणप्रघासस्य सत्त्वेऽपि अवान्तरप्रकरणे तस्य बाधात्। साकमेधस्य स्वतः प्रकरणस्यैवाऽभावेन तदुभयमात्राङ्गत्वे प्रमाणाभावेन तदर्थसिद्धप्रतिषेधानुवादत्वानुपपत्तेः। अतोऽवान्तरप्रकरणबाधे साकमेधप्रकरणाभावे च सति महाप्रकरणाच्चातुर्मास्याङ्गत्वेनैवोत्तरवेदिः प्राप्नोतीति, नाद्योत्तमयोः प्रमाणान्तरेण प्रतिषिद्धा येन तल्लब्धानुवादत्वमनयोरुच्येत। अतो 'द्वयोः प्रणयन्ती'ति मध्यमपर्वविषयकवेद्युपसंहारेण सर्वाङ्गत्वबाधेन मध्यमपर्वद्वयाङ्गत्वविधानात् अर्थप्राप्त एवाद्योत्तमयोः उत्तरवेदिप्रतिषेधः अनुवादमात्रं संपद्यते। एवञ्च प्रतिषेधानुवादः अवान्तरप्रकरणबाधार्थः सन् उत्तरवेदेश्चातुर्मास्याङ्गत्वप्रापणप्रयोजनकः। 'द्वयोः प्रणयन्ती'ति तु मध्यमपर्वद्वये उत्तरवेद्युपसंहारप्रयोजनकमिति सिद्धम्। ननु 'न वैश्वदेव' इत्यस्य पर्युदासत्वाङ्गीकारेणैवोत्तरवेदेः मध्यमपर्वद्वयविषयत्वसिद्धेः 'द्वयोः प्रणयन्ती'त्यस्य वैयर्थ्यमापादितं दुष्परिहरमेवेत्याशङ्क्य परिहरति—**नचैवमिति**। उत्तर-

**औपदेशिकप्रणयनविधिसत्त्वे तु तस्यैव पुरस्स्फूर्तिकस्य देशापेक्षायामातिदेशिकविधितः पूर्वमुत्तरवेदिरूपदेशविधानान्न तापाद्यर्थाग्निनिधाने**उत्तरवेदिप्राप्त्यापत्तिः। **अत एवौपदेशिकप्रणयनविधिसत्त्वेऽपीतरयोरातिदेशिकप्रणयनसत्त्वादुत्तरवेद्यापत्तिरित्यपास्तम् । औपदेशिकप्रणयनस्य पुरस्स्फूर्तिकत्वेन तत्रैवोत्तरवेदिविधानात्।** अतो भाष्यकार**मतेऽपि न वार्तिकोक्तदूषणावकाशः।**

**वार्तिककारमतोपपादनं तु एवं—सप्तभिस्सूत्रैस्त्रिपक्षकमेकमधिकरणम् । तत्र प्राकृतं सौमिकं वा प्रणयनमिति पूर्वपक्षद्वयं कृत्वा अपूर्वं प्रणयनान्तरमत्र विधियते**

---

**वेदिप्राप्त्यापत्तिरिति।** ततश्च कपालतापार्थाग्निनिधाने उत्तरवेदिव्यावृत्तिफलकपर्वद्वयविषयकप्रणीताग्निविधाने उत्तरवेद्युपसंहारपरत्वेन द्वयोः प्रणयन्तीत्यनुवादसार्थक्ये सति तत एवाद्योत्तमयोः उत्तरवेदिप्रतिषेधलाभात्, 'न वैश्वदेव' इत्ययमेवानुवादः 'उपात्र वपन्ती'त्यस्यावान्तरप्रकरणबाधप्रयोजनक एवेति किं पर्युदासविधित्वाङ्गीकारेणेत्यर्थः। **अतो भाष्येति।** अत्र च 'न वैश्वदेव' इत्यस्यैवानुवादत्वाङ्गीकारेण सिद्धान्तोपपादने **औत्तरवेदिकोऽनारभ्यवादप्रतिषेध** इति सूत्रस्य तद्विवरणभाष्यस्य चास्त्येव विरोधः। अनेन हि सूत्रेण यत् पूर्वपक्षवादिनाऽभिहितं प्रथमोत्तमयोः प्रणयनं उत्तरवेदिप्रतिषेधात्;मध्यमयोर्हिप्रणयने सति तयोरेवोत्तरवेदिप्राप्तेः 'न वैश्वदेव उत्तरवेदिमुपवपन्ती'ति प्रतिषेधः अनर्थकः स्यादिति, तस्य परिहारोऽभिधीयते—पर्वविशेषमनारभ्य चातुर्मास्येषु उत्तरवेदिराम्नाता; तस्याः प्रथमोत्तमयोः पर्युदासार्थत्वम् ; ततश्च नानर्थक्यमिति भाष्यकृता व्याख्यातम् । तच्चेदमनुवादत्वाङ्गीकारेऽनुपपन्नमेव भवतीति दूषणमस्त्येव। तथापि भाष्योक्तौ तथा विद्यमानायामपि मदुक्तरीत्या ऽनुवादत्व[1]स्यैव सयुक्तिकत्वात्, प्राकृतप्रणयनानुवादमङ्गीकृत्य याऽधिकरणद्वयरचना भाष्यकारेण कृता तत्र मदुक्तप्रकारेण सर्ववार्तिकोक्तदूषणपरिहारस्संभवत्येव इत्यभिप्रायेण **भाष्योक्ताविति** विहाय **भाष्यकारमते** इतिमतपदं प्रयुक्तमिति ध्येयम्। **यद्यपि** चात्रावान्तरप्रकरणबाधमात्रं 'न वैश्वदेव' इति नित्यानुवादप्रयोजनं वक्तुं न युक्तं, तस्यानुष्ठानानौपयिकत्वात्। न ह्यवान्तरप्रकरणबाधेन महाप्रकरणाच्चातुर्मास्याङ्गमुत्तरवेदिरिति पर्वचतुष्टये उत्तरवेदिः क्रियते। किञ्च मध्यमपर्वविषयकप्रणयनानुवादसहकृतोत्तरवेदिविनियोगविधिनैव मध्यमपर्वद्वयविषयत्वमात्रावगतेः अवान्तरप्रकरणबाधोऽपि न[2] सुलभः। 'उपात्र वपन्ती'त्युत्पन्नायास्तस्याः यावदवान्तरप्रकरणात् वरुण-

---

1. A. अनुवादस्यैव

2. B. नासुलभः

न तु सौमिकं, तस्यानुपस्थितत्वात्। नापि प्राकृतं, प्राकृतप्रणयनस्याहवनीयोत्पादकत्वेनाहवनीयापादानकत्वासम्भवात् 'आहवनीयाद्द्वावग्नी प्रणयतोऽध्वर्युश्च प्रतिप्रस्थाता च' इति शाखान्तरवचनेऽवश्यं प्राकृतप्रणयनोत्तरमाहवनीयापादानकप्रणयनान्तरविधानावगतेः। साकमेधेऽपि च बोधायनादिकल्पसूत्रानुसारेणैतत्समानार्थकस्याहवनीयापादानक-

---

प्रघासाङ्गत्वं कल्प्यते तावत् प्रत्यक्षविनियोगविधिनैव मध्यमपर्वद्वयविषयत्वस्य बोधनात्। अतो न 'न वैश्वदेव' इति नित्यानुवादप्रयोजनं लभ्यते; तथापि नित्यानुवादफलं मध्यमपर्वद्वयाङ्गत्वबोधनद्वारा अवान्तरप्रकरणबाधश्शक्यत एवानुष्ठानोपयोगितया वक्तुम्। यद्ययमाद्योत्तमपर्वद्वयविषये नित्यानुवादो न स्यात् तदाऽवान्तरप्रकरणाद्वरुणप्रघासमात्राङ्गमेवोत्तरवेदिः स्यात्। सति त्वस्मिन् नित्यानुवादद्वये तृतीयानुवादाभावात् अवान्तरप्रकरणं बाधित्वा तदतिरिक्तमध्यमपर्वद्वयाङ्गमेवोत्तरवेदिरिति सिद्ध्यति। न च तर्हि 'उपात्र वपन्ती'ति प्राप्तोत्तरवेदिपर्युदासविधित्वमेवास्तु न नित्यानुवादत्वमिति वाच्यम्। अवान्तरप्रकरणसत्वे आद्योत्तमयोरुत्तरवेदेरप्राप्त्यैव पर्युदासविध्यनुपपत्तेः। पर्युदासविधेः प्राप्तिसापेक्षत्वेन तदुपपत्त्यर्थमवान्तरप्रकरणबाध आवश्यक इति कल्पनेऽन्योन्याश्रयापत्तेश्च। अतोऽवान्तरप्रकरणादेवा[1]प्राप्तोत्तरवेदिप्रतिषेधकतया नित्यानुवादत्वे सिद्धे पर्वद्वयानुवादबलादवान्तरप्रकरणेन वरुणप्रघासाङ्गमुत्तरवेदिः तद्बाधेन साकमेधाङ्गमपीति बोधने न किञ्चिद्बाधकम्। 'द्वयोः प्रणयन्ती'ति प्राकृतप्रणयनपुनर्विधेस्तु वरुणप्रघाससाकमेधाङ्गभूतोत्तरवेद्यधिकरणकाग्निनिधाने प्रणीताग्निविषयत्वबोधनद्वारा कपालतापार्थाग्निनिधाने उत्तरवेदिनिवारणमेव प्रयोजनम्। एवञ्च सिद्धान्तारम्भग्रन्थे मध्यमविषय एव वाऽयमनुवाद इत्युक्तौ 'द्वयोः प्रणयन्ती'त्यत्र द्वयोरिति पदमात्रमेवानुवाद इत्येव पूज्यपादानां तात्पर्यं कथञ्चित् द्रष्टव्यमिति दिक्। **प्राकृतप्रणयनस्येति**। प्राकृतं हि प्रणयनं गार्हपत्यापादानकं आहवनीयदेशं प्रति क्रियमाणमाहवनीयोत्पादकमिति नाहवनीयापादानकत्वं संभवति। अतः आहवनीयापादानकशाखान्तरीयप्रणयनविधेः प्राकृतप्रणयनविधायकत्वासंभवात् प्रणयनान्तरविधायकत्वेन तदेकवाक्यतयाऽत्रापि तथैव विधीयत इत्यर्थः।

ननु 'आहवनीयाद्द्वावग्नी' इति शाखान्तरवचनेन विहारद्वये अध्वर्युप्रतिप्रस्थातृकर्तृकाग्निप्रणयनद्वयविधानेन वरुणप्रघासे आहवनीयापादानकप्रणयनविधिसंभवे तदेकवाक्यतया अत्रापि द्वयोर्विहारयोरेव प्रणयनान्तरविध्यापत्तिरिति मध्यमपर्वद्वये प्रणय[2]नान्तरं वार्तिकाद्युक्तमनुपपन्नमित्याशङ्कानिराकरणायाह—**साकमेधेपि चेति**।

1. B. देव प्राप्तोत्तर

2. A. प्रणयनानन्तरम्

प्रणयनान्तरविधायकविधेः कल्पनेन प्रणयनान्तरविधानावगतेस्तदुभयसमानार्थकतया 'द्वयोः प्रणयन्ति' इत्यस्याप्याहवनीयापादानकप्रणयनान्तरविधायकत्वस्यैव निश्चयेन प्राकृतप्रणयनानुवादकत्वानुपपत्तेः।

अतः प्राकृतप्रणयनोत्तरमाहवनीयापादानकं प्रणयनान्तरमपूर्वं विधीयते। तच्च गत्यर्थवादान्मध्यमयोरेव। तस्य चापेक्षितो देशविशेष उत्तरवेदिरुत्पत्तिविनियोगविधिभ्यां विधीयत इति तावपि मध्यमविषयावेव। एवं च प्रथमोत्तमयोस्तत्प्रतिषेधोऽपि नित्यानु-

---

**तच्च गत्यर्थवादादिति।** ततश्च साकमेधविषयबौधायनीयवचनमूलभूतश्रुत्यन्तरकल्पनापत्त्याऽस्यैव तन्मूलत्वकल्पने लाघवानुरोधेन गत्यर्थवादाच्च न द्वयोर्विहारयोः प्रणयन्तीत्यर्थेन वरुणप्रवासमात्रविषयत्वमिति भावः। **तस्य चापेक्षित इति।** प्राकृतप्रणयनपक्षे आहवनीयदेशस्यातिदेशतः प्राप्तेः देशविशेषानपेक्षणे 'उपात्र वपन्ती'त्याद्युत्पत्तिविनियोगविधानमनाकाङ्क्षितमेवापद्यते। सौमिकप्रणयनपक्षे तु मध्यमयोः सौमिकप्रणयनपृष्ठभावेनैवोत्तरवेदिप्राप्तेः आद्योत्तमयोश्च प्रतिषेधान्नानुष्ठानविशेषकरतापि तदुत्पत्तिविनियोगविध्योः संभवति। विकल्पेन तत्संभवे स एव दोषः। प्रणयनान्तरपक्षे तु अपेक्षितविधित्वं भवतीत्युत्तरवेद्युत्पत्तिविनियोगविधी स्वस्यापेक्षितविधित्वानुरोधेन मध्यमविषयत्वेनैव व्यवस्थितौ भवत इत्यर्थः। **एवञ्चेति।** उत्तरवेद्युत्पत्तिविनियोगविध्योः अपेक्षितविधायकत्वानुरोधेन मध्यमपर्वद्वयविषयत्वात् आद्योत्तमयोरप्राप्त्यैवेत्यर्थः। एतेन आद्योत्तमयोरुत्तरवेदिप्रतिषेधः 'उपात्र वपन्ती'त्यस्य सामान्यविषयस्य पर्युदासार्थः। सामान्यविषयत्वञ्चास्य भाष्य एव दर्शितमिति **शास्त्रदीपिका**द्युक्तमपास्तम्। न केवलं उत्तरवेद्युत्पत्तिविधेः अपेक्षितविधायकत्वानुरोधेन मध्यमपर्वद्वयविषयत्वादेवाप्राप्तिरित्ययमनुवादः। किन्तु अवान्तरप्रकरणात् वरुणप्रघासमात्राङ्गत्वापत्तेरन्यत्र पर्वत्रयेऽप्यप्राप्त्यापीत्युक्तमपि न विस्मर्तव्यम्।

ननु द्वयोरनुवाददर्शनात् तृतीयानुवादादर्शनेनावान्तरप्रकरणबाधानुमानात् महाप्रकरणादुपात्रवपन्तीत्यत्र अत्रेतिपदं चातुर्मास्यपरमिति सामान्यप्राप्तिमादाय पर्युदासविधित्वमेव भाष्यवार्तिककाराभिप्रेतं युक्तमिति चेन्मैवम्। किं तृतीयानुवादादर्शनस्य फलं अवान्तरप्रकरणबाधेन अत्रेतिपदं महाप्रकरणात् चातुर्मास्यपरमित्युच्यते? उत द्वयोरेवानुवादस्य? उत द्वयोरेव पर्युदासविधेः? नाद्यः। तृतीयानुवादादर्शनस्य प्रमाणत्वाभावेन तन्नियामकत्वानुपपत्तेः। द्वयोरनुवादत्वदर्शनेनावान्तरप्रकरणाबाधस्यैवापत्तौ तृतीयानुवादादर्शनस्य तृतीयपर्वाङ्गत्वातात्पर्यकत्वकल्पनस्यैव युक्तत्वेन, तृतीयादर्शनस्य अशास्त्रीयस्य तद्बाधकत्वकल्पने मानाभावाच्च। **न द्वितीयः।** तव मते तस्यानुवादत्वाभावेनानुवादकतया तद्बाधकत्वासंभवात्। अवान्तरप्रकरणबाधाभावे

---

1. B. वपति

**वाद एव भाष्यकारमत इवावान्तरप्रकरणबाधार्थमिति सर्वमनाकुलम् ।** याज्ञिकास्तु **पशुबन्धवत् सौमिकानेव धर्माननुतिष्ठन्ति । उत्तरवेदिपरिमाणं परं शम्यामात्रमौपदेशिकं**

---

सत्येव द्वयोर्नित्यानुवादत्वसंभवेन द्वयोर्निषेधानुवादकतया अवान्तरप्रकरणबाधकत्वायोगाच्च । न तृतीयः । पूर्वोपपादितेतरेतराश्रयादमुक्तेः ।

एतेन "तस्मादनारभ्यवादश्रवणात् चातुर्मास्यानामविशेषेण प्राप्तोत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते 'नानूयाजेषु येयजामहं करोती'तिवत्; 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति । वरुणप्रघासविषयत्वे हि नायं पर्युदासस्संबध्यते । न हि संभवति वरुणप्रघासेषूत्तरवेदिमुपवपेत् वैश्वदेवादिवर्जमिति । सम्भवति तु एवं---चातुर्मास्येषु उत्तरवेदिमुपवपेत्—प्रथमोत्तमवर्ज" मिति भाष्यविवरणं तन्त्ररत्नदर्शितमपास्तम् । एतत्पर्युदासविध्यनुरोधेनावान्तरप्रकरणबाधेन चातुर्मास्याङ्गत्वसिद्धिः; तत्सिद्धौ च तत्प्राप्त्युपजीव्यपर्युदास इत्यन्योन्याश्रयस्य दुष्परिहरत्वात् । तस्मात् 'न वैश्वदेव' इत्यस्य भवन्मतेऽनुवादकत्वानङ्गीकारात्, तदङ्गीकारेऽपि च प्रत्युतावान्तरप्रकरणबाधे सति पर्युदासविधित्वस्यैवापत्त्याऽनुवादत्वस्यैवासंभवात् अवान्तरप्रकरणबाधकत्वानापत्तेः; पर्युदासविधित्वाश्रयणेनावान्तरप्रकरणबाधोपपादने अन्योन्याश्रयापत्तेः, न पर्युदासविधित्वमाश्रित्य तद्बाधकत्वाङ्गीकरणं युक्तम् । अपि तु अवान्तरप्रकरणेन वरुणप्रघासमात्राङ्गत्वे सति अन्यत्र पर्वद्वये तत्प्राप्त्यभावे 'न वैश्वदेव' इत्यनुवादः; स च द्वयोरेवेत्यवान्तरप्रकरणबाधेन तदबाधेनैव वाऽनेनैवानुवादेन साकमेधाङ्गत्वमपि लभ्यते । अतोऽयं न पर्युदासविधिः, अपि तु अनुवाद इत्ययमर्थो नित्यानुवाद एवेत्येवकारेण सूचितः ।

एवं मीमांसकमते भाष्यवार्तिककारयोर्मतभेदे विद्यमानेऽपि सौमिकप्रणयनं न विधीयत इत्यत्र तु नैव विवादः । तत्रापि तु याज्ञिकानां विवादं दर्शयति—**याज्ञिकास्त्विति** । अयमर्थः । वरुणप्रघासे हि उत्तरस्यां वेद्यां 'उत्तरवेदिमुपवपन्ती'ति तैत्तिरीयब्राह्मणानुसारेणापस्तम्बसूत्रे "उत्तरस्यां वेद्यां पशुबन्धवदुत्तरवेदिमुपवपति । काले पशुबन्धवत् गार्हपत्त्यादग्नीप्रणयनः । नोद्यनहोमौ जुहुतः" (आ.श्रौ. ८. ५. २०. २१. २२.) इत्युत्तरवेदिः पशुबन्धवदाम्नाता । प्रणयनमपि तद्वदेवाम्नातम् । पशुबन्धप्रकरणेन च "वेद्यामुत्तरवेदिं दशपदां सोमे करोति । अंहीयसीं पुरस्तादित्येके" इति सूत्रेण (आ.श्रौ. ७-३-१०-११) प्रसङ्गतः सौमिकीमुत्तरवेदिमाम्नाय, "शम्यामात्रा निरूढपशुबन्धस्योत्तरवेदिः । शम्यां पुरस्तात् उदगग्रां निधाय स्फ्येनोदीचीमभ्यन्तरं उपलिखति वित्तायनी मेऽसि" (आश्रौ-७-४-१३,१४.) इत्यादिना

कुर्वन्ति । तन्मते 'प्रणयन्ति' इति बहुवचनमपि ब्रह्महोत्रादिसद्भावादुपपद्यत इति ध्येयम् ॥ ७ ॥

---

शम्यामात्रोत्तरवेदिः सप्रकाराऽऽम्नाता । प्रणयनमपि "आहवनीये प्रणयनीयमिध्ममादीप्य" (आ.श्रौ-७-६-४) इत्यादिना "चतस्रोऽतिमुक्तीर्जुहोती"त्यन्तेन सूत्रेण (७-७-२) सौमिकमेव सधर्मकमाम्नातम् । तदेव प्रणयनं "पशुबन्धवत्प्रणयत" इत्यनेन वरुणप्रघासे विधीयते । तत्र सौमिकप्रणयनानुरोधेन प्राप्तां सौमुकीमुत्तरवेदिं बाधितुं पुनरपि पशुबन्धवदिति ग्रहणात् 'वित्तायनी मेऽसी'त्यादिविधिसहिता शम्यामात्रोत्तरवेदिर्विहिता । अत एवा"ग्नी प्रणयत" इत्यग्निद्वयप्रणयनस्याध्वर्युप्रतिप्रस्थातृकर्तृकस्य विधाने पशुबन्धवदित्युक्तेरनुत्तरवेदिकेऽपि दक्षिणविहारे सौमिकमेव प्रणयनम् । तत्राप्याहवनीयापादानकप्रणयनस्योत्तरवेद्यां पशुबन्धे विधानात्, तत्रैव वरुणप्रघासेऽपि प्रणयनप्राप्तौ, गार्हपत्यादित्यनेन (८-५-२२) सूत्रेण गार्हपत्यापादानकत्वविधानम् । एवञ्च शम्यामात्रायामुत्तरवेद्यां सौमिकप्रणयनधर्मानुष्ठानपूर्वकं गार्हपत्यादाहवनीयप्रणयनमध्वर्युकर्तृकं ब्रह्महोत्रादिसमवधानेन वरुणप्रघासोत्तरविहारे । दक्षिणविहारे च उत्तरवेद्यभावेऽपि आहवनीयदेश एव गार्हपत्यात्तथैव प्रणयनम् । साकमेधे च "ततो महाहविषस्तन्त्रं प्रक्रमयति तस्य वारुणप्रघासिकेनोत्तरविहारेण कल्पो व्याख्यातः" (आ.श्रौ.८-१२-१,२) इति सूत्रेण वारुणप्रघासिकोत्तरविहारकल्पातिदेशात् सर्वमेव तदीयतन्त्रमिति, तथैव उत्तरवेद्यां गार्हपत्यात् प्रणयनमित्यनुतिष्ठन्ति याज्ञिकाः । तेषां मते प्रणयने सौमिकधर्मानुष्ठानेन ब्रह्महोत्रध्वर्युसाहित्यप्राप्तेः 'प्रणयन्ती'ति बहुवचनमुपपद्यते । प्राकृतधर्मकप्रणयनपक्षे, प्रणयनान्तरपक्षे वा, सौमिकप्रणयनधर्मालाभात् ब्रह्महोत्रादिसाहित्याप्राप्तेः नोपपन्नं बहुवचनमिति दूषणसद्भावात् निर्दुष्टं बहुवचनानुगृहीतं याज्ञिकसंमतं सौमिकमेवात्र प्रणयनं युक्तं विधातुमिति दिक् ।

इदञ्चाधिकरणं अतिदेशप्रसङ्गेन सौमिकप्रणयनधर्मातिदेशनिराकरणार्थत्वान्नासङ्गतमिति ध्येयम् । अत्र 'उपात्र वयन्ति उत्तरवेदिमुपवयन्ति' इतियकारस्तालव्यः क्वचिल्लिख्यते । स चावैदिकत्वेनोपेक्ष्य एव । किन्तु उपवपन्तीति पवर्गीयपकार एव वैदिकानां पाठो ज्ञेयः ।

---

## (८)—स्वरसामैकपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥ चोदनासामान्याद्वा ॥ २७ ॥

पूर्वमुत्तरवेदिप्रतिषेधरूपेण लिङ्गेन सौमिकप्रणयनातिदेशे निरस्ते ऽधुना लिङ्गादप्यतिदेशोऽस्तीत्येवं तदपवादः प्रस्तूयते । गवामयने 'त्रयस्स्वरसामानः' इति सप्तदशस्तोमकत्वादिधर्मका यागास्समाम्नाताः । अन्यत्रापि 'द्वौ स्वरसामानौ' इति । तथा वैश्वदेवे पर्वणि 'वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः' इति सधर्मकौ यागौ । अन्यत्रापि 'मैत्रावरुण्यामिक्षा काय एककपालः' इत्याद्यामिक्षैककपालद्रव्यका यागाश्श्रुताः । ते किं स्वरसामानो गावामयनिकस्वरसाम[1] प्रकृतिकाः ? अन्ये आमिक्षायागाश्च वैश्वदेविकामिक्षायागस्य ? अन्ये एककपालाश्च वैश्वदेविकैककपालस्य ? उत नेति चिन्तायां— गणत्वादिनैव कल्पितेनातिदेशेनेतिकर्तव्यताकाङ्क्षाशान्तेस्स्वरसामादिशब्दानां च स्वराख्यसामादिरूपगुणविधायकत्वेनानतिदेशकत्वान्नोक्तयागप्रकृतिकत्वमिति प्राप्ते—

गणत्वादिसादृश्यापेक्षया स्वरसामकत्वादिविशेषसादृश्येन लिङ्गोपबृंहितेनातिदेशकल्पनाच्चोदनालिङ्गातिदेशेन तत्प्रकृतिकत्वम् । लिङ्गानि च स्वरसामसु तावत् 'पृष्ठ्यः षडहो द्वौ स्वरसामानौ' इत्युक्त्वा आह—'तत्र यत्तृतीयं सप्तदशमहस्तत् त्रयस्त्रिंशत्स्तोमकस्य स्थानमभिपर्याहरन्ति स उत्तराणां स्तोमानामव्यवायाय त्रयाणां सप्तदशानामनूचीनतायै' इति द्वयोस्स्वरसाम्नोस्सप्तदशस्तोमकत्वदर्शनम् । मैत्रावरुण्यामिक्षायां च 'न वाजिनेन प्रचरन्ति' इति प्रतिषेधवचनम् । आग्रयणे द्यावापृथिव्यमेककपालं विधाय 'यत्सर्वहुतं जुहोति सा त्वेका परिचक्षा; हुतोऽहुतः पर्यावर्तते सा द्वितीया;

---

### स्वरसाम ।

अत्र तन्त्ररत्ने पूर्वं गुणविधिषु नामातिदेशोऽपोदिते तत्प्रसङ्गेनात्र पूर्वपक्षमभिधाय तदपवादकतया सिद्धान्तोऽभिधीयत इत्येवमस्मिन्नधिकरणे करिष्यमाणस्य चोदनालिङ्गातिदेशविचारस्य सङ्गतिरुक्ता, तथाप्यनन्तराधिकरणसङ्गतिमपि स्वयं दर्शयति—**पूर्वमिति** । उत्तरवेदिप्रतिषेधरूपेण यस्सौमिकवेदिप्रणयनातिदेशः तस्मिन्निरस्ते इत्यर्थः । **षडहे यत्तृतीयमिति** । पृष्ठ्यषडहानन्तरं हि द्वौ स्वरसामानावाम्नातौ । षडहे च क्रमेण त्रिवृत्पञ्चदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशस्तोमानां क्लृप्तौ तृतीयमहः सप्तदशस्तोमकं, षष्ठञ्च त्रयस्त्रिंशत्स्तोमकम् । गवामयने च त्रयोऽपि स्वरसामानः उक्थ्याः, 'सप्तदशाःस्वरसामान' इति वचनात् सप्तदशस्तोमका

---

1 B विकृतयः

आज्यस्यैव द्यावापृथिव्यौ यजेत" इति एककपालयागे पर्यावर्तनादिप्रयुक्तं दोषमभिधाय वैकल्पिकाज्ययागविधिपरं वचनम्। न ह्यत्रातिदेशाभावे सप्तदशस्तोमकत्वमाज्याभिपूरणसर्वहुतत्वादीनां प्राप्तिस्सम्भवति। तस्मादतिदेशः। अयं च तत्तदसाधारणधर्माणां साधारणधर्माणां च नवप्रयाजत्वप्रसूनमयत्वादीनां चातिदेशः। मुख्यानां भूयस्त्वं च प्रधानानन्त-

---

गव। तत्रपडहीयं तृतीयमहः सप्तदशस्तोमकं, पडहस्यादिमदिनस्थाने कार्यम्। अन्त्यञ्च तृतीयस्थाने। एवञ्च पडहस्यान्त्यदिनस्य सप्तदशस्तोमकत्वे तदुत्तरयोः स्वरसाम्नोरनुष्ठाने सति 'त्रयाणां सप्तदशानामनूचीनताया' इति लिङ्गदर्शनं, एकस्य सप्तदशस्तोमकत्वेऽपि इतरयोर्द्वयोः स्वरसाम्नोः सप्तदशस्तोमकत्वाभावेऽनुपपन्नं सत् गावामयनिकसप्तदशस्तोमकस्वरसामातिदेशे ज्ञापकमित्यर्थः। **दोषमभिधायेति**। यदि एककपालपुरोडशः क्रियते तदा तस्य सर्वस्यैव होमात् शेषकार्याणां लोपात् एको दोषः। तथा अहुतोऽहूयमानोऽथवा हुतो वा पर्यावर्तते विपरीतः पतेत्, तदा तत्र प्रायश्चितविधानात् दोषसंभावनात् द्वितीयेति, दोषोत्पादक एककपालो न कार्यः किन्त्वाज्यमेव युक्तमित्यर्थः। तथाच शातपथं वचः "तस्य परिचक्षा यस्यैवैकस्यैव देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तः अथैतं सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षा हुतेऽहुतः पर्यावर्तते सा द्वितीया परिचक्षे"ति। **अयञ्चेति**। द्यावापृथिवीये वैश्वदेविके एककपाले अलङ्करणकाले 'आज्येनैककपालमभिपूरयति आविः पृष्ठं वा कृत्वा' (आ. श्रौ. ८-२-१०) इत्यापस्तम्बसूत्रे आज्याभिपूरणसर्वहुतत्वादयोऽसाधारणा धर्मा विहिताः। केचित्तु वैश्वदेविकाष्टहविस्साधारण्येन विहिता नवप्रयाजत्वप्रसूनमयत्वादयो धर्माः; तेऽपि प्रकरणाविशेषात आग्नेयादीनामिव एककपालस्याप्यङ्गमित्युभयविधधर्माणामप्यतिदेश इत्यर्थः। अत एवाग्रयणेष्ट्यां आग्नेयैन्द्राग्नवैश्वदेवद्यावापृथिव्यहविष्कायां द्यावापृथिव्यैककपालस्य वैश्वदेविकद्यावापृथिवीयैककपालविकृतित्वात् तदतिदेशेन प्रसूनमयस्य बर्हिषः प्राप्तेः तदेव कर्तव्यम्। नत्वैन्द्राग्नाद्यनुरोधेनानियतम्। ऐन्द्राग्नादिषु प्रसूनाप्रसूनत्वनियमाभावेन बर्हिर्मात्रापेक्षायां एककपालानुरोधेन प्रसूनमयग्रहणेऽपि तदविरोधादिति 'अधिकश्च गुणस्साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि' इति सूत्रेण द्वादशद्वितीयपादोपान्त्याधिकरणे वक्ष्यते। **मुख्यानामिति**। एतदपि "तत्प्रवृत्त्या तु तन्त्रनियमः स्यात् यथा पाशुक सूक्तवाकेन (जै. सू. १२. २. ६१.) इति तदुत्तरसूत्रेणानेनैव न्यायेन विरोधेऽपि द्यावापृथिव्यमेव तन्त्रं स्यात् नैन्द्राग्नादितन्त्रमित्याशङ्क्य मुख्यभूयस्त्वनियामकानुरोधेन विरोधे स्वस्वतन्त्रसेवेति साधारणधर्माणां बाध इति द्वादशद्वितीयपादान्त्याधिकरणे वक्ष्यते। अत एवाग्नेयैन्द्राग्नवैश्वदेवद्यावापृथिव्यानां पुरोडाशानां पात्र्यामेकस्यां स्थापितानां तन्त्रेणासादने

**राणामनुरोधेन तु क्वचिद्विरोधे साधारणधर्माणां बाधः।** याज्ञिकास्तु **असाधारणानामेवातिदेशं मन्यन्ते ॥**

---

क्रियमाणे, एककपालातिदेशेन एककपाले व्याहृतिमन्त्रे, तदितरेषु दर्शपूर्णमासातिदेशेन प्रियेण धाम्नेति च मन्त्रे विरोधेन प्राप्ते, मुख्यभूयस्त्वाभ्यां प्रियेण धाम्नेत्येव मन्त्रः पठ्यते ; नत्वेककपालानुरोधेन व्याहृतिमन्त्रः। एवञ्चात्रैककपालाद्यनुरोधेन नवप्रयाजानुष्ठाने सति नवान्तर्गतत्वेन पञ्चानामप्यनुष्ठानलाभात्, नैन्द्राग्नाद्यतिदेशप्राप्तप्रयाजगतपञ्चत्वसङ्ख्याविरोध इत्यभिप्रायेणैव प्रसूनमयत्वादीनामिव नवप्रयाजत्वस्याप्यतिदेशः पूज्यपादैः प्रागुक्तः वक्ष्यते च द्वादशे ।

अत्र च "वैश्वदेविकैककपालः एककपालानाम्" इति प्रकृतिनिर्णायकभारद्वाजसूत्रव्याख्याने कपर्दिस्वामिना वैश्वदेविकस्यैककपालस्य निर्देशात्, एककपालमात्रस्यैव प्रकृतित्वमात्रोक्तेः तदीया एवासाधारणा धर्माः अन्येष्वेककपालेष्वतिदिश्यन्ते, न साधारणाः। अत एव वैश्वदेवपर्वणि "मधुश्च माधव'श्चेति चतुर्भिर्मासनामभिः एककपालमभिजुहोती"ति मासनामहोमानां एककपालाभितो देशे विधीयमानानामप्येककपालधर्मत्वाभावात् नातिदेश इत्युक्तम्। तदनुसारेण याज्ञिकमतमनुवदति—**याज्ञिकास्त्विति।**

---

## (९)—कर्मजे कर्म यूपवत् ॥ २८ ॥ रूपं वाऽशेषभूतत्वात् ॥ २९ ॥

कर्मनामधेयानामग्निहोत्रादिपदानामतिदेशकत्वमुक्तम्। तद्वदेव च संस्कारनाम्नामपि यूपादिशब्दानां 'खलेवाली यूपो भवति' इत्यादौ सिद्धमेवातिदेशकत्वम्। तद्वत्तु अनोवासःप्रभृतीनां पदानां किं तत्तदुत्पादकक्रियानिमित्तत्वं उत जातिनिमित्ततेत्यतिदेशसिद्ध्यर्थं विचार्यते। तत्र तक्षणादिक्रियाभावे तच्छब्दप्रयोगभावात्तत्तत्क्रियानिमित्तका एवैते शब्दाः निर्मन्थ्ययूपादिशब्दवत्। अतश्च तद्वदेव 'अनो ददाति, वासो ददाति' इत्यादौ तक्षणवानरूपक्रियाविशिष्टद्रव्यस्यैव दानाङ्गतया विधानात् तक्षणं वानं च प्रयोगमध्ये कृत्वा अनो वासश्च देयम्। अत्र च तत्तत्क्रियाया वस्तुत उपदेशेऽप्यन्यत्र लोकादौ क्लृप्ताया एव विधानादतिदेशत्वव्यवहारो भाक्त इति ध्येयम्। सर्वथा तक्षणादि प्रयोगमध्येऽनुष्ठेयमिति प्राप्ते—

क्रियानाशोत्तरमपि जातिदशायां प्रयोगाल्लाघवाद्यौगिकत्वाभावाच्च जातावेव शक्तिः। जातिस्तु परं क्रियाभिव्यङ्ग्या तज्जनितसंयोगविशेषादिरूपफलाभिव्यङ्ग्या वेति तदुत्तरमेव शब्दप्रयोगः। न त्वेतावता शब्दः क्रियावाचीति तस्या अविधेयत्वेनानङ्गत्वाल्लौकिकमेव सिद्धमनो वासश्च देयम्। निर्मन्थ्यशब्दस्तु यौगिक इति युक्तं तस्य मथनक्रियाविधायकत्वम्। यूपशब्दे तु क्रियानाशोत्तरं प्रयोगेऽपि तज्जन्यादृष्टविशिष्टकाष्ठवाचित्वान्न शुद्धजातिवाचित्वमिति युक्त एव तत्र संस्कारातिदेशः। वस्तुतस्तु—यूपकार्ये खलेवालीविधानात् यूपशब्दस्य न संस्कारादिशक्तत्वम्। संस्कारातिदेशस्तु स्थानापत्त्येति सूत्रोक्तयूपपदवृष्टान्तोऽप्यसङ्गत एव ॥

---

### कर्मजे कर्मयूपवत्

असङ्गत एवेति। अत्रेदमवधेयम्। यद्यपि यूपकार्ये खलेवालीविधिः तत्स्थानापत्त्यैव च तत्र संस्कारातिदेशः, तथापि संस्कारजन्यादृष्टविशिष्टकाष्ठस्थानापन्नत्वं खलेवाल्याः तद्यूपशब्दाधीनमेवेति "यूपशब्दो जोषणादिक्रियानिमित्तः; स यत्र श्रूयते तत्र जोषणाद्याः क्रियाः प्राप्यन्ते एवमिहापी"ति सौत्रयूपवदिति दृष्टान्तविवरणपरमत्रत्यपूर्वपक्षोपसंहारे भाष्यकारवचनं कथमिवासङ्गतम्?।

अपिच यथैव 'यजमानः प्रस्तर' इत्यत्र प्रस्तरकार्ये यजमानविधिराशङ्क्य तत्सिद्धिसूत्रे गौणत्वाङ्गीकारेण सामानाधिकरण्योपपत्तेः निराकृतः। एवमिहापि खलेवाली यूपो भवतीत्यादावपि अभेदानुपपत्त्या कार्यलक्षणायां मानाभावात् तद्वदेव सामानाधिकरण्यलाभाय गौणीमेवाङ्गीकृत्य मासाग्निहोत्रनाम्न इवेहाप्यतिदेशकत्वं यूपनाम्नो नासङ्गतम्। यूपसादृश्यञ्च यथा साद्यसादृश्यमादाय धर्मप्रयुक्तं, एवं वारुणप्राघासिकावभृथ इव कार्यकृतमपीह संभवत्येवेति तत्स्थानापत्तिरपि

1. A. तत्र हि

## (१०)—विशये लौकिकस्स्यात्सवार्थत्वात् ॥ ३० ॥ न वैदिकमर्थनिर्देशात् ॥ ३१ ॥ तथोत्पत्तिरितरेषां समत्वात् ॥ ३२ ॥

गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य 'अग्निमुपनिधाय स्तुवीत' इति श्रुतम्। तत्राग्निः किं वैदिको लौकिको वेति चिन्तायां – यद्यपि द्वादशे आहवनीयादीनां योग्यतया लौकिकपाकाद्यर्थत्वं निरस्यते तथाऽपि 'यैरस्स्यधिकृतो यांश्च शक्ष्ये प्रयोक्तुम्' इति सामान्यवचनेन वैदिककर्ममात्रार्थत्वावगतेः वैदिक एवेति प्राप्ते—

'आहवनीये जुहोति' इत्यादिविशेषवचनानामुपलक्षणत्वे प्रमाणाभावात् 'यैरस्स्यधिकृतः' इत्यस्य च होमादिमात्रविषयत्वेऽपि सार्थक्यादुपनिधानविधेश्च लौकिकाग्निग्रहणेऽपि चरितार्थतया आहवनीयादीनां 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते, यस्याहिताग्नेरग्निरपक्षायति' इति वचनेन निषिद्धस्यायतनाच्चालनस्याक्षेप्तुमशक्यत्वाल्लौकिकाग्नेरेव ग्रहणम्। अत एव धिष्ण्याग्नीनामपि व्याघारणमात्रप्रयोजनत्वादग्रहणम्। यदि परं व्याघारणोत्तरं लौकिकत्वाविशेषादुपस्थितत्वात्तेषामेव ग्रहणमित्याशङ्क्येत तदाऽस्तु नाम तत् ॥

---

नासुलभा। अतएवास्यानन्यशेषत्वादेव न 'उपशयो यूपो भवती'तिवत् अर्थवादत्वेन स्तुतिमात्रपरत्वम्। यूपकार्ये खलेवालीविधानमित्यादिलिखनमप्येतदभिप्रायकमेव। एतदेवाभिप्रेत्याधिकरणाम्भे "तद्वदेव च संस्कारनाम्नामपि यूपादिशब्दानां खलेवाली यूपो भवतीत्यादौ सिद्धमेवातिदेशकत्व"मिति स्वयमेव भाष्यतन्त्ररत्नाद्यनुरोधेनोक्तमिति।

---

विशये लौकिकः स्यात्।

**निरस्यत इति।** "विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात्" इत्यधिकरणे द्वादशद्वितीयपादाद्ये इत्यर्थः। **धिष्ण्याग्नीनामपीति।** आग्नीध्रीयोऽग्निः, तस्माद्विहृताः धिष्ण्याः सदोगताः होत्रीयप्रशास्त्रीयब्राह्मणाच्छंसीयनेष्ट्रीयपोत्रीयाच्छावाकीयाख्याः; मार्जालीयस्त्वेकः सदोबहिर्भूतः। होत्रीयमार्जालीययोः सोमेन व्याघारणम्; प्रशास्त्रीयादीनां पञ्चानां आज्येन च तदिति व्याघारणमात्रप्रयोजनत्वमित्यर्थः। स्पष्टमन्यत्। अत्रायमग्निशब्दः संस्कृतवचनोऽथवा जातिमात्रवचन इति प्रसङ्गाच्चिन्त्यत इति न विचारासङ्गतिः।

---

(११)—संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥ भक्त्या वाऽयज्ञशेपत्वा-द्गुणानामभिधानत्वात् ॥ ३४ ॥

यूपैकादशिन्यां यूपसमीपे एकं काष्ठं स्थापनीयमिति विधाय 'उपशयो यूपो भवति' इति श्रुतम्। तत्रोपशये काष्ठे यूपशब्दोऽयं यूपधर्मान् जोषणादीन् संस्कार-निमित्तत्वादसत्यपि स्थानापत्त्यतिदेशे नामातिदेशविधयाऽतिदिशेदिति प्राप्ते

अस्य गोण्या शक्त्यैव वा धर्मविधायित्वे वाक्यभेदापत्तेरुपशयस्तुत्यर्थत्वेन तद्विध्येक-वाक्यतापन्नस्यास्य पृथग्विधित्वानुपपत्तेः अर्थप्राप्तकतिपयछेदनादिधर्मयोगेन गौण्या वृत्त्या उपशयस्तुतिरेवेदं न तु नामातिदेशकम् ॥

---

संस्कृतं स्यात्तच्छाब्दत्वात् ( ७-३-११-३३ )। गौण्या शक्त्यैव वेति। यूप-शब्दस्य संस्कारविशिष्टकाष्ठवाचित्वेऽत्र गौण्या; संस्कारमात्रवाचित्वे शक्त्यैव वेत्यर्थः। इदञ्चाधिकरणं औदुंबराधिकरणेन गतार्थमपि अतिदेशकत्वेनाऽऽभासमानत्वात् पुनरिह विधित्वा-ङ्गीकारेणाशङ्क्यातिदेशकत्वं निराक्रियते।

वस्तुतस्तु 'वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात्' इत्यष्टमद्वितीयपादाद्याधि-करणे 'सुरा सोमः सोमो वै वाजिन' इत्यर्थवादगतसोमादिपदानां गौण्या वृत्याऽतिदेशकत्वशङ्-काया निराकरिष्यमाणत्वात् तेनैवेहाप्यर्थवादगतयूपशब्दस्यातिदेशकत्वनिराकरणसंभवात् व्यर्थ-मेवैतदधिकरणमिति ध्येयम्।

---

**(१२)—कर्मणः पृष्ठशब्दस्स्यात्तथाभूतोपदेशात् ॥ ३५ ॥ अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दस्स्यात् ॥ ३६ ॥**

अग्नौ 'पृष्ठैरुपतिष्ठते' इति श्रुतम्। तत्र पृष्ठशब्देन किं विधीयत इति चिन्तायां पृष्ठशब्दस्य स्तोत्रविशेषवचनत्वात् तस्य च बहुत्वाभावेन चयनाङ्गतया विधानानुपपत्तेः प्रत्ययाभिहितभावनान्तराण्येव **पृष्ठधर्मकाणि धातूपात्तसमीपावस्थानेतिकर्तव्यताकानि विधीयन्ते पृष्ठधर्मकत्वाच्च तेषां स्तोत्ररूपतासिद्धिः; धातूपात्तमपि च समीपावस्थानमक्लृप्तकार्यत्वात्कर्मान्तराङ्गमेव।** अथवा पाशाधिकरणन्यायेन **बहुवचनानुरोधेन पृष्ठप्रातिपादिके गौण्यङ्गीकारस्यायुक्तत्वात् बहुवचनेनैकत्वादि लक्षयित्वा चयनाङ्गतया ज्योतिष्टोमपृष्ठविधिरेवायम्। समीपस्थितिस्तु पूर्ववत् पृष्ठस्तोत्रस्यैवाङ्गम्।** वस्तुतस्तु—**पृष्ठबहुत्वस्यापि ज्योतिष्टोमे साधितत्वात् सर्वाण्येव पृष्ठस्तोत्राणि चयनाङ्गतया विधीयन्ते।** न तु षाडहिकपृष्ठमन्त्राणां **रथन्तरादिसाम्नां वा विधानं,** उपक्रमस्थपृष्ठपदे **लक्षणाप्रसङ्गात्। एवं च जघन्यमात्मनेपदमेव बाहुलकतया साधुत्वार्थं व्याख्येयमिति प्राप्ते—**

---

**कर्मणः पृष्ठशब्दः स्यात्।** अत्रापि पृष्ठशब्दोऽत्र पृष्ठधर्माणामतिदेशको नेति [नवेति?] प्रसङ्गाच्चिन्त्यते। तत्र भाष्ये तन्त्ररत्ने च पूर्वपक्षे पृष्ठसदृशकर्मान्तरविधानमित्युक्तम्। तदुपपादयति—**प्रत्ययाभिहितेति।** उपतिष्ठत इति प्रत्ययेन भावनोच्यते। पृष्ठशब्देन च पृष्ठसदृशानि; तेषाञ्च भावनां प्रति करणत्वम्। समीपस्थितिरूपधात्वर्थस्य च न कर्मत्वेनान्वयः प्रकरणलब्धाग्नेरेव तेन रूपेणान्वयात्। अपि तु इतिकर्तव्यतात्वेन; तथा चाग्निसमीपे तिष्ठता पृष्ठसदृशैः कर्तव्यम्। तानि पृष्ठधर्मकत्वसादृश्यात् स्तोत्ररूपाण्येवेति प्रकरणान्तरे पठितत्वात् अपूर्वाण्येव विधीयन्त इत्यर्थः। एतच्च प्राचां पूर्वपक्षकरणं नातीवसमुञ्जसम्। पृष्ठसदृशस्तोत्रान्तराणां विशेषतोऽप्रसिद्धेः, प्राकृतपृष्ठस्तोत्राणामेवेहाख्यातासमानाधिकरणनाम्नो व्यवहितपरामर्शकत्वन्यायेन पृष्ठपदेनानुवादसंभवात् इत्यभिप्रेत्य पक्षान्तरमाह—**अथवेति।** पृष्ठबहुत्वानुपपत्तिं परिहरति—**पाशेति।** एतदपि प्रकृतावेकमेव पृष्ठमिति मतेन लक्षणया बहुवचनमुपपादितम्। स्वमते तु लक्षणापि नास्तीत्याह—**वस्तुतस्त्विति।** अत्र च सिद्धान्ते पृष्ठशब्देन पृष्ठस्तोत्रसाधनीभूतमन्त्रलक्षणोपपादने भाष्यवार्तिकग्रन्थालोचनेन बहूनां मन्त्राणां लक्षणा दर्शिता। न चैतत् प्रकृतौ पृष्ठैकत्ववादे उपपद्यते। तस्यैकत्वे तदाधारयोनिमन्त्रस्याप्येकत्वात्। अत एव पृष्ठद्वित्वेनापि न निर्वाहः, तदानीमपि तस्य द्वित्वात्। अतो मन्त्रलक्षणापक्षेऽपि बहुवचनोपपत्त्यर्थं बहुमन्त्रलक्षणोपपादनस्य षाडहिकपृष्ठमन्त्राणां तत्साम्नां वा लक्षणेति तात्पर्यमवसीयते[1]। तदभिप्रायेण दूषयति—**न तु षाडहिकपृष्ठमन्त्राणामिति।**

---

1. A. अनुमीयते

पृष्ठशब्दस्य शरीरावयवेऽपि शक्तत्वेन तत्करणकसमीपावस्थितेरपि विधिसंभवेन स्तोत्रविधावेव नियामकाभावेन सन्दिग्धत्वान्निस्सन्दिग्धात्मनेपदानुरोधेन पृष्ठपदमेवान्यथा नेतुमुचितम् । तथाहि 'उपान्मन्त्रकरणे' इति स्मृत्या आत्मनेपदबलात्समीपावस्थाने मन्त्रस्य करणत्वावगतेः साक्षात्सम्बन्धेनाभिधानातिरिक्ते व्यापारे मन्त्रस्य करणत्वासम्भवेऽपि समीपावस्थानप्रयोजनीभूताभिधानद्वारा समीपावस्थानं प्रति करणत्वाङ्गीकारात् तदनुरोधेन पृष्ठशब्दस्य मन्त्रपरत्वावगतिः। अत एव समीपावस्थानजन्याभि-

---

सिद्धान्ते यदुक्तं आत्मनेपदतात्पर्यग्राहकानुरोधेन पृष्ठपदे मन्त्रलक्षणेति तद्दूषयति–उपक्रमस्येति । एतेन पृष्ठपदे गौण्या आवश्यकत्वात् तन्मतेऽपि लक्षणाऽस्त्येवेति तत्रैव मन्त्रलक्षणा युक्ता, नत्वात्मनेपदमन्यथानेयमिति प्राचामुक्तमपास्तम् । उक्तरीत्या पूर्वपक्षे लक्षणाया अप्रसङ्गात् । निश्चितोपक्रमो ह्युपसंहारस्यान्यथापादको भवति । सन्दिग्धोपक्रमस्तु उपसंहारेणैव निर्णेय इत्यभिप्रेत्य सिद्धान्तमुपपादयति–पृष्ठशब्दस्य शरीरावयवेऽपीति । आत्मनेपदबलादिति । मन्त्रः करणं यस्मिन् तादृशेऽर्थे वर्तमानात् उपपूर्वतिष्ठतेः आत्मनेपदमित्यर्थकेन उपान्मन्त्रकरणे (पा.सू. १-३-२५) इत्यनेन सूत्रेण विधीयमानमात्मनेपदं उपपूर्वकतिष्ठतेर्धातोः मन्त्रकरणकार्थप्रतिपादकत्व एवोपपद्यते । अतः पृष्ठशब्दो मन्त्रपर इत्यर्थः । मन्त्रपरत्वावगतिरिति ।

नन्वेतत्सिद्धान्तकरणमनुपपन्नमिव । तथाहि—यत्र"आग्नेय्या आग्नीध्रमुपतिष्ठत", इत्यादौ निस्सन्दिग्धमेव मन्त्रवाचकं पदं आग्नेय्येत्यादि तत्र तदर्थस्य तृतीयया धात्वर्थं प्रतिकरणत्वात् मन्त्रकरणार्थाद्धातोरुपरि 'उपान्मन्त्रकरण' इत्यनेन भवत्यात्मनेपदम् । अत्र च पृष्ठपदस्य मन्त्रपरत्वनिश्चयाभावे धातोर्मन्त्रकरणार्थप्रतिपादकत्वाभावात् कथं तदुपरि–'उपान्मन्त्रकरण' इति विहितात्मनेपदप्राप्तिः? । ततश्च पृष्ठपदस्य मन्त्रपरत्वनिश्चये सति मन्त्रकरणार्थाद्धातोरात्मनेपदप्राप्तिः, आत्मनेपदप्राप्त्या च पृष्ठपदस्य मन्त्रपरत्वनिश्चय इत्यन्योन्याश्रयापत्तिः पृष्ठपदस्य मन्त्रपरत्वाभावेऽपि "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यमि"ति तदधिकारपठितवार्तिकात् 'आदित्यमुपतिष्ठत' इतिवत् देवपूजार्थकत्वविवक्षायामपि उपतिष्ठतेरात्मनेपदोपपत्तेः, आत्मनेपदस्यानन्यथासिद्धत्वाभावाच्च । एतेन निस्सन्दिग्धात्मनेपदानुरोधेन पृष्ठपदमेवान्यथानेतुमुचितमित्युक्तमपास्तम् । न ह्येतद्वार्तिकं अकर्मकाच्चेत्यनन्तरं पठितम्, येन सकर्मके उपतिष्ठतौ न प्रवर्तेत; अस्य 'अकर्मकाच्च (पा.सू.१-३-२६) त्येतत्पूर्वं उपान्मन्त्रकरण'इत्येतदनन्तरमेव सकर्मकविषय एव पाठेनात्प्रवृत्तेः निस्सन्दिग्धत्वात् । अत एवाग्नेयीवाक्ये मन्त्रकरणोपादानात् नोपाद्देवपूजेति वार्तिकप्रवृत्तिः, अपि तु उपान्मन्त्रकरण इत्यस्यैव । तस्मात् पृष्ठपदस्य मन्त्रपरत्वा-

**धानजनकत्वसंसर्गेण मन्त्राणां समीपावस्थानं प्रति करणत्वमिति नाभिधानलक्षणाऽपि ।**
वस्तुतस्तु—**ऐन्द्रयधिकरणस्थकौस्तुभोक्तन्यायेन लक्षणयाऽभिधानमेव प्रकृताग्नि-**

---

निश्चये 'उपान्मन्त्रकरण'इत्यात्मनेपदस्याप्रवृत्तेः 'भर्तारमुपतिष्ठति यौवनेन' इतिवत् परस्मैपदस्यैव प्राप्तौ तत्स्थाने प्रयुज्यमानमात्मनेपदं छान्दसतयैव समाधेयम् । अथवा उपाद्देवपूजेति वार्तिकेणात्मनेपदं समाधेयमित्यात्मनेपदानुरोधेन पृष्ठपदस्य मन्त्रपरत्वं नैव सिद्धान्तयितुं शक्यमिति चेत् ।

उच्यते । यदि तावत्पृष्ठपदं शरीरावयववाचि तदा समीपस्थितिं प्रत्येव तस्य करणत्वात् तस्याश्चाग्निसंस्कारकत्वमात्रेण वाक्यार्थोपपत्तौ देवपूजार्थकत्वाभावेन आत्मनेपदानुपपत्तिः तदवस्थैव । नहि मन्त्रस्य साक्षात् समीपस्थितिं प्रति करणत्वासंभवे तत्प्रयोजनीभूताभिधानकरणत्वेन तत्करणत्वकल्पनवत् इह समीपस्थितिप्रयोजनीभूतपूजाकरणत्वकल्पनया पूजार्थत्वकल्पने प्रमाणमस्ति । पृष्ठस्य समीपस्थितिं प्रति करणत्वसंभवात्[1], पूजां प्रति करणत्वासंभवाच्च । यदि तु पृष्ठपदं स्तोत्रपरं तदा यद्यपि तस्य गुणाभिधानरूपस्य कथञ्चित्पूजां प्रति करणत्वं संभवति तथाप्यत्राग्न्याधारस्थण्डिलस्यैव कर्मत्वेन तस्य देवतात्वाभावात् देवपूजायां विहितात्मनेपदाप्राप्तिः । अतः पृष्ठपदस्य मन्त्रपरत्वादेवोपान्मन्त्रकरणे इति विहितात्मनेपदस्यैवानन्यथासिद्धस्य प्राप्त्युपपत्तेः न छान्दसत्वादिना तत्समाधानमुचितमिति । आत्मनेपदज्ञापकबलात् मन्त्रातिरिक्तार्थभ्रमनिवृत्तिमात्रं क्रियते । न तु पृष्ठपदस्य मन्त्रपरत्वावगतिः । अतो निरूढलक्षणातात्पर्यग्राहकतामात्रत्वात् नान्योन्याश्रयप्रसक्तिरिति भावः ।

प्रस्तुतमनुसरामः । एतच्च समीपस्थितिं प्रति मन्त्रस्य करणत्वमनुपपन्नं सत् अभिधानानुमापकं भवति । तस्मिंश्चानुमिते समीपस्थितेरभिधानार्थत्वज्ञानं तद्द्वारा च समीपस्थितिं प्रति करणत्वोपपत्तेः न धातोरभिधानलक्षणेति प्राचां मतेनोक्तम् । अस्मिंश्च मते करणत्वस्य अर्थाक्षिप्तकर्मत्वस्य चौपचारिकत्वा[2]पत्तेः तदपेक्षया एकस्यैव धातोः समीपस्थितिविशिष्टाभिधान एवात्मनेपदतात्पर्यग्राहकानुरोधेन लक्षणामङ्गीकृत्य तस्मिन् लक्षितेऽर्थे मुख्यतयैव साक्षात्तयोरन्वयो युक्तः । अत एवोपान्मन्त्रकरण इत्यस्य मन्त्रकरणार्थे वर्तमानात् उपपूर्वात्तिष्ठतेरात्मनेपदमिति व्याख्यानं वैयाकरणानामुपपद्यते । नहि मन्त्रकरणोऽर्थः समीपस्थितिमात्रं युज्यते बाधात् । अतो लाक्षणिकाभिधानार्थत्वाभिप्रायेणैव तद्व्याख्यानात् अभिधानलक्षणैव युक्तेत्यभिप्रेत्याह—**वस्तुतस्त्विति** ।

---

1. A. करणत्वासंभवात् 2 A. त्वोपपत्तेः

**कर्मकं धातुना विधीयते, तत्रैव पृष्ठपदार्थस्य करणत्वं,** समीपावस्थानं परमत्र **'अभि त्वा' इत्यादिमन्त्रलिङ्गादेव प्राप्तमनूद्यते।** पृष्ठपदेन तु **आत्मनेपदानुरोधेन पृष्ठस्तोत्रसाधनीभूता मन्त्रा लक्ष्यन्ते।**

वस्तुतस्तु—**षाडहिकेषु रथन्तरादिषु षट्सु सामसु पृष्ठशब्दान्वाख्यानार्थार्थवादवशेन** निरूढलक्षणायाश्चित्राधिकरणकौस्तुभे **व्यवस्थापितत्वात् तान्येवाभिधानं प्रति करणत्वेन विधीयन्ते, संभवति च स्तोत्र इवाभिधानं प्रति साम्नः करणत्वं ऋगक्षराभिव्यक्तिद्वारा। अत एव तदाधारभूतानां योनिऋचामप्यभिधानाङ्गत्वं; उत्तरयोस्तु 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति स्तोत्र एव विनियोगान्नाभिधानाङ्गत्वप्रसक्तिः। अतश्च योन्याधारकरथन्तरादिषाडहिकसामविशिष्टाभिधानमेवात्र स्थण्डिलसंस्कारकत्वेन विधीयत इति सिद्धम्।** सामांशे **उपदेशोऽप्ययमन्याङ्गत्वस्य पूर्वाव[1] गममात्रेणेह चिन्तितः॥**

**इति श्रीखण्डदेवविरचितायां भट्टदीपिकायां**
**सप्तमस्याध्यायस्य तृतीयः पादः॥**

---

प्रकृताग्निकर्मकमित्यनेन यथाश्रुते प्रकृताग्निकर्मत्वानुपपत्तिः सूचिता। विशिष्टलक्षणायामपि न विशिष्टविधानम्, अर्थप्राप्तत्वाद्विशेषणस्येत्याह—**समीपावस्थानं परमिति।** 'त्वे'ति युष्मच्छब्दार्थस्य 'शूरे'तिसंबुध्यर्थस्य च समीपस्थितिं विना प्रयोगानुपपत्तेः अर्थात्प्राप्तिरित्यर्थः। **पृष्ठपदेन त्विति।** इयञ्च मन्त्राणां लक्षणा भाष्यतन्त्ररत्नानुरोधेनोक्ता। अधुना पृष्ठस्तोत्रसाधनीभूतरथन्तरसाम्नामेव विधानं शास्त्रदीपिकायां सूचितं विशदयति—**वस्तुतस्त्विति। निरूढलक्षणाया इति। एतेन** स्वमते पृष्ठस्तोत्राणां ज्योतिष्टोमेऽपि बहुत्वात् तत्साधनीभूतानां मन्त्राणां साम्नामेव वा लक्षणया विधानापत्तिरिति **निरस्तम्।** मुख्यार्थभूतानां पृष्ठस्तोत्राणामिह विधानासंभवे सांप्रतिकलक्षणया तत्साधनमन्त्राणां साम्नां वा विधानापेक्षया शक्तितुल्यया निरूढलक्षणया झटित्युपस्थितषाडहिकसाम्नामेव विधानस्य युक्तत्वादिति भावः। **स्तोत्र इवेति।** यथा ऋगक्षराभिव्यक्तिद्वारा गुणाभिधानरूपस्तोत्रं प्रति करणत्वं तद्वत् गुणाभिधानं प्रत्यपि तद्द्वारा तत्संभवत्येवेति भावः। अत्र च प्रथमपूर्वपक्षे पृष्ठपदस्यातिदेशकत्वेन संभावितस्य निराकरणादस्य विचारस्य प्रसङ्गसङ्गतिविषयत्वेऽपि अथवेत्याद्युपपादितरीत्या पूर्वपक्षोपपादनेऽतिदेशकत्वाभावात् तन्निराकरणार्थविचारस्य न सङ्गतत्वमुपपद्यत इत्यभिप्रेत्य सङ्गतिं दर्शयति—**सामांशे इति।**

**इति श्रीकविमण्डनशंभुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां**
**सप्तमाध्यायस्य**
**तृतीयः पादः**

---

1. B पूर्वापगम

# अथ सप्तमाध्यायस्य चतुर्थः पादः

(१)—इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वन् ॥ १ ॥ स लौकिकस्स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥ लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ अपि वा न्यायपूर्वत्वात् यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥ मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥ भागित्वात्तु नियम्येत गुणानामभिधानत्वात्सम्बन्धादभिधानवद्यथा धेनुः किशोरेण ॥ ७ ॥ उत्पत्तीनां समत्वाद्वा यथाऽधिकारं भावस्स्यात् ॥ ८ ॥ उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत यथा हि लिङ्गदर्शनम् ॥ १० ॥ लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥ लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥

तदेवं सप्रसङ्गो नामातिदेशो निरूपितः। इदानीं कल्पितवचनातिदेशो निरूप्यते। यत्रोद्भित्सौर्यादौ नैवेतिकर्तव्यताऽऽम्नाता, यत्र वा द्रव्यदेवतोपहोमादिरूपा समाम्नाताऽपि न निराकाङ्क्षीकरणसमर्था तत्र भावनास्वाभाव्येन तस्याः करणानुग्राहकव्यापाररूपेतिकर्तव्यताकाङ्क्षायां वक्ष्यमाणसादृश्येन प्रकृतिभावनोपस्थितौ तदंशत्रयस्याप्युपस्थितेस्तत्र च फलकरणयोरनपेक्षितत्वादिनाऽतिदेशस्य निराकरिष्यमाणत्वादितिकर्तव्यतैव प्रकृतिवत् इत्येवं कल्पितेन विकृतिवाक्यशेषरूपातिदेशेन विकृत्यङ्गतया विधीयते। न च प्रबलप्रमाणेन प्रकृत्यङ्गतयाऽवगतायाः कथं विकृत्यङ्गत्वमिति वाच्यं, प्रबलस्यापि विकृतिविधे-

---

इतिकर्तव्यताविधेः (७- ४. १. १.)

नैवेतिकर्तव्यतेति। द्रव्यदेवतातिरिक्तेति शेषः। यत्र वेति। सौर्यादावेवेत्यर्थः। वक्ष्यमाणेति। निर्वपतिचोदनाचोदितत्वादिरूपेणाष्टमे वक्ष्यमाणेनेत्यर्थः। निराकरिष्यमाणत्वादिति। अष्टम इति शेषः। प्रबलस्यापीति। वस्तुतस्तु विरोधे सति प्रबलं दुर्बलेन

रितिकर्तव्यताकाङ्क्षाशान्त्यभावेनानर्थक्यप्रसङ्गात् दुर्बलप्रमाणबाधकत्वानुपपत्तेः। अत-स्सर्वत्रानाम्नातेतिकर्तव्यताकस्थले आम्नातेतिकर्तव्यताकस्यातिदेशः। आम्नातेतिकर्तव्यताकाश्च सोमदर्शपूर्णमासादयश्श्रुताश्रेताग्निसाध्याः, पार्वणस्थालीपाकादयश्च स्मार्ताग्निसाध्याः। अत एव मूले लौकिकपदेनोच्यन्ते। तत्राविशेषात्सौर्यादावुभयोरप्यतिदेशः। यदि तु प्रकृतावेकैकस्याः प्रत्येक निराकांक्षीकरणसमर्थाया इह समुच्चयेन मिळिताया निराकाङ्क्षीकरणसामर्थ्यकल्पने प्रमाणाभावादेकस्या एवातिदेशः इत्याशङ्क्येत ततोऽस्तु लौकिक्या एवातिदेशः। तस्याः कल्पसूत्रकारादिवचनैराग्रहायणिककर्मादावति-

---

बाध्येत। नत्विह सोऽस्ति इति दर्शितं तन्त्ररत्ने। यदि स्वरूपेणैव ब्राह्मणं विकृत्यापि संबध्येत 'इत्थं दर्शेन कुर्यात्', "इत्थं सौर्येण कुर्या"दिति ततः सकृदुच्चरितस्य अनेकसंबन्धानुपपत्तेः विरोधः स्यात्। विरोधे च प्रत्यक्षेण अनुमानं बाध्येत। नत्वेतदस्ति; किन्तु प्रथमोपनिपाते प्रकृत्यैव ब्राह्मणं संबध्य तत्रैव स्वार्थं विधाय निवृत्ताभिधानव्यापारं भवति 'इत्थं कुर्यादिति'। पश्चात्तु विकृतिचोदनायां साकाङ्क्षायां प्रकृतिवच्छब्देन वाक्यशेषभूतेन प्रकार (उपकार?) मुखेन प्राकृतपदार्थजाते प्राप्ते तत्प्रतिपादकस्यापि ब्राह्मणस्य तन्मुखेन तच्छेषता भवतीति न प्रकृति-संबन्धेन विरुध्यत इति।

**मूल इति**। स लौकिकः स्यात् दृष्टप्रवृत्तित्वादिति (८-४-२) सूत्रे तद्व्याख्यानग्रन्थे च लौकिकपदेनोक्त इत्यर्थः। एवं विकृताविकर्तव्यताप्राप्तिमुपोद्घातरूपां प्रदर्श्य प्रस्तुतं विचारं दर्शयति—**तत्राविशेषादिति**। **तद्यत्र नित्यानुवाद इति**। अयञ्च 'शेषोऽपि वा न्यायपूर्वत्वाद्यत-नित्यानुवादवचनानि स्युरि'ति पूर्वपक्षसूत्रस्य (८-४-५) परिहारार्थं पठितः; तत्र पदत्रयेण क्रमेण त्रयाणां परिहारः कर्तव्य इत्यर्थः। अत्र च "एवञ्चेद्यत्र प्रयाजा विद्यन्ते तत्र प्रयाजे प्रयाजे कृष्णलं जुहोतीत्युपपद्यते गुणविधिः। वीप्सा च प्रयाजानामुद्देश्यत्वादुपपद्यत" इति तन्त्ररत्नग्रन्थे आपाततः प्रयाजे कृष्णलहोमविधानं प्रतीयते तदभिप्रायेण तन्त्ररत्नकार इत्युक्तम्। अधुना तदेव तन्त्ररत्नोक्तं विमर्शेन निष्कर्षयति—**वस्तुतस्त्विति**। स्वाभिप्रेतकृष्णलमालविधानस्य पूर्वलिखिततन्त्ररत्नग्रन्थेनापि विरोधाभावात् नैतत्तन्त्ररत्नदूषणपरम्; अपि तु विमर्शद्वारा तस्यैव निष्कर्षपरं द्रष्टव्यम्। **वीप्सानुवादानुपपत्तेरिति**। तन्त्रानुष्ठानव्यावृत्तये वीप्सार्थस्यापि विधाने उभयविधानाद्वाक्यभेदापत्तिरित्यर्थः। प्रतिनिधित्वेन विधानसंभवे विकल्पो न युक्त इत्यभिप्रेत्याह—**प्रतिनिधित्वेन वेति**। **जुहोतिस्त्विति**। **मम तु प्रतिभाति**। प्रयाजो-द्देशेन कृष्णलमात्रविधाने तस्य दक्षिणात्वेनापि निवेशापत्तेः जुहोत्यनुवादानुपपत्तिः; द्रव्यत्वेन विधाने हि तत्संस्कारकतया नित्यप्राप्तो जुहोतिरनूद्येत; न च तेनैव रूपेण विधाने प्रमाणमस्ति।

देशस्य क्लृप्तत्वेन दृष्टप्रवृत्तिकतया सौर्यादावपि तस्या एवातिदेशात्।

यत्तु सौर्यादौ 'प्रयाजे प्रयाजे कृष्णलं जुहोति', ऐन्द्राबार्हस्पत्ये 'अर्धं बर्हिषो लुनाति,' पितृयज्ञे 'न होतारं वृणीते', गृहमेधीये 'आज्यभागौ यजति' इत्यादिलिङ्गदर्शनं तत् यत्र नित्यानुवादवचनानि स्युः इत्येवं परिहर्तव्यम्। तथा हि-यत्र प्रयाजा दर्शपूर्णमासादौ तत्र कृष्णलहोमविधिरिति तन्त्ररत्नकारः।

वस्तुतस्तु—प्रयाजोद्देशेन कृष्णलहोमान्तरविधौ आरादुपकारकत्वेन सर्वप्रयाजार्थं तन्त्रेणानुष्ठानापत्तेः 'प्रयाजे प्रयाजे' इति वीप्सानुवादानुपपत्तिः। प्रयाजीयहोमोद्देशेन कृष्णलमात्रविधौ विशिष्टोद्देशः। होममात्रोद्देशेन विधावतिप्रसङ्गः। अतः प्रयाजोद्देशेन कृष्णलमात्रं पूर्वपक्षे आज्येन सह विकल्पेन प्रतिनिधित्वेन वा विधीयते। सिद्धान्ते तु तद्बाधकत्वेन। प्रयाजाश्च पूर्वपक्षे दर्शपूर्णमासीयाः। सिद्धान्ते सौरीया इत्येतावान् विशेषः। जुहोतिस्तु संस्कारकत्वेन प्राप्तोऽनूद्यते।

अत एव भाष्यकारोक्तस्य वचनोदाहरणत्वमपि पञ्चमविधिप्रकारापत्तेरयुक्तम्। याज्ञिकास्तु आज्येनैव प्रयाजहोमे कृष्णलप्रक्षेपमधिकं कुर्वन्ति। एवं 'अर्धं बर्हिषः' इत्यत्रापि यत्र दर्शादौ बर्हिर्लवनं तत्र लवनानुवादेनार्धत्वविधिः। 'न होतारं' इति तु नित्यानुवादः। आज्यभागविधिस्तु अपूर्वविधितया वचनमिति द्रष्टव्यम्। यत्र हि गुणोपादानं भवेत् तत्र सर्वत्र तृतीयविधिप्रकारलोभेन यत्र इत्यस्यैवोदाहरणत्वं भवेत् न वचनस्य। अस्तु वा यत्र प्राकरणिकगुणावरुद्धे गुणान्तरस्य प्रतिनिधित्वादिनाऽपि कथंचिन्निवेशासम्भवस्तत् वचनोदाहरणम्। सर्वथाऽतिदेशाभावेऽपि लिङ्गोपपत्तिरिति प्राप्ते--

---

न च दक्षिणायाः साङ्गदर्शपूर्णमासप्रयोगार्थं विहितायाः सत्त्वेनापेक्षाभावात् अनपेक्षितविधित्वापत्तिः; आज्यसत्त्वे द्रव्यस्याप्यपेक्षाभावेन अनपेक्षितविधानस्य तुल्यत्वात्। अतस्तन्त्ररत्नाभिमतकृष्णलहोमविधानमेव द्रव्यत्वफलकं युक्तमिति।

अत्र तन्त्ररत्ने 'प्रयाजे प्रयाजे कृष्णलं जुहोति'इति भाष्यकाराभिप्रेतं वचनोदाहरणं निरस्य पृषदाज्येनानूयाजान्यजतीति वचनोदाहरणं दर्शितम्; तदयुक्तमिति दर्शयितुमाह—यत्र हीति। अयमर्थः। यदि पृषदाज्येनेत्यत्रैकप्रसरताभङ्गमप्यङ्गीकृत्याज्योद्देशेन पृषत्ताविधानं; यदि वा एकप्रसरताभङ्गभिया अनूयाजोद्देशेनैव तद्विधानं, आनर्थक्यतदङ्गन्यायेन चाज्यद्वारकता सिद्ध्यति; यदि वाऽतिदेशप्रवृत्तेः पूर्वमेवानूयाजोद्देशेन पृषत्तामात्रफलको विधिः, सर्वथापि तृतीयविधिप्रकाराश्रयणात् यत्रानूयाजास्तत्र पृषत्ताविधिरिति यत्रेत्यस्यैवोदाहरणं न वचनस्येति। अस्तु वेति। औदुम्बरो यूपो भवतीत्यनेन विधीयमानौदुम्बरत्वं यत्र यूपस्तत्र पशाविति विधानासंभवः। तत्र दैक्षे यूपसद्भावेऽपि खादिरत्वादिनाऽवरोधेनौदुम्बरत्वस्य निवेशासंभवात्। अतः सोमापौष्णयागे

स्वप्रत्यक्षपठितवेदविहितत्वसादृश्यात् वैतानिकाग्निसाध्यत्वसादृश्याच्च वैदिक्या एवातिदेशः। अतिदेशाभावेऽपि हि सौर्यादीनां गृह्यसूत्रेष्वनुक्तत्वात् न स्मार्ताग्निसाध्यत्वम्। अतस्सामान्यविहिताहवनीयादिसाध्यत्वे बाधकाभावात् सादृश्योपपत्तिः। अत एवंजातीयकेषु दर्शपूर्णमासादिधर्माणामेवातिदेश इति सिद्धम्। लिङ्गान्यप्येवं सत्युपपन्नानि भवन्ति इतरथा प्रकरणबाधो वाक्यानर्थक्यं वा प्रसज्येत॥

---

(२)—द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥ लिङ्गाच्च ॥ १४ ॥ न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥ लिङ्गं सङ्घातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥ न वाऽर्थधर्मत्वात् सङ्घातस्य गुणत्वात् ॥ १७ ॥ अर्थापत्तेर्द्रव्येषु धर्मलाभस्स्यात् ॥ १८ ॥ प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥ विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥

तदेवं निरूपितस्त्रिविधोऽतिदेशः। तत्र प्रत्यक्षवचनातिदेशस्य द्विविधादप्यतिदेशात्प्राबल्यं धर्माणामुपात्तत्वात् वाक्यवैयर्थ्यापत्तेश्च पूर्वमेव प्रसङ्गादुपपादितम्। अतस्तादृशविषये चोदनालिङ्गातिदेशस्य नैव कल्पना। नाम्नस्तु यदि समानविषयत्वं तदा प्रत्यक्षवचनापादितसिद्धसादृश्यमादायैव नाम्नो गौणत्वापत्तेर्नातिदेशकत्वम्। यदि तु भिन्नविषयत्वेन न सादृश्यसम्पत्तिस्तदा नाम्नोऽप्यविरुद्धधर्मातिदेशकत्वमवधेयम्।

---

औदुम्बरत्वविशिष्टयूपविधिर्वचनरूप एवेत्यर्थः। इतरथेति। प्रयाजेप्रयाजे इत्यस्य सौर्यप्रकरणपठितस्य प्रकरणबाधः। न होतारमित्यस्य वाक्यस्य नित्यानुवादत्वे आनर्थक्यं प्रसज्येतेत्यर्थः।

---

द्वादशाहिकमहर्गणे। प्रसङ्गादुपपादितमिति। समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यादित्यधिकरणान्ते "न चैत्रमस्यातिदेशस्य कल्पितत्वाभावात्" इति ग्रन्थेन प्राचीनैरनुक्तमपि स्वयं प्रसङ्गादुक्तमित्यर्थः। अतस्तादृशविषय इति। इषौ ज्योतिष्टोमातिदेशेन प्राप्ते सामनि वषट्कारनिधनं प्राकृतविष्टुतौ इष्वाकारत्वं प्राकृते स्तोत्रे सप्ताहाख्यं साम आम्नातम्। तावत्पर्यन्तं चोदनालिङ्गातिदेशकल्पनेन ज्यौतिष्टोमिकधर्मप्रवृत्तावपि अग्रे समानमितरच्छ्येनेनेति प्रत्यक्षवचनातिदेशेन धर्माणां श्येनीयानां विधानात् तैरेव निराकाङ्क्षत्वान्न चोदनालिङ्गातिदेशकल्पनेत्यर्थः। समानविषयत्वमिति। वाचनिकातिदेशेन सहेत्यर्थः। अविरुद्धेति।

**एवं नामातिदेशसत्त्वेऽपि समाने असमाने वा विषये चोदनालिङ्गातिदेशस्य नैव कल्पना, नाम्नः प्रत्यक्षत्वेन तेनैवेति कर्तव्यताकाङ्क्षाशान्तेः। अत एव गवामयने 'ज्योतिर्गौरायुः' इत्येवमादिष्वहस्सु एकाहकाण्डपठितज्योतिरादिधर्माणां नाम्ना प्राप्तिः, न तु गणत्वसादृश्यात् द्वादशाहधर्माणाम्। न चाहरन्तरार्थमवश्यकल्प्येन गणत्वसादृश्याद्गवामयननिष्ठद्वादशाहिकातिदेशेनैव तद्धर्मप्राप्तिरावश्यकी। तत्तदहरुत्पत्तिवाक्येष्वेव भावनाया इतिकर्तव्यताकाङ्क्षायां गणान्तर्गतत्वसादृश्येन चातुर्मास्यान्तर्गताग्नेयादिवत् प्रत्येकमेवातिदेशाकल्पनेन ज्योतिरादिनामातिदेशसत्त्वेन चोदनालिङ्गातिदेशस्यैवाकल्पनात्। न च लाघवाद्गवामयने एक एवातिदेशः। गवामयनत्वस्य** प्रत्येकवृत्तित्वेन **प्रत्येकमेव फलसंबन्धात; साधनानां समुच्चयेऽपि तत्तत्साधनानां प्रत्येकमेवेतिकर्तव्यताकाङ्क्षया प्रत्येकमेव** तत्कल्पनात्। **अतो ज्योतिरादौ नैव चोदनालिङ्गातिदेशः। नचैवं तेषु त्र्युपसत्त्वस्यैव प्राप्तेः 'द्वाभ्यां लोमावद्यन्ति द्वाभ्यां मांसम्' इत्यादि षड्द्विकान्यनुक्रम्य 'यद्द्वादशोपसदो भवन्ति' इति द्वादशाहिकद्वादशोपसत्त्वदर्शनानुपपत्तिः;** तस्य भूयोऽहरन्तरानुरोधेन **नामातिदेशप्रापितत्रित्वबाधकत्वोपपत्तेः। द्वादशसु तिसृणामप्युपकारकत्वोपपत्तेश्च।**

---

विरोधे वचनातिदेशस्यैव प्राबल्यात् तत्प्रापितधर्मा एवेत्यर्थः। प्रत्येकवृत्तित्वेनेति। प्रत्येकसुत्यावृत्तित्वेनेत्यर्थः। तत्कल्पनादिति। विशिष्य चायमर्थो दशमे त्र्यनीकाविचारे (जै. सू. १०-५-२४) निरूपयिष्यते। भूयोऽहरन्तरेति। एतेन गवामयने प्रथमस्य प्रायणीयस्याह्नो द्वादशाहप्रायणीयाहर्विकारत्वात् द्वादशाहप्रायणीयधर्मो द्वादशोपसत्त्वं गवामयनीये प्रथमे प्रायणीयेऽहनि क्रियते। तथा च तस्य मुख्यत्वात् ज्योतिरादिभूयोऽहर्विरोधे मुख्यानुग्रहस्य, **'भूयसां स्यात् स्वधर्मत्वं' 'मुख्यं वा पूर्वचोदनाल्लोकवत्'** (जै.सू. १२—२—७, ८) इति वक्ष्यमाणत्वात् द्वादशोपसत्त्वमेव कर्तव्यम्; न ज्योतिरादिनामातिदेशप्राप्तं त्र्युपसत्त्वमिति भाष्यकारोक्तं समाधानमपास्तम्। प्रायणीयशब्दस्य यौगिकत्वेनानतिदेशकत्वात्, नामातिदेशेन द्वादशाहिकप्रायणीयधर्मस्य द्वादशोपसत्त्वस्य प्राप्त्यभावात्। अथासत्यपि नामातिदेशे चोदकादेव गणान्तःपातिनः प्रायणीयस्य द्वादशोपसत्त्वं द्वादशाहात् प्राप्यत इति चेन्न। उभयोरपि द्वादशाहिकगावामयनिकयोः प्रायणीययोः ज्योतिष्टोमनामकयोः ज्योतिष्टोमनामातिदेशेन ज्योतिष्टोमिकधर्माणामेव प्राप्तेः परस्परं प्रकृतिविकृतिभावाभावात्। यत्तु उभयोर्विरोधे मुख्यानुग्रहोपपादनाय भूयसामिति सूत्रद्वयस्य पूर्वोत्तरपक्षप्रतिपादकत्वेन ऐकाधिकरण्यमङ्गीकृत्य न्यायोपन्यसनं तत् द्वादशे ऐकाधिकरण्यस्य परमतत्वेन स्वयमेवोपपादनादयुक्तम्। तत्र हि यत्र [1]बहूनामल्पानाञ्च धर्मविरोधस्तत्र जघन्यानामपि भूयसामेवानुग्रहो युक्त इत्येवं सिद्धान्तपरतयैव प्रथमं सूत्रं वर्णयित्वा, यत्र तुल्यसङ्ख्यानि विप्रतिपिद्धधर्माणि भवन्ति तत्र

---

1 B omits यत्र

तस्मात् तत्तत्सुत्याकालीनाङ्गानामन्येषामपि वा त्रित्वादीनामतिरिक्तानामेव नाम्ना अतिदेश इति सिद्धम् ।

नन्वेवमप्येकादशिन्यां विहारदर्शनानुपपत्तिः । तथाहि ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी एकादशिनी समाम्नाता, तस्याश्च द्वादशाहे विहारः श्रुतः । तदतिदेशेन गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके प्राप्ताविदं श्रुतं 'यस्यातिरिक्तमेकादशिन्यामालभेरन् अप्रियं भ्रातृव्यमतिरिच्येत द्वौ द्वौ पशू समस्येयुः कनीय आयुः कुर्वीरन् । यदेते ब्राह्मणवन्तः नव पशव आलभ्यन्ते नाप्रियं भ्रातृव्यमतिरिच्यते न कनीय आयुः कुर्वीत' इति । गवामयने हि सम्पूर्णैकादशिन्या द्वात्रिंशद्वारमावृत्तौ द्विपञ्चाशदधिकशतत्रयमहानि पूर्यन्ते; अवशिष्टानि नव । तत्र पुनरेकादशिनीप्रयोगे अतिरेकः समासो वाऽऽपद्येत । अतो ब्राह्मणवतां तेषु विधानम् । यदि चोदकातिदेशेन ज्योतिरादिसुत्यास्वपि विहारः प्राप्यते तत एव तल्लिङ्गमुपपद्येत । यदि तु नामातिदेशप्राबल्यं तदा तद्बलेन ज्योतिरादिसुत्यासु सम्पूर्णायाः एकादशिन्या एव प्राप्तेः विहारदर्शनानुपपत्तिरिति चेन्न –

---

मुख्यानुग्रहो युक्त इति सिद्धान्तपरतया द्वितीयं सूत्रं वर्णितम् । अतो भूयोविरोधे मुख्यत्वस्यानियामकत्वात् भूयोऽनुरोधेन मुख्यस्याप्येकस्यैव धर्मत्यागो युक्त इति भावः । सुत्याकालीनाङ्गानामेवेति । ज्योतिरादिपदानां सुत्यावाचकत्वात् तन्नाम्ना तत्कालीनानामेवाङ्गानामतिदेशः । अन्याङ्गानान्तु साधारणो द्वादशाहिक[1]धर्म एवेत्यर्थः ।

पश्वेकादशिनीति । "प्रैवाग्नेयेन वापयति । मिथुनं सारस्वत्या करोति । रेतस्सौम्येन दधाति । प्रजनयति पौष्णेन । बार्हस्पत्यो भवति । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवास्मै प्रजाः प्रजनयति । वैश्वदेवो भवति । वैश्वदेव्यो वै प्रजाः । प्रजा एवास्मै प्रजनयति । इन्द्रियमेवैन्द्रेणावरुन्धे । विशं मारुतेन । ओजो बलमैन्द्राग्नेन । प्रसवाय सावित्रेण । निर्वरुणत्वाय वारुणः । इत्यादिवाक्यैः तैत्तिरीयशाखायामाग्नेय-सारस्वत-सौम्य-पौष्ण-बार्हस्पत्य-वैश्वदेवै-न्द्र-मारुत-ऐन्द्राग्नसावित्रवारुणाः एकादश पशुयागाः ज्योतिष्टोमे विकल्पेन विहिताः । तेषां द्वादशाहे एकैकदिने एकैकस्य पशुयागस्यानुष्ठानरूपो विहारः श्रुत इत्यर्थः । यस्यातिरिक्तमिति । अतिरिक्तं अधिकमित्यर्थः । द्वौ द्वौ पशू इति । एकैकस्मिन् दिने द्वौ द्वौ पशू इत्यर्थः । भाष्ये दर्शितं लिङ्गदर्शनं स्पष्टतया न व्याख्यातमिति स्वयं तदर्थं दर्शयति— गवामयने हीति । अतो ब्राह्मणवतामिति । अतः एकादशिन्या नवसु दिनेषु पूर्त्यसम्भवात् त्याग एव । अपितु "अप्रतिष्ठां वा एते गच्छन्ति । येषां संवत्सरेऽनाप्तेऽथैकादशिन्याप्यते । वैष्णवं वामनमालभन्ते । यज्ञो वै विष्णुः । यज्ञमेवालभन्ते प्रतिष्ठित्यै । ऐन्द्राग्नमालभन्ते । इन्द्राग्नी वै देवानामयातयामानौ इत्यादिना ब्राह्मणेन तैत्तिरीयशाखायां पूर्वविहितानां वैष्णवादिपशूनां ब्राह्मणवतां नवानां पृष्ठ्यषडहचतुर्थमारभ्योदयनीयान्तेषु गावामयनि-

1. A द्विक एव

एकादशिनीविहारस्यानारभ्याम्नातस्य गवामयने औपदेशिकत्वेन तदंशे नामातिदेशबाधात्। तथाहि 'यथा–हि प्रभवः पशवस्स्युः तानेताननूचीनानालभेरन् आग्नेयमेव प्रथमेऽहन्यालभेरन् सारस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये वारुणमन्ततः। अथ पुनर्ज्योतिरादीनां पर्यावर्तेषु आग्नेयमेव प्रथमेऽहनि' इत्याद्यनारभ्याधीतस्यैकादशिनीविहारस्य प्रकृतौ ज्योतिष्टोमे द्वादशाहे वा ज्योतिराद्यहस्समूहाभावेन निवेशानुपपत्तेः तृतीयप्रकृतौ गवामयने निवेशः। अन्ततः एकादशेऽहनि। अतश्चौपदेशिकत्वान्नामातिदेशस्तदंश एव बाध्येतेत्युपपन्नं लिङ्गम्॥ २॥

इतिश्रीखण्डदेवविरचितायां भाट्टदीपिकायां
सप्तमस्याध्यायस्य चतुर्थः पादः॥
अध्यायश्च
समाप्तः।

---

कान्त्येषु नवसु दिनेषु विधानमित्यर्थः। नामातिदेशबाधादिति। यथा प्रबलेन नामातिदेशेन चोदनालिङ्गातिदेशस्य बाधःतद्वत् उपदेशेन प्रबलेन नामातिदेशस्य तदंशे बाध इत्यर्थः। प्रभव इति। सर्वेषु दिनेषु समानाः पशवः स्युरित्यर्थः। अथ पुनरिति। अत्र च "अथ पुनः पर्यावर्तेषु आग्नेयमेव प्रथमेऽहन्यालभेरन्" इत्यादि पूर्ववत् एकादशिनीविहारवचनस्य भाष्यकारेण लिखनात् तत्र च ज्योतिरादीनां पर्यावर्तेष्वित्येवं भाष्यकारीयं व्याख्यानमभिप्रेत्य ज्योतिरादीनामित्युक्तम्। तथा गावामयनिकप्रथममासगताभिप्लविकद्वितीयषडहतृतीयदिने पश्वैकादशिनी क्रमेण समाप्ता भवति। पुनश्चाभिप्लविकद्वितीयषडहसंबन्धिनां ज्योतिराद्युत्तराणामह्नां पर्यावृत्तावयं विचार इत्यर्थः। अनारभ्याधीतस्य 'प्रकृतौ वाऽद्विरुक्तत्वा'दिति न्यायेन प्रकृतौ ज्योतिष्टोमे निवेशप्राप्तौ तत्रासंभवं दर्शयति––ज्योतिष्टोमे द्वादशाहे वेति। वारुणमन्तत इति अनारभ्याधीतवचनस्थमन्ततः पदं व्याचष्टे––अन्ततः एकादशेऽहनीति।

इति श्रीपूर्वोत्तरमीमांसापारावारीणधुरीण-
श्रीखण्डदेवान्तेवासिपण्डितमण्डनवालकृष्णभाट्टात्मज-
श्रीशम्भुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां
सप्तमाध्यायस्य चतुर्थः पादः।
अध्यायश्च
समाप्तः।

# अथ भाट्टदीपिकायां

## अष्टमाध्यायस्य प्रथमः पादः

### (१)—अथ विशेषलक्षणम् ॥१॥ यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥२॥

तदेवं त्रिविधोऽतिदेशो निरूपितः। तत्रापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन **चिन्ता वृत्ता**। चोदनालिङ्गातिदेशस्य तु सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थ-

---

**अथाष्टमाध्यायस्य प्रथमः पादः**

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्णं पितरं नमामि ॥ ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥

यद्यप्यत्र गुरोः कृतावपि मयाप्युद्भाव्यते काचना
ऽसंभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता[1] ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्विय्यं मे मतिः ॥ ४ ॥

**अथ विशेषलक्षणम्** ।

पूर्वोत्तराध्यायार्थनिरूपणयोः परस्परसाकाङ्क्षत्वं दर्शयन् पूर्वाध्यायप्रतिपादितातिदेशसामान्यस्य यद्यपि न विशेषसापेक्षत्वं प्रत्यक्षवचननामातिदेशयोः पूर्वं निरूपितयोः विशेषविषयत्वादेव संभवति तथापि चोदनालिङ्गातिदेशस्य पूर्वमुपपादितस्य विशेषसापेक्षत्वात्[2] पूर्वाध्यायोत्तरं तन्निरूपणं नासङ्गतमित्यभिप्रेत्याह—**तदेवमिति**। **कार्त्स्न्येनेति**। स्वरूपतो विशेषविषयत्वादिना च चिन्ता वृत्तेत्यर्थः। **चोदनालिङ्गातिदेशस्य त्विति**। अनुमितवचनातिदेशस्य त्रैवि-

---

1. A. Reads भागिका

2. A. साकाङ्क्षत्वात्

मप्रम आरभ्यते। तत्रैकस्मिन् सौर्यादौ एकविध्यन्तेनैव निराकाङ्क्षत्वात् सर्वविध्यन्तसमुच्चयायोगेऽपि नियामकाभावादनियमेनाने कप्रकृतिविध्यन्तप्राप्तिरिति प्राप्ते—

अष्टदोषदुष्टविकल्पापत्तेः, यस्यैव सादृश्यविशेषेण शीघ्रोपस्थितिस्तत एव धर्मातिदेशः। तच्च सादृश्यं शब्दघटितमर्थघटितं च उत्तरत्र प्रपञ्चयिष्यते। अत एव यत्र कथमपि न सादृश्यस्य नियामकता यथा द्यावापृथिव्य एकादशकपाले, तत्राग्नीषोमीयैन्द्राग्नयोर्विकल्पेनैव प्रकृतित्वम् ॥ १ ॥

---

ध्येऽपि स्थानापत्तिकल्पितवचनातिदेशाश्रय (योपस्थितिः?) कल्पितवचनातिदेशयोः विशेषविषयत्वस्य प्रत्यक्षवचनातिदेशनामातिदेशवत् पूर्वमेव सिद्धत्वात्, सादृश्यकल्पितवचनातिदेशत्वेन सिद्धान्ते यः अनुमितवचनातिदेशः स्वीक्रियते, तत्रानियमेन वचनमनुमीयते; अथवा नियमेन, इति प्रकृतिविशेषनिरूपणस्यावश्यकत्वात् विशेषलक्षणारम्भो युक्त इत्यर्थः। अत्र भाष्यकारेण किमेकस्मिन् कर्मणि सर्वकर्मभ्यो धर्मातिदेशः उत एकस्मादिति संशयोपन्यासपूर्वकमविशेषात् सर्वेभ्य इति पूर्वपक्षो दर्शितः। स विध्यन्ताधिकरण एव पूर्वत्र सर्वकर्मधर्मसमुच्चयस्य निराकृतत्वादयुक्त इति दर्शयन् अन्यथा पूर्वपक्षं दर्शयति—तत्रैकस्मिन्निति। अष्टदोषेति। उभयोर्विकल्पे हि यदैकस्य यागार्थत्वेन ग्रहणं तदा तदितरस्य सामान्यतो यागार्थताग्राहके शास्त्रे गृहीतप्रामाण्यपरित्यागः अप्राप्तप्रामाण्यस्वीकारश्चेति दोषद्वयं; अपरस्य यदा यागार्थत्वेन ग्रहणं तदा तद्बोधके शास्त्रे पूर्वं परित्यक्तस्य प्रामाण्यस्य स्वीकारः स्वीकृतप्रामाण्यपरित्याग इति दोषद्वयञ्च मिलित्वा चत्वारो दोषाः। एवमेवापरस्य यागार्थतया विधानेऽपि चत्वार इत्यष्टौ दोषा ज्ञेयाः। शीघ्रोपस्थितिरिति। 'यजेते'त्युक्ते किं केन कथमित्याकाङ्क्षात्रये सति किं केनेत्यस्मिन्नंशे फलकरणाभ्यां ब्रह्मवर्चसयागाभ्यां निराकाङ्क्षीकृते सति कथमित्यस्यामाकाङ्क्षायामभ्यावृत्तायां सन्निधानेऽनाम्नानात् इतिकर्तव्यतायाः, निर्वपत्यादिनिर्देशेन तुल्यमाग्नेयादिवाक्यं उपमानेन सन्निधीयते। तच्च वाक्यं सन्निधापितमात्मीयमर्थं सन्निधापयति अंशत्रययुक्तं इदमनेनेत्थं कुर्यादिति। तत्र फलकरणयोः सन्निहितयोरपि अनपेक्षितत्वात् न विकृतिभावनया संबन्धः। इतिकर्तव्यता तु अपेक्षासन्निधियोग्यत्वैः विकृतिभावनयाऽन्वीयते। इदमनेन तथा कुर्यादित्येवमुपमानेन शीघ्रोपस्थितात् प्रकृतिविशेषवाक्यात् तदर्थद्वारेणान्वाधानादीतिकर्तव्यतासम्बन्धात् नियमः प्रकृतिविशेषस्येति भावः। प्रपञ्चयिष्यत इति। तेनोत्पत्तिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्, पशौ च लिङ्गदर्शनात् इत्यादीन्यग्रिमाणि सूत्राणि यस्य लिङ्गमर्थसंयोगादभिधानवदित्यलत्यसिद्धान्तसूत्रस्यैव प्रपञ्चार्थानीति न स्वातन्त्र्येण पूर्वपक्षोपन्यासपूर्वकं व्याख्येयानीति भावः। विकल्पेनैव प्रकृतित्वमिति। पुनश्च चतुरक्षरदेवताकत्वरूपाग्नीषोमीय-

(२)—प्रवृत्तित्वादिष्टेस्सोमे प्रवृत्तिस्स्यात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥ कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥ ५ ॥ स्रुगभिघारणाश्रावस्य च नित्यानुवादात् ॥ ६ ॥ विधिरिति चेत् ॥ ७ ॥ न वाक्यशेषत्वात् ॥ ८ ॥ शङ्कते चानुपोपणात् ॥ ९ ॥ दर्शनमैष्टिकानां स्यात् ॥ १० ॥

यत्र द्रव्यदेवतादिसन्निपत्योपकारकाङ्क्षसामग्रीसाकल्यस्याम्नानरूपं कृत्स्न[1] विधानं तत्राग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादौ न परस्परं धर्मातिदेशः स्वसन्निधौ यावदाम्नातैरङ्गैरेवेतिकर्तव्यताकांक्षाशान्तेः; सादृश्यस्यापि तादृशस्य नियामकस्याभावाच्च। ज्योतिष्टोमे तु-'तस्यैकशतं प्रयाजानूयाजाः' इति प्रकृतिप्राप्तप्रयाजाद्यनुवादेन शतसङ्ख्याविधानलिङ्गाद्दीक्षणीयादिषु दार्शिकधर्माणां प्रवृत्ततया तन्मध्यवर्तिनि सोमेऽपि दार्शिकविध्यन्तप्राप्तिं मन्यमानस्योत्तरम्—

---

विशेषसादृश्यस्य द्यावापृथिव्येऽसंभवात् अनेकाक्षरदेवताकत्वसामान्यसादृश्यस्य चाग्नीषोमीयैन्द्राग्नयो[2]रविशिष्टत्वमित्यभिप्रायेणोक्तम्। यदि तु त्र्यधिकाक्षरदेवताकत्वरूपं[3] विशेषसादृश्यं नियामकत्वेनालोच्यते तदा त्वग्नीषोमीययागस्यैव प्रकृतित्वमवधेयम्।

---

प्रवृत्तत्वादिष्टेः।

सन्निपत्योपकारकेति। तेन च विकृतिविशेषे साङ्ग्रहण्येष्ट्यादौ आरादुपकारकाङ्क्षविशेषस्योपहोमादेराम्नानेऽपि तस्य तादृशविकृतिनिराकाङ्क्षीकरणसामर्थ्याभावात् तत्समर्थस्य द्रव्यदेवतादिसन्निपत्योपकारकाङ्क्षस्य सन्निधावनाम्नानात् न तस्या विकृतेः कृत्स्नविधानत्वमिति तस्यामितरविकृतित्वमेवेति सूचितम्। तादृशस्येति। अग्निहोत्रस्य होमत्वात् दर्शपूर्णमासयोश्च यागत्वात् न तावत् परस्परं सादृश्यम्। यत्रापि दर्शपूर्णमासयोः सोमे च यागत्वेन रूपेण तत्संभवः तत्रापि परस्पराश्रयदोषापत्तेः न परस्परं धर्मातिदेश इति भावः। एवञ्चाग्निहोत्रदर्शपूर्णमासयोस्सोमातिदेशेन धर्मप्राप्त्याशङ्काऽयोगात् कथञ्चित्सोमे संभवत्पूर्वपक्षनिरासार्थमेतदधिकरणमिति दर्शयन् पूर्वपक्षं दर्शयति—ज्योतिष्टोमे त्विति। तस्यैकशतमिति।

---

1 B. कृत्स्नं वि

2. A. योरविशिष्टत्वम् 3. B. त्र्यक्षरदेव

**दीक्षणीयादिषु विद्यमानानामेव प्रयाजादीनां परम्परया सोमसम्बन्धात् 'वाजपेयस्य यूप.' इतिवत् तस्येति षष्ठ्यनुवादोपपत्तेः; प्रवृत्तत्वस्य हेतोराकाङ्क्षानिबन्धनत्वेन** तदभावेऽसाधकत्वान्न **सोमेऽतिदेशः। अत एव 'घृतं वै देवा वज्रं कृत्वा सोममघ्नन् स्रुचि सोमहविर्नासाद्यते नाज्येनाभिघारयति' इति दार्शिकासादनाद्यभावानुवाद उपपद्यते। न ह्ययं पर्युदासविधिः,** "यदाह अंशुरंशुस्ते **देव सोमाप्यायताम्" इत्येतद्विध्येकवाक्यत्वेन तदर्थवाद**[1] **स्यास्य स्वतन्त्रविधित्वानुपपत्तेः। किञ्च 'यदनुपोष्य प्रयायात्ग्रीवबद्धमेनममुष्मिन्**

---

दीक्षणीयायां पञ्चप्रयाजास्त्रयोऽनूयाजाः; प्रायणीयायां प्रयाजाः पञ्च, अनूयाजास्त्रयः; उदयनीयायां प्रयाजाः पञ्च, त्रयोऽनूयाजाः, आतिथ्यायां प्रयाजाः पञ्च, अग्नीषोमीयादिषु त्रिषु पशुषु मिलित्वा प्रयाजाः त्रयस्त्रिंशत्, तावन्त एवानूयाजाः; अवभृथे चत्वारः प्रयाजाः, द्वावनूयाजौ; इत्येवं प्रयाजा अनूयाजाश्च मिलित्वा एकोत्तरशतमित्यर्थः। **तदभावेऽसाधकत्वादिति।** यथैव प्रकृतावितिकर्तव्यता आम्नातेत्येवमितिकर्तव्यतासंबन्धो न, न वा विकृतावनाम्नातेत्येवं तत्र तदसंबन्धः; किन्तु भावनास्वभावकृतकथंभावाकाङ्क्षाधीन एव स इति तस्या एव तदन्वयसाधकत्वं न त्वाम्नानादेः, तथैव प्रवृत्तत्वस्याप्याकाङ्क्षा[2]ऽभावे न तदन्वयसाधकत्वमित्यर्थः।

अत्र च वार्तिके अव्यक्तत्वात्सोमे न व्यक्तचोदनदर्शपूर्णमासातिदेशः सादृश्याभावादिति सोमे दर्शपूर्णमासधर्मानतिदेशसाधकं युक्त्यन्तरमुपन्यस्तम्; तत् अव्यक्तत्वरूपसादृश्याभावे, दर्शपूर्णमासयोः सोमधर्मानतिदेशेऽपि अव्यक्ते सोमे ग्रहणाङ्गभूतदेवताद्रव्यकेऽपि प्रवृत्तत्वादियुक्त्या दर्शपूर्णमासधर्मातिदेशे बाधकाभावात् असाधकमित्युपेक्षितं पूज्यपादैः। न ह्यत्र सादृश्यमूला दर्शपूर्णमासधर्माशङ्का, येन तदभावेन सा निरस्येत। यदि तु प्रवृत्तत्वादिहेतोराकाङ्क्षाभावेऽसाधकत्वात्, आकाङ्क्षायाश्चाम्नातैरेव शान्तेः सत्यामपि वा तस्यां व्यक्तचोदनत्वरूपविशेषसादृश्याभावात् न दर्शपूर्णमासधर्मातिदेश इति सुहृद्भूत्वोपदिश्येत; तर्ह्येकदेवताकत्वौषधद्रव्यकत्वरूपदर्शपूर्णमाससादृश्याभावात् तदनतिदेश इत्येव वक्तुमुचितम्। न हि सौर्यादौ दर्शपूर्णमासधर्मातिदेशे व्यक्तत्वसादृश्यमतिप्रसक्तं नियामकं सूत्रकारादिभिर्दर्शितम्; अनतिप्रसक्तसादृश्यमादायैव तत्तद्धर्मातिदेशस्य साधयिष्यमाणत्वात्। व्यक्तचोदनत्वोपन्यासस्य सोमातिदेशनिराकरणतात्पर्यकत्वस्यैव **'पशौ च लिङ्गदर्शनादि'**त्यग्रिमसूत्रे भाष्यकृता दर्शितत्वादिति। **यदाहांशुरिति।** 'अवधिपुर्वा एतत्सोमं यदभिषुण्वन्ति। यदस्य स्रुचौ बाहू कुर्वन्ति यदाज्यमन्तिकमकार्षुः यदाहांशु'रिति सार्थवादको विधिः। तत्र विधेयस्य सोमे समन्त्रकजलकरणकाप्यायनस्य स्तुत्यर्थं घृतस्रुङ्निन्दाया

1. A दस्य स्व

2. B. आकाङ्क्षाभावेन

लोके नेनीयेरंस्तस्मादुपोष्य प्रयायात्' इत्युपोषणविधिरप्यनतिदेशे उपपद्यते। देशादेव तत्प्राप्तिसिद्धेर्विधिवैयर्थ्यात्। तस्मान्न कस्याप्यतिदेशस्सोमे ॥ २॥

---

(३)—इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात् ॥ ११ ॥ पशौ च लिङ्ग-दर्शनात् ॥ १२ ॥ दैक्षस्य चेतरेषु ॥ १३ ॥ ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥ तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥ अव्यक्तासु तु सोमस्य ॥ १६ ॥ गणेषु द्वादशाहस्य ॥ १७ ॥ गव्यस्य च तदादिषु ॥ १८ ॥ निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥ १९ ॥

सर्यादिषु इष्टिसमाख्यातेषु इष्टिसमाख्याकत्वसामान्यात् निर्वपतिधातुमद्वाक्यसंबन्धित्वात् तद्धितपदविहितदेवताकत्वाच्च दर्शपूर्णमासविकारत्वमेव। अत एव 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति लिङ्गम्। एवं पशावप्यग्नीषोमीये दैक्षसंज्ञके तद्धितपदविहितदेवताकत्वादेव। न च तत्र यूपादिबहुतरधर्मविधानादेव निराकांक्षत्वादनतिदेशः। तथाऽप्या-

---

अपेक्षणात् तदाकाङ्क्षितार्थवादत्वमेव युक्तमिति भावः। विधिवैयर्थ्यादिति। स्वगृहाद्देवयजनं प्रति सोमार्थं गतस्य यजमानस्य तदनुष्ठानानन्तरं पुनर्गृहं प्रति प्रयाणकाले सौमिकमहावेद्यास्तृतबर्हिषो दाह उपोषणं नाम। तस्य प्रतिपत्तिरूपस्य दर्शपूर्णमासातिदेशेन नियमतः प्राप्तेरनुपोषणाशङ्कापूर्वकं तस्य पुनर्विधिवैयर्थ्यादित्यर्थः। अत्र उपोष्येति उष दाहे इत्यस्य ल्यबन्तं रूपम्।

---

इष्टिषु दर्शपूर्णमासयोः।

सूत्रस्थमिष्टीति पदं व्याख्यातुं इष्टिसमाख्यातेष्वित्युक्तम्। सामान्यतः इष्टिषु दर्शपूर्णमासविकारत्वसाधने तद्धितादिभिर्देवतासंबन्धो, निर्वपतिशब्दा औषधद्रव्यकता, कपालवत्तेत्येवं रूपाणि सादृश्यानि प्राचां ग्रन्थेषु उक्तान्यप्यसाधकानि, मन्त्रवर्णकल्प्यदेवतासु आज्यद्रव्यकास्विष्टिष्वसंभावात् इत्यभिप्रेत्य साधारणं सादृश्यमाह—इष्टिसमाख्यातत्वसामान्यादिति। एवञ्च निर्वपतिधातुमद्वाक्यसंबन्धित्वादिसादृश्यं विशेषत्वेनोच्यमानं औषधद्रव्यकत्वकपालवत्तयोरप्युपलक्षणम्। तथाच सामान्यतो यथासंभवं समस्तव्यस्तरूपाद्विशेषतश्च सादृश्यादिष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्यर्थः। अतः परं पशौ च लिङ्गदर्शनादित्यादीनि सूत्राणि तत्तद्विशेषातिदेशप्रपञ्चनमात्रपराणीतिपूर्वोत्तरपक्षप्रदर्शनतात्पर्याभावात् तान्यनुल्लिख्यैव तत्र तत्र सिद्धान्तमात्रमेव सङ्क्षेपेण दर्शयति—एवं पशावपीति। देवताकत्वादेवेति। निर्वपतिपदोपात्तत्वेष्टित्वौषध-

वाहनासादनकुम्भ्यादिबहुतरदृष्टार्थधर्माम्नानेन साकांक्षत्वात्। किञ्च क्रयसन्निधावाम्नातो निर्धर्मको दैक्षः प्रथमं तावदतिदेशं कल्पयत्येव। ततश्च प्राकृतैर्धर्मैर्निराकांक्षस्य 'स एष औपसथ्येऽहनि' इत्यनेन औपसथ्येऽहन्यनुष्ठानेऽवगतेऽनुष्ठानसादेश्यादुपहोमन्यायेन यूपादिग्रहणेऽपि नातिदेशकल्पनाप्रतिबन्धः। 'एकादश प्रयाजान् यजति जौहवमाघारमाघार्य पशुमनक्ति' इत्यादि लिङ्गमप्येवमुपपद्यते। अन्येषु तु पशुषु सवनीयादिषु दैक्षस्यातिदेशः आलभतिचोदनावत्त्वपशुद्रव्यकत्वाद्यधिकतरसादृश्याद्यापाद्याधिकधर्मलाभाच्च। अत एव 'वपया प्रातस्सवने चरन्ति, औदुम्बरो यूपः' इत्यादि लिङ्गम्॥

ऐकादशिनेषु तु सुत्यादिनस्थत्वस्याधिक्यात् प्रचारविप्रकर्षादिरूपधर्माधिक्याच्च सवनीयपशुविकारत्वम्। 'अग्निष्ठात् द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति' इत्येतदपि द्वैरशन्यरूपसवनीयधर्मानुवादकमुपपद्यते। न ह्ययं विधिः; 'अग्निष्ठाद्द्वेद्वे' इत्यस्याविधेयत्वात्, विध्यन्तरैकवाक्यत्वाद्वा लिङ्गत्वोपपत्तेः। पशुगणेषु तु

---

द्रव्यकत्वकपालवत्त्वसादृश्याभावेऽपि तद्धितपदविहितदेवताकत्वान्न सोमविकारत्वं, अपि तु दर्शपूर्णमासविकारत्वमेवेत्यर्थः। तत्रापि नाग्नेयादिविकृतित्वम्, अपि तु पयोयागविकृतित्वमेवेत्यत्रैव विशेषो वक्ष्यते। **औपवसथ्येऽहन्यनुष्ठान इति।** औपवसथ्याहरूपकालस्य साङ्गप्रयोगान्वयित्वात् साङ्गस्यैव सतः पशोरनुष्ठानकालविधानं युक्तमिति कालविधानात्पूर्वं पशुयागस्य साङ्गत्वमतिदेशेनैव भवतीत्यावश्यकोऽतिदेश इत्यर्थः। **सवनीयादिष्विति।** आदिपदेन निरूढपशुसौर्यादीनां ग्रहणम्। **अत एव वपयेति।** अतिदेशप्राप्तानां वपायागादीनां प्रातस्सवनादिभेदेन सवनीये प्रचारविधानं यत् तत् इतरानतिदेशे दैक्षातिदेशे च ज्ञापकमित्यर्थः। **प्रचारविप्रकर्षेति।** वपया प्रातस्सवन इति विहितेति शेषः। **ऐकादशिनेष्विति।** "आग्नेयः कृष्णग्रीवः सारस्वती मेषी, बभ्रुः सौम्य," इत्यादिना एकादश पशुयागा विहिताः। ते ऐकादशिनपदस्यार्थः। **द्वैरशन्यरूपेति।** सवनीये हि अग्नीषोमीयातिदेशप्राप्तयूपपरिव्याणापेक्षया 'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इति वचनेन त्रिवृद्गुणकरशनाकरणकं परिव्याणान्तरं विहितमिति परिव्याणद्वयानुरोधेन द्वैरशन्यमस्ति। तदेवैकादशिनेष्वनूदितमिति भवति सवनीयातिदेशे ज्ञापकमित्यर्थः। **अग्निष्ठादित्यस्येति।** प्रकृतावुत्तरवेदेः पूर्वभागे एक एव यूपः, ऐकादशिन्यान्तु प्राकृतयूपस्थाने एको यूपः तद्दक्षिणोत्तरयोः क्रमेण पञ्चपञ्च यूपाः तत्र मध्यमो यूपः अग्निष्ठपदेनोच्यते। तत्रैव च यूपे पूर्वदिवसे द्वाविंशतिरशना अधिवासिताः। तासां मध्ये द्वे द्वे रशने अग्निष्ठाद्यूपाद्गृहीत्वा इत्यर्थेन यूपापादानकत्वमात्रविधाने लाघवात् उभयविधाने वाक्यभेदापत्तेश्च द्वैरशन्यानुवाद एव युक्त इत्यर्थः। **पशुगणेष्विति।** ते च वसन्ते ललामांस्त्रीन् वृषभानालभेत,

---

1 B एकाद

सौत्येष्वसौत्येषु वा पशुगणान्तर्गतत्वसादृश्याद्गणधर्मादिलाभाच्च ऐकादशिनविकारत्वम्। अत एवासौत्येषु प्रचारविप्रकर्षाद्यप्राप्तावपि गणधर्मातिदेशप्राप्तिर्न विरुद्धा।

अत एव सौत्रामण्यां प्रतिपशु वैकल्पिके यूपानेकत्वे प्राप्ते तत्प्रतिषिध्य यूपैकत्वनियमविधिः 'एकयूप आलभेत' इत्ययमुपपद्यते। उद्भिदादिषु तु अव्यक्तत्वसादृश्याज्ज्योतिष्टोमविकारत्वम्। अव्यक्तत्वं च स्वाङ्गतयाऽविहितदेवताकत्वम्। ग्रहणाङ्गभूताया ऐन्द्रवायवादिदेवतायाः प्रसङ्गेन सोमयागोपकारकत्वेऽपि ज्योतिष्टोमाङ्गत्वाभावात्। अतश्चाव्यक्तत्वेन तदतिदेशे सिद्धे आतिदेशिकग्रहणाद्यङ्गभूतदेवताया उद्भिदाद्युपकारकत्वकल्पनेन रूपलाभस्सुलभः। अत एव श्येने दीक्षणीयादिप्राप्तौ 'दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा चतुर्विंशतिमानं प्रायणीयायाम्' इति दक्षिणादानविधिस्सङ्गच्छते। एवं गवामयनादिसत्रेषु द्विरात्राद्यहीनेषु च सुत्यागणेषु द्वादशाहविकारत्वम्। अहोरात्रसाध्यकर्मवाचिपदवाच्यत्वसामान्यात्। अत्र हि रात्रिशब्दोऽहश्शब्दश्चाहोरात्रसाध्यकर्मविशेषपरः। सुत्यागणान्तर्गतत्वसादृश्याच्च द्वादशाहविकारत्वम्।

अत एव गवामयनादौ 'द्वाभ्यां लोमावद्यति' इत्यादिना द्वादशोपसत्त्वानुवादो विध्यन्तरस्तुत्यर्थस्सङ्गच्छते। स्थिते च द्वादशाहविकारत्वे प्रथमोत्तमौ वर्जयित्वा दशाहस्यैव प्रवृत्तिरिति वक्ष्यते। तत्रापि सत्रेषु सत्रात्मकस्याहीनेषु अहीनात्मकस्य द्वादशाहस्यावान्तरसादृश्यादित्यपि वक्ष्यते। सत्रेष्वपि यानि संवत्सरसाध्यानि सत्राणि तेषु संवत्सरसत्रत्वसामान्यादयनशब्दवाच्यत्वसामान्याच्च संवत्सरनियमादिधर्मलाभाय गवामयनस्य विध्यन्तः। अत एव गवामयनान्तर्गतमाहाव्रतिकं 'पत्नय उपगायन्ति' इति धर्मं विध्यन्तरस्तुत्यर्थं संवत्सरसत्रान्तरेऽनुवदति। ये तु 'साहस्रास्सावस्काः' इत्येवं एकसंज्ञायोगिनो यागास्ते सञ्ज्ञातरूपनिययोगात्त्रिकायिन उच्यन्ते। तेषां य एवैको धर्मवान्

---

मैत्रं श्वेतमालभेत, वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकाम इत्याद्याः। प्रचारविप्रकर्षाद्यप्राप्तावपीति। असौत्येषु तेषु प्रातस्सवनादिसवनाभावेन वपया प्रातस्सवनेन प्रचरन्तीत्यादि प्रचारविप्रकर्षाद्यप्राप्तावपीत्यर्थः। तत्प्रतिषिध्येति। सौत्रामण्यां त्रयः पशुयागाः। तत्र 'यत् त्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्। भ्रातृव्यमस्य जनयेत्। एकयूप आलभते'ति यूपत्रित्वप्रतिषेधपूर्वकैकयूपविधानात् प्रतिषेधस्य प्राप्तिपूर्वकत्वात् ऐकादशिनेषु प्रतिपशु यूपभेदसत्त्वेन तदतिदेशादेव यूपत्रित्वप्राप्तिर्वक्तव्येति यूपत्रित्वप्रतिषेधः [1]ऐकादशिनविकारत्वे लिङ्गं अग्नीषोमीये एकयूपस्यैव सत्त्वेनानुपपन्नमित्यर्थः। 'द्वादशाहीनस्ये'त्यस्य त्रित्वविध्यर्थवादत्वात् द्वादशाहप्रकरणपठितद्वादशोपसत्त्वविधेः सत्राहीनोभयात्मकद्वादशाहे प्रवृत्तत्वात् सत्रे तदतिदेशप्राप्तद्वादशोपसत्त्वानुवादलिङ्गं दर्शयति—अत एवेति। वक्ष्यत इति।

---

1. A. एकादशिन

तस्याधर्मकेषु प्रवृत्तिः एकसंज्ञायोगित्वसादृश्यात्। न चात्र नाम्नैवातिदेशः, सर्वेष्वपि मुख्यत्वेन तदसम्भवात्। एकत्र मुख्यस्य हि नाम्नोऽपरत्र गौणत्वे नामातिदेशः, न तु सर्वत्र प्रवृत्तिनिमित्तसत्त्वेन मुख्यत्वेऽपि। न चैवं प्रायणीयस्थलेऽप्येकसंज्ञायोगादतिदेशापत्तिः। तस्य प्राथम्यसिद्ध्यर्थत्वेन द्वादशाहिकद्वितीयाहर्धर्मदर्शनेन चानतिदेशकत्वात्। अत एव प्रयोजनान्तररहित एवैकसंज्ञायोगोऽतिदेशसाध्यः। अत्र च य एव धर्मवान् तस्याधर्मकेषु प्रवृत्तिः। स पूर्वो वा उत्तरो वा युक्तिसाम्यात्। प्रायशः पूर्व एव तादृश इति सूत्रादौ तथोक्तिः।

अत एव पूर्वपूर्वस्य किञ्चित्किञ्चिदधिकधर्मवत्त्वे उत्तरोत्तरेषु प्रवृत्तिः। अत एव पूर्वस्मिन् साहस्रे सहस्रं विधायोत्तरस्मिन् 'यावदस्य सहस्रस्य उत्तरा गौस्समाहिता भवति तावदस्माल्लोकादसौ लोकः' इति सहस्रं दक्षिणां दर्शयति। साद्यस्के च पूर्वस्मिन् साण्डं सोमक्रयणं विधायोत्तरस्मिंस्तत्प्राप्तौ 'स्त्री गौस्सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धिता' [1]इत्यनेन स्त्रियो विधानं स्पर्धितव्यावृत्त्यनुवादश्च सङ्गच्छते ॥ ३ ॥

---

अत्रैव द्वितीयपाद इति शेषः। सूत्रादाविति। निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृतिः स्यात् इत्येतदधिकरणसूत्रभाष्यादावित्यर्थः। साद्यस्केति। 'त्रिवत्सः साण्डः सोमक्रयणः स्पर्धमानाना'मित्याम्नाय स्त्रीगौर्विहिता। सा न पूर्वसाद्यस्के, साण्डावरोधात्। अतस्साण्डबाधाय तद्विधानमुत्तरत्र पूर्वसाद्यस्कातिदेशं विनाऽनुपपन्नम्। तथा ज्योतिष्टोमातिदेशे द्रव्यान्तरसत्त्वेन 'स्पर्धा व्यावृत्ते'ति स्पर्धाव्यावृत्त्यनुवादश्चानुपपन्नः स्यादित्यर्थः। यदा तु दाशमिकत्रिवत्साधिकरणभाष्यदर्शितरीत्या त्रिवत्सवत् ज्योतिष्टोमातिदेशप्राप्तक्रयसाधनद्रव्यान्तरबाधकत्वमेवेति विभाव्यते तदा नैतल्लिङ्गमिति ध्येयम्।

---

1. प्रकृतौ क्रयसन्निधौ बहूनां द्रव्याणां पठितत्वेन कस्य साधनत्वमिति स्पर्धा, अत्र तु एकस्यैव साधनत्वान्न सेत्यर्थः

(४)—कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥ प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥ अश्रुतित्वाच्च ॥ २२ ॥

**एवं प्रकृतिविशेषे निरूपिते फलनियमकर्तृसमुदायांशे तेषां न प्रकृतित्वम्। यतस्तेषामनतिदेशः। तथा हि—प्रकृतिफलं तावत् प्रकृतेरनतिदेशादेव नातिदिश्यते। न हि प्रकृतिरप्यतिदेष्टुं शक्या, विकृतिभावनाया विकृतिकरणेनैव निराकांक्षत्वात्। न च सौर्यादिवाक्ये द्रव्यदेवतामात्रविशिष्टभावनाविधौ कृते सादृश्येन प्राकृतभावनोपस्थितौ तत्सम्बन्धिकरणस्यैव प्रयाजादिवदतिदेशोपपत्तिरिति वाच्यं, अनुमितिसामग्र्या बलवत्त्वेन सूर्यादिदेवतया यागानुमानस्याप्यावश्यकतया शाब्दबोधे विजातीययागस्यापि भावनाविशेषणतया विधेरावश्यकत्वेन करणाकांक्षाऽभावादतिदेशानुपपत्तेः। न च तथाऽपि तद्वैजात्ये आग्नेयत्वभेदकल्पने गौरवात्तद्यागे आग्नेयत्वापत्तिः। विनिगमनाविरहसहकृत-**

———

कर्मणस्त्वप्रवृत्तित्वात् ( ८-१-४-२० )

अत्र तन्त्ररत्नकृता यत्र फलश्रवणं नास्ति तत्र विधित एवान्यनिरपेक्षात् स्वर्गफलत्वावगमात् न यथाकथञ्चिच्चोदनोपस्था[1]पनद्वारेण फलावगतिर्युक्ता। इतिकर्तव्यता तु विधिना न विशेषरूपेणाक्षेप्तुं शक्येति युक्ताऽतिदेशापेक्षा। तस्मात्सैवातिदिश्यते। यदि फलमपीतिकर्तव्यतान्तर्भूतं स्यात् ततोऽतिदिश्येत नत्वेव[2]मस्ति। तस्मान्न फलस्यातिदेश इत्युक्तम्; तदयुक्तम्। विधिना समीहितसाधनत्वाक्षेपबलात् फलसामान्यस्यैव इतिकर्तव्यतासामान्यस्येव बोधनस्य विश्वजिदधिकरणे स्थापितत्वेन तद्विशेषाकाङ्क्षाया विधिमात्रेणानुपशमात्। अत एव 'सस्वर्गः स्यात्' ( जै-सू-४-३-५-१५. ) इति न्यायान्तरेणैव फलविशेषप्रतीतिः साधितेति यावन्मन्थरप्रवृत्तिकान्यायात् तद्विशेषप्रतीतिमालम्ब्य फलत्वेन तद्विशेषान्वयो वक्तव्यः, तावदितराङ्गान्वयार्थमवश्यकल्पनीयेनातिदेशेनैव प्राकृतफलविषयान्वय एवापद्येतेति तदतिदेशो दुर्निवार एव। अपि चैतादृशविधिवाक्यशेषभूतेन प्रकृतिवच्छब्देन विधिसहायेन प्राकृतफलविशेषस्यान्वयेनाङ्क्षाशान्तेः न मन्थरप्रवृत्तिकन्यायादिलभ्यस्वर्गादेस्ततः प्रागन्वयेन नैराकाङ्क्ष्यं लभ्यते। अतस्तन्त्ररत्नोक्तरीत्या फलातिदेशनिरासासंभवात् यद्विश्वजिन्न्यायात्प्रागेवातिदेशवचनात् प्राकृतफलविशेषान्वयेन तदतिदेशसाधनं तदेव विकल्प्य निरस्यति—स हीति। अत्र तन्त्ररत्ने शास्त्रदीपिकायाञ्च प्राकृतं फलं विकृतावतिदेशेन विधीयमानं अङ्गमेव स्यात् न फलम्, तस्य

1. A. पस्थान
2. A. त्वेतदस्ति

विधिपुनश्श्रवणेन वैजात्यानां भेदसिद्धेः। अन्यथा आग्नेयेऽपि सौर्यत्वापत्तौ सौर्यादीनां साङ्कर्यापत्तेश्च। अतस्सौर्यादीनां भिन्नानामेव करणानां लाभान्न तेषामतिदेश इति सिद्धम्। अतश्च तदभावात् न तज्जन्यफलातिदेशः। न च तदभावेऽप्यङ्गवत् विकृतेः फलाकांक्षाऽस्ति। ब्रह्मवर्चसादिश्रुतफलेनैव निराकांक्षत्वात्।

यत्रापि विश्वजिदादौ न फलश्रवणं, तत्रापि न तदतिदेशः स हि अङ्गातिदेशकेन प्रकृतिवच्छब्देन भवेत् भिन्नेन वा? नाद्यः—एकेनैव 'प्रकृतिवद्विकृतिः कार्या' इति वाक्येन विकृत्युद्देशेनाङ्गविधानं फलोद्देशेन विकृतिविधानमिति वैरूप्यापत्तेः। यद्यपि च प्रकृतिवच्छब्दमात्रस्य विकृतिविधिवाक्यशेषत्वकल्पनयांऽशत्रयविशिष्टविकृतिभावनाविधानेनावैरूप्यमित्याशङ्क्येत; तथाऽप्येक[1] स्यैव प्रकृतिवच्छब्दस्याङ्गांशे विधेयसमर्पकत्वं फलांशे उद्देश्यसमर्पकत्वमिति वैरूप्यापत्तिस्तदवस्थैव। नान्त्यः—स्वविध्युपस्थापितविश्वजिन्न्यायेनैव फलकल्पनोपपत्तावतिदेशकल्पने प्रमाणाभावात्। अतो न फलस्यातिदेशः।

नियमो निमित्तम्। तस्य विकृतिभावनयाऽनपेक्षितत्वादेवानतिदेशः। न हि निमित्तमङ्गं येन प्रयाजादिवदतिदेशो भवेत् प्रमाणाभावात् कारकत्वाभावाच्च न तस्या-

---

सर्वतः प्रधानत्वात्; गुणभूतस्यैवेतिकर्तव्यतात्वेनातिदेशात्। अथ प्राकृतमेव यथावस्थितं फलमुद्दिश्य विकृतिर्विधीयतामिति चेत्; न तस्य विकृतिः साधनं भवितुमर्हति। प्रकृत्यैव स्ववाक्यगतस्यावरुद्धत्वात्। अतो न विकृतेः प्रकृतिफलसंबन्धः इत्युक्तम्। तत्र फलोद्देशेन करणतया विकृतेर्विधानं स्ववाक्यगतकरणावरुद्धत्वात् यथा न संभवति, तथा समिदादिवाक्यानामपि प्रधानवाक्यैकवाक्यतयैव स्वार्थबोधनात् स्ववाक्योपस्थितप्रकृत्यन्वयेन निराकाङ्क्षाणामङ्गानां प्रकृत्यवरुद्धानां न पुनर्विकृत्यन्वयः संभवतीति तुल्यमेव। यदि तु अतिदेशवचनरूपप्रमाणेनैव तेषां प्रकृत्यन्वयवद्विकृत्यन्वयोऽपि बोध्यत इत्युच्येत तर्हि तेनैव प्रमाणेन प्राकृत एव फले विकृतेर्नाशक्यं विधानं करणत्वेनेत्यतः प्राकृतकरणावरुद्धत्वात् प्राकृतफलोद्देशेन विकृतिविधानं संभवतीत्ययुक्तं मत्वाऽतिदेशवाक्ये वैरूप्यापत्तिमेव मुख्यां युक्तिं दर्शयति—**एकेनैवेति**। अत्र प्राचां ग्रन्थेषु सूत्रस्थनियमपदेन यावज्जीविकाभ्यासरूपो नियमो गृह्यते इत्यभिप्रेत्य तस्य कर्तृधर्मत्वेन पुरुषार्थत्वात् कर्मधर्मत्वाभावेनानितिकर्तव्यतात्वात् नातिदेश इत्युक्तम्; तत् नैमित्तिकानां निमित्ताधीनानुष्ठानत्वात् निमित्तकस्यैवातिदेशे सति तदतिदेशस्य निवारयितुमशक्यत्वादयुक्तम्। अतो निमित्तानतिदेश एव तत्सिद्ध्यर्थं साधनीय इत्यभिप्रेत्य सौत्रं नियमपदं निमित्तपरत्वेनैव व्याचष्टे—**नियमो निमित्तमिति**। एवं निमित्तानतिदेशेन विकृतेर्नैमित्तिकत्वं परिहृत्य

---

1. B एक प्रकृति

ङ्गत्वम्। एवं सत्यपि यदि[1] प्रकृतिरतिदिश्येत ततो भेदनवद्विकृतावेव निमित्तसन्निपाते नैमित्तिकं विकृत्यनुष्ठानं प्रसज्येत भेदनहोमानुष्ठानवत्, न त्वेतदस्ति। सर्वथा न निमित्तातिदेशो नैमित्तिकस्य वा विकृतेः।

कर्ता अधिकारी। तस्यापि प्रकृतावनङ्गत्वात्। अतश्च तद्विशेषणानां स्वर्गकामत्वाहिताग्नित्वादीनामनतिदेशः। अत एव स्थपतीष्ट्यादावाहिताग्नित्वस्यानतिदेशः। राजत्वादेस्तु कर्तृविशेषणत्वात् तस्य च प्रकृतावङ्गत्वात् विकृतावतिदेश इष्ट एव। न हि तत् प्रकृतावधिकारिविशेषणम्। अधिकारिणश्शब्दविधिबोध्यत्वपक्षे[2] उद्देश्यविशेषणस्य राजत्वादेरविवक्षापत्तेः।

वस्तुतस्तु—प्रथमापेक्षितत्वेन स्वाराज्यकामपदस्य फलपरत्वादधिकारिपरत्वानुपपत्तेरधिकारी आर्थिकविधिबोध्य एवेति तत्र न शब्दस्य राजत्वादेरन्वयसम्भव इति राजत्वादेः कर्तृविशेषणत्वमेव। अत एवाहिताग्नित्वादेर्यौक्तिकस्यार्थिकेऽधिकारिविधौ विशेषणत्वकल्पनम्। याज्ञिकास्तु राजत्वादेरधिकारिविशेषणत्वमङ्गीकृत्यानतिदेशं मन्यन्ते।

---

पौर्णमास्यमावास्यावच्छिन्नजीवनरूपनिमित्तस्य विकृत्यन्तःपाते सति प्रकृतेर्विकृत्यङ्गत्वेनापि न भवत्यनुष्ठानमित्याह—**एवं सत्यपीति**। विकृतिभावनायाः प्रकृतेरङ्गत्वेनापेक्षाभावात् निमित्ते सत्यपि न तदतिदेश इत्यर्थः। सौत्रं कर्तृपदमधिकारिपर[3]त्वेन व्याचष्टे—**कर्तेति**। **प्रकृतावनङ्गत्वादिति**। फलेन व्याप्यमानो यः कर्ता स फलभोक्तृत्वेन रूपेण प्रधानमेव भवतीत्यनङ्गत्वादनतिदेश इत्यर्थः। अत्र च फलस्य प्रधानत्वात् अनतिदेशकथनेन तत्फलभोक्तुरनतिदेशः सिद्ध एवेत्यधिकार्यनतिदेशसाधनं पृथक् व्यर्थं सत् तद्विशेषणानतिदेशसाधनतात्पर्यकतयैव नेयेत्यभिप्रेत्योपसंहरति—**अतश्च तद्विशेषणानामिति**। अथवा पृथगधिकार्यनतिदेशसाधकं व्यतिरेकविधया कर्त्रंशेन कर्तुरतिदेशकथनतात्पर्यकम्। यद्यपि च तन्त्ररत्नोक्तरीत्या यत्र बहवः कर्तारः श्रूयन्ते प्रत्यक्षेणैव सत्रादिषु तत्रासौ एकसङ्ख्यः प्राकृतः कर्ताऽऽनुमानिको नातिदिश्यते। यत्राप्येकसङ्ख्यः श्रुतः तत्राप्यनुवादोऽतिदेश इति प्रयोजनात् गुणभूतस्यापि कर्तुरनतिदेशस्तथापि तद्विशेषणातिदेशेन भवत्येव कर्त्रतिदेशानुवादः प्रयोजनवानित्यभिप्रेत्याह-**राजत्वादेस्त्विति**। **कर्तृविशेषणत्वादिति**। यच्च दृष्टेनैव द्वारेण कर्तृत्वांशोपयोगि तत् कर्तृविशेषणम्। यच्च विना निर्वहत्येव कर्तृत्वं तत् कर्तृत्वांशेनोपयोगाभावात् फलभोक्तृत्व एवोपयोगीत्यधिकारिविशेषणमित्यनयोर्भेदो

---

1. A. तिवदिति स्यात्
2. B. धितत्व
3. B. अधिकार

समुदायः अग्नीषोमीयादिप्रधानान्तरसाहित्यम्। तस्य प्रकृतावङ्गत्वेऽपि परप्रयुक्ताग्नीषोमीयादिप्रतियोगिकत्वात्तदभावे विकृतौ नातिदेशः ॥ ४ ॥

---

## (५)—गुणकामेष्वाश्रितत्वात्प्रवृत्तिस्स्यात् ॥ २३ ॥ निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ अपि वाऽतद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिस्स्यात् ॥२५॥

**ये प्रकृतौ गोदोहनादिगुणजन्याः कामास्तेषामनङ्गत्वादनुपकारकत्वाच्च यद्यपि नातिदेशः, तथाऽपि तज्जनकीभूतगोदोहनादिगुणानां** प्रणयनोपकारकत्वेनातिदेशे **विकृतावपि कामनायां सत्यां** फलोत्पत्तौ न **किञ्चिद्बाधकम्। न चाङ्गमेव विकृतावतिदेष्टव्यमिति नियमे प्रमाणमस्ति, करणोपकारसाकांक्षायां विकृतिभावनायां तज्जनकापेक्षायामुपकारकमात्रस्यैवातिदेशात्। न हि विकृतिभावनाऽङ्गमपेक्षते प्रमाणाभावात्।** अतः खादिरत्वादिवदेव **गोदोहनादीनामप्यतिदेशः फलोत्पत्तिश्चेति प्राप्ते —**

---

द्रष्टव्यः। सुगममन्यत्। **परप्रयुक्तेति**। अयमर्थः। प्रकृतौ परस्परसाहित्यं गुणभूतमपि करणान्तरपरिच्छेदद्वारेणैवोपकृतवदिति विकृतौ करणान्तरस्य परिच्छेद्यस्य अभावात् अर्थलोपादेव तस्यानतिदेशः। न च परिच्छेद्यमस्तीति परिच्छेदकानुष्ठानं सम्भवति। तदनुष्ठानस्य फलप्रयुक्तत्वेन परप्रयुक्तानुष्ठानोपजीविकरणपरिच्छेदकत्वेनैवोपपत्तौ स्वातन्त्र्येण तदनुष्ठानानाक्षेपकत्वात्। यत्राप्यध्वरकल्पादौ परिच्छेद्यस्य करणान्तरस्य बहुत्वात् संभवः तत्रापि प्रकृतिवत् प्रत्यक्षसमुदायसद्भावात् न प्राकृतस्यातिदेश इति।

---

**गुणकामेष्वाश्रितत्वात्।**

**प्रणयनोपकारकत्वेनातिदेश इति**। प्रणयनस्य तावद्विकृतावतिदेशे निर्विवादं तत्साधनत्वात् यथैव चमसस्यातिदेशः, तथैव साधनत्वाविशेषात् प्रणयनानङ्गभूतस्यापि गोदोहनादेः प्रणयनार्थमतिदेशः स्यादेवेति गोदोहनस्य पशुफलसाधनस्य विकृतौ सद्भावात् तज्जन्यं फलमपि भवत्येवेत्यर्थः। **फलोत्पत्ताविति**। एतेन गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यादिति सूत्रभाष्यादौ फलस्य प्रवृत्तिरिति प्रवृत्तिव्यवहारो नातिदेशात् फलप्रवृत्तिरित्येवंपरः; किन्तु फलोत्पत्तिपरः इत्यर्थः सूचितः। अत एव पूर्वपक्षान्ते "अतः खादिरत्वादिवदेव गोदोहनादीनामप्यतिदेशः फलोत्पत्तिश्चे"ति स्पष्टमुपसंहृतम्। **खादिरत्वादिवदेवेति**। प्रकृतौ खादिरत्वस्य फलार्थत्वस्येव क्रत्वङ्गत्वस्यापि सत्वात् तस्याङ्गत्वेन विकृतावतिदेशेन प्राप्तौ सत्यां यूपस्याप्याश्रयस्य सत्त्वात्

सत्यं, विकृतिभावनोपकारकमेवापेक्षते। तथाऽपि प्राकृतस्याप्रकृतिचोदना तदर्थ एव वा प्रथमत उपतिष्ठते पश्चाच्च तदन्वितमुपकारकम्। तदत्र चोदनार्थभूतायां प्रकृतिभावनायां यदन्वितं तदतिदिश्यते अनन्वितस्योपस्थित्यभावेनातिदेशायोगात्। अन्वितं चापशुकामप्रयोगे चमसविशिष्टं प्रणयनं। पशुकामप्रयोगे प्रणयनमात्रम्। तत्प्रयोगे प्रणयनस्य परप्रयुक्तगोदोहनोपजीवित्वेन द्रव्यानपेक्षत्वेन स्वरूपेणैव प्रधानभावनान्वयात्। अङ्गमेव प्रधानभावनायामन्वेतीत्यभिप्रायेण तस्यैवातिदेश इति प्रवादः। अतश्च फलार्थगुणानामनतिदेशः। न चातिदेशाभावेऽप्याश्रयस्य प्रणयनस्य विकृतावपि सत्त्वात् तत्रैव कामनायां सत्यां गोदोहनानुष्ठानोपपत्तिः। प्रकरणपाठवैयर्थ्यापत्तेर्गुणफलसम्बन्धविधेराश्रयप्रयोजकत्वशक्तिकल्पनागौरवप्रसङ्गाच्च प्रणयनमात्रस्याश्रयत्वानुपपत्तेरवश्यं दर्शपूर्णमासापूर्वसाधनीभूतप्रणयनत्वेनैवाश्रयत्वात् विकृतौ तदभावेन गोदोहनानुष्ठानानुपपत्तेः। अत एव खादिरत्वादेस्संयोगपृथक्त्वन्यायेन क्रत्वर्थस्यापि सत्त्वादतिदेशोपपत्तावप्यमीषोमीयापूर्वसाधनीभूतयूपाभावान्न तेन वीर्यादिफलोत्पत्तिः।

भाष्यकारस्य तु एतादृशविषये फलोत्पत्तिं मन्यमानस्याभिप्रायं न विद्मः। यत्र तु नाश्रयापेक्षा विजातीयप्रस्तरप्रहरणत्वादिनैव चायुरादिफलं प्रति साधनत्वं, आयुरादिप्रकाशनमन्त्रस्य च स्वप्रकाश्यफलजनकत्वेन प्रहरणाङ्गत्वं, तत्र भवत्येव विकृतावपि तस्मात् फलोत्पत्तिः॥ ५॥

---

सिद्धान्ते भवत्येव भाष्यकारमते तस्मात् फलोत्पत्तिः। तद्वत् केवलफलार्थगोदोहनादपीत्यर्थः। अतश्च फलार्थगुणानमिति। प्रकृतिभावनायामित्थमित्याकाङ्क्षापूरकत्वेनानन्वितानां प्रसक्ततः प्रकृतिभावनान्वितप्रणयनसाधनतामुपगतानां नातिदेशो विकृतावित्यर्थः। गोदोहनानुष्ठानानुपपत्तेरिति। एतच्च चमसबाधकृतवैगुण्यापत्तेरप्युपलक्षणम्। तथाच स्वेच्छामात्रेण गोदोहनानुष्ठाने शास्त्रप्राप्तचमसबाधकृतवैगुण्यापत्तेरपि न तदनुष्ठानमिति भावः। यस्य तु न स्वेच्छामात्रेणानुष्ठानं, अपि तु शास्त्रात्, तत्र तदनुष्ठाने शास्त्रप्राप्तस्य बाधकृतवैगुण्याभावात् भवत्येवातिदेशेन तदनुष्ठानमित्याह-अत एवेति। अत्र भाष्यकारेण खादिरत्वस्य गोदोहनेन वैलक्षण्योपपादने सूत्रव्याख्याने 'खादिरस्य संयोगपृथक्त्वन्यायेन क्रत्वर्थत्वात् फलादिवत् प्रवृत्तिर्भवत्येव। तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते। खादिरेण हि स सिद्ध्यति। स च खादिरोऽस्ति। तस्मात् कामं साधयिष्यती'त्येवं खादिरप्राप्तौ तज्जन्यफलोत्पत्तिरुक्ता। तां वार्तिकदर्शितयुक्त्या दूषयति—अग्नीषोमीयापूर्वेति। स्पष्टमन्यत्।

---

## (६)—एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

सौर्यादिरौषधद्रव्यकत्वैकदेवतात्वाभ्यामाग्नेयविकार इति वक्ष्यते। आग्नेयवाक्ये चाग्नेयद्वयं पौर्णमास्यमावास्याकालमित्युक्तं कौस्तुभे पौर्णमास्यधिकरणे। सौर्यश्च विनिगमनाविरहात् उभयविकार इत्यप्यविवादम्। सौर्ये च 'य इष्ट्या' इति वचनाद्वैकल्पिकः पौर्णमास्यमावास्याकालः। तदत्राग्नेययोः किं पौर्णमासीकालीनसौर्यप्रयोगे पौर्णमासीकालीनाग्नेयस्य, अमावास्याकालीनसौर्यप्रयोगे चामावास्याकालीनस्य व्यवस्थितं प्रकृतित्वं उताव्यवस्थितं विकल्पेनेति चिन्तायाम्—

तत्तत्कालकत्वरूपावान्तरसादृश्याद्व्यवस्थितम्। एवं च 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्याम्' इति विहिततत्तदङ्गमन्त्रयोरपि व्यवस्था। अत्र हि पौर्णमास्यादिसंज्ञकप्रधानसम्बन्धिहविरेव पौर्णमास्यादिपदेन लक्षयित्वा तदुद्देशेन मन्त्रमात्रविधिः। अभिमर्शनं तु 'आसन्नानि हवींष्यभिमृशति' इति वाक्यान्तरप्राप्तमाश्रयत्वेनानूद्यते इति साधितं तृतीये। अतश्च मन्त्रयोरपि व्यवस्थोपपत्तेः प्रकृतित्वव्यवस्थेति प्राप्ते—

---

### एककर्मणि विकल्पः।

अत्र च "विशेषातिदेशप्रसङ्गात् अतिदिष्टयोरभिमर्शनमन्त्रयोः सौर्यादौ व्यवस्था किंवा विकल्प इति चिन्त्यते" इति तन्त्ररत्नकृता प्रासङ्गिकी सङ्गतिरुक्ता। तदपेक्षया प्रकृतावाग्नेयभेदाङ्गीकारेण द्वयोराग्नेययोर्मध्ये सौर्ये कस्य[1] विशेषातिदेश इत्येवं साक्षादेवातिदेशविचारो युक्त इत्यभिप्रेत्याधिकरणमारभते—सौर्यादिरिति। प्राचीनैर्यौ मन्त्रयोर्व्यवस्थाविकल्पौ साक्षादधिकरणविचारविषयत्वेन दर्शितौ तौ अस्योक्तविचारस्य फलीभूताविति। एवञ्चेति। अत्र चतुर्होतृपञ्चहोतृमन्त्रविधिपरे वचनद्वये पौर्णमास्यादिपदयोः शक्त्या कालवचनयोरपि प्रकरणवशात् कर्मपरत्वमङ्गीकृत्य सिद्धान्ते तन्त्ररत्नकृता द्विधा वाक्यार्थो दर्शितः। द्वितीया प्रधानत्वान्मुख्यार्था। प्रातिपदिकं लक्षणया हविः प्रतिपादयति—पौर्णमासीसंबन्धिहविरभिमृशेत् इति। अथवा अधिकारलब्धं हविरङ्गीकृत्य प्रातिपदिकं मुख्यत्वाद्यथाश्रुति गृहीत्वा द्वितीया सप्तम्यर्थे व्याख्येया पौर्णमास्यां यानि हवींषि तानि चतुर्होत्राऽभिमृशेदिति। तत्र द्वितीयवाक्यार्थोऽयुक्त इति दर्शयितुं तृतीयसप्तमपादे 'तथाभिधानेन (पू. मी. ३–७–९) इत्यधिकरणे स्वयं युक्तत्वेन दर्शितप्रथमवाक्यार्थमेव स्मारयति—अत्र हीति।

अयमर्थः। पौर्णमास्यादिपदमिह मुख्यत्वाद्यथाश्रुतमेवेत्युक्तौ हि कालपरमुत हविःपर्यन्तलक्षणामपहाय कर्मपर्यन्तलक्षणया कर्ममात्रपरत्वेन यथाश्रुतमिति। नाद्यः। द्वितीयायाः सप्तम्यर्थ-

---

1 B. कल्पवि

भावनाया विजातीययागत्वावच्छिन्नस्य वाऽनुग्राहकरूपेति कर्तव्यताकांक्षा न तु प्रयोगविशेषस्य। अतश्चैकजातीयस्य सौर्यस्य वैकल्पिकोभयकालकत्वाद्वैकल्पिकोभयविकारत्वावगतेरव्यवस्थयैव तत्तदाग्नेयप्रकृतित्वं मन्त्राणां चाव्यवस्थेति सिद्धम्।

यत्तु पार्थसारथिना वार्तिकस्वारस्यादाग्नेयैकत्वमभ्युपगम्य मन्त्रयोः दृष्टार्थत्वेन विकल्पादेकस्मिन्नाग्नेये प्रधानान्तरसाहित्यानुरोधेन प्रकृतौ व्यवस्थायामपि विकृतौ तदभावेन व्यवस्थाकारणाभावादव्यवस्थितविकल्पो मन्त्रयोरिति सिद्धान्तितं, तत् मन्त्र

---

लक्षणाया आपत्तेः। अधिकरणत्वरूपसप्तम्यर्थलक्षणायामविकारलब्धाभिमर्शनानुवादेन मन्त्रकालोभयविधाने वाक्यभेदापत्तेश्च। 'पौर्णमासीकाले यानि हवींषि' इत्युद्देश्यभावकल्पने विशिष्टोद्देशापत्तेः। निमित्तत्वरूपसप्तम्यर्थलक्षणायां प्रतिपदादिकालीनाभिमर्शने मन्त्रानापत्तेः। न द्वितीयः। पौर्णमासीसंज्ञककर्मणि साक्षान्मन्त्रान्वयानुपपत्तेः। पौर्णमासीप्रयोगपर्यन्तलक्षणायां लक्षणाद्वयस्य, प्रयोगस्य चाधिकरणत्वेन विधाने वाक्यभेदस्य चापत्तेः। अतः तन्त्ररत्नोक्तमत्रत्यं द्वितीयवाक्यार्थवर्णनं तदधिकरणशास्त्रदीपिकोक्तं पौर्णमासीप्रयोगे मन्त्रविधानञ्चायुक्तमिति पौर्णमासीपदं कर्मणि निरूढलाक्षणिकमपि अत्र लक्षणया हविः परमङ्गीकृत्य, तत्र मन्त्रविशिष्टाभिमर्शनस्य, मन्त्रमात्रस्य वा विधानमिति प्रथमतो दर्शित एव वाक्यार्थो युक्त इति।

वस्तुतस्तु द्वितीयायाः सप्तम्यर्थे लक्षणामङ्गीकृत्य पौर्णमासीप्रयोगे चतुर्होत्राऽभिमृशेदिति पार्थसारथ्युक्तवाक्यार्थस्य पूर्वोक्तयुक्त्या खण्डनात् न सिद्धान्तसिद्धिः। तथा प्रधानसंबन्धिहविर्लक्षणायामपि न तत्सिद्धिः, अङ्गहविषां प्रधानसंबन्धित्वाभावात्। नहि 'अङ्गहवींषि प्रधानसंबन्धीनि' इति केनचिद्व्यपदिश्यते। यदुक्तं तृतीये-प्रधानसंबन्धिहविर्लक्षणायामपि वाक्यसङ्कोचापत्तिभिया संबन्धो नाङ्गत्वाख्यः, अपि तूपकारकत्वाख्य इति तस्याङ्गप्रधानहविस्साधारण्यात् अङ्गप्रधानार्थत्वं मन्त्रयोरिति।

तदयुक्तम्। कर्मपरपौर्णमास्यादिपदाभ्यामनतिप्रसक्तेन शक्यसंबन्धेन स्वाङ्गभूतहविर्लक्षणायामपि अतिप्रसक्तसंबन्धेन तल्लक्षणायां मानाभावात्। इतरथा शास्त्रस्य महाविषयत्वलाभाय व्रीह्यादिपदलक्षणाया अपि अपूर्वसंबन्धित्वेनैव रूपेणापत्तेः। 'वेद्यां हवींषि' इत्यत्र तु प्रधानवाचकपदसमभिव्याहाररूपबाधकाभावादुभयहविरर्थत्वमिति वैषम्यम्। अपि चाभिमर्शनाश्रितो मन्त्रः पौर्णमासीहविरुद्देशेन यदि विधीयते तदा अभिमर्शनस्य प्रकरणात् दर्शपूर्णमासापूर्वसाधनस्यैवाश्रयत्वापत्तेः विकृतौ प्रणयनमात्रसत्वेऽपि गोदोहनानुष्ठानस्येवेहापि मन्त्रस्यानुष्ठा[1]नानापत्तिः।

---

1. A. ष्ठानापत्तिः

विकल्पचिन्तायाः द्वादशे सङ्गततया अतिदेशविचाराभावेनाध्यायसङ्गत्यभावापत्तेराग्नेयभेदस्य च स्थापितत्वेनैक्यानुपपत्तेरुपेक्षितम् ॥ ६ ॥

---

अतोऽत्र पौर्णमासीपदवाच्यस्य कर्मणोऽभिमर्शनोद्देश्यत्वासंभवात् सप्तम्यर्थ एव द्वितीया शास्त्रदीपिकोक्तरीत्या समर्थनीया। कर्मणश्चाधिकरणत्वं साक्षादसंभवात् अन्यत्र कर्तृकर्मान्यतरद्वारकत्वेनेवेह प्रयोगद्वारकत्वेन युज्यत एवेति न तदर्थं प्रातिपदिकेऽपि प्रयोगलक्षणा। न च प्रयोगाधिकरणत्वस्य मन्त्रस्य च विधाने वाक्यभेदः। उभयविशिष्टाभिमर्शनभावनाया वाक्यद्वयेऽपि विधानाङ्गीकारेण तदनापत्तेः। अत्र विहितस्याभिमर्शनस्य 'आसन्नानि हवींषि' इति वाक्येन हविरर्थत्वेन विनियोगमात्रं क्रियत इति न किञ्चिद्बाधकमिति। आग्नेयभेदस्य स्थितत्वेनेति। उत्पत्तिवाक्यगतासंभवन्निवेशसमुचितकालद्वयलक्षणस्य गुणस्य सङ्ख्यावत् उत्पत्तिभेदकत्वस्यैव युक्तत्वात् आग्नेयभेद एव। यत्र नोत्पत्तिवाक्यगतस्तादृशो गुणस्तत्रोत्पन्नवाक्यगतस्य सायंप्रातःकालादेः आवृत्तिबोधकत्वमेव। एवञ्चैकेन वाक्येन समकालमेवाग्नेयविधानेऽन्यतरस्य प्रतियोगिनः पूर्वमप्रसिद्धेः परस्परप्रतियोगिकभेदबोधनासंभवेऽपि सङ्ख्यावदनेकत्वबोधनं नानुपपन्नमिति भावः।

अतःपरं पादसमाप्तिपर्यन्तान्यधिकरणानि स्पष्टार्थानि। क्वचिदेव तु सापेक्षत्वाद्व्याख्यायते।

---

(७)—लिङ्गसाधारण्याद्विकल्पस्स्यात् ॥ २७ ॥ ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥ अश्रुतत्वादिति चेत् ॥ २९ ॥ स्याल्लिङ्गभावात् ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तम्। तत्रापि सौर्यादिषु औषधद्रव्यकत्वविशिष्टैकदेवतात्वरूपविशेषसादृश्यादाग्नेयविकारत्वम्। अत्र च सान्नाय्यस्यैकदेवताकत्वेऽपि औषधद्रव्यकत्वाभावादाद्यं विशेषणम्। अग्नीषोमीयादेः औषधद्रव्यकत्वेऽप्यनेकदेवताकत्वादपरम्।

अत्र यद्यप्येकदेवताकत्वं नाम नैकदेवतात्वकत्वं अग्नीषोमीयादावपि व्यासज्यवृत्तिदेवतात्वस्यैकत्वेनातिप्रसङ्गात्। नाप्येकदेवतात्वाधिष्ठानकत्वं देवतात्वस्य शब्दनिष्ठत्वेन देवतात्वीयस्वरूपसम्बन्धेन प्रत्येकाक्षराणामेव तदधिष्ठानतया आग्नेयेऽप्यव्याप्तेः। पर्याप्तिसम्बन्धावच्छिन्नाधिष्ठानत्वविवक्षायामग्नीषोमीयेऽप्यतिव्याप्तेश्च। सम्बन्धद्वयातिरेकेण पदमात्राधिष्ठानत्वस्य वक्तुमशक्यत्वाच्च। तथाऽपि देवतात्वाश्रयप्रतिपाद्यैकार्थकत्वमेवैकदेवताकत्वम्। एकत्वं एकत्वसङ्ख्याकत्वम्। अर्थस्य देवतात्वपक्षे तु एकदेवतात्वाधिष्ठानकत्वमेवैतत्। अस्ति चेदमाग्नेये सौर्ये च। प्रथमातिक्रमे कारणाभावेनैकवचनान्तेनैव तद्धितविग्रहात्। 'अग्निमेव स्वेन भागधेयेन समर्धयति, अमुमेवादित्यं स्वेन भागधेयेनोपधावति' इत्यर्थवादाच्च। 'अग्निर्मूर्धा, उदुत्यं जातवेदसम्' इति मन्त्रवर्णाच्च। अग्नीषोमीयैन्द्राग्नयोस्तु तदभावान्नैकदेवताकत्वम्। अत एव 'मारुतं सप्तकपालम्' इत्यादौ 'मरुतो यस्य हि क्षये' इति मन्त्रवर्णादनेकदेवत्यत्वावगतेः सत्यपि पदैक्ये नाग्नेयविकारत्वम्।

'अग्नये क्षामवते चरुम्' इत्यादौ च सत्यपि पदभेदे प्रमाणान्तरेणार्थैकत्वावगमादाग्नेयविकारत्वम्। अनेकदेवताकेषु तु अग्नीषोमीयैन्द्राग्नयोः। तत्राप्यग्नीषोमदेवत्यस्य सोमपदघटितानेकदेवत्यस्य चतुरक्षरानेकदेवत्यस्य वा अग्नीषोमीयविकारत्वमेव। इन्द्राग्निदेवत्यस्य इन्द्रपदघटितानेकदेवत्यस्य त्र्यक्षरानेकदेवत्यस्य ऐन्द्राग्नविकारत्वमेवेति व्यवस्था। तथा ऐन्द्राग्ने शाखाभेदेनैकादशकपालत्वद्वादशकपालत्वयोर्विकल्पात् द्वादशकपालायां तदधिकसङ्ख्याककपालायां वा विकृतौ ऐन्द्राग्नविकारत्वमेव। तन्न्यूनसङ्ख्याककपालायामष्टकपालभिन्नायां तु विकल्प एव व्यवस्थापकसामान्याभावे। अष्टाकपालायां

---

लिङ्गसाधारण्याद्विकल्पः स्यात्।

अनेकदेवतेषु अग्नीषोमीयैन्द्राग्नयोरित्यविशेषेण शास्त्रदीपिकायामुक्तेऽर्थे व्यवस्थां दर्शयति—तत्रापीति। व्यवस्थापकसामान्याभावे इति। तत्राप्यग्नीषोमदेवत्यस्येत्यादिपूर्वग्रन्थप्रतिपादितव्यवस्थापकसादृश्याभावे इत्यर्थः। ततश्चैकदेवत्यस्य द्वादशकपालकस्य त्रयो-

तु सत्यप्यनेकदेवताकत्वे द्रव्यघटितसादृश्यस्य बलवत्त्वादाग्नेयविकारत्वमेवेत्याद्यूह्यम्। आज्य-द्रव्यकायामुपांशुयाजस्य। दधिपयोरूपसान्नाय्यद्रव्यकायां तत्तद्द्रव्यकस्येत्यादि विशेषतः प्रकृतित्वं बोध्यम्॥ ७॥

---

दशकपालकस्य वा यागस्य सत्यप्येकदेवताकत्वे एकादशाधिककपालवत्वस्य द्वादशकपालवत्त्वस्य वा द्रव्यगतसादृश्यस्य बलवत्त्वादैन्द्राग्नविकारत्वमेव। एवं चतुरक्षररूपानेकदेवत्यस्यापि द्वादशकपालकस्य त्रयोदशकपालकस्य वा नाग्नीषोमीयविकारत्वम्। अपि तु ऐन्द्राग्नविकारत्व-मेव। त्र्यक्षरानेकदेवत्यस्य तादृशस्य तु तद्विकारत्वे न कोऽपि विवादः। द्वादशन्यून-सङ्ख्यकपालस्यैकदेवत्यस्य यागस्य तु एकादशकपालवत्वस्य तदन्तर्गतदशनवकपालवत्त्वस्य वा सादृश्यस्य द्रव्यगतस्य बलवतोऽपि ऐन्द्राग्नाग्नीषोमीययागसाधनत्वात् ऐन्द्राग्नाग्नीषोमीययागविकारत्वे विकल्प एव। एवमनेकदेवत्यस्यापि द्वादशन्यूनसङ्ख्यकपालकस्यापि चतुरक्षरत्र्यक्षरदेवता-कत्वादिरूपसादृश्यविशेषाभावेऽपि विकल्प एवेति भावः। अत एवाद्याधिकरणे द्यावापृथिवीयैका-दशकपालयागे विकल्पेनैवोभयविकारत्वमुक्तं पूज्यपादैः। अष्टाकपालैकदेवत्यस्य तु निर्विवाद-मेवाग्नेयविकारत्वमिति तदुपेक्ष्यानेकदेवताकेऽष्टाकपालके विशेषं दर्शयति— **सत्यप्यनेकदेव-ताकत्व इति।** **यद्यपि** यथैवाष्टाकपालभिन्नेषु एकादशकपालान्तेषु यागेषु मध्ये नवकपाल-दशकपालयागगतं नवदशसङ्ख्यापरिच्छिन्नकपालकत्वरूपं सामान्यं नैन्द्राग्ने, तथाप्येकादशत्रयोदश-सङ्ख्यान्तर्गतत्वमात्रेण यदस्ति नवदशद्वादशकपालवत्वं तेनैव सामान्येनैन्द्राग्नाग्नीषोमीयविकारत्व-मङ्गीक्रियते, एवमिहाप्यष्टाकपालवत्वस्यापि एकादशान्तर्गतत्त्वमात्रेणानेकदेवताकत्वसादृश्येनाविरो-धादैन्द्राग्नाग्नीषोमीयविकारत्वमेव शक्यत एव व्यवस्थापयितुं, **तथापि** दर्शपूर्णमासयोर्नवदशत्रयो-दशसङ्ख्यापरिच्छिन्नकपालवत्त्वसादृश्यस्यासंभवात् यथाकथञ्चित् तत्तत्सङ्ख्यान्तर्गतिमङ्गीकृत्यत द्रुत्व-कल्पनया तत्तद्यागविकारत्वमगत्या स्वीकृतम्। इह तु अष्टसङ्ख्यावच्छिन्नकपालकत्वसादृश्यस्य मुख्यस्य प्रकृतावाग्नेये संभवतः त्यागे मानाभावात्; तस्य द्रव्यगतस्य प्राबल्यात् आग्नेय-विकारत्वमेवेत्युक्तं नायुक्तमिति द्रष्टव्यम्।

(८)—विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥ तेन च कर्मसंयोगात् ॥ ३३ ॥ गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

एवं सादृश्यस्य नियामकत्वे निरूपिते अधुना तयोर्विरोधे बलाबलं चिन्त्यते। तत्रापि द्रव्यघटितदेवताघटितसादृश्ययोः यत्र विप्रतिपत्तिः यथा 'ऐन्द्रः पुरोडाशः, आग्नेयं पयः' इत्यादौ तत्र कस्य बलवत्त्वमिति चिन्तायां—

देवतायाः प्रथमोपस्थितत्वेन मुख्यत्वात् प्रधानत्वाच्च तत्सादृश्यमेव बलवत्। 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्याद्यर्थवादवशाद्धि यागो देवताराधनार्थः। आराधिता च सा फलं ददातीति तस्याः प्रधानत्वम्। देवतासादृश्यं च यद्यपि निरुक्तैकदेवताकत्वरूपं द्रव्यसादृश्याविरोधि। तथाऽपि समानशब्दार्थकत्वरूपं तद्विरोधीति तस्य बलवत्त्वमिति प्राप्ते—

प्रथमोपस्थितत्वेऽपि कर्मविध्युत्तरकालमतिदेशकल्पनात् तदा च द्रव्यस्यैव प्रत्यासन्नत्वेन शीघ्रोपस्थितेस्तत्सादृश्यस्यैव बलवत्त्वम्। यागो हि वृद्धव्यवहाराद्देवतोद्देशविशिष्टद्रव्यत्यागरूपः। तत्र द्रव्यस्य प्रधानभूते त्यागे विशेषणत्वम्। देवतायास्तु विशेषणीभूते उद्देशे, अतो द्रव्यं यागप्रत्यासन्नम्। यद्यपि च देवताप्रसादस्यैवार्थवादवशात् यागस्य फलसाधनत्वे द्वारत्वं कल्पयते, तथाऽपि देवतायाश्शाब्दबोधे यागं प्रति द्रव्यं प्रति वा प्राधान्ये प्रमाणाभावात् प्रत्युत द्रव्यस्यैव पार्ष्ठिकान्वये विशेष्यत्वेन प्राधान्यावगतेः न देवतासामान्यस्य बलवत्त्वाशङ्का।

वस्तुतस्तु—न देवताप्रसादस्य द्वारत्वमिति जैमिनिमतं वक्ष्यत एव। अतोऽन्तरङ्गत्ववशादेव द्रव्यसादृश्यस्य बलवत्त्वम्। एवं धर्मानुग्रहोऽप्याञ्जस्येन सङ्गच्छते। इतरथा पुरोडाशे शाखाच्छेदनादीनां बाधापत्तेः। एवमन्यत्राप्यन्तरङ्गत्वादिना सर्वत्र सादृश्ययोः बलाबलं द्रष्टव्यम्। यत्र तु न्यायेनान्यादृशं बलाबलं कल्पसूत्रयाज्ञिकाचाराश्च अन्यादृशाः तत्र तन्मूलभूतश्रुतिरूपवचनानिदेशेन न्यायकल्प्यातिदेशस्य बाध इत्येवं द्रष्टव्यम्। अत एव सौम्यश्चरुः' इत्यादौ शब्दार्थगतसमानत्वरूपसादृश्यस्य निरुक्तैकदेवताकत्वरूपसादृश्यापेक्षयाऽन्तरङ्गत्वेऽपि नाग्नीषोमीयविकारत्वं, अपि त्वाग्नेयविकारत्वमेव।

---

विप्रतिपत्तौ हविषा नियम्येत।

**यागप्रत्यासन्नमिति।** यागभावनाया यागस्य वा इतिकर्तव्यताकाङ्क्षायां प्रत्यासन्नद्रव्यविशेषसादृश्यकल्पिततत्तद्धिष्ण्यन्तेनैवेतिकर्तव्यतान्वयेन तदुपशमात् न पश्चादन्वीयमानदेवतासादृश्यस्य तत्कल्पकत्वमित्यर्थः। **अत एव सौम्यश्चरुरिति।** अत्र चौषधद्रव्यकत्वरूपद्रव्यसादृश्यस्याग्नेयाग्नीषोमीयान्यतरसाधारणत्वात् एकतरविकारत्वव्यवस्थायां नैव नियामकत्वम्।

एवं 'आग्नेयमेकादशकपालम्' इत्यादौ देवतासामान्यस्य कपालसङ्ख्यासादृश्याद्यपेक्षयाऽन्तरङ्गत्वेऽपि नाग्नेयविकारत्वं अपि त्वग्नीषोमीयादिविकारत्वमेव। केचित्तु एकादशविषये कपालैकादशत्वादीनां द्रव्यनिष्ठसाधनतावच्छेदककोटिप्रविष्टत्वात् द्रव्यसादृश्यघटकत्वमेवेत्यग्नीषोमीयविकारत्वं समर्थयन्ते ॥ ८ ॥

---

यत्त्वेकदेवताकत्वमाग्नेयविकारत्वव्यवस्थापकं, तत्तु ततोऽप्यन्तरङ्गेण शब्दार्थगतसमान[1]रूपतासादृश्येन बाध्यत इति न्यायप्राप्तमग्नीषोमीयविकारत्वं कल्पसूत्रकारवचनेन बाधित्वा आग्नेयविकारत्वमेव भवति। एवमाग्नेयैकादशकपाले पुरोडाशद्रव्यकत्वसादृश्यस्य साधारण्याद्व्यवस्थापकस्य कपालतद्गतैकादशसङ्ख्यावत्त्वरूपविशेषसादृश्यस्यान्तरङ्गेणाग्निदेवताकत्वसादृश्येन बाधात् न्यायेन प्राप्तमाग्नेयविकारत्वं कल्पसूत्रकारवचनेन बाधित्वाऽग्नीषोमीयविकारत्वमेव भवतीति भावः। वस्तुतस्तु सौम्यचरौ याज्ञिकाचारे कल्पसूत्रादौ चाग्नीषोमीयविकारत्वस्यैव दर्शनात् कथमाग्नेयविकारत्वं तदनुगृहीतं युक्तमिति तु विवेचनीयम्। समर्थयन्त इति। एतन्मतानुसारेणैवाष्टाकपालत्वद्वादशकपालत्वसादृश्यस्य द्रव्यसादृश्यान्तर्गतिमादाय तत्तद्विकारत्वं पूर्वाधिकरणे व्यवस्थापितम्। अनेनैव न्यायेनाग्नीषोमदेवताकयोरपि द्वादशकपालाष्टकपालयोः द्रव्यसादृश्यात् ऐन्द्राग्नाग्नेयविकारत्वमेवेति द्रष्टव्यम्।

---

1. A समानत्वरूपता

(९)—हिरण्यमाज्यधर्म तेजस्त्वात् ॥ ३५ ॥ धर्मानुग्रहाच्च ॥ ३६ ॥ औषधं वा विशदत्वात् ॥ ३७ ॥ चरुशब्दाच्च ॥ ३८ ॥ तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

द्रव्यनिष्ठसादृश्ययोः परस्परविरोधे तु देवतासादृश्योपष्टब्धस्यापि द्रव्यसादृश्यस्य श्रौतलिङ्गोपष्टब्धद्रव्यसादृश्यापेक्षया दुर्बलत्वम्। यथा 'प्राजापत्यं घृते चरुं निर्वपेच्छत-कृष्णलमायुष्कामः' इत्यत्र कृष्णलानां दीप्तिमत्त्वलक्षणतेजस्वित्वसादृश्यस्य प्रजापति-देवताकत्वसादृश्योपष्टब्धस्यापि काठिन्यापरपर्यायविशदत्वसादृश्यापेक्षया दुर्बलत्वम्। तेन नायं यागस्तेजस्वित्वसादृश्यादुपांशुयागविकारः; अपि तु काठिन्यसादृश्यादाग्नेय-विकार एव। चरुशब्दप्रयोगात्। 'घृते श्रपयति' इति श्रपणविधानाच्च। यद्यपि नायं विक्लृत्यभावेन मुख्यश्चरुः। तथाऽपि अचरौ चारुशब्दानुवादश्चरुधर्मयोगादुपपद्यत इति औषधधर्मप्रापकं भवति लिङ्गम्। न चाग्नेये चरोरभावात् आग्नेयधर्माणां चरुगत-त्वाभावेन कथं चरुशब्दस्तत्रौषधधर्मप्रापक इति वाच्यम्। सौर्यचरोराग्नेयविकारत्वेनाग्नेय धर्माणामपि चरुगतत्वाच्चरुशब्दस्य तत्प्रापकत्वसम्भवात्। एवं श्रपणवाक्येऽपि यद्यपि न श्रपणानुवादेन घृतविधिः श्रपणस्याग्नेयविकारत्वेऽपि विक्लृत्तिरूपप्रयोजनाभावेन बाधात्, घृतस्योत्पत्तिवाक्ये प्राप्तत्वाच्च, तथाऽप्यग्निसंयोगमात्ररूपश्रपणं शक्त्या लक्षणया वा प्रतिप्रसवविधया विधीयते. तच्च घृतविशिष्टं शुद्धं वेत्यन्यदेतत्। तच्च विशिष्टविधित्वमित्यत्र नियामकाभावात्। उत्पत्तिवाक्ये घृतस्य परम्परासम्बन्धेन यागान्वये तत्र विलम्बोपस्थितिकत्वादत्रैव विशिष्टविधिरिति तु युक्तमुत्पश्यामः।

हिरण्यमाज्यधर्म तेजस्त्वात्।

अत्र सिद्धान्ते चरुशब्दश्रवणलिङ्गात् आग्नेयविकारत्व ग्रन्थेषु साधितम्। तत्रानुप-पत्तिमाशङ्क्य परिहरति—यद्यपि नायमिति। घृते श्रपयतीति वाक्ये परमार्थतस्तु उत्पत्ति-वाक्यप्राप्तत्वान्नाज्यं विधीयते। श्रपणनवर्थत्वोपात्तिवर्तमाने प्रतिप्रसवयत इति तन्त्ररत्नकृता यदुक्तं तदयुक्तमिति दर्शयति—तच्च घृतविशिष्टमिति। तस्य विलम्बेति। उत्पत्तिवाक्ये घृतस्य साक्षाद्भावनायां यागे वाऽधिकरणत्वासम्भवात् स्वनिरूपकश्रपणकर्मीभूतद्रव्यकत्वरूपपरम्परा-सम्बन्धेन वैशिष्ट्याङ्गीकारेण विशिष्टविधित्वं विलम्बोपस्थितिकम्। इह तु साक्षादेव श्रपणे वैशिष्ट्यसम्भवात् तद्युक्तमित्यर्थः।

यद्यपि च श्रपणस्योपांशुयाजविकारत्वेऽपि प्रतिप्रसवविधित्वं युज्यत एव, आज्येऽप्यग्निसंयोगसद्भावात्; तथाऽपि द्रव्यान्तरसंयोगस्याप्यन्ताप्राप्तस्योपांशुयाजविकारत्वे विधेयत्वापत्तेराग्नेयविकारत्वे द्रव्यान्तरस्य जलस्य प्राप्तौ तत्र घृतविधाने लाघवमिति लिङ्गत्वोपपत्तिः। एतदस्वरसेनैव वा भाष्यकारेण 'तस्मिंश्च श्रपणश्रुतेः' इति सूत्रस्य घृतद्रव्यकत्वसादृश्यादुपांशुयाजविकारत्वमाशङ्क्य घृतस्याधिकरणत्वश्रुतेः प्रदेयत्वाभावादिति व्याख्यानान्तरं कृतम्।

**सर्वथा श्रौतलिङ्गोपष्टब्धस्य सादृश्यस्य बलवत्त्वात् हिरण्ययाग औषधविकार एव। एवं च यत्र हिरण्ययागान्तरे लिङ्गाभावस्तत्र देवतासादृश्यात्तदभावेऽपि वाऽऽज्यधर्माणां भूयसामनुग्रहात्तेजस्वित्वसादृश्येनाज्यविकारत्वमेव। चरुशब्दस्य वा स्थालीपुलाकन्यायेन गमकत्वादौषधविकारत्वं कृष्णलेष्टिविकारत्वं वा ॥ ९ ॥**

---

(१०)—मधूदके द्रवसामान्यात्पयोविकारस्स्यात् ॥ ४० ॥ आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ धर्मानुग्रहाच्च ॥ ४२ ॥ पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥

अत्र च श्रपणस्य प्रतिप्रसवविधाने लाघवादाग्नेयविकारत्वमिति युक्त्यन्तरप्रतिपादकं तस्मिंश्च श्रपणश्रुतेरिति (८-१-३९) सूत्रमिति प्राचां वर्णनेऽनुपपत्तिमाशङ्क्य कथञ्चित्परिहरति —**यद्यपि श्रपणस्येति**। वस्तुतस्तु विक्लृत्तिप्रयोजनकश्रपणस्यात्र मुख्यस्याविधाने द्रव्यान्तरसंसर्गस्य दूरापास्तत्वात् अमुख्यस्य त्वग्निसंयोगरूपस्य तदनपेक्षणेन तत्प्राप्त्युपजीविलाघववर्णनमयुक्तमेवेति प्रतिप्रसवपरत्वेन तत्सूत्रव्याख्यानमयुक्तमित्यभिप्रेत्यास्वरसप्रदर्शनपूर्वकं भाष्यकारोक्तं व्याख्यानान्तरमेवानुसरति—**एतदस्वरसेनैवेति**।

---

**मधूदके द्रवसामान्यात्।**

चित्रेष्टावेको यागोऽथवा बहवो यागा इति मतद्वयम्। तत्र[1] एकपक्षवादिन इत्थमुपपादयन्ति—तदिति सर्वनाम्ना यत्परामृश्यते तद्देवतासम्बन्धि। यदि धानादीनि परामृश्येरन् ततस्तेषां बहुत्वात् तानीति बहुवचनं स्यात्। अथवा तत्तदिति वा वीप्साऽऽपद्येत। अतो धानादीनां प्रत्येकं तच्छब्देन परामर्शाभावात् देवतासम्बन्धानुपपत्तिः। प्राजापत्यमित्येकवचनानुरोधाच्च

1. A. Omits तत्र

चित्रेष्टौ अनेके यागा इत्युक्तं चित्राधिकरणे कौस्तुभे। तत्र दधिघृतपयोधाना-तण्डुलयागानां निर्णीतैव प्रकृतिः। मधूदकयोस्तु वर्णसाम्यादुपांशुयाजविकारत्वं, प्रकृतोदाहरणे देवतासामान्यस्याधिक्याच्च, न तु स्वाभाविकद्रवत्वसादृश्यात्पयोयागविकारत्वम्। सत्यपि सादृश्यद्वये लिङ्गविशेषस्य निर्णायकत्वाभावे बहुतराज्यधर्मानुग्रहस्यैव नियामकत्वात्। नैमित्तिकद्रवत्वस्याज्येऽपि सत्त्वाच्च। अतश्च सर्वयागानामेकफलकत्वेनैकतन्त्रत्वाद्भूयसामनुग्रहाय त्रयाणां मधुघृतोदकयागानामुपांशुयाजधर्मास्तत्रानुष्ठीयमानविरुद्धधर्मविषये कार्याः। आवृत्त्याऽऽनुष्ठीयमानद्रव्यसंस्कारविषये तु तत्तद्यागीयधर्मास्तत्र द्रव्ये तु कार्याः॥ १०॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
अष्टमस्याध्यायस्य प्रथमः पादः

---

संसृष्टं यत् तदेवैकवचनान्तेन तच्छब्देन परामृश्य तस्य देवतासम्बन्धः क्रियत इत्येको यागः। यदि तु पूर्वनिर्दिष्टस्य सन्निहितस्य परामर्शकः तच्छब्दः सर्वनामेति सर्वेषां परामर्श इत्युच्यते, तदा अनन्तरत्वात्तण्डुलानामेव परामर्शः स्यात्। नपुंसकलिङ्गबलात् दधिमधुघृतोदकानामेव वा स्यात्। न ह्यत्र पाशन्यायेन प्रातिपदिकानुरोधेन लिङ्गं गौणमिति युक्तम्। तत्र पाशस्यैकत्वेन कथमप्यसम्भवतो बहुवचनस्य लक्षणयैकत्वप्रतिपादकत्वेऽपि प्रकृते नपुंसकस्यापि सम्भवतः त्यागे प्रमाणाभावेन लक्षणाया निर्मूलत्वात्। अतः संसृष्टेन नपुंसकलिङ्गेन तच्छब्दस्य सम्बन्धात् तस्यैकस्यैव देवतासम्बन्धात् एक एव याग इति। अन्ये तु दध्यादीनां संसृष्टविशेषणतया तच्छब्देन परामर्शे तेषामित्येवं षष्ठ्यापत्तेः, प्रथमानिर्दिष्टत्वात्, पूर्वनिर्दिष्टानां दध्यादीनां स्वातन्त्र्येणैव देवतासम्बन्धः तच्छब्देन क्रियते। नपुंसकैकवचनयोः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति (पा. सू. १-२-६९) सूत्रेणैकशेषैकवद्भावविधानात् नानुपपत्तिः। एवं प्राजापत्यपदेऽपि द्रष्टव्यम्। संसृष्टपदञ्च देवतैक्यात् अर्थप्राप्तसंसर्गानुवादः। अतस्तत्तद्द्रव्याणां प्रत्येकं देवतासम्बन्धात् द्रव्यदेवतासम्बन्धभेदात् यागभेद एव युक्त इति। इदमेव च मतं द्वादशाद्ये वार्तिककृता सिद्धान्तपक्षत्वेनाङ्गीकृतमित्यभिप्रायेणाह—चित्रेष्टाविति। देवतासामान्यस्येति। उपांशुयाजस्य प्रजापतिदेवत्यत्वेन तत्सामान्यस्यात्रापि तद्देवत्यत्वेनाधिक्यादित्यर्थः। बहुतरेति। उत्पवनादीनां बहूनामनुग्रहाय पयोधर्माणां दोहनादीनामननुग्रह इत्यर्थः। मधूदकयागयोः सान्नाय्यविकारत्वे तयोर्दध्नश्च त्रयाणां सान्नाय्यधर्मप्राप्तिः। आज्यधर्मप्राप्तिस्तु घृतस्यैकस्यैवेति विरुद्धधर्मविषये भूयोऽनुग्रहात् सान्नाय्यधर्मत्वमेव पूर्वपक्षे। सिद्धान्ते तु मधूदकघृतयागानां भूयस्त्वात् आज्यधर्मत्वमेव भवतीति प्रयोजनमाह—अतश्चेति।

इति श्रीभाट्टदीपिकाप्रभावल्यामष्टमाध्यायस्य प्रथमः पादः।

---

# अथाष्टमाध्यायस्य द्वितीयः पादः.

(१)—वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥ ३ ॥ क्रयण-श्रयणपुरोरुगुपयामग्रहणासादनवासोपनहनं च तद्वत् ॥ ४ ॥ हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ प्रशंसा सोमशब्दः ॥ ६ ॥ वचनानीतराणि ॥ ७ ॥ व्यपदेशश्च तद्वत् ॥ ८ ॥ पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥

वाजिनयागस्यामिक्षाऽनुनिष्पन्नवाजिनप्रतिपत्तिकर्मणोऽप्यङ्गापेक्षायां किं सौमिकातिदेशः उत दार्शिक इति चिन्त्यते। सौत्रामण्यङ्गदेवतासंस्कारार्थसुराग्रहेषु चैवमेव चिन्ता। तत्र 'सोमो वै वाजिनं सुरा सोमः' इत्यसोमे सोमशब्दस्सोमधर्मातिदेशार्थः। न च 'उपशयो यूपो भवति' इतिवत् अर्थवादस्थत्वादनतिदेशकत्वं, तद्वदिह सिद्धसादृश्याभावेन नामातिदेशावश्यकत्वात्। अत एवानुवषट्कारमन्त्रौ समुपहूय भक्षणमुभयत्र दर्शयति। सुरायां सीसेन क्रयणं, कुवलसक्तुभि[1]श्श्रयणं, एका [2]पुरोरुक् उपयाम' इति मन्त्रः, गृहीत्वाऽऽसादनं, क्षौमे वाससि उपनहनं दर्शयति। ग्रहशब्दश्चैवं सति सुतरामुपपद्यते इति प्राप्ते—

---

वाजिने सोमपूर्वत्वम्।

सिद्धसादृश्येति। छेद[3]नादिधर्ममादाय सादृश्यस्य सिद्धत्वात् यूपशब्दः कथञ्चित्तत्रोपपद्यत इत्यर्थः। अनुवषट्कारमन्त्राविति। 'वाजिनस्याग्ने वीहीत्यनुवषट्करोति'। 'सुराया-वीहीत्यनुवषट्करोति' इति वचनाभ्यामनुवषट्कारमन्त्रौ विहितौ। तत्र अन्यत्र हविर्ग्रहणेषु वषट्कारान्तैव याज्या; सोमे तु वषट्कारान्तयाज्यापाठानन्तरमनुवषट्कारो विहितः। सोऽत्रापि दृश्यत इति। तथा 'शेषं समं विभज्य समुपहूय भक्षयन्ती'ति समुपहूयभक्षणञ्च सोमधर्मप्राप्तौ लिङ्गमित्यर्थः। तथा 'सीसेन क्लीबाच्छष्पाणि क्रीणाति' 'सक्तुभिराश्विनं श्रीणाति'[4]। 'एका पुरोरुक्' 'एका याज्या' 'उपयामगृहीतोस्यच्छिद्राय त्वा छिद्रेणाश्विनं ग्रहं गृह्णाति' 'गृहीत्वाऽऽसादयति' 'त्रिरात्रं संहता वसन्ति' 'क्षौमे वासस्युपनिह्यति' 'तोक्मानि शष्पाणि भवन्ति' इत्यादीनि

---

1. धान्यविशेषसक्तव. 3 B चोदनादि
2 पुरोनुवाक्या 4. A. क्रीणाति

लिङ्गानां च वाचनिकतयाऽप्युपपत्तावप्रतिबद्धेन चोदकलिङ्गातिदेशेन दार्शिकविध्यन्त एव। तत्रापि वाजिने पशुप्रभवत्वसादृश्यात्पयोयागविध्यन्तः। सुरायां पौरोडाशिकः औषधद्रव्यकत्वात्। अत एव 'शष्पैरेव दीक्षणीयामाप्नोति' इति दीक्षणीयाप्राप्तिवचनं सङ्गच्छते। इतरथा हि तस्याः प्रत्यक्षत्वेन प्राप्तिवचनेन स्तुतिरसङ्गतैव स्यात्। तथा 'नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः' इति ग्रहेषु पुरोडाशशब्दानुवादस्तद्धर्मकत्वे सङ्गच्छते। यद्यपि चैतेषां ग्रहयागान्तराणां वार्तिककारमते पशुपुरोडाशकार्यापन्नत्वस्य दशमे वक्ष्यमाणत्वात् स्थानापत्त्यैव पुरोडाशशब्दोपपत्तिः। तथाऽपि स्थानापत्त्याऽपि नावत् पशुपुरोडाशधर्मप्राप्तेर्लिङ्गोपपत्तिः।

---

लिङ्गानि सुरायां सोमधर्मातिदेशं दर्शयन्तीत्यर्थः। शष्पैरिति। अत्र 'च शष्पैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणीयां सिंहलोमभिरातिथ्या'मिति वाक्यानि। तेषामयमर्थः—येषां सुरानिर्माणार्थं शष्पपदवाच्यानां बालतृणानां तोक्मपदवाच्यानामङ्कुरितव्रीहीणां सिंहलोम्नाञ्चैकत्र क्षौमे वाससि बध्वा त्रिरात्रं स्थापनं कृतं तदल तैः शष्पादिभिः तत्तदिष्टिफलं तत्तदिष्टीनामभावेऽपि प्राप्नोतीति। तथेति। सौत्रामण्यामाश्विनसारस्वतसुत्रामदेवताकेषु पशुषु ऐन्द्रवारुणसावित्राः पुरोडशा विहिताः। ते यद्यपि प्रधानपशुयागीयदेवताभेदात् न तद्देवतासंस्कारका इति न प्राकृतकार्यार्थाः तथापि तत्तद्वाक्येषु पुरोडाशोद्देशेनापूर्वतयेन्द्रादिदेवतानां विधानात् तत्र चोपपादकीभूतयागापेक्षायामन्यस्य पुरोडाशद्रव्यकत्वाभावात् परिशेषेण प्राकृतकार्यप्रष्ठभावेनातिदेशप्राप्तस्य पुरोडाशयागस्यैवोपपादकत्वं कल्प्यत इति वाचनिकदेवतान्तरसम्बन्धात् प्राकृतकार्यमात्रबाधेऽपि अप्राकृतकार्यान्तरकल्पनया तेष्वेव पशुषु निवेशः। 'आश्विनं गृह्णाती'त्यादिना विहितानां तत्तत्पशुदैवत्यसुराग्रहणानान्तु उपपादकीभूतयागापेक्षायामतिदेशप्राप्तपुरोडाशयाग एव तदुपपादकीभूतः नान्यः; अन्यस्मिन् आश्विनादिदेवत्यत्वाभावात्। प्रधानपशुयागेषु तत्तद्दैवत्यत्वसंभवेऽपि पशुद्रव्यावरोधे ग्रहणसंस्कृतसुराद्रव्यनिवेशानुपपत्तेश्च। अतश्चातिदेशप्राप्तपशुपुरोडाशयागे उत्पन्नशिष्टेन्द्रादिदेवतासंबन्धद्वयात् प्रयाजैकादशत्वन्यायेनाभ्यासस्तस्य सम्पद्यते। तत्राश्विनादिदेवत्यस्याभ्यासस्य प्रधानदेवतासंस्कारकत्वसम्भवात् प्राकृतमेव कार्यं भवति। इन्द्रादिदेवत्यस्य तु तस्य तदसंभवादप्राकृतमेव कार्यमिति भाष्यकारमतम्। वार्तिककारस्तु पशुपुरोडाशयागे उपदिष्टेन्द्रादिदेवतावरोधात् नाश्विनादिदेवत्यसुराद्रव्यनिवेशस्सम्भवतीति गुणात् प्राकृतपुरोडाशकार्यापन्नं कर्मान्तरमेव सुरादिद्रव्यकमाश्विनादिदेवताकं तत्तद्वाक्यैर्विधीयते। पशुपुरोडाशयागोऽतिदेशप्राप्तस्तु अप्राकृतकार्य एवेत्याह। तदेतन्मतद्वयं पशावपीति चेदिति सूत्रेण दशमप्रथमपादे दर्शयिष्यते। तमिमं मतभेदमुपेक्ष्यैवविशेषं दर्शयति—यद्यपि

वस्तुतस्तु अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरस्स्फूर्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वादौषधद्रव्यकत्वेन सर्वप्रकृतिभूतदर्शपूर्णमासविकारत्वमेव। अत

'एषां[1] प्रसङ्गे कुर्यादिष्टिं वैश्वानरीं बुधः'

इत्यादौ 'त्रेधातव्या दीक्षणीया' इत्यादौ च न ज्योतिष्टोमादिधर्माः। यदा तु दाशमिकसूत्रभाष्यकाररीत्या प्राकृतपशुपुरोडाशयाग एव सुरादिद्रव्यान्तरमात्रविधिरित्याश्रीयते तदा सोमादिशब्दस्य नामातिदेशनिराकरणमात्रार्थमिदमधिकरणं, न तु औषधद्रव्यकत्वलिङ्गकातिदेशासिद्ध्यर्थं, एतदलाभेऽपि पशुपुरोडाशस्य दर्शपूर्णमासविकारत्वसिद्धेरिति ध्येयम् ॥ १ ॥

(२)—पशुः पुरोडाशविकारस्स्याद्देवतासामान्यात् ॥ १० ॥ प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥ १२ ॥ सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ तस्य च पात्रदर्शनात् ॥ १४ ॥

दैक्षः पशुर्दर्शपूर्णमासविकार इत्युक्तम्। तत्रापि किं अग्नीषोमीयपुरोडाशविकारः उत सान्नाय्यविकार इति चिन्तायां घनत्वसादृश्यात्पुरोडाशविकारः। न च पशुप्रभवत्वसादृश्यस्य द्रव्यगतस्य सान्नाय्ये सत्त्वात् नियामकाभावः, घनत्वस्य लिङ्गोपष्टब्धत्वात्। 'अद्भ्यस्त्वौषधीभ्योऽग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि इति पशुं प्रोक्षति' इति हि प्रोक्षणं पुरोडाशधर्मः। तथा 'पशुं पर्यग्निकरोति' इति पर्यग्निकरणं पुरोडाशविकारत्वे लिङ्गम्। न च पशुप्रभवत्वसादृश्यस्यापि उखादर्शनरूपलिङ्गोपष्टब्धत्वान्नियामकाभावः। तथात्वेऽपि देवतासादृश्यस्यैवाग्नीषोमीयविकारत्वे नियामकत्वादिति प्राप्ते —

---

चेत्यादिना। इति ध्येयमिति। यद्यपि पूर्वोक्तरीत्या सुराद्रव्यकयागान्तरपक्षेऽपि औषधद्रव्यकत्वस्य निर्विवादत्वेन औषधद्रव्यकत्वलिङ्गकातिदेशस्य सिद्धत्वात् वार्त्तिककारमते सोमशब्दस्य नामातिदेशनिराकरणमात्रार्थमेतदधिकरणमिति वक्तव्यस्य तुल्यत्वात् 'यदा तु दाशमिके'त्यादिना विशेषकथनं न विशेषकरं; तथापि सौर्यादीनामिवाकर्मान्तरभूतस्य तस्य दर्शपूर्णमासविकृतित्वं सिद्धमेव। कर्मान्तरत्वपक्षे तु चोदनालिङ्गातिदेशापेक्षया नामातिदेशस्य प्राबल्येनानिवृत्ताकाङ्क्षायामेव प्रवृत्तेः पूर्वपक्षसम्भवेन दर्शपूर्णमासविकृतित्वासिद्धेः तत्साधनमप्यसिद्धं साधनीयमित्यभिप्रेत्य विशेषकथनमिति ध्येयम्। (इतः परं अधिकरणद्वयं न व्याख्यातम्)

---

1 चातुर्मास्यनिरूढपशुबन्धसोमानामित्यर्थः

देवतासामान्योपष्टब्धस्यापि द्रव्यसादृश्यस्यान्यथासिद्धलिङ्गोपष्टब्धत्वेनानन्यथासिद्धलिङ्गोपष्टब्धद्रव्यसादृश्यापेक्षया दौर्बल्यात् सान्नाय्यविकार एव पशुः। तथा हि-नात्र प्रोक्षणानुवादेन मन्त्रो विधीयते, येनेदं लिङ्गं भवेत्। तस्य तु लिङ्गादेव प्राकृतत्वात् प्रोक्षणभावनैवात्रापूर्वा विधीयत इति विपरीतसाधकत्वम्। पर्यग्निकरणं तु प्रदेयपुरोडाशधर्मत्वेन प्रकृतौ क्लृप्तं नेह प्रदेयप्रकृतिभूतपशुसंस्कारकतया दृश्यमानं प्राकृतम्। अपि त्वपूर्वमेवेति न तदपि लिङ्गम्। अतो घनत्वसादृश्यं न लिङ्गोपष्टब्धम्। 'यदि पशुरुखायां पच्यमानस्स्कन्देत्' इत्युखादर्शनं तु अनूद्यमानत्वादनन्यथासिद्धं लिङ्गम्। अतस्तदुपष्टब्धं पशुप्रभवत्वमेव बलीयः ॥ ३ ॥

---

(३)—दध्नस्स्यान्मूर्तिसामान्यात् ॥ १५ ॥ पयो वा कालसामान्यात् ॥ १६ ॥ पश्वानन्तर्यात् ॥ १७ ॥ द्रवत्वं चाविशिष्टम् ॥ १८ ॥

तत्रापि दधिविकारः पयोविकारो वेति चिन्तायां—घनत्वसादृश्याद्दधिविकारत्वमेव। न च साक्षात् पशुप्रभवत्वसादृश्येन पयोविकारत्वशङ्का। कारणत्वस्य व्याप्तिरूपतया अतीन्द्रियस्यानुमानिकत्वेन प्रत्यक्षगम्यघनत्वापेक्षया दौर्बल्यादिति प्राप्ते—

दध्यादीनां पयसश्चैकदिनान्तरितानां विकारदर्शनादेकदिनस्थायित्वसादृश्यं स्वतो गतिमत्त्वसादृश्यं च प्रत्यक्षगम्यमेवेति तत्सहकृतेन साक्षात्पशुप्रभवत्वेनैकस्य घनत्वस्यैव बाधात् पयोविकारत्वमेव ॥ ३ ॥

(४)—आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ एकं वा चोदनैकत्वात् ॥ २० ॥ दधि सङ्घातसामान्यात् ॥ २१ ॥ पयो वा तत्प्रधानत्वाल्लोकवत् दध्नस्तदर्थत्वात् ॥ २२ ॥ धर्मानुग्रहाच्च ॥ २३ ॥

आर्थवादिकस्य सोमशब्दस्य प्रकृष्टफलत्वरूपसिद्धसादृश्येनोपपत्तौ वाक्यभेदापादकविधिपरत्वे प्रमाणाभावात् ग्रहशब्दस्य प्रायणीयवत् ग्रहणस्यौपदेशिकत्वेनैवोपपत्तेः, आमिक्षा तावन्नार्थान्तरं; अपि तु दधिपयोऽन्यतररूपमिति साधितं चतुर्थे। अतश्च तदन्यतरविकार इति तावदविवादम्। तत्रापि तु विशेषचिन्तायां 'तप्ते पयसि' इत्यत्र द्वितीयानिर्दिष्टदध्न एव 'सा वैश्वदेवी' इति तच्छब्देन परामर्शः न तु सप्तम्यन्तपदनिर्दिष्टस्य पयसः गुणभूतत्वात्। न च आनयतेः द्विकर्मकत्वात्पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः। द्विकर्मकधातुस्थले अधिकरणत्वादिकारका-

न्तरविवक्षायां सम्बन्धमात्रविवक्षायां च सम्बन्धसामान्ये षष्ठीप्राप्तौ 'अकथितं च" इति सूत्रेण कर्मसंज्ञाकरणात् द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्। प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षाऽवगतेर्द्वितीयकर्मप्रसक्त्यभावाच्च। अतश्च दधिरूपत्वादामिक्षाया दधियागविकारत्वमेवेति लौकिकस्य पयसोऽधिकरणत्वमिति प्राप्ते—

मधुररसभूयस्त्वात्, दध्यभावेऽपि च अम्लान्तरेणामिक्षासम्पत्तेरन्वयव्यतिरेकाभ्यां 'जुषन्तां युज्यं पयः' इति मन्त्रवर्णाच्च, पयस एवावस्थाविशेषापन्नस्यामिक्षापदवाच्यत्वावगतेस्तदनुरोधेन तच्छब्दस्यापि सप्तम्यन्तपदनिर्दिष्टपयःपरामर्शित्वस्यैवावगतेः पय एवामिक्षा। अतश्च तद्यागविकारत्वमेव। एवं च 'तप्ते पयसि' इत्यत्र सप्तम्या प्राधान्यलक्षणा, द्वितीयया च सक्तुन्यायेन करणत्वलक्षणेत्यपि ध्येयम्।

अवस्थाविशेषरूपामिक्षा च न तापं विनेति न तस्यापि विवक्षा। यदि तु तापं विनाऽप्यामिक्षा लोके संभाव्यते तदा न सप्तम्या प्राधान्यलक्षणाऽपि; तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्यैवावस्थाविशेषविशिष्टपयोरूपामिक्षोद्देशेन विधेयत्वादुद्देश्यवाचकपदकल्पनया च वाक्यार्थपूर्तिः। तस्यैव च तच्छब्देन परामर्शात् सुतरां लिङ्गोपपत्तिः। अधिकरणत्वस्यैव च दध्यानयनं प्रत्यङ्गत्वेऽपि पयसो नाङ्गत्वं क्लृप्तप्रयोजनत्वादिति ध्येयम्। अत आमिक्षा॥ अवस्थाविशेषविशिष्टपयोरूपत्वात् पयोयागविकारत्वम्। तेन पयस्येव प्रातर्दोहादिधर्माः। दधि तु लौकिकमेव संस्कारकम्॥ ४॥

---

## अमिक्षोभयभाव्यत्वात्।

'तप्ते पयसी'त्यत्र यदि पयसः संस्कारार्थत्वेन प्राधान्यं तदा उद्देश्यविशेषणस्य तापस्याविवक्षापत्तिमिष्टापत्त्या परिहरति—अवस्थाविशेषरूपेति। यत्तु तापस्योद्देश्यविशेषणत्वेऽपि सेति तच्छब्देन दध्यानयनसंस्कृततप्तपयसः परामर्शेनोपादेयत्वात् विशेषणीभूततापविवक्षेति बालप्रकाशे उक्तम्; तत् प्रधानपरामर्शित्वस्वाभाव्येन पयोमात्रपरामर्शस्य युक्तत्वेन विशिष्टपरामर्शे मानाभावात्, इतरथाऽष्टवर्षत्वस्येव तापस्याप्युपादेयपरिच्छेदकत्वेनान्वयात् आमिक्षाशैत्येऽपि तापकरणापत्तेः अयुक्तमेवेत्यभिप्रेत्यामिक्षासामर्थ्यादेव तापसिद्धिमुपपादयति—न तापं विनेति। लिङ्गोपपत्तिरिति। तप्तपयोऽधिकरणकदध्ना आमिक्षां भावयेदित्युद्देश्यवाचकामिक्षापदकल्पने सति तत्पदोपस्थापितायाः प्रधानभूताया आमिक्षाया एव सेति तच्छब्देन परामर्शात् सा आमिक्षा वैश्वदेवीति विधानोपपत्तेः सेति स्त्रीलिङ्गोपपत्तिरविकलेति भावः। इति ध्येयमिति। तथा च यदेवामिक्षात्वेन रूपेण यागाङ्गभूतं पयः तदधिकरणत्वस्यैव विधानात् नामिक्षावस्थापन्नपयोतिरिक्तपयसोऽधिकरणत्वापत्तिः, न वा गुणभूतत्वात् सेति तच्छब्देन परामर्शानुपपत्तिः। एकस्यैव गुणत्वप्रधानत्वयोरनुपपत्तिश्चेति भावः। अनेनैव न्यायेन प्रयाजशेषं हविष्षु क्षारयेदिति वाक्यार्थवर्णने क्लृप्तप्रयोजनानां हविषा

(५)—सत्रमहीनश्च द्वादशाहः तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥ त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ २७ ॥ लिङ्गाच्च ॥ २८ ॥

अहर्गणेषु द्वादशाहस्य प्रवृत्तिरित्युक्तम्। द्वादशाहे चास्ति सत्रत्वमहीनत्वं चेति धर्मद्वयम्। तत्र 'आसीरन्, उपेयुः' इत्यादिचोदनाचोदिते सत्रत्वमखण्डोपाधिः, अनियतस्वामिके यजतिचोदनाचोदिते चाहीनत्वमखण्डोपाधिः। वृद्धव्यवहारात्। तत्तद्धर्मकत्वे निमित्ते च तत्र धर्मविशेषा विहिताः। तथा अन्येऽपि सत्रसंज्ञका अहीनसंज्ञकाश्च अहर्गणा अधर्मकास्समाम्नाताः। तत्र द्विविधेष्वपि द्वादशाहस्यैकस्य धर्मप्रवृत्तिः। अतोऽविरुद्धास्समुच्चीयन्ते विरुद्धाश्च विकल्प्यन्ते। न ह्यत्र द्वादशाहभेदोऽस्ति येनावान्तरसामान्यात् 'तत्तद्द्वादशाहवत्' इत्यतिदेशवाक्यं कल्प्येत। भेदे प्रमाणाभावात्तु 'द्वादशाहवत्' इत्येवातिदेशवाक्यकल्पनेऽव्यवस्थैव युक्तेत्येवं प्राप्ते—

सत्यपि द्वादशाहत्वेनैवातिदेशे सत्रत्वरूपनिमित्ताभावात् तन्नैमित्तिकधर्मा नाहीने, अहीनत्वरूपनिमित्ताभावाच्च तन्नैमित्तिका धर्मा न सत्रे प्रवर्तन्ते, भेदनाभावे इव होमस्तण्डुलयागादाविति फलतो व्यवस्थितं प्रकृतित्वं सत्रात्मकेष्वहर्गणेषु सत्रात्मकस्य द्वादशाहस्य अहीनात्मकेषु अहीनात्मकस्येति। द्विरात्रादारभ्यैकादशरात्रान्तमहीनाः। द्वादशाह उभयात्मा, त्रयोदशरात्रादारभ्य सर्वे सत्रभूता एव। तथैवोक्तलक्षणसत्त्वात् वृद्धव्यवहाराच्च। अतस्तेषु तेषु तत्तद्रूपस्य द्वादशाहस्य प्रवृत्तिः ॥ ५ ॥

---

मपि न क्षारणाङ्गत्वमिति ध्येयम्। एतच्चाधिकरणत्वस्याङ्गत्वोपपादनं इन्द्रियकामाधिकरणे दधिविशिष्टकरणत्वस्य करणत्वविशिष्टदध्नो वा करणतासम्बन्धेनेन्द्रिय[1]फलेऽन्वय इति यः पक्ष उक्तः तदभिप्रायेण द्रष्टव्यम्। तदानीमेव करणत्वस्येवाधिकरणत्वस्याङ्गत्वं परोद्देशप्रवृत्तकृतिकारकत्वरूपं युज्यते।

1. A. न्द्रियरूपेफले

(६)—अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ अहीनवचनाच्च ॥ ३० ॥ सत्रे वा उपायिचोदनात् ॥ ३१ ॥ सत्रलिङ्गं च दर्शयति ॥ ३२ ॥

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च न सत्रत्वं 'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति श्रुत्या अन्यतरतोऽतिरात्रत्वस्याहीनलक्षणकरणादर्थाच्चोभयतोऽतिरात्रत्वस्य सत्रलक्षणत्वेन पञ्चदशरात्रादौ अहीनलक्षणसत्त्वेन तदनुपपत्तेः। अत एव न सत्राहीनयोर्भवदुक्तलक्षणम्। न वैकादशरात्रान्तमेव शुद्धाहीनत्वम्। अतश्च पञ्चदशरात्रादौ अहीनात्मकद्वादशाहस्यैव प्रवृत्तिरिति प्राप्ते—

अहीनत्वाभावेऽपि प्राचुर्येणाहीनेऽन्यतरतोतिरात्रत्वादस्मिन्नपि पञ्चदशरात्रे अन्यतरतोऽतिरात्रत्वेनाहीनत्वोपचारस्य स्तुत्यर्थत्वेनोपपत्तेरभियुक्तप्रसिद्ध्या निरुक्तलक्षणकस्यैव सत्रत्वादेरङ्गीकारात् पञ्चदशरात्रकुण्डपायिनामयनयोरपि सत्रत्वमेव। अत एव 'गृहपतिर्गृहपतिः' इति गृहपतिशब्दस्सत्रैकान्तवृत्तिः कुण्डपायिनामयने। अतस्सत्रात्मकद्वादशाहप्रकृतिकत्वमेवानयोः ॥ ६ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
अष्टमाध्यायस्य द्वितीयः पादः.

---

वस्तुतस्त्वस्य पक्षस्य तत्रैव दूषितत्त्वात् अधिकरणत्वस्य निरूपकतासंसर्गेणेन्द्रियेऽन्वय इत्येव पक्षोऽङ्गीकृतः। तदा परोद्देशप्रवृत्तकृतिकारकत्वरूपाङ्गत्वस्य दध्नीवेह पयस्यपि युक्तत्वात् तन्निवारणमशक्यमेव। नहि पयसो दध्यानयनाङ्गत्वनिवारणेनास्ति किञ्चित्प्रयोजनम्। एकस्यैव पयसोऽवस्थाभेदेन उद्देश्यत्वाधिकरणत्वयोरिवोभयाङ्गत्वकल्पने बाधकाभावादित्यपि द्रष्टव्यम्। (एतदनन्तराधिकरणं न व्याख्यातम् )

---

अन्यतरतोऽतिरात्रत्वात्

'त्रिवृदग्निष्टुदग्निष्टोमः त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः' इति विहिते पञ्चदशरात्रेऽन्तेऽतिरात्रो दृश्यते। तथा कुण्डपायिनामयनेऽपि 'मासमग्निहोत्रं जुहोती'त्यारभ्य 'यावद्दशरात्र उदयनीयोऽतिरात्र' इति विहितेऽन्तेऽतिरात्रो दृश्यते। तथा च यत्रान्तेऽतिरात्रो दृश्यते द्विरात्रादौ तत्राहीनत्वमिति क्लृप्तेरनयोरपि पञ्चदशरात्रकुण्डपायिनामयनयोरहीनत्वमेव न तु सत्रत्वमित्युपपादयति—पञ्चदशरात्रस्येति। अभियुक्तप्रसिद्ध्येति। सत्रकाण्डे समाम्नानाद-

# अथाष्टमाध्यायस्य तृतीयः पादः.

(१)—हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥

आग्नावैष्णवमेकादशकपालं, सारस्वतं चरुं, बार्हस्पत्यं चरुम्' इत्यादिहविर्गणे क्रमसामान्यात्प्रथमतृतीययोः आग्नावैष्णवबार्हस्पत्ययोः आग्नेयाग्नीषौमीयविकारत्वमिति प्राप्ते-

क्रमसामान्यस्याशाब्दस्यान्यसापेक्षत्वेन विलम्बोपस्थितिकत्वात् उत्पत्तिवाक्यगत-देवतासादृश्यस्यानन्यापेक्षत्वेन यागस्वरूपपरिचायकत्वेन च शीघ्रोपस्थितिकस्य बलवत्त्वात्। तेन आग्नावैष्णवस्याग्नीषोमीयविकारत्वं बार्हस्पत्यस्य चाग्नेयविकारत्वम् ॥ १ ॥

(२)—गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयताग्नेयवत् ॥ ३ ॥ नानाहानि वा सङ्घातत्वात् प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥

जनकसप्तरात्रे 'चत्वारि त्रिवृन्त्यहानि अग्निष्टोममुखानि' इति श्रुतम्। तत्र चतुर्ष्वप्यहस्तु द्वादशाहिकदशाहान्तर्गतप्राथमिकस्य त्रिवृत्स्तोमकस्याह्नः प्रवृत्तिः त्रिवृत्त्वलिङ्गात्।

---

मियुक्तप्रसिद्धिः। किञ्चोपायिचोदनाचोदितत्वं सत्रत्वलिङ्गं प्रधानचोदनागतत्वादन्तरङ्गमिति वाक्यान्तरगताहीनत्वद्योतकं लिङ्गं बहिरङ्गत्वाद्दुर्बलम्। अतस्सत्रत्वमेव युक्तमिति सत्रधर्मा एवेति भावः।

इति श्रीभाट्टदीपिकाप्रभावल्यां
अष्टमाध्यायस्य द्वितीयः पादः

---

अथ तृतीयः पादः

हविर्गणे परमुत्तरस्य। प्रथमतृतीययोरिति। द्वितीयस्य सारस्वतयागस्य यद्यपि द्वितीयस्थानकत्वेनोपांशुयाजविकारत्वं प्राप्तं तथाप्यौषधद्रव्यकत्वात् न तद्भवतीति निश्चितमेवेत्यभिप्रायेण प्रथमतृतीययोरित्युक्तम्।

गणचोदनायाम्

दशाहान्तर्गतप्राथमिकस्येति। द्वादशाहे प्रायणीयोऽतिरात्रः पृष्ठ्यः षडहः चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशत्स्तोमकाः रथन्तरबृहत्सामकाः उक्थ्यरूपास्त्रयश्छन्दोमाः अविवाक्यमह-

**न तु क्रमसहकृतगणत्वसामान्येनाद्यापेक्षेण दशाहान्तर्गतानामाद्यानां चतुर्णामह्नां प्रवृत्तिः। तत्तदहर्वृत्तित्रिवृत्त्वस्यान्यानपेक्षत्वेन बलवत्त्वादिति प्राप्ते—**

**'स्वर्गकामो जनकसप्तरात्रेण यजेत' इतिवचनेनोत्पन्नानां सप्तानां कर्मणां मध्ये चत्वार्यनूद्य त्रिवृत्त्वविधानेन त्रिवृत्त्वस्योत्पन्नशिष्टत्वेन दुर्बलत्वादुत्पत्तिशिष्टेन गणत्वेनैव 'प्रथमस्य प्रथमम्' इत्यादिक्रमसहकृतेन सप्तानामप्यह्नां द्वादशाहि*दशाहान्तर्गतसप्ताह-विकारत्वम्। न च प्राप्तकर्मानुवादेन त्रिवृत्त्वविधिः अग्निष्टोममुखत्वस्य च विधिरिति वाक्यभेदः,** दशाहान्तर्गतचतुर्णां **मध्ये प्रथमस्याग्निष्टोमसंस्थाकत्वेनाग्निष्टोममुखत्वस्य प्राप्तत्वात्। न** चाद्येष्वेव **चतुर्षु त्रिवृत्त्वविधौ प्रमाणाभावेनाग्निष्टोममुखत्वस्यापि विधि-रावश्यक इति वाच्यं, प्रथमातिक्रमे कारणाभावात्** त्रयाणामन्येषां **विध्यन्तरेण स्तोम-विधानाच्चाद्येष्वेव चतुर्षु त्रिवृत्त्वप्राप्तेरिति भाष्यकाराभिप्रायः।**

**वस्तुतस्तु—चतुस्सङ्ख्याकोद्देशेन त्रिवृत्त्वविधौ योग्यतया सप्तस्वप्यहस्सु आद्येषु चतुर्षु स्तोत्रेषु त्रिवृत्त्वविध्यापत्तेरहर्मात्रोद्देशेन तद्विधौ च सर्वत्र तदापत्तेः चतुस्संख्या-विशिष्टाहरुद्देशे च वाक्यभेदापत्तेरयमेव सङ्ख्याभिन्नत्रिवृत्त्वविशिष्टकर्मोत्पत्तिविधिः।**

---

रुदयनीयोऽतिरात्रः इत्येवं द्वादशानामन्हां क्लृप्तिः। तत्रेतराहर्गणेषु प्रथमोत्तमौ वर्जयित्वा दशरात्र-स्यातिदेश इति साधितम्। एवञ्च पृष्ठ्यषडहस्य प्राथमिकमहस्त्रिवृद्भवतीति त्रिवृत्त्वसामान्य-लिङ्गात् सप्तरात्रीयचतुर्ष्वप्यहस्सु क्रमेण पृष्ठ्यषडहसंबन्धिप्रथमस्यान्हो विध्यन्तस्याभ्यास इत्यर्थः। **दशाहान्तर्गतचतुर्णामिति।** द्वादशाहान्तर्गतदशाहीयं प्रथममहः अग्निष्टोमं भवति अन्यानि अन्य-संस्थाकानि। तथा च जनकसप्ताहेषु क्रमेण [1]दशाहातिदेशे प्रथमस्याग्निष्टोमसंस्थाकत्वं लभ्यत इत्यग्निष्टोममुखत्वमाद्यानाञ्चतुर्णामन्हां भवति सिद्धान्ते। पूर्वपक्षे दशाहीयप्रथमाहर्विध्यन्त-स्यैवाभ्यासे तेष्वग्निष्टोमसंस्थाकत्वस्यैव प्राप्तेस्सर्वेषामेवाग्निष्टोमकत्वापत्तिरित्यग्निष्टोममुखत्वानुपपत्तिः। एवञ्च दशाहमध्ये यानि चत्वार्यहानि तेषु प्रथमस्याग्निष्टोमसंस्थाकत्वेन तदतिदेशेन जनकसप्त-रात्रीयप्रथमेऽहनि अग्निष्टोमसंस्थाप्राप्तेरग्निष्टोममुखत्वस्य प्राप्तत्वादित्यर्थः। त्रिवृत्त्वविधाने भाष्य-कारेणोक्ते तत्र वार्तिकोक्तं दूषणं परिहर्तुमनुवदति—**न चाद्येष्विति।** यदि त्रिवृत्त्वविधिना क्रमेण सप्तरात्रीयप्रथमाहरारभ्य चतुर्ष्वहःसु त्रिवृत्त्वं विधीयेत तदा तेषां क्रमेण दशाहान्तर्गत-प्रथमाद्यहरतिदेशेनाग्निष्टोममुखत्वं प्राप्तमिति शक्यते वक्तुम्। नहि तद्विधौ सप्तरात्रीयाणि प्रथमान्येव चत्वार्यहानि उद्देश्यानीति नियमे प्रमाणमस्ति। प्राथमिकानि त्रीण्यहानि विहायापि चतुर्थमहरारभ्यापि सप्तमाहरवधिकानामपि चतुर्णामन्हामुद्देश्यत्वस्यानिवारणादिति तेषु कथ-मपि अग्निष्टोमसंस्थातिदेशाभावेनाग्निष्टोममुखत्वाप्राप्तेरग्निष्टोममुखत्वविधिरावश्यक इत्याशङ्कार्थः।

---

1. B द्वादशाहा

त्रयाणां चान्येषां विध्यन्तरेण विधिः। सर्वेषां च फलवाक्येन फलसम्बन्धमात्रकरणम्। एवं चोत्परिवाक्ये चतुर्णां गणत्वप्रतीतेस्तस्योत्पत्तिगतत्ववत् त्रिवृत्त्वस्याप्युत्पत्तिगतत्वेन साम्येऽपि त्रिवृत्त्वस्याङ्गभूतस्तोत्रवृत्तित्वात् प्रधानवृत्तिगणत्वापेक्षया दुर्बलत्वेन गणत्वसादृश्येनैवाद्यानां चतुर्णामतिदेशः प्रसाध्यः। सर्वथा नाद्यस्यैव चतुर्ष्वतिदेशः। एवं च 'अग्निष्टोममुखानि' इत्यनुवादोपपत्तिः। इतरेषां त्रयाणामन्यसंस्थाकत्वात्। इतरथा 'अग्निष्टोमानि' इत्येवावाक्ष्यत् सर्वेष्वग्निष्टोमसंस्थाकत्वस्यैवातिदेशेन प्राप्तेः ॥ २ ॥

## (३)—कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥

षट्त्रिंशद्रात्रे 'षडहा भवन्ति, चत्वारो भवन्ति' इति श्रुतम्। द्वादशाहान्तर्गतदशाहे चाद्यः एकष्षडहः सधर्मकश्श्रुतः। तदिह तस्यैव वारचतुष्टयमत्र प्रवृत्तिः उत दशाहस्यावृत्तिरिति चिन्तायां—न तावदत्र षडहशब्दो नामातिदेशकः। तस्य सङ्ख्याविशिष्टाहर्वाचकस्य गुणविशिष्टकर्मविधायित्वेन नामत्वाभावात्। नामत्वेऽपि वा यौगिकत्वेनोक्तविधायित्वाक्षतेर्नामातिदेशकत्वायोगाच्च। नापि प्राकृतषडहानुवादेन सङ्ख्याविधिः द्वादशाहत्वानुपपत्त्या तस्या अनिवेशात्[1]। अतः कर्मान्तराण्येव सङ्ख्यया चतुर्विंशतिर्विधीयन्ते। न तु षडहस्य चतुरावृत्तिः। तथात्वे चतुष्षडहो भवतीति क्रियाभ्यावृत्तिविहितसुच्प्रत्ययापत्तेः। 'चत्वारो भवन्ति' इति श्रवणात्तु पृथक्त्वनिवेशिन्या

---

त्रयाणामिति। पञ्चममारभ्य त्रयाणामित्यर्थः। त्रयाणाञ्चान्येषामिति। अत्रापि प्रथमातिक्रमे कारणाभावे स्थिते पञ्चममारभ्य त्रयाणामन्येषामित्यर्थः। इतरेषां त्रयाणामिति। त्रिवृद्वाक्यविहितकर्मचतुष्टयमध्ये प्रथमस्याग्निष्टोमत्वात् तदपेक्षयेतरेषां त्रयाणामित्यर्थः। तथा चाग्निष्टोममुखत्वमितरेषां त्रयाणामुपपन्नं भवतीति भावः।

---

कालाभ्यासे च। अत्र कालाभ्यासे च बादरिः कर्मभेदादिति सूत्रेण पूर्वपक्षस्य परमतत्वेनोक्तेः, तदुत्तरत्वेन वक्ष्यमाणस्य जैमिनिमतस्याभ्यर्हितत्वसूचनाय सन्देहकोटौ प्राथम्येन तदेवानुवदति—तस्यैव वारचतुष्टयेति। विहितसुच्प्रत्ययेति। द्वित्रिचतुर्भ्यः सुजि (पा. सू. ५. ४. १८.) त्यनुशासनविहितेत्यर्थः। अत्र भाष्यकारेणाह्नां चतुर्विंशतिसङ्ख्यासम्बन्धस्य प्रत्यक्षविधिनाऽविधानात् षडहचतुष्टयेनैव साऽनुमातव्या। अनुमितवाक्येन चाहर्गणत्वं प्रचयशिष्टं यावत्कल्प्यते तावत् अनुमापकषडहत्वेनोपस्थितषडहधर्मानेव गृह्णातीति

---

1. तस्यानतिरेकात्।

सङ्ख्यया भेद एव। अतश्च गणत्वसामान्याद्दशाहं द्विरभ्यस्यावशिष्टेषु चतुर्षु दशाहाद्यानां चतुर्णां प्रवृत्तिरिति प्राप्ते—

यद्यपि तन्त्ररत्नरीत्या चतुर्विंशतिरेतानि कर्माणि तथापि षडहशब्दवत्त्वसादृश्येन तस्यैव चतुर्वारं प्रवृत्तिः। वस्तुतस्तु नात्र तावन्ति कर्माणि चतुर्विंशतिसङ्ख्याया अश्रवणात् षट्सङ्ख्यायाश्चतुस्सङ्ख्यायाश्चैकत्र द्वयं इति न्यायेन कर्मान्वयमङ्गीकृत्य भेदाङ्गीकारे कर्मदशकापत्तिः। षट्सङ्ख्यायास्समासगतत्वेन तथाऽन्वयानुपपत्तिश्च। अतः एकविशिष्टे अपरवैशिष्ट्यमिति न्यायेनैव षट्सङ्ख्याविशिष्टे चतुस्सङ्ख्यान्वयो वाच्यः। अतश्च सत्यप्येकवाक्यत्वे प्रयाजैकादशत्वन्यायेन निर्ज्ञातसङ्ख्यत्वाच्चतुस्सङ्ख्या आवृत्त्यापादिकैव। वस्तुतस्तु—पृथगाख्यातश्रवणादत्रापि भिन्नवाक्यत्वमेव। तेन षण्णामेव कर्मणां चतुर्वारमावृत्तिः। सुच्प्रत्ययाभावेऽपि च प्रमाणान्तरेणावृत्तिकल्पने न कश्चिद्दोषः। अतस्सूत्रभाष्यस्वारस्येन षण्णामेवावृत्तेः षट्सङ्ख्यत्वसादृश्यादिना षडहस्यैव वारचतुष्टयं धर्माः॥ ३॥

---

(४)—संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात्॥ ८॥
अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात्॥ ९॥

अनारभ्य 'शताग्निष्टोमं भवति। शतोक्थ्यं शतातिरात्रम्' इति श्रुतम्। तत्राग्निष्टोमादिशब्दानां ज्योतिष्टोम एव प्रचुरप्रयोगात्, तदनुवादेन शतसङ्ख्या अभ्यासा-

---

दशाहान्तर्गतषडहस्यैव विध्यन्तावृत्तिः। षडहस्य चतुर्वारमावृत्तेर्विधानात्। न ह्यत्र चतुस्सङ्ख्यानिवेशेन चतुर्विंशतिकर्माणि भिन्नानि विधीयन्ते; येन तत्र षडहत्वानुपस्थितेः उपस्थिताहर्गणत्वसामान्यात् दशरात्रविध्यन्तस्यैवावृत्तिर्भवेत्; नत्वेतदस्ति, षडहस्य निर्ज्ञातसङ्ख्यत्वेन चतुस्सङ्ख्याया अभ्यासापादकत्वादिति सिद्धान्तितम्। तन्त्ररत्नकृता तु दशरात्रीयान्हामत्र प्रत्यभिज्ञाऽभावात् प्रकरणान्तरत्वात् चतुस्सङ्ख्या भेदिकैवेति चतुर्विंशतिसङ्ख्यानि भिन्नानि कर्माणीति सिद्धान्तितम्। अस्मिन्मते भेदे सत्यपि सिद्धान्तेऽविशेषं प्रतिपादयन्नेव भाष्यकारमतं समर्थयति—यद्यपि तन्त्ररत्नेत्यादिना। अत्र षडहशब्दवत्त्वसादृश्येन षडहधर्मातिदेशस्वीकारे शताग्निष्टोमीयद्वितीयाद्यहस्स्वपि अग्निष्टोमशब्दवत्त्वसादृश्याविशेषेण दशरात्रीयप्रथमाहरतिदेशस्यैवापत्तेः न गणत्वसादृश्यापेक्षया तत्तच्छब्दवत्त्वसादृश्यं प्रबलमित्यपरितुष्याऽऽह—वस्तुतस्त्विति।

पादिका विधीयते। न ह्यग्निष्टोमादिशब्दानां संस्थाविशिष्टक्रतुसामान्यवाचित्वं, तथात्वे 'अथातोऽग्निमग्निष्टोमेन' इत्यादौ प्राकरणिकोत्तरवेद्यवरोधेन चयनस्य विकृतौ निवेशापत्तेः। अतो ज्योतिष्टोमत्वात् नात्र द्वादशाहप्रवृत्तिः। अथवा अग्निष्टोमादिशब्दानां नागृहीतविशेषणान्यायेन संस्थामात्रवाचित्वाज्ज्योतिष्टोमे निरूढलक्षणाङ्गीकारेऽपि प्रकृते तदाश्रयणे प्रमाणाभावात् नित्यकाम्यसंस्थानुवादेनैव शतावृत्तिविधिः। अस्मिन्नपि पक्षे ज्योतिष्टोमस्यैवाश्रयत्वादिना सत्वान्न गणातिदेशः। अस्तुवेदं कर्मान्तरं तथाऽप्यन्यपदार्थस्यैकवचनान्तत्वादेकमेव तत्। शतसङ्ख्यायाश्च संस्थागतत्वेनाभेदकत्वात्। अतश्शतसङ्ख्याकमभ्यस्तमेकंकर्म ज्योतिष्टोमविकार इति न गणातिदेश इति प्राप्ते—

एकप्रसरताभङ्गापत्तेर्न तावज्ज्योतिष्टोमोद्देशेन संस्थोद्देशेन वा सङ्ख्याविधिः। अतो वषट्कर्तृभक्षवदेव कर्मान्तरम्। तदपि नैकं, तथात्वे एकस्य कर्मणोऽनेकसंस्थाकत्वस्याभ्यासमन्तरेणानुपपत्तेरश्रुतसुत्याभ्याकल्पनापत्तेः। अतोऽग्निष्टोमोक्थ्यादिपदानां 'त्रिवृदग्निष्टुदग्निष्टोमः, उक्थ्यो वरूपसामा' इत्यादौ विकृतियज्ञसामानाधिकरण्येनापि क्वाचित्कप्रयोगेण साम्प्रतिकलक्षणया तत्तत्संस्थाकयज्ञ तत्परत्वमङ्गीकृत्य शतसङ्ख्याभिन्नतावद्यज्ञविधिवायम्। एवं चान्यपदार्थो न कर्म, अपि तु शतं उक्थ्यसंस्थाकाः कारणं यस्मिन्निति व्युत्पत्त्या फलमेवेति ध्येयम्। तदपि च नोद्दिश्य यज्ञविधिः एकप्रसरताभङ्गतादवस्थ्यापत्तेः। अपि तु तात्पर्यगत्या अंशत्रयविशिष्टतावद्भावनाविधिरेवेति युक्ता गणस्यैवातिदेशाद्दशवारमावृत्तिः। द्विगुसमासत्वाद्वा न कश्चिद्दोषः। कर्मैकत्वेऽपि वा आवृत्तेरावश्यकत्वेन सुत्यागणत्वानपायात् दशाहधर्माविरोधः॥ ४॥

---

### संस्थागणेषु तदभ्यासः

सिद्धान्तेऽग्निष्टोमादिशब्दानां य एवाग्निष्टोमसंस्थः क्रतुः तत्रैव प्रवृत्तिः न तु ज्योतिष्टोम-इति प्रकृतप्रत्यभिज्ञानाभावात् शतसङ्ख्यायुक्तानि कर्मान्तराण्येव विधीयन्ते। ततश्च गणत्वसामान्यात् द्वादशाहविध्यन्त इति भाष्योक्तं पूर्वपक्षे आक्षिपति—**न ह्यग्निष्टोमादिशब्दानामिति। एकं कर्मेति**। कर्मैक्ये सति गणत्वाभावात् न गणातिदेश इत्यर्थः। ननु अन्यपदार्थप्राधान्यबलात् एककर्मत्वे निश्चिते अश्रुतकर्मान्तरकल्पनवत् अश्रुतसुत्याभ्यासकल्पनं न दोष इत्यत आह—**एवञ्चान्यपदार्थ इति**– तथाचान्यपदार्थस्यानिश्चयान्न तदनुरोधेन न्यायसिद्धकर्मान्तरविधित्वत्याग इत्यर्थः। **दशवारमावृत्तिरिति**। शतसङ्ख्याकेषु कर्मसु दशरात्रविध्यन्तस्य दशवारमावृत्तिरित्यर्थः। **द्विगुसमासत्वाद्वेति**। यद्यप्यकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट (पा. सू. २-४-१७) इति सूत्राच्छताग्निष्टोमीति पञ्चफलीतिवत् स्त्रीलिङ्गं प्राप्नोति तथापि पञ्चपात्रं चतुर्युगमितिवत् अस्मिन्पक्षे नपुंसकं कथञ्चिदुपपादनीयम्। ननु शतानामग्निष्टोमानां समाहारः शताग्निष्टोमं इति द्विगुसमासाङ्गीकारे अग्निष्टोमादिपदानां यज्ञादिपरत्व एव मानाभावात् लाघवादेकस्मिन्नपि कर्मणि शतवारमभ्यस्ताग्निष्टोमसंस्थासमाहारसंभवात् गणत्वासंभवे कथं गणातिदेशसिद्धान्तोपपत्तिरित्याशङ्कां भिन्नानां कर्मणां गणाभावेऽप्यभ्यस्तसुत्यागणत्वसादृश्येन तदुपपत्तिरित्येवं परिहरति—**कर्मैकत्वेपि वेति**।

(५)—गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥

शताग्निष्टोमादौ द्वादशाहगतदशरात्रप्रवृत्तिरित्युक्तम्। द्वादशाहे च प्रथमोत्तमावतिरात्रसंस्थाकौ। दशरात्रप्रथमोत्तमौ च अग्निष्टोमसंस्थाकौ। मध्यगतानि चाष्टौ उक्थ्यसंस्थाकानि। केषांचित् सतोक्थ्यसंस्थाकानि, एकष्षोडशी। तदिह शताग्निष्टोमे तावदतिदेशप्राप्तानामुक्थ्यादीनां बाधात् अग्निष्टोमसंस्थाकत्वे न काऽपि क्षतिः। उक्थ्यातिरात्रयोस्तु येष्वतिदेशेनैवोक्थ्यस्तोत्रादि प्राप्तं तेष्वपि न काचिच्छङ्का। येषु तु अग्निष्टोमसंस्थाकत्वप्राप्तिस्तेषु वचनादेवोक्थ्येषु कर्तव्येषु द्वादशाहिकान्येवोक्थ्यातिरात्रस्तोत्राणि उपस्थितत्वात्कर्तव्यानीति प्राप्ते—

न तावदतिदेशेन तेषामुपस्थितिः 'प्रथमस्य प्रथमं' इत्येवं क्रमेण प्रत्येकमेव तत्तदहस्सु तत्तदह्नामतिदेशेन यान्यहानि उक्थ्यसंस्थाकप्राकृताहर्विकाराणि तेषु तदीयोक्थ्यप्राप्तावपि अग्निष्टोमसंस्थाकप्राकृताहर्विकारेषु तत्प्राप्तौ प्रमाणाभावात् प्रथमोत्तमयोरेवातिरात्रसंस्थाकत्वेन तयोः क्वाप्यनतिदेशेन रात्रिपर्यायाणां सुतरामप्राप्तेश्च। अतश्शतोक्थ्यादौ तेषु तेष्वहस्सु वाचनिकानि स्तोत्राणि। 'न हि भिक्षुको भिक्षुकान्तरं याचते' इति न्यायेन ज्योतिष्टोमस्थान्येव कार्याणि। अयं च नातिदेशः अपि तु कर्मान्तरत्वे प्रमाणाभावात् यत्रोक्थ्यप्रसिद्धिः तत्रत्यानि वचनेन विधीयन्ते।

---

गणादुपचयस्तत्प्रकृतित्वात्

उक्थ्यातिरात्रयोस्त्विति। शतोक्थ्यशतातिरात्रयोरित्यर्थः। येषु अतिदेशेनैवेति। दशरात्रप्रथमोत्तमौ वर्जयित्वा मध्यतनेष्वष्टस्वहस्सु उक्थ्यस्तोत्राणामेव सत्त्वादतिदेशेन क्रमेणोक्थ्यस्तोत्राणामेव प्राप्तेर्न चिन्ता। अतिरात्रे च प्रथमोत्तमयोर्द्वादशाहीयान्होरतिरात्रस्तोत्रकत्वेन तदतिदेशेन तत्प्राप्तेर्न चिन्तेत्यर्थः। येषु त्विति। शतो[1]क्थ्यादिद्वितीयेष्वहस्स्वित्यर्थः। उपस्थितत्वादिति। द्वादशाहिकोक्थ्यातिरात्रस्तोत्रयोर्ज्यौतिष्टोमिकोक्थ्यातिरात्रस्तोत्रापेक्षया केषाञ्चिदपूर्वाणां धर्माणां विधानात् तदतिदेशे सति तद्धर्माणां प्राप्तिः। ज्यौतिष्टोमिकतदतिदेशे तु न तद्धर्मप्राप्तिरित्यनुष्ठाने विशेषो द्रष्टव्यः। क्वाप्यनतिदेशा[2]दिति। चोदनासुत्वपूर्वत्वाल्लिङ्गेन नियमः स्यात् (जै-सू-१०-५-४) इति दशमपञ्चमपादाधिकरणे प्रथमोत्तमौ वर्जयित्वा दशरात्रस्यैवाहर्गणेष्वतिदेश इति साधयिष्यमाणत्वात् तयोः क्वाप्यनतिदेशेनेत्यर्थः। कर्मान्तरत्वे प्रमाणाभावादिति। ज्योतिष्टोमाङ्गोक्थ्यातिरात्रस्तोत्रापेक्षया एषां कर्मान्तरत्वे प्रमाणा-

---

1 B अतिदेशतः उक्थ्यादि

2. The text reads क्वाप्यनतिदेशेन

किञ्च स्तोत्राणामुत्पत्तिः ज्योतिष्टोम एव। द्वादशाहे तु अतिदेशप्राप्तस्तोत्रानुवादेन धर्मविशेषमात्रम्। अतश्च ज्योतिष्टोमिकानामेवोपदेशेन विधानम्। अत एव रात्रिपर्यायादीनां ज्योतिष्टोमे फलार्थसंस्थाङ्गत्वेनेहानतिदेशेऽपि न काचित् क्षतिः उपदेशेनैव तद्विधानाङ्गीकारात ॥ ५ ॥

---

(६)—गायत्रीषु प्राकृतीनामवच्छेदः प्रवृत्त्यधिकारात सङ्ख्यात्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥ न विंशतौ दशेति चेत् ॥ १४ ॥ ऐकसङ्ख्यमेव स्यात् ॥ १५ ॥ गुणाद्वा द्रव्यशब्दस्स्यादसर्वविषयत्वात् ॥ १६ ॥ गोत्ववच्च समन्वयः ॥ १७ ॥ सङ्ख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥ इतरस्याश्रुतित्वाच्च ॥ १९ ॥ द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात ॥ २० ॥ अशास्त्रलक्षणत्वाच्च ॥ २१ ॥ उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात् ॥ २२ ॥ वचनमिति चेत् ॥ २३ ॥ यावदुक्तम् ॥ २४ ॥ अपूर्वे च विकल्पस्स्याद्यदि सङ्ख्याविधानम् ॥२५॥ ऋग्गुणत्वान्नेति चेत् ॥ २६ ॥ तथा पूर्ववति स्यात् ॥२७॥ गुणावेशश्च सर्वत्र ॥२८॥

---

भावात् अतिदेशानुपपत्तेः, अयं पूर्वाधिकरणोपपादितगणातिदेशप्रसङ्गात् उपचयविचारः कृत इति भावः।

उत्तराधिकरणं स्पष्टार्थम्। तत्र-न **ऋग्वाचित्वपक्षे इति**। ऋचामभेदानुपपत्त्या सामानाधिकरण्यासम्भवादित्यर्थः। **दाशतयीभ्य एवेति**। दशमण्डलान्यवयवभूतानि यस्मिन्नित्यर्थे सङ्ख्याया अवयवे तयबितिसूत्रेण (पासू. ५-२-४२) तयप्प्रत्ययान्ते दशतयशब्दे निष्पन्ने दशतये ऋग्वेदे भवा दाशतय्यः गायत्र्यः आनेया इत्यर्थः। **अधिकागमेति**। तत्तदहस्स्वतिदेशतोऽप्राप्तानां ज्यौतिष्टोमिकानामुक्थ्यादिस्तोत्राणां रात्रिपर्यायाणाञ्चाविकानामागमश्चिन्तित इत्यर्थः

---

॥ २८ ॥ निष्पन्नग्रहणान्नेति चेत् ॥ २९ ॥ तथेहापि स्यात् ॥ ३० ॥ यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धस्स्यात् ॥ ३१ ॥ दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ तथा शरेष्वपि ॥ ३३ ॥ भक्त्येति चेत् ॥ ३४ ॥ तथेतरस्मिन् ॥ ३५ ॥ अर्थस्य चासमाप्तत्वात् न तासामेकदेशे स्यात् ॥ ३६ ॥

बृहस्पतिसवे प्रकृतितो गायत्रत्रैष्टुभादिनानाच्छन्दस्सु प्राप्तेषु छन्दोन्तरपरिसङ्ख्यार्थं 'गायत्रमेतदहर्भवति' इति श्रुतम्। तत्र गायत्र्यादिशब्दानां चतुर्विंशत्याद्यक्षरसङ्ख्यामात्रवाचित्वात् नागृहीतविशेषणान्यायेन लक्षणयाऽपि ऋक्षु प्रयोगोपपत्तेस्तत्रापि न शक्तिः। अतश्च प्राकृतीष्वेव ऋक्षु अधिकाक्षरलोपं कृत्वा चतुर्विंशत्यक्षराण्येव पठनीयानि।

अत एव 'ये हि द्वे गायत्र्यौ सा जगती' इति लिङ्गमपि सङ्ख्यावाचित्वपक्षे उपपद्यते न ऋग्वाचित्वपक्षे 'तिस्रोऽनुष्टुभश्चतस्रो गायत्र्यो भवन्ति' इति च। अन्ततः शतोऽग्निष्टोमे उक्थ्यादिस्तोत्रलोपवदिहाप्यधिकाक्षरावलोपप्रसक्तौ;

न गायत्र्यादिशब्दानां सङ्ख्यामात्रवाचित्वं, तथात्वे घटादिसङ्ख्यायामपि प्रयोगापत्तेः। प्रयोगानुसारेणाक्षरसङ्ख्यावाचित्वे तेनैव ऋग्विशेषस्य वाच्यतापत्तेः। इतरथा तावदक्षरगद्येऽपि प्रयोगापत्तेः। अतोऽष्टाक्षरपादत्रययुक्तऋङ्मन्त्रविशेष एव गायत्र्यादिपदवाच्यः। निरुक्तलिङ्गेषु तु सङ्ख्यामात्रे लाक्षणिकः। तेन दाशतयीभ्य एवोत्पन्नगायत्र्य आनेया नाक्षरविलोपः। तथात्वे वाक्यार्थपरिपूर्त्यभावेनार्थप्रकाशकत्वानुपपत्तेश्च। पूर्वाधिकरणे अधिकागमरूपोपचयश्चिन्तितः तत्प्रसङ्गादिहापचयश्चिन्त्यत इति नात्र तथाऽध्यायसङ्गतौ यतितव्यम् ॥ ६ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
अष्टमाध्यायस्य तृतीयः पादः

---

## अथाष्टमाध्यायस्य चतुर्थः पादः.

(१)—दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥ स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ जुहोतिचोदनायां वा तत्संयोगात् ॥ ४ ॥ द्रव्योपदेशाद्वा

गुणाभिधानं स्यात् ॥ ५ ॥ न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥ ६ ॥ दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ तथाऽभिहविषोः ॥ ८ ॥ उक्तश्चार्थसम्बन्धः ॥ ९ ॥

तदेवं सिद्धेऽतिदेशे दर्वीहोमेषु तदपवादं वक्तुं दर्वीहोमशब्दार्थो निरूप्यते। तत्र न तावदयं दर्व्याख्यस्य गुणस्य विधिरिति शङ्कितुं शक्यं, सोमादिवत् विधिवाक्ये श्रवणाभावेन विधायकत्वशङ्कानुपपत्तेः। न च वास्तुहोमीयगुणविध्यर्थवादे 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इत्यत्र श्रुतस्य दर्विहोमपदस्य घृतादिपदवत् पदान्तरकल्पनया विधायकत्वसम्भवः। 'पुरोनुवाक्यामनूच्य याज्यया यजति' इति ऋग्द्वयरूपगुणविधेर्दर्व्यपेक्षाभावात्। न च सिद्धवन्निर्देशान्यथानुपपत्त्या 'उपरि हि देवेभ्यो धारयति' इतिवत् वाक्यान्तरकल्पनया होमोद्देशेनैव दर्विविधायत्वं; वास्तुहोमे तावत् स्रुचः प्रत्यक्षशिष्टत्वेन विधातुमशक्यत्वात्, होमान्तरेष्वपि स्मार्तेषु 'न्यग्बिलया मूलदण्डया दर्व्या जुहोति' इति स्मार्तवचनेनैव तत्प्राप्तेः, श्रौतेष्वपि स्रुवेण जुहोति, चमसेन जुहोति, जुह्वा जुहोति' इत्यादिना तत्र तत्र तत्तत्पात्रान्तरसद्भावाच्च। अतश्च तत्प्रख्यन्यायेन गुणविधित्वानुपपत्तेः दर्विशब्दं पात्रान्तरस्योपलक्षणमङ्गीकृत्यैकदेशप्रवृत्तिनिमित्तेन वा तत्साध्यहोममात्रस्येदं नामधेयम्।

तत्रापि यथैव स्मार्तानां पर्वणस्थालीपाकादीनां कर्तरि दार्विहोमिक इति प्रयोगदर्शनात् प्रवृत्तिनिमित्तसद्भावाच्च तेषां नामधेयं तथैव वास्तुहोमे प्रयोगाच्छ्रौतानामपि। न च वास्तुहोमस्यैकया ऋचा करणे दर्विहोमत्वप्रसक्त्यभिधानात् वस्तुतो दर्विहोमत्वाभावप्रतीतेरस्य प्रयोगस्य विरुद्धत्वमिति वाच्यं; दर्विहोमपदस्य स्मार्तमात्रनामत्वे वास्तुहोमे एकया ऋचा क्रियमाणेऽपि दर्विहोमत्वानापत्तेरस्यार्थवादस्य ज्ञापकविधया श्रौतेष्वपि होमेषु दर्विहोमपदप्रवृत्तिसाधकत्वात्। अतस्सर्वनामधेयम्।

तत्रापि होमपदश्रवणात् होमानामेव न तु यागानाम्। न च यागस्थलेऽपि 'चतुरवत्तं जुहोति' इत्यनेन होमविधानात्तन्नामत्वोपपत्तिः, तत्रत्यजुहोतिना प्रक्षेपमात्रस्यैव प्रतिपत्तिरूपस्य लक्षणया विधेयत्वेन तस्य मुख्यहोमत्वाभावात्। अतो होमनामधेयमेवेदम्। इदं च सिद्धमेवोत्तरविवक्षार्थं प्राप्यते ॥ १ ॥

---

दर्विहोमो यज्ञाभिधानम्

एतदधिकरणं स्पष्टार्थम्। तत्र पुरोनुवाक्यामिति। एतद्वाक्यशेषत्वेनास्य पाठात् पूर्वतनविधेरपेक्षाऽभावेनास्य विधायकत्वकल्पनं संभवति। घृतादौ तु विध्यपेक्षया तत्कल्पनमिति वैषम्यमित्यर्थः।

(२)—तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥ न वा स्वाहाकारेण संयोगात् वषट्कारस्य च निर्देशात् तन्त्रे तेन विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वात् ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥ उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात् पशुवत् ॥ १४ ॥ अनुत्तरार्थो वाऽर्थवत्त्वात् आनर्थक्यात् हि प्राकृतस्योपरोधस्स्यात् ॥ १५ ॥ न प्रकृतावपीति चेत् ॥ १६ ॥ उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ तच्चोदना वेष्टेः प्रवृत्तित्वात् तद्विधिस्स्यात् ॥ १८ ॥ शब्दसामर्थ्याच्च ॥ १९ ॥ लिङ्गदर्शनाच्च ॥ २० ॥ तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥ २१ ॥ विधिरिति चेत् ॥ २२ ॥ न वाक्यशेषत्वात् गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ येषां वाऽपरयोर्होमः तेषां स्यादविरोधात् ॥ २४ ॥ तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥ लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥ प्रतिपत्ती तु ते भवतः तस्मादतद्विकारत्वम् ॥ २७ ॥ सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वात् वचनादतिदेशस्स्यात् ॥ २८ ॥

तेष्वव्यक्तत्वसामान्येन सोमयागविकारत्वं अव्यक्तत्वं चोत्पत्तिवाक्ये देवताभावरूपं, न तु स्वाङ्गतया देवताशून्यत्वं, तथात्वे सिद्धान्ते दर्विहोमेषु देवताऽभावप्रसङ्गात्। अत एवोपांशुयाजविकारत्वमपि शक्यं वक्तुम्। अथवा होमत्वसामान्याधिक्यान्नारिष्ठहोमविकारत्वम्। अत एवाग्निहोत्रे 'यदि कीटोऽवपद्येतान्तःपरिधि निनयेत्' इति परिधिदर्शनम्। परिधेर्हि अङ्गप्रधानार्थत्वात् नारिष्ठहोमाङ्गत्वमपि सुलभमेव। तथा अग्नौ

---

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात्। अस्यापि प्रायः स्पष्टार्थत्वात् क्वचिदेव मध्ये व्याख्यायते। देवताऽभावप्रसङ्गादिति। यदि स्वाङ्गतया देवताशून्य[1]त्वसादृश्येन

1 B. त्वात्सा

'अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति' इति वेदिदर्शनं नारिष्ठहोमविकारत्वसाधकम्। यत्तु मूले पत्नीसंयाजविकारत्वं शङ्कितं तत् तेषां यागत्वादुपेक्षितम्। यदि परमुपांशुयाजसाधारण्येन तदाऽस्तु पिष्टलेपफलीकरणहोमयोर्वा विकाराः। सर्वथा नापूर्वा दर्विहोमा इति प्राप्ते—

द्रव्यदेवतादिसन्निपत्योपकारकाङ्क्षसामग्रीसाकल्यरूपकृत्स्नविधानत्वेन यावदुक्तेतिकर्तव्यतयैव निराकाङ्क्षत्वात् सादृश्यस्य च विनिगमनाविरहेणानियामकत्वात् अपूर्वा एव दर्विहोमाः न प्रकृतिपूर्वाः।

यत्तु परिधिवेदिदर्शनं तत् देशोपलक्षणतयाऽप्युपपन्नम्। एवं त्र्यम्बकहोमेषु औचित्येन 'नात्रेध्माबर्हिस्संनह्यते न प्रयाजानूयाजा इज्यन्ते न सामिधेनीरन्वाह' इति स्तुतिरप्युपपद्यते। अतिदेशपक्षे स्वतन्त्रपर्युदासकल्पने विध्यन्तैकवाक्यताभङ्गापत्ते.। सोमयागाद्यविकारत्वे इदमपरं लिङ्गं—औदुम्बरीहोमे 'घृतेन द्यावापृथिवी आपृणेथाम्'

— ——

सौमिको विध्यन्त इत्युच्यते पूर्वपक्षे, तदा स्वतस्तेषामङ्गभूतदेवताऽभाव एव स्यात्। पूर्वपक्षे सौमिकातिदेशे सति ग्रहणानामतिदेशतः प्राप्तेः तदीयदेवतासम्भवान्न तदभाव इत्यभिप्रायेण सिद्धान्त इत्युक्तम्। ततश्च स्वाङ्गतया देवताशून्यत्वरूपाव्यक्तत्वहेतुर्नोभयवादिसंप्रतिपन्न इति न पूर्वपक्षे सोमातिदेशसाधक इत्यर्थः। **उपेक्षितमिति**। **यद्यपि** दर्वीहोमानां यागत्वाभावेऽपि इतरसादृश्यमादाय सोमयागविकारत्वाशङ्कावत् पत्नीसंयाजविकारत्वमपि शक्यत एव शङ्कितुं **तथापि** पूर्वसूत्रे यागत्वाभावात् सौमिके विध्यन्ते निराकृते सति अग्रे पुनः पत्नीसंयाजविध्यन्ताशङ्का नोत्तिष्ठतीत्यभिप्रायः।

अत्र चोपेक्षितमित्यस्याग्रे 'यदि परमुपांशुयाजसाधारण्येने'त्येतत् प्रदेशान्तरस्थं लेखकेन प्रमादाल्लिखितम्, पूर्वापरासंबद्धत्वात्। अतो **यदि परं नारिष्ठहोमविकारत्वे त्र्यंबकहोमे औषधद्रव्यकेषु प्रकृतिप्राप्ताज्यधर्माणां बाधस्य अप्राकृतकार्यकारितया वा आपत्तिः तदा अस्तु पिष्टलेपफलीकरणहोमयोर्वा विकार** इति सूत्रभाष्यादिस्वारस्येन वक्तुं युक्तमपि प्रमादादेव लेखकेन लिखितमिति ध्येयम्। तदैव हि'तदा अस्तु' इति ग्रन्थस्य स्वारस्यं लभ्यते। अत एव'पिष्टलेपफलीकरणहोमयोर्वा' इति वाशब्दः पूर्वोक्तनारिष्ठहोमविकारत्वखण्डनेन पक्षान्तरप्रतिपादनार्थः। तथात्वे सर्वेष्वपि दर्विहोमेषु पिष्टलेपफलीकरणहोमविकारत्वापत्त्या तुल्यन्यायेनाज्यद्रव्यकेषु तेषु प्रकृतिप्राप्तौषधधर्माणां बाधस्य अप्राकृतकार्यकारित्वस्य वाऽऽपत्तेः। अतो नारिष्ठहोमविकारत्वेन सह एतद्विकारत्वस्य विकल्पप्रतिपादनार्थ एव। तथा चाज्यद्रव्यकेषु नारिष्ठहोमविकारत्वं औषधद्रव्यकेषु पिष्टलेपहोमविकारत्वमित्येवं व्यवस्थितविकल्पाश्रयणेन उभय-

इति अन्तरा कर्णौ जुहोति भूमिगते आज्ये स्वाहाकार इति। सोमयागादिविकारत्वे हि अतिदेशेन वषट्कारः प्राप्येत तत्र स्वाहाकारस्यापि विधिरपूर्वविधिस्स्यात्।

अस्मन्मते तु 'स्वाहाकारेण वा देवेभ्यो हविः प्रदीयते वषट्कारेण वा' इत्यनारभ्याधीतवाक्येन विहितयोस्स्वाहाकारवषट्कारयोः विकल्पेन प्रदानमात्रे प्राप्तौ 'याज्याया अधिवषट्करोति' इतिवचनेन याज्यावत्कर्मणि वषट्कारनियमात् तद्रहिते परिशेषादेव स्वाहाकारप्राप्तेस्तदनुवादेन भूमिगमनोपलक्षितकालमात्रविधानाल्लाघवम्। न चैवं परिशेषादेव सर्वत्र स्वाहाकारप्राप्तौ 'अग्निर्ज्योतिः' इत्यादौ क्वचित्पुनस्स्वाहाकारपाठवैयर्थ्यः तस्य मन्त्रत्वसिद्ध्यर्थत्वेन सार्थक्यात्। यदि त्वतिदेशपक्षेऽपि औपदेशिक-

---

विकारा दर्वीहोमा इति पूर्वपक्ष इत्यर्थो[1] नः प्रतिभाति। यस्त्विति। अग्निहोत्रसंबन्धिनि हविषि यद्यमेध्यस्पृष्टः कीटोऽवपद्येत प्राप्नुयात् तदा परिध्यन्तः प्रदेशे हविर्निनयेत् इत्यर्थेन यत्र कर्मणि परिधयो यस्मिन् देशे भवन्ति तद्देशोपलक्षितनिनयनमात्रपरं तद्दर्शनमित्यर्थः। अन्तरा कर्णौ इति। यां स्पृष्ट्वोद्गाता गायति तस्याः काष्ठशकलाभ्यां द्वौ कर्णाविव क्रियते। तदन्तरा आज्येन होमः कर्तव्यः। तत्र हुतमाज्यं यदा भूमिगतं भवति तदा स्वाहान्तो घृतेनेति मन्त्रः पठनीय इत्यर्थः। यदि त्विति। यद्यपि 'याज्याया अधि वषट्करोती'ति विधिना याज्यावत्कर्माङ्गत्वेन वषट्कारनियमे कृते याज्यावत्कर्मसामान्यात् सोमयागाङ्गमपि संभवतीति सोमयागाङ्गसाधारण्येनातिदेशेन वषट्कारप्राप्तेस्तद्बाधनाय स्वाहाकारविधिरपूर्वविधिरापद्येतेति प्रदर्श्यते; तत्र याज्यावत्कर्मत्वस्य दर्विहोमेष्वभावात् परिशेषादेव स्वाहाकारप्राप्तेः न लिङ्गमेतदित्ययुक्तम्। सौमिकविध्यन्ते वषट्कारप्राप्त्यापादनस्य "याज्यायाअधि वषट्करोती"ति वचनमूलत्वाभावात्। यदा त्वनेन वचनेन वषट्कारापत्तिरुक्तास्यात् तदेदं युज्येत। सौमिकातिदेशतः प्राप्त्यापादने न परिशेषतः स्वाहाकारप्राप्तिरिति भवत्येवातिदेशाभावसाधकं लिङ्गम्; तथापि वषट्कारस्य याज्याद्वारैव सोमयागाद्यङ्गत्वात् दर्विहोमेषूपदिष्टमन्त्राम्नानेनातिदेशप्राप्त-

---

1. A. मम

मन्त्राम्नानादेव याज्याराहित्याद्वषट्कारप्राप्त्यभावेन परिशेषसिद्धेः स्वाहाकारप्राप्ति- रुद्भाव्येत ततो नेदं लिङ्गमिति ध्येयम्। अतस्सिद्धं दर्विहोमा अपूर्वा इति॥ २॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

अष्टमाध्यायस्य चतुर्थः पादः

अध्यायश्च समाप्तः.

---

याज्याऽभावे सति द्वाराभावात् सोमयागातिदेशेनापि प्राप्त्यभावात् सिद्धः परिशेष इति न स्वाहाकाराप्राप्तिरित्याशय इति।

इति श्रीपूर्वोत्तरमीमांसापारीणधुरीण-

श्रीखण्डदेवान्तेवासिकविमण्डनबालकृष्णभट्टात्मज

शंभुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां

अष्टमाध्यायस्य चतुर्थः पादः

अध्यायश्च समाप्तः

# अथ नवमाध्यायस्य प्रथमः पादः.

(१)—यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

तदेवं सिद्धेऽतिदेशे तत्प्रापितपदार्थ**विषय ऊहश्चिन्त्यते**। त्रिविधश्चोहो **निरूप्यते**।

— — —

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्णं पितरं नमामि ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥

यद्यप्यत्र गुरो. कृतावपि मयाप्युद्भाव्यते काचना-
ऽसंभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्विदं मे मतिः ॥ ४ ॥

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतम्**। प्रकृतावुपदिष्टेषु पदार्थेषु यथोपदेशमनुष्ठेयेषु वक्ष्यमाणान्यथाभावात्मकोहासम्भवात् अतिदिष्टेष्वेव च सम्भवादतिदेशनिरूपणोत्तरं तदारम्भो युक्त इति पूर्वोत्तराध्यायार्थनिरूपणयोः हेतुहेतुमद्भावसङ्गतिं दर्शयति— **तदेवं सिद्धेऽतिदेश इति । एवं**- पूर्वतनाध्यायद्वयेन । ननु यथाऽतिदेशसापेक्षत्वात् सप्तमाद्यनन्तरमूहश्चिन्तनीयः तथा उपकारातिदेशसाधनशास्त्रपदार्थातिदेशनिराससापेक्षत्वात् तन्निरूपणोत्तरमेव चिन्तनं युक्तम् । अन्यथा शास्त्रातिदेशे प्रकृताविव यथाशास्त्रमतिदेशेन पदार्थप्राप्तौ प्राकृतोपकाराभावेऽपि शास्त्रबलाददृष्टाद्युपकारस्यापि कल्पनापत्त्या बाधस्येव तस्याप्य-

सिद्धेः। तन्निरूपणञ्च दशमाद्ये करिष्यत इति तदनन्तरमारम्भ[1] ऊहचिन्ताया युक्त इत्यत आह— **तत्प्रापितपदार्थविषय इति।** अयमर्थः। सत्यमुपकारातिदेशसापेक्ष ऊहः तथापि सामान्यविशेषातिदेशेन विकृताविति कर्तव्यताप्राप्तौ निरूपितायां प्रसङ्गेन प्राप्ति[2]चिन्तानन्तरं किं प्राप्ताः पदार्थाः विकृता अविकृता वेति प्राप्यमाणपदार्थगतविकारचिन्तापि नवमे करिष्यमाणा नासङ्गता। उपकारातिदेशनिरूपणरूपदशमव्यापारस्तु अनागतावेक्षणन्यायेन बुद्धिस्थो वर्तत एव। दृश्यन्त एवानागतावेक्षणोपजीवनेनाधिकरणविचारारम्भाः। यथा विधिर्वास्यादपूर्वत्वादिति (३-४-३-१२) सूत्रेण उपव्ययत इत्यस्योपवीतविधित्वं वक्ष्यमाणमुपजीव्य उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् (३-४-२-१०) इति सूत्रेणोपवीतस्य सर्वार्थत्वदर्शपूर्णमासार्थत्वविचारः तृतीये। **यथा** वा द्वितीयाध्यायसिद्धं धात्वर्थस्यैव फलभावनाकरणत्वम्, उपपदार्थस्य तु तच्छेषत्वमिति वक्ष्माणमुपजीव्य नामधेयत्वचिन्ता उद्भिदादीनां प्रथमे। एवमिहापि न क्षतिः। एवं सविशेषायां पदार्थप्राप्तौ निरूपितायां प्राप्त्यपवादरूपो बाधो निरूपयिष्यते दशमे। तस्याद्यं 'विधेः प्रकरणान्तरे' इतिसूत्रं (१०-१-१-१) उपोद्घातमुखेनैव नवमनिरूपितार्थाक्षेपमुखेनापि प्रवर्तत इति सर्वमनवद्यम्। **अत्र** भाट्टालङ्कारकृता 'अतिदेशप्राप्तस्य कार्यनिमित्तोऽन्यथाभाव ऊह' इत्यूहलक्षणमुक्त्वा मन्त्रसामसंस्कारोहापेक्षया प्रयोगोहोऽप्येकश्चतुर्थ उक्तः। **यथा** द्वादशाहे 'पत्नीसँयाजान्तान्यहानि सन्तिष्ठन्ते असंस्थितो हि तर्हि यज्ञ' इति वाक्येन सर्वेषामह्नां फलजनने साहित्यानुरोधेन यत्र क्वचन सुत्यापरपर्यायाणामह्नां समाप्तौ प्राप्तायां, पत्नीसँयाजान्तत्वनियमविधानात्, तस्याश्च समाप्तेरुत्तमाहर्व्यतिरिक्ताहःस्वेवापेक्षणात् उत्तमवर्जमेकादशसु सुत्यासु पत्नीसँयाजान्तत्वं नियम्यते। ततश्च द्वादशाहिकपार्ष्ठिकद्वितीयान्हो विकृतिभूते द्विरात्रद्वितीयेऽहनि प्रकृतितः प्राप्तस्य पत्नीसँयाजान्तत्वस्योत्तमाहस्त्वेनान्यथाभावात् पत्नीसँयाजान्तप्रयोगस्यातिदेशप्राप्तस्यान्यथाभावात्मक ऊह इति विषयप्रदर्शनं कृतं; तन्निरासायाह—**त्रिविधश्चोह इति।** **अयं भावः।** नहि प्रयोगो नाम पदार्थान्तरं येन स अतिदिश्येत; अपि त्वनुष्ठानक्रमविशिष्टतत्तत्पदार्थव्यक्तय एव। तासाञ्चैक एवातिदेशो भिन्न एवातिदेशो वेत्यन्यदेतत्। ततश्च पत्नीसँयाजान्तत्वविशिष्टसमापनस्य द्विरात्रद्वितीयेऽहनि उत्तमरूपेऽसंस्थानिमित्ताभावात्, अथवा असंस्थावत्कत्वपूर्वसाधनाहरुद्देशेन विधीयमानस्य पत्नीसँयाजान्तत्वविशिष्टसमापनस्योद्देश्यतावच्छेदकरूपानाक्रान्ते प्राप्त्यभावादेव वा बाध इति कथमन्यथाभावात्मकोहविषयत्वम्। इतरथा प्रयाजापकर्षानूयाजोत्कर्षवत्पशुयागेऽपि प्राकृतप्रयोगोहापत्तेः, सर्वत्रापि प्रयोगोहेनैव निर्वाहे तदति-

1. A. रम्भे

2. A. प्रापित

**मन्त्रोहस्सामोहस्संस्कारोहश्च ।**

---

रिक्तोहत्रयाङ्गीकारे प्रयोजनाभावाच्च । अतस्तत्तत्पदार्थविषयमात्र एवोहः फलतस्त्रिष्वेव सिध्य-तीत्यभिप्रायेण विषयत्रैविध्यमदूर एव वक्ष्यते । एतदभिप्रायेणैव पत्नीसँयाजान्ताधिकरणे द्विरात्र-द्वितीयेऽहनि पत्नीसँयाजान्तत्वाभावफलकविचारस्य बाधोपयोगिता दर्शयिष्यते पूज्यपादैः । **यद्यपि** च तदधिकरणे तैः पञ्चदशरात्रद्वादशेऽहनि विकृतौ द्वादशाहीयद्वादशेऽहनि अविद्यमानं पत्नी-संयाजान्तत्वमतिदेशप्राप्तमन्यथा भवति तस्यानुत्तमत्वेन पत्नीसँयाजेष्वेव समापनात् इत्यूहोपयोगिता वक्ष्यते। तत्र च द्वादशाहभिन्नाहर्वृत्तित्वेन प्रकृतौ श्रुतस्य पत्नीसँयाजान्तत्वस्य विकृतौ तद्धर्मावच्छिन्नभिन्नद्वादशाहवृत्तित्वात् वक्ष्यमाणं स्वीयं निष्कृष्टमूहलक्षणमप्यस्त्येव । न चाय-मूहो मन्त्रादित्रिविधविषयान्तर्गतः संभाव्यते । अतोऽत्र प्रयोगोहोप्येकश्चतुर्थः पूज्यपादाभिप्रेतो दृश्यते; **तथापि** तत्रत्योहोपयोगितोक्ति र्भक्तोहविषयैव द्रष्टव्या, वक्ष्यमाणलक्षणानाक्रान्तत्वात् । नहि 'पत्नीसँयाजान्तान्यहानि सन्तिष्ठन्त' इत्यत्र पत्नीसँयानान्तत्वविधाने द्वादशाहभिन्नहस्त्वा-वच्छिन्नमुद्देश्यं तेन रूपेण तदश्रवणात् । किन्तु 'असंस्थितो हि तर्हि यज्ञ'इति वाक्यशेषबलात् असंस्थावदहस्त्वच्छिन्नमेव तच्छ्रुतम् । तथा च असंस्थावदहस्त्वावच्छिन्नवृत्तित्वेन प्रकृतौ श्रुतस्य पत्नीसंयाजान्तत्वविशिष्टसमापनस्य विकृतौ असंस्थावदहस्त्वावच्छिन्नभिन्नवृत्तित्वाभावात् पञ्चदशरात्रीयद्वादशाह्नोऽपि असंस्थावदहस्त्वावच्छिन्नत्वात् । अतस्तत्र भाक्त एवोहव्यवहार इति तदधिकरणे विशेषतः स्फुटीकरिष्यत इति मन्त्रादिविषयत्रिविधमुख्योहसमानकक्षश्चतुर्थः प्रयोगोहो निष्प्रमाणक एवेति दिक् ।

यद्यप्यूहस्य तर्कणापरपर्यायस्य सर्वत्रैकरूपत्वान्न त्रैविध्यं संभवति तथापि तर्क्यमाण-विषयत्रैविध्यात् त्रैविध्यमित्यभिप्रेत्य त्रैविध्यं दर्शयति—**मन्त्रोह इति** । अत्र चाष्टविधोप्यूहो-ऽग्रे दर्शयिष्यते—यथा-क्वचित् प्रकृतिमात्रोहः—सूर्याय जुष्टमिति; धान्यमसीत्यत्र मांसमसीति षट्त्रिंशत्संवत्सरे तरसमयपुरोडाशे । यथा वा क्वचिल्लिङ्गमात्रोहः—यथा 'वस्व्यसि रुद्रा-सी'ति मन्त्रस्य साण्डे क्रयार्थे विहिते—वसुरसिरुद्रोऽसीति । यथा वा क्वचिद्वचनमात्रोहः-छागस्य वपायामेदस इत्यत्र प्राजापत्येषु छागानामिति । यथा वा प्रकृतिलिङ्गयोरूहः—यथा अग्नये जुष्टमित्यत्र अदित्यै जुष्टमिति । यथा वा प्रकृतिवचनयोरूहः—तस्यैव च मन्त्रस्य आमिक्षायागे विश्वेभ्यो देवेभ्य इति । यथा वा क्वचिल्लिङ्गवचनयोरूहः—प्रासा अग्निमित्यस्य स्त्रीपशुगणे प्राभ्य इति । क्वचित् त्रयाणामप्यूहो यथा— प्रोक्षणाभिमन्त्रणमन्त्रस्य 'आपोदेवीरग्रे' इत्यस्य

तत्र ऊहो नाम **प्रकृतावन्यथादृष्टस्य विकृतावन्यथाभावः।** तत्त्वं च **येन सम्बन्धेन यद्धर्मा-**

---

घृतं प्रोक्षणं भवतीति विधियुक्तविकृतौ 'घृतं देवमग्रे' इति। क्वचित्तु सकलपदस्याभ्यासरूपोहो यथा—पशुगणे एकधाऽस्य त्वचमित्यस्मिन् मन्त्रे एकधैकधेति। तथा च सर्वस्याप्यष्टविधोहस्य मन्त्रोह एवान्तर्भावात् न त्रैविध्यप्रतिज्ञाभङ्ग इति भावः। यद्यपि द्वितीये साम्नां मन्त्रत्वं, अत्रत्य वक्ष्यमाणाधिकरणे च ऋगक्षराभिव्यक्तिरूपदृष्टसंस्कारकत्वमपि वक्ष्यत इति मन्त्रसंस्कारान्यतर-ग्रहणेनैव सामोपादानमायाति तथापि तदूहसाधकन्यायभेदाभिप्रायेण पृथग्ग्रहणं नैव विरुद्ध्यत इति भावः। ननु तर्कणारूपोहविषयत्वस्य मन्त्रादिविषयत्रयातिरिक्तपदार्थेष्वपि संभवात् तद्गतोहविचारस्याग्रेऽकरणात् कथं सर्वस्यास्याध्यायार्थत्वं? कथं वा मन्त्रादिविषयत्रैविध्यमात्रेण तत्त्रैविध्यमित्याशङ्कानिवारणाय येनोहेन पदार्थानामन्यथाभावो विकृतौ भवति तस्मिन् अन्यथाभावे पारिभाषिकमूहत्वमङ्गीकृत्य तस्यैवाध्यायार्थत्वेनापि विचारणीयत्वात्, तस्य चातिदिष्टमन्त्रादित्रय-विषयत्वस्यैव संभवान्नानुपपत्तिरित्यभिप्रायेण शास्त्रदीपिकायामतिदिष्टानां पदार्थानां मन्त्रसाम-संस्काराणां द्वारान्तरसंबन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यत इति ग्रन्थेनोहस्वरूपं दर्शितम्। तत्र प्रकृतावपि व्रीहिप्रतिनिधि [1]भूतनीवारेष्वप्यवघातस्यान्यथाभावेऽपि, प्रतिनिधौ सादृश्यप्रयोजक-व्रीह्यवयवद्वारसम्बन्ध एवावघातस्य न द्वारान्तरसम्बन्ध इति न तत्रातिव्याप्तिः। एतादृशोहस्य चोपदिष्टेष्वसम्भवादतिदिष्टेष्वेव मन्त्रादिष्वेव च सम्भवादतिदिष्टानां **मन्त्रसामसंस्काराणामिति** पदद्वयं सङ्गतिविषयत्रैविध्ययोः कथनमात्रपरं न लक्षणान्तर्गतमित्यभिप्रायेण तदुक्तमेवोहस्वरूपं निष्कृष्य दर्शयति—**तत्रोहो नामेति।** प्रकृतौ येनैव वितुषीभावरूपद्वारेण व्रीह्यादिषु विद्य-मानस्यावघातस्य विकृतावपि तेनैव द्वारेण नीवारेष्वन्यथाभाव इति न द्वारान्तरसम्बन्धनिमित्तान्यथा-भावः सिध्यतीति तत्पद[2]मुपेक्ष्य प्रतिनिधिभूतनीवारेषु ऊहस्वरूपनिवारणाय प्रकृतिविकृतिपदो-पादानं कृतम्।

ननु तथापि प्रयाजानूयाजापकर्षोत्कर्षवत्यां विकृतौ प्रयाजानूयाजानां प्रकृतावन्यथा दृष्टानां विकृतावन्यथाभावसत्त्वादूहापत्तिरित्यत आह—**तत्त्वञ्चेति।** अन्यथाभावत्वञ्चेत्यर्थः। यद्यपि प्रोक्षणादीनामिव 'यद्योन्यां तदुत्तरयोर्गायति' 'कवतीषु रथन्तरं गायति' इत्येवमादिविहितसामाति-देशे यदानुपूर्वीभेदविशिष्टायां योन्यां यत् रथन्तरादिसाम संस्कारकमासीत् तस्य साम्नो विलक्षणा-

---

1. B reads प्रकृति

2. B. मुपेत्याप्रतिनिधि

वच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम्। अस्ति चेदं देवस्य त्वादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च। मन्त्राणां हि स्मारकत्वसम्बन्धेनाग्नित्वाद्यवच्छिन्नवृत्तित्वं श्रुतं प्रकृतौ। विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात्। एवं प्रोक्षणावघातादीनामपि संस्कार्यतासम्बन्धेन व्रीहित्वाद्यवच्छिन्नवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ चतेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकादिवृत्तित्वात्। एवं साम्नामपि आईभावादिरूपाणां येन सम्बन्धेन यत्स्थानगतैकारवृत्तित्वं प्रकृतौ[1] श्रुतं विकृतौ तेषां तेनैव सम्बन्धेन तत्स्थानभिन्नस्थानगतैकारवृत्तित्वादूहः।

अत्र श्रुतत्वं तात्पर्यमनपेक्ष्य प्रतीयमानत्वं तेनोक्तैकारवृत्ति[2] त्वादेः शब्दादप्रतीतावपि

---

नुपूर्वोक्तोत्तरगक्षरसंस्कारकत्वेन योनिभिन्नऋग्वृत्तित्वात् लक्षितोहविषयत्वं सम्भवत्येवेति चतुर्थपञ्चमस्थानभेदाभिप्रायेण लक्षणसमन्वयोपपादनं व्यर्थमिव; तथापि योनिगतैकारवृत्तिनः आईभाव रूपसाम्नः उत्तरागतैकारेऽपि प्राप्तस्य विभिन्नस्थानकस्याप्यूहः अग्रे उपपादयिष्यते। न च तत्रैतल्लक्षणं सम्भवति व्रीहिसाध्यविकृताविव तद्धर्मावच्छिन्नभिन्नवृत्तित्वाभावात्। अतस्तत्राव्याप्तिपरिहाराभिप्रायेण लक्षणसमन्वयं दर्शयति—**यत्स्थानगतैकारेति**। अयमर्थः यदि योन्यामेकारश्चतुर्थस्थाने वर्तते तदक्षराभिव्यञ्जकमाईभावरूपं साम दृष्टार्थत्वानुरोधेन उत्तरयोर्ऋचोः चतुर्थस्थाने विद्यमानमेकारभिन्नमक्षरं विहाय यत्स्थाने एकारः तत्रैव कर्तव्यमिति वक्ष्यते। तत्र यद्यप्येकारस्य भेदो नास्ति तथापि चतुर्थस्थानतद्भिन्नस्थानवृत्तित्वविषेण भेदं प्रकल्प्य लक्षणसमन्वयो द्रष्टव्यः। एवञ्च कदाचिदेतादृशे विषये उत्तरयोरपि यत्स्थाने योन्यामेकारः तत्स्थान एवैकारः तदा भेदकल्पकरूपा[3]भावात् व्रीहिसाध्यविकृताविव नास्त्येवोह इति द्रष्टव्यम्।—**उक्तैकारवृत्तित्वादेरिति**। यद्यपि मन्त्राणां लिङ्गादेव तदर्थप्रकाशकत्वमिति यद्धर्मावच्छिन्नवृत्वं श्रुतं नास्ति, अत एवोक्तविवक्षया सङ्ग्राह्यत्वेनोपन्यसितुं युक्ताः, तथापि लिङ्गकल्प्यश्रुत्या श्रुतत्वं कथञ्चित्सम्भवत्येव तेषु, इति तानपहायोक्तैकारपर्यन्तानुधावनम्। **विकृतावनुपयुक्तेति**। अग्नीषोमीये पशौ पुरोडाशयागः प्रधानसमदेवत एव। सौत्रामण्यान्तु आश्विनसारस्वतैन्द्राः पशुयागाः। पुरोडाशास्तु ऐन्द्रवारुणसावित्राः। तत्र वरुणसवितृदेवतयोः प्रधानानुपयुक्तत्वेन पुरोडाशीयोद्देशांशस्य स्मारकत्वाभावात् क्रतूपकाररूपमेव फलं कल्पनीयमिति भावः।

---

1. A. अत्र प्रकृतिशब्देन सामवेदीयप्रकृतिग्रन्थोग्राह्यः विकृति शब्देन च उत्तराग्रन्थ.
2. A. त्तित्वस्य
3. A. भेदात्मकरूपा

न क्षतिः। अत्र च सम्बन्धैक्याविवक्षायां[1] पशुपुरोडाशयागोद्देशांशस्य प्रकृतौ स्मारकत्व-सम्बन्धेनाग्नीषोमदेवतावृत्तेर्विकृतावनुपयुक्तायदेवताविधानेन आरादुपकारकत्वस्य सम्बन्धान्तरेण क्रतूपकारवृत्तित्वादतिप्रसङ्गवारणाय सम्बन्धैक्यविवक्षणम्। प्राकृतावेव व्रीहित्वाद्यवच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्भिन्नयवादिवृत्तित्वात् तद्वारणाय प्रकृतिविकृतिपदोपादानम्। प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदादतिदेशिकव्रीहिमत्सौर्यादावेवावघातादीनामूहवारणार्थं यद्धर्मावच्छिन्नेति विशेषणं; सौर्यस्थव्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकव्रीहिभेदसत्त्वेऽपि व्रीहित्वावच्छिन्नप्रतियोगिताकतद्भेदाभावात्। यत्रसाध्यविकृतौ तूहाङ्गीकारेऽप्यदोषः। प्रकृतौ प्रोक्षणादीनां तात्पर्यगत्या अपूर्वसाधनत्वावच्छिन्नवृत्तित्वस्यैव विवक्षितत्वेन विकृतावपि तेनैव रूपेण श्यामाकवृत्तित्वादसम्भवं, अपूर्वयोर्दर्शपूर्णमासीयत्वादिना भेदविवक्षायां तु सौर्यस्थव्रीहिष्वतिव्याप्तिमाशङ्क्य श्रुतपदं निरुक्तप्रतीयमानत्वार्थकम्। अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरुक्तश्रुतत्वाभावात्। अत्र चाग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽप्यवशिष्टमन्त्रस्य प्राकृतत्वानपायान्न लक्षणे तस्येति शब्दानुपपत्तिः। एवं च यत्र प्राकृत-

---

यद्यप्येतादृशक्रतूपकारवृत्तित्वं[2] सम्बन्धैक्येन प्रयाजादिष्वपि सम्भाव्यते, तथापि विकृतौ तेषां तद्धर्मावच्छिन्नभिन्नवृत्तित्वाभावान्नोहप्रसक्तिरिति ध्येयम्।

वस्तुतस्तु—'इदं वाक्यमस्मिन्नर्थे वर्तते' 'संस्कारश्च संस्कार्ये वर्तते' इत्यादिप्रतीत्या अग्निव्रीहिवृत्तित्वमस्तु नाम मन्त्रसंस्काराणाम्; नह्येवं 'प्रयाजाः, उद्देशांशो वा, क्रतूपकारे वर्तत' इति प्रतीतिः कुतश्चिज्जायते। अतस्तेषां तद्धर्मावच्छिन्नभिन्नवृत्तित्वस्यैवाभावात् वारणं भवतीति सम्बन्धैक्यविवक्षाप्रयोजनं नेदम्। किञ्च कथञ्चिद्येन केनापि सम्बन्धेनोद्देशांशस्य क्रतूपकारवृत्तित्वस्वीकारे दर्शपूर्णमासवृत्तित्वेन सर्वसम्प्रतिपन्नप्रयाजादीनामपि तद्भिन्नसौर्यादिवृत्तित्वात् सम्बन्धैक्यविवक्षायामप्यूहविषयत्वापत्तिः। अतः संस्कार्यत्वस्मारकत्वान्यतरसम्बन्धैक्यविवक्षायामेव कथञ्चित् पूज्यपादानां तात्पर्यम्। एवञ्च पत्नीसँय्याजान्तप्रयोगोहे मुख्यतानिवारणमपि नासुलभम्। अवशिष्टमन्त्रस्येति। तथाचाग्निपदस्थाने सूर्यादिपदप्रक्षेपमात्रस्यैवोहत्वं ये मन्यन्ते तन्निरस्तम्। सूर्यपदप्रक्षेपेणाग्निपदबाधस्यैव सत्वेनान्यथावृत्तित्वरूपोहासंभवात्, अतस्तत्रोहव्यवहारो भाक्त एव। किन्तु सर्वस्य मन्त्रस्यैवाग्नित्वावच्छिन्नवृत्तित्वेन श्रुतस्य सूर्यादिवृत्तित्वेनैवोहः। तच्चाग्निपदघटितस्य कथं सूर्यादिवृत्तित्वं सम्भवेदिति शाब्दान्वयसिध्यर्थं सूर्यादिपदप्रक्षेपो मन्त्रोहसिध्यर्थ एव। ततश्च सूर्यादिपदघटितमन्त्रस्य तन्मन्त्रत्वप्रत्यभिज्ञान-

---

1. A श्रुतपशु

2. B. त्वसंबन्ध

**ऋक्स्थाने ऋगन्तरस्योहः तत्रोहशब्दो** भाक्त **इति ध्येयम्। अथवाऽस्तु तदनुरोधेन तस्येति पदं प्राकृततत्कार्यापन्नान्यतरपरमिति** संक्षेपः।

स चोहः **प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसम्बन्धित्वेन निधानं तद्रूपावच्छिन्नसम्बन्धित्वेनैवातिदेशे सिध्येत्। न तु स्वरूपेणवातिदेशे, तथात्वे अग्निपदस्यैवातिदेशेन, सौर्ये तस्यैवादृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तावूहानापत्तेः। अत एवोपकारपृष्ठभावेन पदार्थानां विकृतावतिदेशः; प्रकृतौ निरूपितरूपाणामेव वा विकृतावतिदेश इति दशमे वक्ष्यते।** तदिह **उहोपोद्घाततया किं प्रोक्षणावघातादीनां 'अग्नये**

—

पर्यन्तयच्छब्दसमानार्थकत्वं तच्छब्दे नानुपपन्नमित्यभिप्रायः। **भाक्त इति।** यथा वा पशौ 'त्वँह्यग्ने' इति प्राकृतऋक्स्थाने ऋगन्तरमूह्यते। तत्राग्नित्वावच्छिन्नवृत्तित्वेन श्रुतस्य न तद्धर्मावच्छिन्नभिन्नवृत्तित्वं, ऋगन्तरस्य तस्य न प्राकृतनद्धर्मावच्छिन्नवृत्तित्वमित्यूहलक्षणाभावादित्यर्थः। **इति सङ्क्षेप इति।** अत्र प्रकृतिविकृतिपदेन यतः यस्मिन् धर्मातिदेशः तद्द्वयं गृह्यते; तेन योनितदुत्तरयोः सामोहसङ्ग्रहः। स्थानापत्त्या धर्मलाभेन फलचमसे संस्कारोहसङ्ग्रहश्च द्रष्टव्यः। ध्वनितञ्चेदं तृतीये फलचमसाधिकरणे "अतएव प्राकृतोपदेशविषयभिन्नविषयत्वादस्य संस्कारोहत्वमाचक्षत" इति ग्रन्थेन (भा.दी.३-६-१४) पूज्यपादैः। यद्दशमाद्याधिकरणविचारसापेक्षत्वमूहविचारस्यानागतावेक्षणन्यायेनेत्युक्तम् तत्स्वयमाविष्करोति—**स चोह इति।** यद्रूपं यादृशप्रणाडीद्वारकापूर्वसाधनत्वं; उपकारपृष्ठभावेन तत्तत्पदार्थानां भिन्नभिन्नातिदेशकल्पनमिति न्यायसुधाकृन्मते गौरवमभिप्रेत्य उपकारजनकपदार्थानामेक एवातिदेशः पार्थसारथ्यभिमतो युक्त इति द्योतयितुं निरूपितरूपाणामेव वेत्युक्तम्। ततश्च यादृशोपकारजनकत्वं प्रकृतौ क्लृप्तं तादृशोपकारविशिष्टानामेव वा पदार्थानामेक एवातिदेश इत्यर्थः।

अत्र च 'यज्ञकर्म प्रधानम्' इत्यूहोपोद्घातसूत्रेण सप्तमसिद्धं यद्यजिप्रयुक्तत्वं सर्वधर्माणां तदेव स्मार्यते। यजिप्रयुक्तत्वे हि पारिप्लवा धर्माः सर्वत्रोपदिष्टाः नान्यथाकर्तुं शक्यन्ते। अपूर्वप्रयुक्तत्वे तु प्रतिप्रकरणं व्यवस्थिता धर्माः दशमाद्यन्यायेन कार्यमुखेनातिदिष्टा युक्तं यदूहं भजन्ते। अतोऽपूर्वप्रयुक्तिरूहविवक्षया स्मार्यत इत्येकं वर्णकं भाष्यकारेणोक्त्वा किं अवघातमन्त्रादयो विवक्षितव्रीह्यग्न्यादिद्वारा अपूर्वस्योपकुर्वन्ति उताविवक्षितस्वरूपाः साधनमात्रविशेषद्वारेति विचार्यते। अस्य च सप्तमाद्येऽनुपयोगेनोहोपयोगितया अत्रैव करणं युक्तमिति द्वितीयं वर्णकं कृतम्। इदमेव वर्णकमपौनरुक्त्याद्युक्तम् अन्यानि तु तदुक्तान्यपि निष्प्रयोजनानीवेत्येतदधिकरणान्ते पूज्यपादैर्वक्ष्यते। तेषाञ्चोपपादनं निष्प्रयोजनत्वञ्च मयापि गौरवभयान्न तन्यते। अतो द्वितीयवर्णकाभिप्रायेणैवाधिकरणमुपोद्घाततया रचयति—तदिहेति। अत्र च

**जुष्टं निर्वपामि इत्यादावग्न्यादिपदानां च प्रकृतौ** व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन विधानं, **ततश्च** व्रीह्यग्न्यादिप्रयुक्तास्ते ? **अथवाऽपूर्वसाधनत्वावच्छिन्नोद्देन, ततश्चापूर्वप्रयुक्ता इति**

---

यद्यपि यज्ञकर्मप्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वादिति सूत्रं **यज्ञकर्म** अपूर्वं धर्माणां **प्रधानं तद्धि** कर्तव्यतया **चोदनाभूतं** चोदनाविषयमिति सप्तमसिद्धमनूद्य तस्मात्तस्य **द्रव्येषु** व्रीह्यादिषु **संस्कारः** अवघातादिः**तत्प्रयुक्तः** अपूर्वसाधनत्वप्रयुक्तः। कुतः तदर्थत्वादवघातस्य इत्येवं सिद्धान्तपरतया व्याचक्षाणैः भाष्यकारादिभिः सप्तमे सर्वधर्माणा-मपूर्वार्थत्वं सिद्धमङ्गीकृत्य इहावघातादीनामपूर्वार्थत्वमपुर्वीयोपकारविशेषसाधनव्रीहिस्वरूपद्वारेण उतापूर्वीयोपकारविशेषसाधनद्वारेणेति विचारः प्रवर्तितो दृश्यते। न तु व्रीह्यग्न्यादिप्रयुक्तास्ते अथवाऽपूर्वप्रयुक्ता इत्येवमिति कथमयमेव विचारः सप्तमसिद्धः पुनरुक्ततया भासमानः प्रदर्श्यते; **तथापि** सप्तमे यजिप्रयुक्तत्वेन धर्माणामव्यवस्थामाशङ्क्यापूर्वार्थत्वेन प्रतिप्रकरणं व्यवस्था साधिता; सा च व्रीह्यग्न्यादिस्वरूपेणापि तदर्थत्वे सिध्यत्येवेति न सप्तमेन विचारितम्, येन पुनरुक्तं स्यात्। अत्र तूहसिध्यर्थं यदपूर्वार्थत्वमुक्तं तत् केवलापूर्वप्रयुक्तत्वेन अथवा व्रीह्यग्न्यादिस्वरूपप्रयुक्तत्वेन वेति विचारः प्रवर्तते। व्रीह्यग्न्यादिस्वरूपप्रयुक्तत्वे हि साधित-मप्यपूर्वार्थत्वं ऊहोपयोगि न भवतीत्यभिप्रायेण द्वारविशेष[1] फलकत्वमस्य विचारस्याभिप्रेत्योक्तम्—**ततश्च व्रीह्यग्न्यादिप्रयुक्तास्ते**—इत्यादिना।

अथवा स्वोपपादितसप्तमाद्याधिकरणरीत्या सप्तमे प्रकृतयागमात्रार्थत्वमेव धर्माणां साधितम्। नत्वपूर्वार्थत्वं; तेन विनाप्यतिदेशविचारारम्भोपपत्तेः। इह तु तत्रानुपयुक्तत्वेना-नुक्तमपूर्वार्थत्वं ऊहोपयोगितयोच्यते; इत्यपूर्वार्थत्वानङ्गीकारेणैव स्वरूपार्थत्वमात्रविवक्षया पूर्वपक्षः क्रियते। अतो न काप्यनुपपत्तिः।

यत एव केवलाग्निपदे सूर्यादिपदप्रक्षेपमात्रमेवोह इति मतं निरस्तं **अत एव** अग्न्यादिपदा-**नामिति** बहुवचनमुपात्तम्। यथा च सूर्यादिपदप्रक्षेपे ऊहव्यवहारो भाक्तः तथा वक्ष्यते तृतीयपादाद्ये। ततश्च सर्वेषामपि मन्त्रगतपदानामग्नित्वावच्छिन्नोद्देशेन विधाने विकृतावूहो न सिध्यति, अन्यथा सिध्यति इत्युक्त्या समस्तपदसमुदायात्मकमन्त्रस्यैवोहः प्रदर्शितो भवतीति ज्ञेयम्। अत एव देवस्य त्वादि पदानामेवोच्चारणमात्रार्थत्वकल्पने भिन्नप्रयोजनकत्वेन निर्वपामिपदैकवाक्य-ताभङ्गापत्तेः तद्वशादाहार्यसम्बन्धेन देवस्यत्वादिपदार्थविशिष्टनिर्वापप्रकाशनस्यैवाभ्युदयकारित्व-कल्पनया देवस्यत्वादिपदानामपि स्वार्थाभिधायकत्वमुक्तं मन्त्राधिकरणे कौस्तुभे।

---

1. B. विचार

विधास्यते—व्रीह्यादिप्रयुक्तत्वे श्यामाके चरौ सौर्ये वा व्रीह्याद्यभावात् प्रोक्षणादीनां लोप एव न तूहः। अपूर्वप्रयुक्तत्वे तु श्यामाकादीनामपि तद्रूपावच्छिन्नत्वात् सिद्धस्तदूहः।

तत्र यत्रापि आरादुपकारकस्थले न अपूर्वोद्देश्यतावच्छेदकं तत्रापि करणानुग्राहकाकाङ्क्षा-रूपेति कर्तव्यताकाङ्क्षात्मकप्रकरणेन यागाङ्गतयैव प्रयाजादिविधानात् यागत्वमेवोद्देश्यता-

---

यद्यप्यग्निप्रकाशनार्थो मन्त्र इति अग्निप्रकाशनोद्देशेनापाततो मन्त्रविधानं भाति नाग्नित्वा-वच्छिन्नोद्देशेन विधानं, तथापि अनेन मन्त्रेणाग्निं प्रकाशयेदिति लिङ्गकल्प्यश्रुतिरूपे विधौ मन्त्र-करणकप्रकाशनस्यापूर्वोद्देशेनैव विधानात् एतेनामग्न्यादिपदानां प्रकाशनरूपार्थकरणत्वेनाग्नित्वावच्छि-न्नोद्देशेन विधानमित्यर्थो द्रष्टव्यः। अत्र च "द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात्"—इति सूत्रस्थं द्रव्येषु संस्कार इति पदं मन्त्रकृतप्रकाशनस्यापूर्वलक्षणं समानन्यायात्। इदञ्च सिद्धान्तसूत्रम्। पूर्वपक्षस्तूत्सूत्र एवेति। सौर्ये वेति। यद्यपि सौर्ये चरुप्रकृतिभूततण्डुलप्रकृतिकत्वेन व्रीही-णामस्ति प्राप्तिरिति व्रीहित्वावच्छिन्नोद्देशेन विहितानि प्रोक्षणादीनि कथञ्चिद्भवितुमर्हन्ति तथापि तत्राग्न्यादिरूपदेवतानामावनमन्त्रानूहाभिप्रायेणैतत्। न तु व्रीह्यभावकृतसंस्कारानूहाभिप्रायेण लोपापादनपूर्वं न तूह इत्युक्तिः। अत एव व्रीह्यादीनामनावादित्यत्राप्यादिपदेनाग्न्यादिरूप-देवताग्रहणम्। अत्र यज्ञकर्मप्रधानमिति सूत्रांशेनारादुपकारिषु सत्तमप्रसिद्धमपूर्वार्थत्वं हेतू-कृत्य तस्य द्रव्येषु संस्कारस्तत्प्रयुक्त इत्युत्तरांशेन द्रव्यादिसंस्कारमन्त्राणामपूर्वार्थत्वं साधयिष्यते। तदेवारादुपकारिषु सत्तमसिद्धमपूर्वार्थत्वं पूर्वपक्ष्याक्षिपति—तत्र यत्रापीति। यदि च फले जननीये अपूर्वस्येतिकर्तव्यताकाङ्क्षा स्यात् तदा इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणेनापूर्वाङ्गत्व-मङ्गानां भवेत्। नत्वेतदस्ति। तस्याश्रुतत्वेनाकर्तव्यत्वात्। कर्तव्यनिष्ठप्रकारविशेषस्यै-वेतिकर्तव्यतात्वात्। अतः कर्तव्यरूपयाग एव अनुग्राहकाकाङ्क्षैव सा। तयाऽन्वितानां तदङ्गत्वमेव युक्तमित्याह—करणानुग्राहकाकाङ्क्षेति। प्रकरणेन—प्रकरणकल्पितश्रुत्ये-त्यर्थः। अत्र अप्पय्यकारादिभिः यजिप्रयुक्तत्वे सर्वधर्माणां पारिप्लवत्वमेवमापादितम्। तथाहि—करणानुग्राहिणी इतिकर्तव्यता करणेनापेक्षिता। ततश्च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यमपेक्षितत्वात् समिदादिवाक्यैकवाक्यतां यातीति निर्विवादमेव। न च फलवाक्येन षण्णां यागानामुत्पत्तिः क्रियते; तत्तदुत्पत्तिवाक्यैरेव कृतत्वात्। नापि स्वर्गोद्देशेन यागो विधीयते तत्सम्बन्धस्य विश्वजिन्न्यायेन प्राप्तत्वात्। अतस्तेन यागोद्देशेन समिदादिविधानमात्रं क्रियते। न तु दर्शपूर्णमासयागोद्देशेन, विशिष्टोद्देशे वाक्यभेदापत्तेः। ततश्च यागमात्रे विधीयमानाः सर्वत्रैवोपदेशेनैव भवन्तीति यथाप्रकृत्यनुष्ठाने ऊहलोप एवेति। तदेतत्पारिप्लवा-

**वच्छेदकं न त्वपूर्व[1] साधनत्वं, समप्राधान्यापत्तेः। न चैतावता पारिप्लवत्वापत्तिः; अनुवादस्य सति सम्भवे सन्निहितगामित्वेनाग्नेयादित्वस्यैवोद्देश्यतावच्छेदकत्वात्। न** वाऽतिदेशोच्छेदः **अपूर्वविशेषार्थत्व इव आग्नेयाद्यर्थत्वेऽपि तद्वत्कुर्यात् इत्यतिदेशेन आग्नेयस्थानापन्ने सौर्ये धर्मातिदेशोपपत्तेः। अतस्ते यागप्रयुक्ता एव। तदा किमु- वक्तव्यं यत् व्रीह्यादिसंयोगेनैव प्रोक्षणादिश्रवणात् व्रीहित्वादिकमेवोद्देश्यतावच्छेदक- मिति। न च व्रीहियागादिस्वरूपार्थत्वे धर्माणामानर्थक्यं तेषामप्यग्निवत् फलवत्त्वेन तद्- भावात्।** न चाग्नीनामाधानव्यतिरेकेणोत्पत्तौ **प्रमाणाभावेन तदभावेऽपि व्रीह्या- दीनां प्रोक्षणादिव्यतिरेकेणापि जायमानतयाऽऽनर्थक्यापत्तिस्तदवस्थैवेति वाच्यं,** एता

---

पादनमनूद्य पूर्वपक्षी दूषयति—**न चैतावतेत्यादिना।** अयं भावः-यत्तावत् फलवाक्यवैयर्थ्यापत्त्या वाक्येन सर्वयागाङ्गत्वं बोध्यत इति पारिप्लवत्वापादनं तदयुक्तम्। स्वर्गफलकेषु विश्वजिन्न्या- यावतारेऽपि अश्वमेधद्वादशाहराजसूयादिप्रकरणपठितानां पारिप्लवत्वापादनस्य फलवाक्यवैयर्थ्यमूल- त्वासंभवात्। नहि तेषु तत्तत्फलसम्बन्धो विना वचनं सम्भवति। वस्तुतस्तु दर्शपूर्णमास- ज्योतिष्टोमादिष्वपि सर्वकामवाक्ये जागरूके सति विश्वजिन्न्यायेन स्वर्गप्राप्त्युपपादनमलत्यं तन्त्र- रत्नकारादीनामयुक्तमेव। ततश्च प्रकरणकल्पितवाक्येनैव यागत्वावच्छिन्नोद्देशेन विधीयमानानां राजसूयादिप्रकरणपठितानामङ्गानां पारिप्लवत्वमापादनीयम्। तेनैव न्यायेन दर्शपूर्णमासज्योतिष्टोम- प्रकरणपठितानामपि तदापादनीयम्। नहि तद्युक्तम्। अनुवादस्य सति सम्भवे सन्निहितगामित्वे सम्भवति विप्रकृष्टयागमात्रोपस्थापकत्वे प्रमाणाभावात्। अतश्च सन्निधानोपस्थितमाग्नेयत्वाद्ये- वोद्देश्यतावच्छेदकमिति तदवच्छिन्नोद्देशेन विधीयमाना धर्मास्तावन्मात्राङ्गमिति कुतः पारिप्लवत्वा- पत्तिरिति। **ननु** प्रयाजादीनां यागस्वरूपार्थत्वे यागस्य लोकतो निर्ज्ञातस्वरूपत्वेनेतिकर्तव्यतान- पेक्षणात् सौर्ये किमर्थमतिदेशकल्पनेत्याशङ्क्य निराकरोति—**नवेति।** सत्यम्, निर्ज्ञातस्वरूपो यागः तथापि शिष्टाचारप्रामाण्यान्नानितिकर्तव्यताकः कर्तुं शक्यतेति विध्यन्ताधिकरणभाष्याद्या- गस्यापि तदाकाङ्क्षासत्त्वात् अपूर्वविशेषार्थत्व इव आग्नेयाद्यर्थत्वेऽपि तद्वत्कुर्यादित्यदेशोपपत्तिः। **यद्यपि** सौर्ययागस्याग्नेयकार्यकारित्वाभावेन न तत्स्थानापन्नत्वं तथापि वक्ष्यमाणरीत्या सौर्यभावनायाः करणाकाङ्क्षानिवर्तकत्वेनान्वेतुं योग्यस्याग्नेययागस्य स्थाने सौर्ययागस्य करणत्वेनान्वयमात्रमुपादाय तदुक्तिरिति भावः। **आनर्थक्यमिति।** प्रोक्षणादिव्यतिरेकेणापि तत्स्वरूपस्य सिद्धत्वादिति शेषः। **अग्निवदिति।** यथाऽऽधानवाक्ये अग्निस्वरूपार्थमेवाधानमग्नेश्च क्रतूपकारत्वेन फलत्वमादाय क्रतूपकारसाधनमग्निं कुर्यादिति विनैव लक्षणां तदर्थत्वं निर्वाह्यते। एवमिहापि क्रतूपकारजनकत्वेन फलवत्त्वमादायानर्थक्यपरिहारोपपत्तेरित्यर्थः। **न चाग्नीनामिति।** आह-

---

1. B- न त्वपूर्वम्

दृशानर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्यापूर्वार्थत्वस्यैव वा बोधोपपत्तौ, निषादस्थपतिन्यायेन व्रीहिपदे यवादिसाधारण्येनापूर्वसाधनत्वलक्षणायां प्रमाणाभावात्। अस्तु वा व्रीहिपदे लक्षणा, तथाऽपि लाघवादुपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यते न त्वपूर्वसाधनत्वम्। न च यागस्यापि निर्ज्ञातोपायत्वेन प्रोक्षणादिव्यतिरेकेणापि जायमानत्वादानर्थक्यापत्तिः, यागत्वावच्छिन्नस्यापूर्वत्वावच्छिन्नस्य वा जायमानत्वेऽपि विजातीययागत्वावच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात्। न ह्याग्नेयत्वावच्छिन्नं प्रति प्रोक्षणाघटिता काचित्सामग्री क्लृप्ताऽस्ति येन तज्जन्यव्यक्तौ आग्नेयत्वाभिव्यक्तिर्भवेत्। प्रोक्षणादेरेव तु विधानबलेन तत्सामग्रीत्वात् तद्व्यतिरेकेण तदुत्पत्तौ प्रमाणाभावेन न यागस्वरूपार्थत्वे आनर्थक्यं प्रोक्षणादीनाम्। अत एवारादुपकारकाणामपि यागस्वरूपार्थत्वे नानर्थक्यमिति प्राप्ते—

यद्यपि तावत् विजातीययागसाधनत्वमेव प्रोक्षणादीनामुद्देश्यतावच्छेदकं तथाऽप्यपूर्वसाधनत्व इव वक्ष्यमाणरीत्या न तत्र व्रीहित्वादिकं प्रविष्टमिति श्यामाकेष्वपि तत्सत्वादूहसिद्धिरनिवार्यैव।

वस्तुतस्तु—न विजातीययागसाधनत्वं उद्देश्यतावच्छेदकं विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात् तदवच्छिन्नं प्रति द्रव्यत्वाद्यवच्छिन्नस्य लोकत एव कारणत्वावगतेः, सामग्रीवशेन व्रीह्यादिद्रव्यं विनाऽपि द्रव्यान्तरेण कदाचित् विजातीययागव्यक्तीनामुत्पत्तौ बाधकाभावेनानर्थक्यस्य तदवस्थत्वात्। न च सामान्यसामग्र्या विशेषकारणसमवहिताया एव कार्यजनकत्वनियमः, अन्यत्र तथात्वेऽपि प्रकृते तथा कल्पनायां प्रमाणाभावात्। 'तदेव यादृक् तादृक् [1]च होतव्यम्' इति लिङ्गानुपपत्तेश्च। अत एव अनैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वं व्रीह्यादिविधी-

---

वनीयादीनामदृष्टविशेषस्वरूपाणामिति शेषः। एतादृशानर्थक्यपरिहारार्थमिति। यतो विविना प्रोक्षणं व्रीह्युत्पादकत्वेन विधीयमानं स्वतः सिद्धेषु व्रीहिष्वनुपपन्नं अतः प्रोक्षणविधिरेव स्ववैयर्थ्यपरिहारार्थं वाक्यान्तरकल्पनामनुमन्यमानः प्रोक्षणादिविशिष्टव्रीहीणां यागादिसाधनत्वं बोधयतीति भावः। ननु वाक्यान्तरकल्पनायामपि कल्पकविधिवाक्य एव साध्यसाधनभावायोग्यतानिश्चये वाक्यार्थबोधस्यैवासंभवे कुतस्तन्मूलवाक्यान्तरकल्पनेत्याशङ्कानिराकरणाय प्राथमिकशाब्दबोधनिर्वाहाय लक्षणामपि व्रीहिपदेऽभ्युपेत्यवादेनाह—अस्तुवेति। लाघवादिति। यागजन्यापूर्वसाधनत्वलक्षणापेक्षया विजातीययागसाधनव्रीहित्वस्य लघुत्वं; अपूर्वस्याशाब्दस्य केनाप्यनुपस्थितेः। तदपेक्षया प्रकरणादुपस्थितमपि तदिति तदेव लक्षयितुमुचितमिति भावः। वक्ष्यमाणरीत्येति। अग्रिमाधिकरण इति शेषः। अत एवानयैव रीत्येति। यतो व्रीहिभिर्विना

---

1 यत्किञ्चिद्द्रव्येणेत्यर्थः

**नामुपपद्यते प्रतिनिधिश्च। अतो द्रव्यतत्संस्कारविधयस्सर्वेऽपूर्वसाधनीभूतविषया एव। व्यापकीभूतापूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकतोऽक्लृप्तत्वेन** निरुक्तप्रतिबन्ध्यनापत्तेः। **आरादुपकारकाणामप्यनयैव रीत्या अपूर्वजननानुकूलयोग्यता-** सम्पादकत्वं[2] **द्रष्टव्यं न तु यागार्थत्वं, आनर्थक्यापत्तेः। यागादिनिष्ठयोग्यतासम्पादकत्वाच्च**

---

द्रव्यान्तरेणापि विजातीययागत्वावच्छिन्नोत्पत्तिः संभवति, अत एव तत्र द्रव्यान्तरस्यापि तदुत्पत्त्यन्यथानुपपत्त्या प्रसक्तौ 'व्रीहिभिर्यजेते'ति प्रत्यक्षविधिना व्रीहीणामेव विधानात् फलतो नियमस्य प्रतिनिधेश्चोपपत्तिर्भवतीत्यर्थः। **प्रतिबन्ध्यनापत्तेरिति।** अयं भावः—भाव्योत्पादनानुकूलभावकनिष्ठव्यापाररूपभावनया भाव्ये जननीये यथा तस्याः करणाकाङ्क्षया करणान्वयस्तस्यां, तथैव भाव्यं कुर्यात् कथमित्याकाङ्क्षया तस्यामेवेतिकर्तव्यतान्वयो युक्तः। अत एव कर्तव्यताया इति प्रकारविशेषः इतिकर्तव्यतेति योगेन सामान्यस्य क्रियारूपस्य विशेषः क्रियारूप एव योग्यो नाक्रियारूप इत्यभिप्रेत्यैव द्रव्यगुणादिसिद्धपदार्थानामितिकर्तव्यतात्वेन न साक्षादन्वय इति पार्थसारथिमतानुसारि

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैः गृह्णन्ति प्रकृताः क्रियाः॥ (तं. वा. १. ४. २.)

इति वार्तिकम्। तच्च भाव्यं सन्निहितत्वादपूर्वमेव, न तु विप्रकृष्टस्वर्गादीति भाव्यापूर्वजनन एव तस्या अपेक्षा, न तु लोकतो ज्ञातस्वरूपयागजनने; अपूर्वस्य लोकतोऽनिर्ज्ञातप्रकारत्वात्। अत एवालैकिकविहितसामग्रीजन्यत्वादपूर्वमित्याचक्षते तान्त्रिकाः। अतश्च यददृष्टचरपदार्थपर्यन्ततां विनाऽङ्गानामानर्थक्योपशमो नास्ति तददृष्टचरपदार्थप्रयुक्तत्वमङ्गानामवश्यमङ्गीकार्यमिति सर्वधर्माः साक्षात् पम्परया वा अपूर्वप्रयुक्ता एवेति। नन्वपूर्वप्रयुक्तत्वे कथं करणानुग्राहकत्वं तस्या इत्याशङ्कां निरस्यति—**योग्यतासम्पादकत्वमिति।** अयं भावः—यागविषयककृतेरेवापूर्वे जननीये साकाङ्क्षतया अन्वितानां तदर्थत्वं युक्तम्। तथापि फलतो यद्विषयिणी कृतिः तद्विषयस्यैवापूर्वजनकत्वात् तेनापूर्वे जननीये तज्जननानुकूलयोग्यतासम्पादकत्वं भवतीति पाश्चात्यं तदनुग्राहकत्वं भवति—यथा आरुण्यादीनां साक्षात्क्रयभावनान्वितानामपि यथाकाङ्क्षं द्रव्यादिपरिच्छेदद्वाराऽन्वयेन गुणगुणिनोरभेदः पार्ष्ठिकः तद्वत्। ततश्चोत्पत्त्यपूर्वजननानुकूलयागनिष्ठयोग्यतासंपादनद्वाराऽपूर्वार्थत्वमिति।

**त्वाच्च न प्राधान्यापत्तिः अङ्गत्वविघातो वेत्यादि क्षुण्णं कौस्तुभे ।**

**यत्तु व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः शाब्दबोधे लक्षणाया अनङ्गीकारात् पश्चात्तु निषादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थत्व-**

———

अत्र च **विधिरसायनकृता**—

यद्व्रीहिप्रोक्षणादेर्यवमपि विषयं तन्वते तच्च चिन्त्यं
युक्ताऽपूर्वेण वध्यानयनविधिनयादर्थवत्ता विधीनाम् ।
नोचेन्नैमित्तिकोऽपि प्रतिनिधिवदियात्सोमधर्मातिदेशा-
नृच्छेत्सम्मीलनादीनपि च बृहदपि स्तुत्यपूर्वाविभेदात् ॥

इति श्लोकविवरणे यवेषु प्रोक्षणादिसंस्काराप्राप्तिसिद्ध्यै एतदधिकरणपूर्वपक्षोपबृंहणं नानायुक्तिभिः कृतम् । तदनूद्य संक्षेपेणाग्रे दूषणीयमस्ति । तदप्यनुवाद्यकोटावनुपक्षिप्तमपि ज्ञातव्यमित्यभिप्रायेण निष्कृष्टं पूर्वपक्षाभिप्रायं आडम्बरेणानुवदति—**यत्त्वित्यादिना** । इत्थं हि तेनात्रोपपादितम् । तथाहि—प्रोक्षणावहननादिविधिषु व्रीहिपदस्य मुख्यार्थत्वं परित्यज्यापूर्वीयाकारलक्षकत्वं किमर्थं कल्पनीयम् ? न तावत् तदर्थस्य द्वितीयाश्रुत्यवगतप्रोक्षणावहननसाध्यत्वनिर्वाहार्थम्; व्रीहीन् प्रोक्षति व्रीहीनवहन्तीति लौकिकप्रोक्षणावहननविषयपौरुषेयवाक्य इव तस्य जलसंयोगतुषविमोकरूपलौकिकफलविषयतया तत्साध्यत्वोपपत्तेः । नापि तस्य प्रोक्षणजन्यादृष्टसंस्कारावहनननियमसाध्यत्वनिर्वाहार्थम् ; तत्साध्यत्वस्याश्रुतत्वात् । क्रियासाध्यत्वरूपकर्मत्वस्यैव द्वितीयाश्रुत्यवगतेः । ननु तथापि प्रोक्षणजन्यसंस्कारावहनननियमयोर्वैफल्यपरिहाराय तत्साध्यत्वं व्रीहिशब्दसमर्पितस्यैव वक्तव्यमिति तदर्थमपूर्वीयाकारलक्षणेति चेन्न; यदर्था व्रीह्यादयः तस्मिन्नपूर्व एव तयोरप्युपयोगसम्भवात् । 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यत्र प्राङ्मुखत्वनियमो भोजनस्वरूपानुपयोगी, भोजनस्यापूर्वार्थत्वाभावेन तद्गतापूर्वार्थत्वोपयोगीत्यपि समर्थयितुमशक्यः सन् अक्लृप्तापूर्वोपयोगी कल्प्यते । इह क्लृप्ते दार्शपूर्णमासिके प्रकरण्यपूर्वे विपरिवर्तमाने तयोः तदुपयोगित्वं कथं न कल्प्येत । न च व्रीहिपदस्य लौकिकव्रीहिव्यावर्तनाय अपूर्वीयव्रीहिपरत्वावश्यम्भावेन अपूर्वीयत्वस्यावश्यविवक्षणीयत्वात् व्रीहित्वस्यापि विवक्षायां विशिष्टानुवाददोषापत्तेः अपूर्वीयत्वस्य च यवसाधारणत्वात् यवसाधारण्यमवर्जनीयं तयोरिति वाच्यम् । व्रीहिपदस्य व्रीहिमात्रपरत्वेऽपि तत्र लौकिकव्रीहिव्यावर्तकस्यापूर्वीयत्वस्यार्थाल्लाभसम्भवेन विशिष्टानुवाददोषाप्रसङ्गात् । तथाहि—प्रधानविधेः कथम्भावाकाङ्क्षायां प्रोक्षणावघातविध्योः फलाकाङ्क्षाया

मेकवाक्यता तावत् समिदादिवाक्यवदवश्यं कल्पनीया—प्रोक्षणेनावघातेन व्रीहिद्वारा प्रधानापूर्वं कुर्यादिति। न चापूर्वीयान्यव्रीहिद्वारेणापूर्वार्थत्वं सम्भवतीत्यर्थादपूर्वीयव्रीहिविषयत्वनियमलाभः। न चापूर्वीयत्वेनोपस्थितिं विना लौकिकसाधारणव्रीहित्वाकारेण संस्कार्यत्वबोधो न सम्भवतीत्यपि शङ्कास्पदम्। तप्ते पयसि दध्यानयतीत्यत्र तादृशपयस्त्वेनैव दध्यानयनसंस्कार्यत्वस्य अवश्याभ्युपेयत्वात्। एतद्वाक्योपस्थितसंस्कृतपयःपरामर्शिसर्वनामयुक्तेनैतदुत्तरपठितेन सा वैश्वदेव्यामिक्षेति वचनेन द्रव्यदेवतासम्बन्धोपस्थापनमुखेन ज्ञाप्यमानयागापूर्वसाधनत्वस्य पयस्समवायिन एतद्वाक्यप्रवृत्तिवेलायामसम्भवदुपस्थितिकस्यात्रत्यपयःपदेन लक्षणाया असम्भवात्।

आस्तां वा प्रधानविध्येकवाक्यत्वं तथापि तयोरपूर्वार्थत्वावगत्यनपेक्षायामप्यपूर्वीयव्रीहिविषयत्वमर्थाल्लभ्यते। 'यस्योभावग्नी अनुगतौ अभिनिम्लोचेत् अभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यत्र हविरार्त्यधिकरणन्यायेन श्रुतस्याग्न्युभयत्वस्याविवक्षया अन्यतराग्न्यनुगमनेऽपि पुनराधेयप्रसक्तौ शाब्दान्वयवेलायामुभयत्वप्रहाणेनाग्न्यनुगमनमात्रस्य निमित्तत्वावगतावपि निमित्ते विधीयमानमाधानं सहितयोरेवाग्न्योरुत्पादनक्षमं; न त्वेकैकस्याग्नेरिति विधेयसामर्थ्यादुभयाग्न्यनुगमनस्य निमित्तत्वलाभः; एवमिहापि द्वितीयाश्रुतिनिर्दिष्टव्रीहिगुणतया विधीयमाने प्रोक्षणावहनने भूतभाव्युपयोगरहितलौकिकव्रीहिविषये न भवितुं योग्ये इति विधेयसामर्थ्यात् शाब्दान्वयबोधानन्तरमपूर्वीयव्रीहीणां विषयत्वलाभः सम्भवतीति किमनुपपन्नम्? अवश्यञ्चात्राप्येवमेवोपपादनीयम्। अन्यथा[1] शाब्दान्वयवेलायां अपूर्वीयत्वविवक्षायां तस्य जुह्वादिसाधारण्यात् जुह्वादिष्ववहननस्य कृष्णलश्रपणवददृष्टार्थतायाः वक्तव्यत्वाच्च विधिवैरूप्यापत्तिं तण्डुलप्रणाडिकापूर्वीयत्वविवक्षायां विशिष्टानुवाददोषापत्तिं को वारयिता। तस्मादर्थलभ्ये[2]ऽपूर्वीयत्वे न तत्र लक्षणा अङ्गीकर्तुमुचितेति न यवसाधारण्यं तयोरिति।

तदयुक्तम्। द्वितीयोक्तकर्मत्वाश्रयतानिर्वाहायैव तल्लक्षणाङ्गीकरणात्-तथाहि—यदि 'व्रीहीन् प्रोक्षतीत्यादिलौकिकं वाक्यमविधिरूपं तत्र सिद्धानुवादत्वेन जलसंयोगतुषविमोकरूपलौकिकफलविषयतामात्रेणापि तदुपपत्तिरिष्यत एव। यदि तत् विधिरूपमप्रवृत्तप्रवर्तकं तत्रापि विधेरिष्टभाव्यकत्वनियमात् इष्टसाधनपदार्थविषयप्रवर्तनाबोधकतानिर्वाहो नैव यथाश्रुतव्रीह्यर्थत्वे उपपादयितुं शक्यते। नहि तदा प्रोक्षणं व्रीहिरूपेष्टसाधनम्, अथवा व्रीहिगतादृष्टसंस्काररूपेष्टसाधनम्, व्रीहिनिष्ठजलसंयोगादिरूपेष्टसाधनम्, इत्याक्षेपमुखेन जातमिष्टसाधनताज्ञानं

1. A. अपि तु
2. A. लब्धे

प्रोक्षणादिप्रवृत्तावुपयुज्यते। सर्वस्यापि स्वतः पुरुषार्थत्वस्य पुरुषार्थसाधनत्वस्य वा अभावात्। स्वतः पुरुषार्थतदनुबन्धिनोरेव प्रवृत्तियोग्यत्वात्। अतो यावत् दृष्टपुरुषार्थसाधनत्वं तदसंभवेऽदृष्टपुरुषार्थसाधनत्वं नावगम्यते व्रीहीणां तावद्विधिस्तदुद्देशेन नैव प्रोक्षणादि विधातुमुत्सहते। एतदभिप्रायेणैव ग्रन्थेषु स्वरूपे आनर्थक्यमित्यादिकेषु आनर्थक्यादिशब्दा द्रष्टव्याः। अत ईप्सिततमत्वं व्रीहीणां कथञ्चित् ज्ञातव्यमेव। न च व्रीहिभिर्यजेतेति शास्त्रेण व्रीहीणां पुरुषार्थसाधनताया अवगतत्वात् व्रीह्यर्थस्यापि प्रोक्षणादेः व्रीहिस्वरूपेऽनुपयोगेऽपि तद्द्वारा तज्जन्यापूर्वे उपयोगसम्भवान्नानर्थक्यमित्युक्तमेव यदर्था व्रीहय इत्यादिनेति वाच्यम्। द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगादित्यधिकरण (पू.मी. ९–१–११) पूर्वपक्षोत्तरपरे 'अर्थो वा स्यात् प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात्' (पू. मी. ९-१-१३) इति सिद्धान्तसूत्रे यदि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणं स्यात् तथा सति फलकल्पना स्यात्। न हि व्रीहिस्वरूपार्थत्वे परम्परयापि प्रकृतापूर्वप्रयोजनत्वमग्निद्वारेणेव आधानस्य क्रत्वपूर्वप्रयोजनता सम्भवति। तत्र ह्याहवनीयादिरूपं क्रत्वर्थम्। तच्चाधानसाध्यमिति युक्ता तत्स्वरूपार्थत्वेप्याधानस्य प्रयोजनवत्ता। नत्विह प्रोक्षणजन्यादृष्टविशिष्टानां व्रीहीणां क्रत्वर्थतया विधानमस्ति, यतोऽपूर्वं यावदवगत्यापि प्रोक्षणं प्रयोजनवत्स्यात्। व्रीहिभिर्यजेतेति तज्जातिमात्रश्रवणादिति ग्रन्थेन वार्तिकतन्त्ररत्नयोरेव दत्तोत्तरत्वात्।

यत्तु भाट्टालङ्कारकृता-यदर्था व्रीहयः तस्मिन्नपूर्व एव तयोरुपयोगसम्भवादिति विधिरसायन ग्रन्थस्य प्राङ्मुखतानियमस्य कल्प्यफलार्थत्वोपपादनप्रतिस्पर्धितया प्राकरणिकक्लृप्तापूर्वार्थत्वप्रतिपादनपरोपसंहारग्रन्थानुरोधेन आपाततः प्रतीयमानव्रीह्यर्थत्वपरित्यागेन केवलापूर्वार्थत्व एव तात्पर्यं परिकल्प्य दूषणं दत्तम्—यद्यपि व्रीहीन् प्रोक्षतीति विधौ द्वितीया न श्रूयेत, तथापि व्रीहीणां मानान्तरेणापूर्वीयतया उपस्थितेरभिघारणस्य प्रयाजशेषार्थत्वमिव प्रोक्षणादीनां तादर्थ्यमेव स्वीक्रियेत न तु साक्षात्क्रत्वङ्गत्वम् सन्निपातितायाः प्रधानकर्मत्वापेक्षया ज्यायस्त्वात्। अङ्गीकृतञ्चैतत् "स्थाणौ स्थाण्वाहुतिं जुहोती"त्युदाहरणे। प्राङ्मुखत्वोदाहरणेऽपि हि यद्यशनस्य केनापि प्रमाणेनापूर्वीयतयोपस्थितिः स्यात् नैव प्राङ्मुखत्वं तादर्थ्यं जह्यात्। श्रूयमाणायान्तु द्वितीयायां सत्याञ्चापूर्वीयत्वेन व्रीहीणामुपस्थितौ सुतरां व्रीह्यर्थत्वमेव युक्तम्, नापूर्वार्थत्वम्। ईदृशमानर्थक्यपरिहारं विश्वजिन्न्यायेनापि सम्भवन्तमप्रसिद्धदृष्टान्तेन किं त्यक्तवानसीत्याश्चर्यमिति। तत् तदीयग्रन्थोपक्रममध्यपरामर्शोपसंहारपर्यालोचनया व्रीहिस्वरूपार्थत्वप्रतिपादन एव तात्पर्यावगतेः तत्परित्यागेन केवलापूर्वार्थत्वतात्पर्यकल्पने प्रमाणाभावादयुक्तम्। अन्यथा यदर्था व्रीहय इति विशेषमपहाय यदर्थमन्यदङ्गजातं तस्मिन्नपूर्व एवोपयोगसम्भवादित्येवावक्ष्यत्। अत एव विश्वजिन्न्यायेन स्वर्गकल्पना परास्ता। अतश्च पर्णताया जुहूद्वारा क्रत्वङ्गत्वमिव प्रोक्ष-

कल्पनमित्युक्तं, तन्न प्रोक्षणादेस्तज्जन्यादृष्टस्य वा व्रीहित्वावच्छिन्नभावकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् शाब्दबोधस्यैवानुपपत्तेर्लक्षणाङ्गीकरणात्प्रत्युक्तम्। अतो व्रीह्यादिपदेनापूर्वसाधनत्वावच्छिन्नलक्षणात् तदुद्देशेनैव प्रोक्षणादिविधिरिति ते अपूर्वप्रयुक्ता एवेति सिद्धस्स्यासावादवृः। न चैवमपि धर्मानुष्ठाने व्रीहित्वादीनामपि अनुष्ठापकतया निमित्तत्वात् विकृतौ तदभावे भेदकाभाव इव धर्मलोपापत्तिः; यच्छब्दाद्यभावेन व्रीहित्वादीनां निमित्तत्वे प्रमाणाभावात्। वक्ष्यमाणरीत्या उद्देश्यतावच्छेदककोटावप्रवेशेनानुष्ठापकत्वस्याप्यभावाच्च। अत एवापूर्वस्यैव तत्त्वान्निमित्तत्वम्।

---

णस्य व्रीहिद्वारैव क्रत्वङ्गत्वमित्येव तात्पर्यम्। एतावान् विशेषः। तत्राव्यभिचरितक्रतुसम्बन्धेन क्रतोरुपस्थितिः। इह तु प्रकरणादपूर्वस्य, तत्साधनत्वस्य व्रीहिशास्त्रादवगतेः। तत्साधनीभूतव्रीह्युद्देशेन विधीयमानस्य प्रोक्षणादेः तद्द्वारा तत्साध्यत्वेनोपस्थितक्रत्वपूर्वे उपयोगसंभवेन सम्भवत्यानर्थक्यपरिहारे किमित्यपूर्वीयाकारलक्षणया यवसाधारण्यं स्वीकार्यम्। प्राङ्मुखतादृष्टान्तोऽपि क्लृप्तोपस्थितप्राकरणिकत्वव्यतिरेकमात्रप्रदर्शनार्थ एव। एवञ्च सर्वेत्राप्यत्र यविधिरसायनग्रन्थस्यापूर्वीयत्वस्यार्थाऽन्यत्वसम्भवान्न लक्षणाजन्यबोधविषयत्वं; उद्देश्यता तु व्रीहित्वाकारेणैवेत्येव तात्पर्यं तद्ग्रन्थपर्यालोचनयैव सुधियो विदङ्कुर्वन्तु। विस्तरभयान्नोपपाद्यते।

अपि च यदि व्रीह्यर्थत्वपरित्यागेनैव साक्षात् क्रत्वपूर्वार्थत्वमिति तद्ग्रन्थाशयः तदा कथं निराश्रयमेव प्रोक्षणादि क्रत्वपूर्वं साधयतीति विवेचनीयम्। यद्यानर्थक्यतदङ्गन्यायेन प्रोक्षणावहननयोग्यद्रव्यरूपाङ्गाश्रितं सदित्युच्येत, तदा तत्साधनत्वाविशेषात् साक्षाद्यवव्रीहिसाध्यपुरोडाशयोरथवा एकप्रणालीकसाधनताश्रयप्रकृतिद्रव्ययोर्व्रीहियवयोराश्रयतापत्तिरनिवार्यैवेति साधितम्। तेन व्रीहित्वविवक्षया यववर्जनं प्रतिज्ञातमिति यत्किञ्चिदेतत्। अतोऽपूर्वीयत्वेनेष्टत्वबोध आवश्यक एव। यत्तु अपूर्वीयत्वलाभार्थं अधिकारवाक्यैकवाक्यतायाः पुनराग्नेयदृष्टान्तस्य चोपपादनं अथवा आनर्थक्यपरिहाराय प्रोक्षणादिविशिष्टव्रीहीणां कल्पितवाक्यान्तरेणापूर्वीयत्वकल्पनं तत्रत्यमप्येकहेलयैव दूषयति—तःप्रोक्षणादेरिति। अयं भावः—द्वयोः पदसमुदाययोः अबाधितान्वयबोधजनकत्वेन लब्धवाक्यव्यपदेशयोर्यदेकवाक्यत्वं तद्वाक्यैकवाक्यत्वम्। तदेव प्रयाजाद्यङ्गवाक्याधिकारवाक्ययोः सम्भवति। प्रयाजादिवाक्येषु फलाश्रवणेऽपि विधेरिष्टसाध्यत्वानुरोधेन सामान्यतः किञ्चिदिष्टोद्देशेन प्रयाजादिविधायकतया जनितशाब्दबोधानि तद्वाक्यानि फलान्तरकल्पनाभिया फलविशेषसाकाङ्क्षाण्यपि प्रधानविध्येकवाक्यतां भजन्ते। प्रधानवाक्यमपि यागेन स्वर्गं भावयेत् कथमित्याकाङ्क्षया प्रकारविशेषसाकाङ्क्षं इत्थमंशपूरकाङ्गवाक्यैकवाक्यतां भजते। दर्शितञ्च तत्स्वरूपं प्रकरणाधिकरणे पार्थसारथिना—"तेनायं वाक्यार्थः

यागेन फलं कुर्यात् । कथम् ? केन व्यापारेण यागात्स्वर्गो भवतीति, तत्राह-समिधो यजति, व्रीहीनवहन्तीत्यादि । तदयमर्थो भवति-समिदादिभिरदृष्टद्वारम्, अवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारम्, द्रव्यदेवतेन च स्वरूपसम्पादनेन यागे व्याप्रियेत । एवंभूतोऽसौ व्यापारः येन यागात् स्वर्गो भवति । यागः फलारम्भाभिमुखो भवति ; कार्यारम्भाभिमुख्यमेवोपकार इति समिदादेः क्रतूपकारः फल''मिति । 'व्रीहीन् प्रोक्षती' त्यादीनि तु शाब्दबोधजनकतया तव मते लब्धवाक्यव्यपदेशानि [न] भवितुमर्हन्ति । नह्यत्रेष्टसामान्योद्देशेन तद्विधायकतया प्रथमतः शाब्दबोधजनकानि, व्रीहिपदश्रवणात् । नापि व्रीहिस्वरूपोद्देशेन । तेषामि ष्टत्वाभावात् तेन विधिस्वरूपे विधिना इष्टभाव्यकत्वस्वभावेन विधातुमयोग्यं प्रोक्षणादीत्ययोग्यतानिश्चयसत्त्वे कथं प्राथमिकबोधमुत्पादयेयुः येनैकवाक्यतयाऽन्वीयेरन् । अतश्च द्रव्यदेवतासंस्कारद्वारा यागे व्याप्रियमाणतायां द्वारस्यैवासम्भवान्न पश्चादपूर्वार्थित्वं कल्पयितुं शक्यते । एतेन पुनराधेयदृष्टान्तोपन्यासोऽप्ययुक्तः । तत्रहि आधानस्य उभयाग्निजनकत्वसामर्थ्यमेतद्वाक्यप्रवृत्तेः पूर्वमवगतमिति युक्तं विधेयसामर्थ्यानुरोधेनोभयाग्न्यनुगमनस्य निमित्तत्वम् । प्रकृते तु प्रोक्षणादेः स्वरूपेण शास्त्रान्तरेण वा अपूर्वीयव्रीहिनिष्ठसंस्कारजनकत्वसामर्थ्यं नैवं क्लृप्तमस्ति । व्यभिचारात् शास्त्रान्तराभावाच्च । एतद्विधिप्रवृत्तिवेलायामेवान्यथानुपपत्त्याऽपूर्वीयत्वबोधपर्यवसानं नैव लक्षणामन्तरेण सम्भवि । एतद्वाक्यप्रवृत्त्युत्तरमर्थादपूर्वीयत्वपर्यवसानन्त्वेतद्वाक्यस्यायोग्यतानिश्चयसत्त्वे प्रवृत्तिरेव न सम्भवतीति प्रागुक्तमेव । अत एव नैमित्तिकविधेर्निमित्तगतविशेषावगमात् प्रागपि पर्यवसानात् तत्प्रवृत्त्यनन्तरं विधेयगतवैदिकत्वविशेषेण पश्चादश्वदानरूपनिमित्तेऽपि वैदिकत्वविशेषज्ञानम् । संस्कारविधेः संस्कार्यगतापूर्वीयत्वावगमात् प्रागपर्यवसानादेव धारणसंस्कारस्य वैदिकत्वेन संस्कार्यहिरण्यस्य न वैदिकत्वेनोपस्थितिर्येन संस्कारकर्म स्यादित्यादिमीमांसकमर्यादा दृश्यते । किञ्च सर्वत्रापि विध्याक्षिप्तेष्टसामान्यस्य पदबोध्येष्टविशेषाभेद एव दृष्ट इति नियमस्तावत् स्वर्गकामादि वाक्ये दृष्ट इति हेतोरप्यपूर्वसाधनत्वलक्षणाऽऽवश्यिकी । इतरथा विश्वजिता यजेतेत्यत्रापि स स्वर्गःस्यादिति न्यायोपस्थितस्वर्गाभेदस्य विध्याक्षिप्तेष्टसामान्ये बोधसम्भवेन स्वर्गकामपदाध्याहारानापत्तेः । सुतराञ्च विधेयसामर्थ्यविशेषनिर्णेयोद्देश्यके[1] 'स्रुवेणावद्यती'त्येवमादिविधौ द्रवादिपदाध्याहारस्य, अग्नये जुष्टमित्यादिमन्त्रेषु सूर्यादिपदप्रक्षेपरूपोहस्य चानापत्तिः । एतेन शाब्दान्वयबोधानन्तरमपूर्वीयव्रीहीणां लाभोऽथवा प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनयाऽपूर्वीयत्वलाभ इत्युक्त परास्तम् । अतः प्राथमिकबोधार्थमेवापूर्वसाधनत्वलक्षणोद्देश्यविधेयभावसिद्धये आवश्यिकी । तत्र व्रीहित्वस्यापि न लक्ष्यकोटिनिविष्टत्वं तथाऽग्रे निरूपयिष्यते । नहि तण्डुल-

1. MS विशेषणनिर्णयो

निर्वृत्तिप्रणाडिकापूर्वसाधनत्वलक्षणायां विशिष्टानुवाददोषापत्तिः भ्रान्तेनाप्यापादयितुं शक्यते। लक्षणया हविरार्तेर्निमित्तत्वस्य अग्रेमन्तर्वेदि मिनोतीत्यत्र देशविशेषे विधेयत्वस्य च शतशः स्वीकारात्। लक्षणाया विशिष्टैकपदार्थविषयतयोद्देश्यत्वविधेयत्वयोः पर्यवसानात्। तच्चा-पूर्वसाधनत्वं प्रागवगतं पश्चाद्वाऽवगन्तव्यमस्तु। एतावता तल्लक्षणाऽऽवश्यिक्येव।

एतदभिप्रेत्यैव द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगादिति ( पू. मी. ९. १. ५ ) वक्ष्यमाणाधिकरणे पार्थसारथिना "यद्यपि न प्राक् पयसः साधनत्वं विहितम्। नापि संस्कारवे-लायां गम्यते। तथापि भाविविनियोगावगम्यसाधनत्वापेक्ष एवायं संस्कारविधिः अन्यथाऽऽ-नर्थक्यादि"त्यादिना स तु साधनस्वरूपसिध्यर्थो न स्वरूपसिध्यर्थः; तत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः इत्यन्तेन ग्रन्थेन शास्त्रदीपिकायां शाब्दत्वसिध्यर्थं लक्षणा उपपादिता।

यत्तु तेन तदधिकरणे तप्ते पयसीत्यत्र साधनत्वं पूर्वानवगतं कथं पयसा लक्षयितुं शक्यते इत्याशङ्क्य न पदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं प्रतिपा-दयतीति ब्रूमः। किन्तर्हि? प्रथमं पयःशब्दः स्वार्थस्य संस्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति। तद्रूपस्य च कार्योपयिकतामन्तरेणानुपपत्तेः तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसः तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते। तदर्थं च पूर्वं विहितः संस्कार इति पश्चादवगम्यते। तदयमर्थः—दध्यानयनसंस्कृतं पयो वैश्वदेवमिति। न ह्यवश्यं पूर्वलक्षित एव साधनरूपे संस्कारा विधातव्याः। साधनरूपार्थाः संस्कारा इत्येतावन्नः प्रतिपाद्यम्। तच्चैवंविधेष्वयत्नेनैव सिध्यति। श्रुत्यैव संस्कारस्य साध[1]नान्वयात्। व्रीहीनि-त्यादिकन्तु लाक्षणिकम्। नन्वेवं श्रुत्यर्थस्यैव पयसः संस्कारान्वयात् कथं लक्षणावाचोयुक्तिः। सत्यम्। व्रीहिपयःप्रभृतीनां द्रव्याणामेव संस्कारः। स तु साधनरूपसिध्यर्थो न स्वरूपसिध्यर्थः; तत्तु रूपं अशाब्दमित्येतावता लक्षणावाचोयुक्तिरित्युक्तम्। तत्तु विधिरसायनोक्तदिशा अयुक्त-मेवेति विवेचनीयम्।

अयमेव हि तस्याभिप्रायः।—यदि प्रथमतो निर्विचिकित्सं पयस्संस्कारतया संस्कार-विधानेन वाक्यार्थमुत्पादयत्येव दध्यानयनवाक्यं तर्हि पश्चादवगम्यमानं कार्योपयोगित्वं शाब्दत्व-सिध्यर्थं तदा लक्षणीयं पयश्शब्देनान्वयानुपपत्त्या वा तात्पर्यानुपपत्त्या वा। नोभयथापि सम्भवति। अन्वयानुपपत्तेरभावात्। तत्सत्त्वे वा प्राथमिकबोधस्यैवानुपपत्तेः। तात्पर्यानुपपत्तेस्तल्लक्षकत्वे तद्रूपस्य

1. B नरूपान्व

कार्योपयिकतामन्तरेणानुपपत्तेरित्यनेन संस्कारान्वयिनारूपस्य कार्योपयिकतामन्तरेणानुपपत्तिप्रदर्शनस्य वैयर्थ्यापत्तेः। सत्त्वे वा अपूर्वीयपयोव्रीहिविषयत्वरूपतात्पर्यस्य वाक्यान्तरालोचनया पश्चान्निर्णेयत्वस्य विनापि लक्षणामुपपादितत्त्वाच्च। किञ्च यष्टीः प्रवेशयेत्यत्र यत्र तात्पर्यानुपपत्त्या लक्षणा तत्रापि न पूर्वं यष्टिकर्मकप्रवेशवाक्यार्थजननोत्तरं यष्टिमत्प्रवेशतात्पर्यानुपपत्त्या लक्षणामाश्रित्य पश्चाद्द्वितीयवारं यष्टिमत्प्रवेशवाक्यार्थः कैरपि तान्त्रिकैः स्वीक्रियते। किन्तु सकृदुच्चरितस्य शब्दस्य सकृदर्थप्रत्यायकत्वनियमानुरोधेन यष्टिमत्प्रवेशतात्पर्यकवाक्योच्चारणकाल एव यष्टिमत्सु लक्षणया तत्कर्मकप्रवेशवाक्यार्थः प्राथमिक एव स्वीक्रियते। एवमिहाप्युपक्रमोपसंहारादिना निर्णीततात्पर्यात् संस्कारवाक्यात् प्रथमत एव कार्योपयिकत्वलक्षणा दुर्वारैव। नहि संस्कारान्वयकालेऽनवगते साधनरूपे सति पश्चादवगन्तव्यं साधनरूपं लाक्षणिकमाश्रित्यावगतं संस्कार्यस्वरूपार्थत्वं न भवति संस्कारस्य। किन्तु साधनरूपार्थत्वमित्येव स्वेच्छामात्रेण साधयितुं शक्यम्। अतः संस्कारविध्यन्वयः स्वरूपेऽयोग्य इत्ययोग्यतानिश्चयसत्त्वे प्राथमिकबोधस्यैवानुपपत्तेः तत्सिध्यर्थं प्रथमत एव तल्लक्षणा सर्वत्रैव संस्कारविधौ युक्ता। तदपूर्वसाधनत्वं पश्चात्पूर्वं वाऽवगतं भवतु नैतावता लक्षणायां विलम्ब इत्येव युक्तम्। अत एव 'तप्ते पयसी'त्यत्र प्राक्साधनतारूपधर्मानवगमेऽप्यानर्थक्यपरिहारार्थं पयः पदेन न पयस्त्वावच्छिन्नं पयोऽभिधीयते। किन्तु लक्षणया सामान्यतः पयस्त्वसमानाधिकरणयत्किञ्चिद्धर्मावच्छिन्नमुत्पत्तिवाक्ये इष्टसामान्यमिव प्रथमतः प्रतीयते। तदुद्देशेनैव दध्यानयनसंस्कारविधिः। पश्चात्तु तच्छब्देन दध्यानयनसंस्कृतपयस्त्वसमानाधिकरणधर्मावच्छिन्नस्य परामर्शात् तस्य यागसम्बन्धोत्तरं प्रतीयमानापूर्वसाधनत्वरूपधर्माभिन्नः पयस्त्वसमानाधिकरणो धर्म इति प्रतीयते। तदनन्तरञ्च पयःपदेनायमेव धर्मो लक्षित इति मानसो बोधो जायते इत्येवमुपपादयिष्यते पूज्यपादैः तदधिकरणे। नत्वेतावता प्राक् संस्कारान्वयात् संस्कारवाचकपदे तप्ते पयसीत्यत्र नैव लक्षणा। अपि तु संस्कारावगमोत्तरमपूर्वसाधनत्वावगतौ पश्चादेव सेति भ्रमितव्यम्। व्रीहीनित्यादौ तु व्रीहिपदेन शक्त्युपस्थापितव्रीहित्वावच्छिन्नोद्देशेन विधाने तेषां किञ्चिद्रूपेणेष्टत्वानवगतावनुपस्थितव्रीहित्वसमानाधिकरणयत्किञ्चिद्धर्मावच्छिन्नत्वेन रूपेण तत्कल्पनापेक्षया उपस्थिततद्गतापूर्वसाधनत्वावच्छिन्नत्वेनैव लक्षणया तत्कल्पनमिति विशेषः। अस्तु वा तत्र वक्ष्यमाणप्रकारेण प्रथमतो यत्किञ्चिद्धर्मावच्छिन्नत्वरूपेणैव लक्षणा। तथापि न काचित्क्षतिः।

**एतेन** दध्यानयनसंस्कारसमानन्यायेन वाक्यैकवाक्यतालभ्यापूर्वीयव्रीहिविषयत्वं लभ्यत इति यत्किञ्चिद्व्रीहिव्यावृत्तिरर्थाद्भविष्यतीत्यपास्तम्। पयः पदे एव प्रागुक्तलक्षणां विना यत्किञ्चित्पयोव्यावृत्त्यसिद्धेः। तथाहि—यदि प्रोक्षणादिवाक्यं व्रीहित्वाकारेण लौकिकसाधारणेन व्रीहि-

मात्रसंस्कारादिकं प्रोक्षणादिं विधाय वाक्यार्थबोधपर्यवसायि तदा अधिकारवाक्यैकवाक्यतायां येषां व्रीहीणां संस्कार्यता बुद्धा तेषामेव द्वारत्वापत्तिः। ततश्च यत्किञ्चिद्व्रीहिप्रोक्षणे कृतेऽपि दर्शपूर्णमासापूर्वं भवतीत्यापद्येत। नहि येषां द्वारत्वयोग्यता तेषामेव संस्कार्यत्वमिति नियन्तुं शक्यम्। प्रोक्षणादिसंस्कारविधितः प्राक् तेषां प्रोक्षणादिद्वारत्वस्यान्यतोऽसिद्धेः। ततश्च येषां द्वारत्वं तेषां संस्कार्यत्वं। येषाञ्च संस्कार्यत्वं निर्णीतं तेषामेव द्वारत्वमित्येवं कल्पनायाश्चान्योन्याश्रयापत्तेः भवदुक्तरीत्या विधिवैरूप्यपरिहाराय श्रुतगुणप्रधानभावनिर्वाहाय प्रोक्षणावहननयोः सामवायिकाङ्गत्वलाभाय चाधिकारवाक्यैकवाक्यताकल्पनातः पूर्वं प्रोक्षणादिविधिवाक्यार्थवेलायां लौकिकव्रीहिव्यावर्तककिञ्चिद्धर्मावच्छिन्नोद्देश्यतासिद्ध्यर्थमपूर्वसाधनत्वावच्छिन्नरूपे लक्षणा दुर्वारैव। अनेनैव न्यायेन 'तप्ते पयसी'त्यत्रापि अधिकारवाक्यैकवाक्यताकल्पनायां वैश्वदेवपयसो द्वारत्वानुपपत्तिर्द्रष्टव्या। सेति तच्छब्देन परामर्शोऽपि पयस्त्वावच्छिन्नस्य पूर्वं संस्कारे तस्यैव संस्कारविशिष्टस्यापद्येतेत्यप्नुसन्धेयम्। अतः प्रथमवाक्यार्थवेलायामेवापूर्वसाधनत्वावच्छिन्नावगतिसिद्ध्यर्थमावश्यिकी लक्षणेति। न च विधेरिष्टभाव्यकत्वानुरोधेन इष्टस्य भाव्यत्वापेक्षणात् तदभिन्नेष्टविशेषरूपज्ञापनाय 'विश्वजिता यजेते'त्यत्र स्वर्गकामपदाध्याहारस्येवेहाप्यपूर्वसाधनपदाध्याहारापत्तिरिति युक्तम्। धर्मिकल्पनातो धर्मकल्पनाया ज्यायस्त्वात्। यदि हि विश्वजिद्वाक्ये इष्टवाचकपदं श्रूयेत तदा स स्वर्गः स्यादिति न्यायलभ्यस्वर्गविशेषं तत्पदं लक्षणया प्रतिपादयेदेव। तन्न श्रुतम्। यदेव तु कल्प्यमानं तत्प्रथमत एव स्वर्गकामपदमेव कल्प्यते। तत्रापि न स्वर्गमिति, यजतेरकर्मकत्वात्। न चापूर्वसाधनत्वलक्षणायां तस्य जुह्वादिसाधारण्यात् जुह्वादिष्ववहननस्य कृष्णलश्रपणवददृष्टार्थताया वक्तव्यत्वाच्च विधिवैरूप्यापत्तेः, तण्डुलप्रणाडिकापूर्वीयत्वविवक्षायां विशिष्टानुवाददोषापत्तिं को वारयितेत्युक्तं युक्तमिति वाच्यम्। हन्तिविधेः सामान्यप्रवृत्तस्यापि दृष्टार्थत्वानुरोधेन पत्नीसँयाजान्तताविधेः अन्त्यान्ह इव जुह्वादिभ्यो व्यावृत्तिसम्भवेन वैरूप्याप्रसङ्गात्। वस्तुतस्तु हन्तिविधौ व्रीहिपदाश्रवणेऽपि दृष्टप्रयोजनानुरोधेन औषधमात्रविषयत्वमेव स्यात्; न प्रकृतप्रधानहविष्ट्वविशेषेऽपि सान्नाय्यादिविषयत्वमित्युक्तं तेषामर्थाधिकरणस्याकरग्रन्थेषु—यथाहुः—क्वचिद्दृष्टनिराकाङ्क्षः क्षीणार्थापत्तिशक्तिकः। नादृष्टार्थोऽपि सोऽन्यत्र शक्यः कल्पयितुं विधिः॥—(तन्त्रवा. ३-१-५) इति। तेनैव न्यायेन जुह्वादिव्यावृत्तिः भविष्यत्येव। सुतराञ्च व्रीहिपदश्रवणे सति व्रीहिपदेन यदपूर्वसाधनत्वं लक्षणीयं तत् स्वशक्यया व्रीहित्वजात्या व्रीहिव्यक्त्या वा स्वाश्रयवृत्तित्वसम्बन्धेन, अथवा स्वसमवायित्वसम्बन्धेन हविःप्रकृतित्वेनैव लक्ष्यते इति नैव लक्ष्यतावच्छेदकरूपाक्रान्तत्वं जुह्वादेरिति कुतोऽवहननादिप्रसक्तिस्तत्र। एतेन प्रोक्षणमपि व्याख्यातम्।

न ह्येतादृशसाधनतापरिचायकरूपायास्तण्डुलनिर्वृत्तिप्रणाड्या उद्देश्यविशेषणत्वं ब्रूमो येन विशिष्टोद्देशः स्यात् । अतो वाक्यभेदवैरूप्याभावात् युक्तैव तल्लक्षणा ।

नन्वपूर्वसाधनत्वलक्षणायामप्यपूर्वसाधनतास्वरूपयोग्यानामुदासीनव्रीहीणां प्रोक्षणाद्यापत्तिरनिवार्यैवेति चेन्न । आनर्थक्यपरिहारार्थं लक्षणायां तत्परिहारसमर्थापूर्वफलोपहितसाधनताश्रयत्वस्यैव तल्लक्षणात् । नह्यपूर्वसाधनतास्वरूपयोग्येषु व्रीहिषु प्रोक्षणानुष्ठाने आनर्थक्यं परिहृतं भवति । अतो यावतीभिर्व्रीहिव्यक्तिभिः तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वं जन्यते ता एव व्यक्तयो व्रीहिपदेनापूर्वफलोपहितसाधनतात्वावच्छिन्नत्वेन रूपेण लक्षणया प्रतिपाद्यन्ते इति तास्वेव प्रोक्षणं नोदासीनेष्वित्यर्थे सिद्धे य एव यागार्थं निरुप्तास्तेष्वेव तत्सिध्यतीति निर्वापोऽपिपृथक्करणापरपर्यायः सामर्थ्यान्निरुप्यमाणव्रीहिसंस्कारकः सन्नपूर्वफलोपहितसाधनतात्वावच्छिन्नव्यक्तिष्वेव भवति न निरुप्तेभ्योऽन्येष्विति नानुपपत्तिः ।

नन्वेवं तथापि दर्शपूर्णमासापूर्वफलोपहितव्यक्तिष्वेव प्रोक्षणादिव्यवस्थानुपपत्तिः । तदतिरिक्तानां तथाभूतव्यक्तीनामप्युद्देश्यतावच्छेदकरूपाक्रान्तत्वात् । न च प्रकृतत्वमपूर्वे तत्साधने वा विशेषणं भवितुमर्हम् । इतिकर्तव्यताकाङ्क्षारूपस्य प्रकरणस्य अन्वाधानादीतिकर्तव्यतान्वयजनकत्वेऽपि प्रकारविधिवेलायामसिद्धतया विशेषणरूपेण पदसङ्कोचकत्वायोगादिति चेत्, उच्यते । यद्यपि न प्रकरणं विशेषणं भवितुमर्हति । तथापि प्रोक्षणस्य फलाकाङ्क्षायां प्रकृतैकवाक्यतयैव फललाभे सम्भवति अप्रकृतफलवचनकल्पनया तदेकवाक्यत्वमन्याय्यमिति प्रोक्षणादीनां फलाकाङ्क्षया दर्शपूर्णमासयोश्च कथंभावाकाङ्क्षया च उभयाकाङ्क्षालक्षणप्रकरणात् प्रकृतेनैकवाक्यता कल्प्यते—प्रोक्षणेन व्रीहिद्वारा दर्शपूर्णमासापूर्वं प्रति व्याप्रियेतेति । न चान्यापूर्वसाधनव्रीहिद्वारं प्रोक्षणं तदपूर्वाकाङ्क्षया गृह्यमाणं दर्शपूर्णमासापूर्वाकाङ्क्षया व्रीहिद्वारेण दर्शपूर्णमासापूर्वं प्रति व्यापृतं भविष्यतीत्यर्थात् दर्शपूर्णमासापूर्वफलोपहितव्रीहिणामेव द्वारत्वं भवत् तद्विषयमेव प्रोक्षणमित्येवं प्रकृतैकवाक्यतापादनमुखेन प्रकरणस्य नियामकत्वोपपत्तिः । अपूर्वसाधनत्वलक्षणाऽभावे तु प्रोक्षणादिविधेरपरिपूर्णत्वेन वाक्यैकवाक्यतानुपपत्तिर्दर्शितैव प्राक् । तथाच यथैवोत्पत्तिवाक्ये इष्टसामान्यस्य भाव्यत्वेऽपि अधिकारवाक्यालोचनोत्तरं तद्विशेषः स्वर्गो मानसो बुध्यते तथैवापूर्वसामान्यसाधनतावच्छिन्ने भाव्यत्वेन बुद्धेऽप्यधिकारवाक्यैकवाक्यतालोचनोत्तरं तदपूर्वभेदो दर्शपूर्णमासापूर्वं तत्साधनञ्च संस्कार्यमिति बुद्ध्यत इति न कोऽपि दोषः । अत एवापूर्वसाधनत्वलक्षणायामपूर्वे प्रकृतदर्शादिजन्यत्वस्य पूर्वोक्तरीत्याऽन्यलभ्यत्वान्न प्रथमशाब्दबोधवेलायामेवान्यथानुपपत्त्या लक्षणायामनतिप्रसक्तमाग्नेयाद्यपूर्वसाधनत्वं प्रकरणादितात्पर्यवशाल्लक्ष्यते, गौरवात् । न चापूर्वसाधनतावच्छिन्नबोधाय शक्यसम्बन्धानु-

रोधेन शास्त्रान्तरावगततल्लक्षणाश्रयणम्। शास्त्रान्तरेण च प्रकृतिद्रव्याकाङ्क्षयागजन्यापूर्वार्थत्वमेवावगतमिति तदेव लक्ष्यत इति प्रकृतापूर्वसाधनेषु प्रोक्षणव्यवस्थासिद्धेरधिकारवाक्यैकवाक्यतालभ्यत्वेनैव व्यवस्थोपपादनं व्यर्थमिति वाच्यम्। विधेरिष्टभाव्यकत्वानुरोधेन येन केनचिद्रूपेणेष्टत्वमात्रबोधावश्यकत्वेऽपि किञ्चित्पुरुषार्थानुबन्धित्वमात्रलक्षणयाप्यानर्थक्यपरिहारोपपत्त्या पूर्वावगततत्साधनत्वविशेषलक्षणायां प्रमाणाभावात्। सन्निधानस्य नियामकत्वाभावेन सत्वेऽपि वा पूर्वं व्रीहिनिष्ठसाधनताबोधकशास्त्रप्रवृत्त्युपस्थितान् सन्निहितान् व्रीहीन् प्रोक्षणविधिरनुगृह्णाति। अथवा प्रोक्षणविध्युपस्थापितान् साधनताविधिर्गृह्णाति इत्यत्र नियामकाभावात्। अत एव स्रुवादिष्वतिप्रसङ्गाशङ्का तेषामर्थाधिकरणस्था उपपद्यते। एतदभिप्रेत्यैव "द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगादित्यधिकरणे (९-१-५) आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणां सिद्धान्ते उपपाद्य यदि प्रकरणस्य न विशेषणता कथं तर्हि प्रकृतापूर्वसाधनेषु व्रीहिषु प्रोक्षणं व्यवतिष्ठते इत्याशङ्कोत्तरत्वेन प्रकरणलभ्याधिकारवाक्यैकवाक्यतालभ्या प्रकृतापूर्वसाधनेषु प्रोक्षणादिव्यवस्था उपपादिता आकरग्रन्थेषु।

व्रीह्यादिस्वरूपार्था धर्मा इति पूर्वपक्षे लौकिकव्रीहिष्वपि प्रोक्षणं प्रसज्येतेति सिद्धान्तिदूषणपरिहाराय सन्निधिलक्षणलौकिकप्रकरणवशेन विशेषलाभो भविष्यतीति पूर्वपक्ष्याशङ्कोत्तरत्वेनैतदप्युक्तं तत्रैव; तदयुक्तम् तुल्यत्वादनयोः शास्त्रयोः व्रीहीन् प्रोक्षति व्रीहिभिर्यजेतेतिद्वयोरपि लौकिकव्रीहिग्राहित्वान्न गृह्यते विशेषः कतरेण सन्निधापितं कतरद्गृह्णातीति। अत एव **विधिरसायनकृता** लौकिकव्रीहिव्यावृत्तये सन्निहितग्रहणं हेतुं त्यक्त्वा अधिकारवाक्यैकवाक्यतालभ्यपरिशेष एव हेतूकृतः। अतः प्रथमवाक्यार्थबोधसिद्ध्यर्थं यत्किञ्चिदपूर्वसाधनत्वावच्छिन्ने लक्षणा। तदपूर्वे प्रकृतापूर्वविशेषाभेदबोधस्तु प्रकरणलभ्याधिकारवाक्यैकवाक्यतानिबन्धन एव न तु प्रागवगतिनिबन्धन इत्येव दध्यानयन [1]वाक्यीयपयःपदलक्षणोपपत्तिसाधारणं युक्तम्। तत्र पयसः पूर्वं साधनत्वानवगतेः[2] पयस्त्वसमानाधिकरणयत्किञ्चिद्धर्मावच्छिन्नस्यैव प्रागव[3]गतसाधनतारूपस्यानर्थक्यपरिहारार्थं लक्षणीयत्वेनोपपादितत्वात् प्रकरणात् प्रकृतापूर्वसाधनत्वलक्षणेति तत्र तत्र ग्रन्थकाराणां हविरार्त्यधिकरणादौ वार्तिकतन्त्ररत्नयोश्चोच्यते। तत्र प्रोक्षणे प्रकरणादपूर्वीयांशता शक्या लक्षयितुम्। प्रकरणे ह्यपूर्वसाधनत्वेन विहिता व्रीहयः। तेन शक्यते प्रोक्षणवाक्ये विदितपूर्वमपूर्वसाधनत्वं लक्षयितुम्। ये व्रीहयोऽपूर्वसाधनभूताः तान् प्रोक्षयेदित्यादिवाचोयुक्तिस्तु परिनिष्ठितबोधमादायैव द्रष्टव्या। सर्वथापि तु यत्किञ्चिदपूर्वसाधनत्वा-

1. B. reads वाक्येऽपि 2. A त्वावगतेः

3. A. गतवगत

वच्छिन्नबोधस्य प्रथमतो वृत्त्यजन्यत्वमभ्युपगम्य प्रकरणकल्पिताधिकारवाक्यैकवाक्यतालभ्यापूर्वसाधनत्वज्ञानाधीना संस्कारवाक्येषु संस्कार्यवाचकपदानां परिशेषादेव प्रकृतापूर्वसाधनव्रीहिव्यक्तिविषयतेति विधिरसायनकारोक्तमयुक्तमेवेत्यभिप्रायेण सुष्ठूक्तम्—तत्प्रोक्षणादेः तज्जन्यादृष्टस्य च व्रीहित्वावच्छिन्नभाव्यकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् शाब्दबोधस्यैवानुपपत्तेः लक्षणाङ्गीकारात्—इति पूज्यपादैः। यथाऽपूर्वसाधनत्वावच्छिन्नलक्षणायामवहनननियमादृष्टप्रोक्षणजन्यादृष्टयोः सिद्धिः तथा तानि द्वैधमित्यधिकरणे (पू-मी—२-१-३) कौस्तुभे एव द्रष्टव्यम्।

यत्तु प्रोक्षणादिविधिगतस्य व्रीहिपदस्य अपूर्वीयव्रीहिव्यक्तिविषयत्वं प्रधानविध्येकवाक्यतालभ्यव्रीहिद्वारकप्रोक्षणप्रधानसन्बन्धलभ्यं न तु तस्याः प्राक् लभ्यत इत्येवं पूर्वोपपादितविधिरसायनकारोक्तौ भाट्टालङ्कारकृता दूषणमुक्तम्—एकवाक्यताकल्पकप्रकरणस्य षड्यागसाधारणत्वात् तत्कल्पितैकवाक्यताबलेन षडपि यागान् प्रति प्रोक्षणस्य तादर्थ्यापत्तिः। ततश्च यथैवापूर्वसाधनीभूतव्रीहीणामेव द्वारत्वसम्भवादपूर्वसाधनव्रीहिपरत्वं व्रीहिपदस्यावधार्यते, तथा यावत्प्रकरणगतयागसाधनीभूतानामेव तान् प्रति द्वारत्वसम्भवाद् पुरोडाशप्रकृतिभूतानामतथात्वात् द्वारत्वानापत्तिः। सम्भवति च तादृक्त्वमन्वाहार्यप्रकृतिभूतानामिति द्वारत्वम्। न चान्वाहार्यप्रकृतित्वेन तेषां षड्यागापूर्वसाधनत्वे प्रमाणाभाव इति वाच्यम्। तुल्यन्यायेन व्रीहिभिर्यजेतेत्यत्राप्यपूर्वसाधनलक्षणानङ्गीकारेऽधिकारवाक्यैकवाक्यतया षड्यागापूर्वाङ्गत्वेन विनियोगोत्तरं द्वारत्वेन षड्यागग्रहणस्य निर्वाहायान्वाहार्याक्षिप्तप्रकृतिद्रव्यनियमस्याप्यौचित्यायातत्वात्। अपूर्वसाधनत्वलक्षणे तु प्रोक्षणविधिपरे वाक्ये प्रतीयमानव्रीह्यनुवादसिध्यै प्राप्त्याकाङ्क्षायामनुवादस्य सन्निहितगामित्वोत्सर्गात् व्रीहिभिर्यजेतेति विधेरिति बुद्धिर्भवति। ततश्च तत्र व्रीहित्वाकारेण प्राधान्ये सति आनर्थक्यात् यदाऽपूर्वसाधनलक्षणाऽऽरभ्यते, तदाऽनुवाद्यव्रीहिगामि यदपूर्वसाधनत्वं प्रापकशास्त्रादवधृतं तदपूर्वसाधनत्वमेव लक्षयितुमुचितं, शक्यसम्बन्धात्। तच्च प्रकृतिद्रव्यसाकाङ्क्षयागजन्यापूर्वसाधनत्वमेवेति तदवच्छिन्नानामेव व्रीहीणां द्वारत्वात् तज्जन्यापूर्वार्थत्वनियमस्सिद्ध्यतीति।

अत्रोच्यते। अन्वाहार्यप्रकृतित्वेन तेषां यागापूर्वसाधनत्वं वस्तुतो व्रीहिशास्त्रेणावगतं, नवा? आद्ये त्वत्पक्षेऽपि निवारणं सर्वथाऽशक्यमेव। द्वितीये सन्निधानाविशेषेऽपि यथा नियमविधिलाघवानुरोधेन प्रकृतिद्रव्यसाकाङ्क्षयागोद्देशेनैव व्रीहिविधानं तव मते, तथैव ममापि यागोद्देशेन व्रीहिविधाने नियमविधिलाघवानुरोधेन यागविशेषाणामेवोद्देश्यत्वं समानमेवेति पश्चादधिकारवाक्यैकवाक्यताकल्पनायां प्रकृतिद्रव्यसाकाङ्क्षयागानामेव द्वारत्वात् तज्जन्यापूर्वार्थत्वमेव परिशेषा—

दुचितम् । तदनन्तरञ्च तदपूर्वसाधनीभूतयागमात्रविषयत्वे व्रीहिषु बुद्धे प्रोक्षणविध्येकवाक्यतायां अतत्साधनीभूतानां व्रीहीणां द्वारत्वासम्भवेन तत्साधनीभूतव्रीहिपरत्वं कल्प्यमानं येषु दर्शपूर्णमासपदवाच्ययागेषु व्रीहयो भवन्ति तदपूर्वसाधनीभूतव्रीहिपरत्वमेव कल्पयितुं युक्तमित्यर्थे न किञ्चिद्बाधकम् । नहि तादृशयागविशेषसाधनव्रीहिद्वारा प्रोक्षणादौ तज्जन्यापूर्वार्थित्वकल्पने प्रमाणानुग्रहो न भवतीति भवतापि वक्तुं शक्यते । कथंभावाकाङ्क्षालक्षणप्रकरणस्य दर्शपूर्णमासपदवाच्यत्वस्य च कालयोगनिमित्तस्य प्रत्येकवृत्तित्वात् । नह्येतावता व्रीहीन् प्रोक्षतीत्यत्र प्रथमत एव सन्निहितव्रीहिविषयत्वं प्रोक्षणस्य विधिरसायनकृतोऽनिमतम् । पार्यन्तिकफलीभूतबोधस्यैवं रीत्योपपादनात् । अनेनैव न्यायेन व्रीहिभिर्यजेतेत्यत्रापि । प्रकृतिद्रव्याकाङ्क्षयागत्वावच्छिन्नयत्किञ्चिद्यागव्यावृत्तिः परं अधिकारवाक्यैकवाक्यताधीना । अपूर्वसाधनत्वलक्षणानभ्युपगमवादिमते सान्नाय्ययागोद्देश्यकत्वव्यावृत्तिस्तु नियमविधिलाघवानुरोधाधीनेति तु उभयपक्षेऽपिसमानमेव ।

वस्तुतस्तु अन्वाहार्यदक्षिणायाश्चित्रेष्टाविव स्वतःसिद्धतण्डुलग्राहित्वेनाप्युपपत्तेर्दाक्षिणाग्निकान्वाहार्यपचनपक्षेऽपि स्वतस्सिद्धग्रहणात् नान्तः प्रयोगं व्रीहीणामुपादानं तदर्थं प्रसज्येत येन धर्माकाङ्क्षा स्यादिति ध्येयम् ।

यत्तु अपूर्वसाधनत्वलक्षणोपपादनाय अनुवादस्य सन्निहितगामित्वमुक्तम् तत् पूर्वोपपादिताकरग्रन्थासम्वादीत्ययु[1]क्तमेव । किञ्चैतद्दूषणापत्त्या प्रोक्षणवाक्ये कथञ्चिदधिकारवाक्यैकवाक्याताधीनप्रोक्षणप्रधानसम्बन्धलभ्यापूर्वीयव्रीहिविषयत्वानभ्युपगमेऽपि 'स्रुचः सम्मार्ष्टी'त्यादौ तत्स्वीकारे नैव भवदुक्तं दूषणमापद्यते; स्रुचां षड्यागापूर्वं प्रत्येव साधनत्वात् । अतः सर्वसाधारण्येनापूर्वसाधनत्वावच्छिन्नलक्षणोपपत्तिमूलं प्रथमवाक्यार्थबोधानुपपत्तिरेवेत्येव युक्तं इत्यलं तदतिरिक्तोपपादनश्रमेण । तत्सिद्धा सर्वत्र प्रथमबोधसिध्यर्थं सर्वसंस्कारविधावन्यत्रापि यत्किञ्चिदपूर्वानुबन्धित्वलक्षणा । यत्तु अपूर्वसाधनत्वलक्षणापक्षे "नोचेन्नैमित्तिकोऽपि प्रतिनिधिवदिया" दित्याद्युत्तरार्थेनोपपादनं कृतं तत् तेषु तेष्वधिकरणेषु परिहृतम् । परिहरिष्यते च पूज्यपादैः । विस्तरभयान्नोच्यत इति दिक् ।

प्रकृतमनुसरामः । नन्वस्तु अपूर्वप्रयुक्तत्वं धर्माणां तथापि यदपूर्वं प्रयोजकं तदपूर्वस्य विकृतौ प्रयोजकस्याभावात् कथमूहः सिद्धयतीत्यत आह—**सिद्धः श्यामाकादावूह इति ।** अयमर्थः । सत्यं, दर्शपूर्णमासप्रकरणेन तदपूर्वेणैव परिगृहीता धर्माः नान्यत्र सन्ति प्रमाणा-

1. A. त्युक्तमिव

वस्तुतस्तु—**फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धस्यानुष्ठापकत्वे प्रमाणाभावात्**

---

भावात्, विशिष्टापूर्वनिबन्धनत्वादुपदेशस्य; तथापि सौर्यादिविकृतिभावनाया अपि स्वभाव्ये ऽपूर्वे जननीयेऽस्त्येव करणानुग्रहाकाङ्क्षा। तद्द्वारा च तज्जनकधर्माकाङ्क्षा। न च ते धर्माः सन्निधाने सन्ति; तस्माच्चोदनासामान्यादाग्नेयस्य धर्मा अतिदेशवाक्येन सौर्यभावनायामन्वीयन्ते। तं विना सौर्यवाक्यस्य निराकाङ्क्षत्वाभावात्। तथाचाकाङ्क्षया कल्पितस्याग्नेयवदित्यंशस्यापि वेदतुल्यत्वादुपदेशप्रायत्वमेवेति तद्धर्मप्राप्तिः सुलभैव। तत्रापि ब्रह्मवर्चसापूर्वार्थं सौर्येण व्याप्रियेत कथम्, आग्नेयवत् आग्नेयस्य ये धर्मास्तान् कृत्वा तदनुष्ठानप्रकारेणेति नातिदेशवाक्यार्थः; येन यथाप्रकृति प्राप्तानामदृष्टार्थमपि विकृतावनुष्ठितानामूहविषयता न स्यात्। अपि तु दशमाद्यन्यायेन यथाऽऽग्नेयेन स्वापूर्वार्थं व्यापृतं तथा सौर्येणापि व्यापृतव्यम्—इति आग्नेयभावनावर्तिप्रकारः तत्तत्पदार्थावान्तरोपकारवत्तारूपप्रापणं वाक्यार्थः। ततश्चार्थात् यथाऽऽग्नेये पदार्थैरुपकृतं तथा सौर्येऽप्युपकर्तव्यमित्येवं सिद्ध्यति। आग्नेये च मन्त्रैः संस्कारैश्च अपूर्वसाधनीभूतदेवताद्रव्यादिप्रकाशनादिद्वारा उपकृतं दैवादग्न्यादीनां देवतात्वात् व्रीह्यादीनां द्रव्यत्वात् तत्तत्स्वरूपविशिष्टं[1] तदार्थिकमासीत्। विकृतावपि आर्थिकार्थस्य प्रयोजनाभावेऽपि यथाशास्त्रार्थमात्मीयदेवताप्रकाशनविशिष्टतारूपाग्नेयभावनाप्रकारस्तथैव कर्तव्यः सूर्यादिवृत्तित्वं विना न सिद्ध्यतीति सिद्ध ऊह इति।

अत्र प्राचां ग्रन्थेषु एतत्सूत्रवर्णकान्तरे यजेः व्रीह्यादीनाञ्च स्वरूपेण धर्मानुष्ठाननिमित्तत्वं; ततश्च स्वरूपस्य निमित्तस्य विकृतावभावात् धर्मलोपे नतरामूहप्रसक्तिरित्याशङ्क्य यज्यादीनां निमित्तत्वाश्रवणात् साध्यसाधनानुष्ठाननिमित्तत्वमात्रेण तत्र तत्कल्पने अपूर्व एव साध्यत्वादनिष्पन्नस्यापि तस्य साध्यतया विपरिवर्तमानतया सिद्धत्वात् तस्यैव निमित्तत्वमिति तत्प्रयुक्ता धर्माः तन्निमित्ताश्च प्रकृतौ भवन्ति। विकृत्यपूर्वमपि च तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनीभूतनीवाराद्यङ्गत्वेनावघातादीननुष्ठापयतीति सिध्यत्यूह इत्यपूर्वस्य निमित्तत्वमुक्तम्। तदेव 'अत एवापूर्वस्यैव तत्त्वान्निमित्तत्वमिति ग्रन्थेनोपसंहृतं दूषयति—**वस्तुतस्त्वित्यादिना**। यद्यपि तद्धर्मनिष्ठनिधेयतानिरूपितोद्देश्यताश्रयत्वेन फले, तद्द्वारा अपूर्वे वा प्रयोजकत्वस्वीकारे इष्यमाणत्वेनैव तदुद्देश्यतानिर्वाहात् प्रयोजकत्वव्याप्यं निमित्तत्वमप्यर्थाल्लभ्यते इत्यभिप्रेत्यैव

---

1. A. ष्टतया

2. A. जनकतया

फलीभूतापूर्वमपि न निमित्तम्। अनयैव च दिशा यागत्वव्याप्यारादुपकारकस्थले निमित्तत्वं प्रत्युक्तम्। अतो बाधकाभावात् सिद्धयत्येवोहः। यानि चात्र मूले अनेकानि वर्णकानि कृतानि तानि पुनरुक्तत्वादनुपयुक्तत्वाच्चोपेक्षितानि। मूलकारैस्तु ग्रन्थव्याख्याख्यानरसिकतया कृतानीति ध्येयम्॥ १॥

---

यद्धि येन प्रयुज्यते भवति तत्तस्य निमित्तमित्यादिग्रन्थेषु भाष्यकृता आर्थिकनिमित्तत्वमुक्तं न विरुध्यते। तथापि इष्यमाणत्वेनोद्देश्यत्वस्वीकारस्योचितत्वेऽपि निमित्तत्वाङ्गीकारस्य असिद्धेऽसम्भवात् इच्छाविषयत्वेनैव रूपेण सिद्धतामापद्यैव निर्वहणीयत्वे लाघवात् तदिच्छाया एव सिद्धायास्तत्कल्पनं मुख्यत्वाद्युक्तम्। न त्वेतादृशं गौणमपि तस्मिन् प्रयोजनाभावात्। नहि निमित्तत्वे प्रयोजकत्वव्याप्यत्वस्येव प्रयोजकत्वे निमित्तत्वव्याप्यत्वं शक्यते वक्तुम्। असिद्धे फलादौ व्यभिचारात्। अथापि तच्छाब्दं स्यात् तदा शब्दावगतनिमित्तत्वनिर्वाहार्थं मनसि-विपरिवर्तमानत्वेन सिद्धतापि कल्प्येत। यथा यदि रथन्तरसामेत्यत्र सम्भावितरथन्तर-सामत्वादेः, नत्विह तथास्ति। अतस्तदङ्गीकारो निरर्थक इति भावः। अनयैवेति। ततश्च यागस्यापूर्वस्य वा निमित्तत्वमिति विचारकरणं निष्प्रयोजनमेव प्राचामिति भावः। एवञ्चास्मि-न्नधिकरणे आरादुपकारकाणामपूर्वार्थत्वं दृष्टान्तीकृत्य सन्निपत्योपकारकाणामपि तदर्थत्वं ऊहोपो-द्धाततया प्रतिपादितमिति सिद्धम्।

---

(२)—संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात् ॥ २ ॥ तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥ ३ ॥

अत्र मूले सन्निपत्योपकारकेषु पूर्वमुक्तमप्यपूर्वार्थत्वं त्रिभिरेभिरधिकरणैराक्षिप्य समाधीयते। तत्रेह वाक्य[1] संयुक्ते अग्रिमाधिकरणद्वये च लिङ्गश्रुतिसंयुक्तयोरिति विवेकः। तदिह दर्शपूर्णमासप्रकरणे श्रुते 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, इत्यादौ प्रोक्षणं नापूर्वार्थं: वाक्येन तस्यावघातार्थत्वावगमेन प्रकरणमात्रादपूर्वार्थत्वकल्पनानुपपत्तेः। न च निष्ठाप्रत्ययोक्तोलूखलमुसलोद्देशेनैव प्रोक्षणस्य 'व्रीहीन् प्रोक्षति' इतिवत् विधानात् कथं वाक्येनापि तस्यावघातार्थत्वं, द्वितीयावत् निष्ठया[2] कर्मत्वस्य

---

संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात्। प्रकरणमात्रादिति। यावदपूर्वस्येतिकर्तव्यताकाङ्क्षारूपप्रकरणात् वाक्यं प्रकल्प्य प्रोक्षणस्याङ्गत्वं कल्पनीयं तावत् प्रत्यक्षवाक्येन हन्त्यर्थत्वावगमान्न वाक्यकल्पनाप्रसरः। तदकल्पयित्वा तु प्रकरणमात्रं नैव विनियोजकमिति मात्रशब्देनोक्तम्। अत्र च निष्ठाप्रत्ययेन कर्मणोऽभिधानात् तस्य चोलूखलमुसलरूपत्वात्तदुद्देशेन 'व्रीहीन् प्रोक्षती'तिवत् प्रोक्षणविधानान्नावघातार्थत्वमित्याशङ्कायां मूलग्रन्थेऽप्येवं परिहृतम्—व्रीहीन् प्रोक्षतीत्यत्राख्यातेन भावनाप्रतीत्या तस्या एव विधानस्य प्रतीतेः तस्याश्च भाव्यापेक्षायां व्रीहीणामन्वये जातेऽपि करणाकाङ्क्षयाऽन्वितस्य प्रोक्षणधात्वर्थस्य भावनाभाव्यनिष्पादकत्वरूपेणैव तन्निर्वाहात् एकभावनापादितसम्बन्धं प्रोक्षणं व्रीह्यर्थं भवति। प्रकृते तु निष्ठाप्रत्ययेन भावनानभिधानात् उलूखलमुसलयोर्भाव्यत्वाप्रतीतेः प्रोक्षणस्य च करणत्वाप्रतीतौ कथं तदर्थत्वेन प्रोक्षणं स्यात्। यावच्च प्रोक्षणधात्वर्थस्य कारकरूपस्यान्वयार्थं भावनामाक्षिप्यान्वयो वक्तव्यस्तावत् प्रत्यक्षश्रुतहन्तिभावनायामेवान्वयो युक्त इति तदर्थमेव प्रोक्षणमिति। तदेतत्सिद्धान्ते किञ्चेत्यादिना दूष्यं पूज्यपादैः। अतस्तदुपेक्ष्य हेत्वन्तरमाह—द्वितीयावदिति। यदि द्वितीयावत् द्रव्यं कर्मत्वं प्रति विशेषणं भवेत् तदा तस्य प्राधान्यापादकमुद्देश्यत्वं स्यात्; निष्ठोपात्तकर्मत्वस्य तु उलूखलमुसलरूपद्रव्यं प्रत्येव विशेषणत्वेन द्रव्यस्य च तृतीयोपात्तकरणत्वेन भावनान्वितस्य साक्षात्क्रियार्थत्वस्यैवावगतेः परविशेषणस्य न क्रियायां स्वात्मार्थत्वापादकत्वं; द्वितीयोपात्तकर्मत्वस्य कारकान्तरेणासम्बध्यमानस्यैव साक्षात्क्रियान्वयेन क्रियानिरूपितोद्देश्यतायाः कर्मत्वाश्रयद्रव्यवृत्तित्वपर्यवसायित्वमिति वैषम्यम्।

---

1. M वाक्यसंयुक्तानां 2. A. निष्ठाकर्म

विशेष्यतयाऽनुक्तेः, कर्मत्वस्य द्रव्योपसर्जनत्वप्रतीत्या तयोरुद्देश्यत्वानुपपत्तेः। अतश्च प्रोक्षणस्यानर्थक्यतदङ्गन्यायेनोलूखलमुसलयोरवतारेऽपि वाक्यादवघातोद्देशेनैव विधानम्। अस्तु वा उलूखलादावेवावतारे प्रमाणाभावात्, प्रोक्षणस्य पदश्रुत्या तदन्वयेऽपि तृतीयया अन्यसाधनीभूतयोरेव तयोः प्रतीतेः प्रोक्षणस्यापि यदुलूखलमुसलयोः कार्यं तदर्थत्वावगतेरवघातार्थत्वसिद्धिः। सर्वथा नापूर्वार्थत्वम्। एवं च 'नैवारश्चरुर्नखावपूतानाम्' इत्यादाववघातस्योलूखलमुसलयोर्वाऽभावात् नखेषु न प्रोक्षणमिति प्राप्ते—

पूर्वाधिकरणोक्तरीत्यैवावघातस्वरूपे उलूखलमुसलस्वरूपे [2] चानर्थक्यापत्तेः अपूर्वसाधनत्वलक्षणयाऽपूर्वार्थत्वावसायादूहोपपत्तिरित्युक्तम्।

---

अथापि प्रोक्षणक्रियानिरूपितकर्मत्वाश्रयत्वमन्यस्त्युलूखलमुसलयोरित्येतावता प्रोक्षणजन्यसंस्काराश्रयत्वप्रतीतिरार्थिक्यस्तु। परन्तु तयोस्तृतीयाविभक्त्या करणत्वेनोपस्थितयोरुद्देश्यत्वेन विधानकाले उपस्थापकाभावान्न तदुद्देशेन प्रोक्षणविधिस्सम्भवतीति भावः। यस्मादुलूखलमुसलमात्रोद्देशेन प्रोक्षणविधाने हन्तिधातोः उच्चारणवैयर्थ्यापत्तेः अवघातसाधनतदुद्देशेन विधाने विशिष्टोद्देशे वाक्यभेदापत्तिरतः केवलं हन्त्यर्थोद्देशेनैव तद्विधिर्युक्त इत्याह—अतश्चेति। अवघातेविधीयमानं प्रोक्षणं साक्षात् तत्रानिविशमानं आनर्थक्यातदङ्गेषु (जै-सू-३-१-९) इति न्यायेन तदङ्गोलूखलमुसलसंस्कारकत्वेनैव फलतीति भावः। तदर्थत्वावगतेरिति। न चैतावता विशिष्टोद्देशः, निष्ठाप्रत्ययोक्तोलूखलमुसलोद्देशेनैव विधानात्, तत्स्वरूपे चानुपयोगे तत्कार्यस्यावघातस्य लोकतो वाक्येन वाऽवगतेः तत्रैवोपयोग इत्यवघातस्वरूपार्थत्वसिद्धिरिति भावः। एवञ्चेति। प्रधानचोदनाशेषभूतो हीत्थंभावश्चोदनासामान्याद्विकृतिष्वतिदिश्यते। अवघातमात्रञ्च तद्विशेषणं। प्रोक्षणन्त्ववघातस्वरूपविशेषणं न तद्द्वारेण प्रधानविशेषणम्। अवघातसत्त्वे हि प्रधानमङ्गानामपकर्षकमिति तत्पृष्ठभावेनोलूखलमुसलयोस्तत्संस्कारप्रोक्षणस्य वा प्राप्तिः। न हि नखनिर्भिन्ने चरावघातस्य प्राप्तिः नखनिर्भेदनेन प्रत्याम्नातत्वात्। अतो न नखेषु प्रोक्षणमूहितव्यमिति भावः। अपूर्वसाधनत्वलक्षणयेति। अवघाते उलूखलमुसलयोर्वाऽस्ति रूपद्वयम्। अवघातादिस्वरूपमात्रम्, तण्डुलनिर्वृत्तिप्रणाड्या अपूर्वजननव्यापारविशेषता च। तत्र प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽवघातादिः श्रौतस्य स्वरूपस्यान्यथापि सम्भवात् तेना[2]त्मना प्राधान्यासम्भवात् अपूर्वजननव्यापारात्मना प्राधान्यं प्रतिपद्यते। तद्रूपस्य प्रोक्षणं विना निष्पत्त्यनवगमात्। अतश्च तद्रूपोपस्थापको लक्षणया हन्त्यादिशब्द एव।

---

1. B. वाऽनर्थ

2. A. तेनात्मप्र

तदनुपपन्नं, आक्षेपप्रकारस्याधिकस्याभावेन पौनरुक्त्यापत्तेः। किञ्चात्र प्रोक्षणं न तावदवघातोद्देशेन विधीयते उलूखलमुसलविशेषणत्वेनैव प्रतीतेः। न ह्यस्य प्रधानक्रियान्वयो व्युत्पन्नः अपि तु निष्ठाक्षिप्तक्रियान्वय एव। नाप्यवघातसाधनीभूतोलूखलमुसलोद्देशेन, विशिष्टोद्देशापत्तेः। उलूखलमुसलयोर्विशिष्टयोश्शुद्धयोर्वा उद्देश्यत्वे एकप्रसरताभङ्गापत्तेश्च। अतो नैवं पूर्वपक्षस्सम्भवी।

अपि तु विध्यन्तरप्राप्तावघातानुवादेनार्थात् सम्भवत्प्राप्तिकयोरप्युलूखलमुसलयोः पूर्वप्रवृत्त्यङ्गीकारेण प्रोक्षणविशिष्टयोर्विधावार्थिकेन विशेषणविधिना उलूखलमुसलोद्देशेन प्रोक्षणविधिर्वाच्यः। ततश्चोलूखलमुसलत्वेनोद्देश्यता अपूर्वसाधनत्वेन वेति विचारः कार्यः। सोऽपि च तदा भवेत् यदि सकलपौरोडाशिकपात्रसाधारण्येन प्रोक्षणविधिर्न स्यात्। न त्वेतदस्ति 'उत्तानानि पात्राणि प्रोक्षति' इति विध्यन्तरेण तस्य प्राप्तत्वात्। न हि मीमांसकमते पौरोडाशिकपात्रप्रोक्षणाभावः, किन्तु मन्त्राभावः मन्त्राभावस्यैव परं तृतीये साधनात्।

---

तदेष वाक्यार्थः—येन व्यापारेण तण्डुलनिर्वृत्तिप्रणाड्या अपूर्वं क्रियते तद्व्यापारं प्रोक्षितेन साधनेन कुर्यादिति। नखनिर्भिन्ने च चरौ निर्लुञ्चनस्य अवघाततण्डुलनिर्वृत्तिप्रणाड्याऽपूर्वजननव्यापारत्वं, तत्साधनत्वञ्च नखानामस्त्येवेति सिध्यत्येव प्रोक्षणमिति सिद्ध ऊह इति भावः। तदेतत् प्राचीनानां पूर्वसिद्धान्तपक्षरचनामनूद्य पौनरुक्त्यापरिहारात् प्रदूष्य, किमवघातोद्देशेन, उत तत्साधनोलूखलमुसलोद्देशेन, अथवा शुद्धोलूखलमुसलमात्रोद्देशेन, प्रोक्षणविधिः पूर्वपक्षे वक्तव्यः। तत्र पक्षत्रयमपि न सम्भवतीति प्रदर्शयन् पूर्वपक्षस्यैवासम्भवं वक्तुं दूषणान्तरमाह—**किञ्चेति**। **न ह्यस्येति**। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन'ति स्मृत्या कृत्प्रत्ययस्य वृत्तित्वाच्च समासवत् परस्परान्विनार्थाभिधायकत्वेन कृदर्थकर्मत्वाक्षिप्तभावनायामेव कारकरूपस्य प्रोक्षणधात्वर्थस्यान्वयो युक्तः। निपातप्रातिपदिकोपसर्गातिरिक्तशब्दगम्यो यः सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तोऽर्थः तत्प्रकारकबोधत्वावच्छिन्नं प्रति भावनाविशेष्यतासम्बन्धेन लिङ्गानन्वयिपदजन्योपस्थितेः कारणत्वस्य कृदादिसाधारण्येन क्लृप्तत्वात्। अतो न हन्तिभावनायां प्रोक्षणस्यान्वयः सम्भवतीति भावः। **विशिष्टयोरिति**। सहितयोरित्यर्थः। **अर्थादिति**। अवघातस्वरूपसामर्थ्यादित्यर्थः। **वाच्य इति**। यथा 'लोहितोष्णीया ऋत्विजः प्रचरन्ती' त्यत्र बहुव्रीह्युपात्तान्यपदार्थोद्देशेन लोहितोष्णीषविधाने एकप्रसरताभङ्गापत्त्या प्रथमतो विशिष्टविध्यङ्गीकारेण विशेषणविधिकल्पनया ऋत्विगुद्देशेन लोहितोष्णीषत्वविधिस्तद्वदित्यर्थः। **तृतीये साधनादिति**। क्रमसमाख्ययोर्विरोधचिन्तायां पौरोडाशिकसमाख्याते काण्डे सान्नाय्यपात्रशुन्धनक्रमे समाम्नातस्य शुन्धध्वमिति मन्त्रस्य समाख्यानात् पौरोडाशिकपात्राङ्गत्वमाशङ्क्य

अतः प्रकारान्तरेण प्राप्तस्यार्थस्यायमनुवादोऽभ्युदयशिरस्कतया उलूखलमुसलविधानार्थः। समासोपात्तत्वाच्च नानेकविधेयता दोषाय।

अत एवं विचारो वाच्यः—पात्रप्रोक्षणविधिनैवोलूखलमुसलयोरपि प्रोक्षणं प्राप्तम्। तत्तु पूर्वाधिकरणन्यायेनैवोलूखलमुसलनिष्ठापूर्वसाधनत्वप्रयुक्तं तयोश्च तत्साधनता न साक्षात्, अपि तु यागाङ्गपुरोडाशाङ्गव्रीहितदवघातद्वारिकैव प्रयोजकत्वापरपर्याया। तत्र चातिप्रसङ्गपरिहारार्थं साधनतावच्छेदकस्यापि यागत्वपुरोडाशत्वव्रीहित्वतदवघातत्वादे[1]-रपि विवक्षा उत तत्तद्व्यापारकसाधनतामात्रस्यैवेति चिन्तायां—

व्यापारवद्विनिगमनाविरहेण साधनतावच्छेदकस्यापि विवक्षा, इतरथा[2] स्रुगादावति-

---

स्थानात् सान्नाय्यपात्राङ्गत्वं साधितं बलाबलाधिकरणे। तावता च पौरोडाशिकपात्रप्रोक्षणे मन्त्राभावः साधितः; नतु प्रोक्षणाभावः इति भावः। अयमनुवाद इति। प्रोक्षिताभ्यामित्ययं भाग इत्यर्थः। अर्थात्सम्भवत्प्रातिकयोरप्युलूखलमुसलयोः पुनर्विधानमभ्युदयशिरस्कत्वार्थम्। तत्र 'प्रोक्षिताभ्या'मिति यथास्थितानुवादेन स्वरूपोपलक्षणमात्रपरमित्यभिप्रेत्याह—अभ्युदयशिरस्कतयेति। उलूखलमुसलयोर्द्वयोर्विधाने वाक्यभेदापत्तिं परिहरति—समासोपात्तत्वादिति। अत एवोक्तरीत्या पूर्वसिद्धान्तपक्षयोः पौनरुक्त्यापरिहारात् तावुपेक्ष्यापूर्वार्थत्वमङ्गीकृत्यैवावघातादि-स्वरूपस्यैव द्वारत्वाश्रयणेन यत्पूर्वपक्षान्तरं शास्त्रदीपिकायां दर्शितं तमेव पूर्वपक्षमभिधाय विचारो युक्त इत्याह—अत एवमिति। तत्तद्व्यापारकसाधनतामात्रस्यैवेति। अपूर्व-निष्ठकार्यतानिरूपितकारणतासमानाधिकरणकार्यतानिरूपितकारणताश्रयप्रदेयप्रकृतित्वेन यत् पर-म्परया साधनताश्रयं तन्निष्ठ-वितुषीभावजनकावघातनिरूपितकारणताश्रयत्वमात्रमेव प्रोक्षणोद्देश्य-तावच्छेदकमिति तत्तद्व्यापारकसाधनतामात्रस्यैव प्रदेयप्रकृतित्वेन पिष्टव्यापारव्यावृत्तस्य विवक्षा। घनीभूतस्यैव पिष्टस्य पुरोडाशत्वेन पयोऽपेक्षया आमिक्षाया इवार्थान्तरत्वाभावेन पुरोडाशप्रकृति-त्वासम्भवात्। न तु तत्र तत्तापूर्वनिष्ठकार्यतानिरूपितयागत्वसमानाधिकरणकार्यतानिरूपित-पुरोडाशत्वसमानाधिकरणेत्यादिप्रवेशेन तत्तद्विवक्षेत्यर्थः।

व्यापारवदिति। पूर्वोक्तप्रकारेण तत्तत्कार्यतानिरूपितकारणताप्रवेशे तत्र स्वस्वव्यापार-द्वारा या कारणतेत्यादिरूपेण व्यापारप्रवेशेन तद्विवक्षावत् साधनतावच्छेदकस्यापि विवक्षा युक्तै-वेत्यर्थः। वस्तुतस्तु व्यापारप्रवेशापेक्षया साधनतावच्छेदकप्रवेश आवश्यक इति पक्षान्तरमाह

---

1. B. व्रीहित्वावघातत्व

2. B. यवादावति

प्रसङ्गापत्तेः। अथवा साधनताया अवच्छेदकं विना निरूपयितुमशक्यत्वात्तदेव विवक्षितं न तु व्यापारः, तं विनाऽपि साधनताया[1] स्तत्त्वेन निरूपयितुं शक्यत्वात्। अतश्च नखेषु अवघातत्वाद्यभावात् न प्रोक्षणम्। एवं च यद्यपि श्रुतस्योलूखलत्वादेरपूर्वसाधनत्वलक्षणौपयिकतयोपक्षीणत्वादविवक्षा स्यात्, तथाऽप्यान्तरालिकानां साधनतावच्छेदकानां यागत्वप्रभृतीनां विवक्षा दुर्निवारैवेति प्राप्ते—

अपूर्वनिष्ठकार्यतानिरूपितकारणताया अतिप्रसङ्गपरिहारार्थं **मध्यवर्तितया झडित्युपस्थितव्यापारस्यैव व्यापारत्वे विवक्षा न तु साधनतावच्छेदकस्य, तस्य कारणतायाः** पश्चादुपस्थितेः।

---

—**अथवेति**। अवघातत्वाद्यभावादिति। नखेषु उलूखलमुसलत्वयोरभावादिति वक्तव्ये अवघातत्वादेरित्यत्र अतद्गुणसंविज्ञानबहुव्रीहिणा आदिपदोपात्तत्वेनोलूखलमुसलत्वस्यैव सङ्ग्रहः। तस्मिन् सत्यप्यवघातपदोपादानं द्वारप्रविष्टमध्यतनधर्मावच्छिन्नकार्यकरणतयोरप्यभावसूचनार्थमिति भावः। अथवा नखेषु अवघातत्वाद्यभावान्न प्रोक्षणमिति ग्रन्थे, नखेषु न प्रोक्षणमित्यन्वयः। अवघातनिष्ठकार्यतानिरूपितकारणताश्रयत्वमात्रस्योलूखलमुसलत्वमनपेक्ष्य विवक्षणेऽपि द्वारघटकावघातत्वादेरभावादित्यर्थो द्रष्टव्यः। तदेव प्रकटयति—**एवञ्चेति**।

**अतिप्रसङ्गपरिहारार्थमिति**। अपूर्वनिष्ठकार्यतानिरूपित कारणतासमानाधिकरणकार्यतानिरूपितकारणतायाः स्रुवाज्यादिष्वपि सत्त्वात् तत्राप्यतिप्रसङ्गपरिहारार्थं येन व्यापारेण पुरोडाशादि करणं भवति तद्व्यापारकसाधनतामात्रस्यैव निवेशो युक्तः; तदधिकस्य पुरोडाशत्वादेरनपेक्षितस्य निवेशे गौरवं स्फुटमेवेति भावः। ननु स्रुवादिवारणस्य पुरोडाशादिव्यापारस्य पुरोडाशत्वस्य वा प्रवेशेन सम्भवेऽपि तत्र पुरोडाशत्वापेक्षया मध्यवर्तितया झटित्युपस्थितस्यैव व्यापारस्य प्रवेश इति युक्तमेव। परन्तु तावन्मात्रप्रवेशेऽपि नैवारचर्वादिष्वतिप्रसङ्गस्य तदवस्थत्वात् तत्परिहारार्थं पुरोडाशत्वादिप्रवेशोऽप्यावश्यक इत्याशङ्कानिरासायाह— **पश्चादुपस्थितेरिति**। अयमर्थः— व्यापारवदसाधारणकारणं हि करणं भवतीति कार [कर ?] णतास्वरूपं व्यापारघटितमेव। ततश्च यावता विना करणतास्वरूपं न निर्वहति तावन्मात्रप्रवेशेन यावानतिप्रसङ्गो निराकर्तुं शक्यते तावांस्त्वकामेनैव परिहर्तव्यो भवति। पश्चाच्च सा साधनता किंधर्मावच्छिन्नेत्यपेक्षया बुध्यमानः तत्तद्धर्मावच्छेदकोऽपि न प्रोक्षणादिविधावुद्देश्यताकोटिनिविष्टः कल्प्यते, गौरवापत्तेः। अतश्च प्राथमिकबोधे लाघवजिघृक्षया उत्तरकालमापतन्नपि चर्वादिष्वतिप्रसङ्गः फलमुखत्वान्नैव दुष्यति

---

1. स्तत्त्वेन

अत एव **यत्र मध्ये यागादौ न व्यापारः तत्र कारणताया एव शङ्ग्राहिकया विवक्षणं** न तु तदवच्छेदकस्य **गौरवात्। उपपादितं चैतत् कौस्तुभे तेषामर्थाधिकरणे विस्तरेण, अतोऽवघातत्वादेरविवक्षितत्वात् नखेषु प्रोक्षणसिद्धिरिति।**

एवं वा—**एवं तावदुद्देश्यस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणेत्युक्तं, तत्र किं प्रधानजन्यापूर्वमेव लक्ष्यते, उताङ्गजन्यमपीति चिन्तायां—यत्र तावदवघातपेषणादौ न व्रीह्यादिजन्यं मध्येऽपूर्वान्तरं, तत्र प्रधानजन्योत्पत्त्यपूर्वसाधनत्वलक्षणा अविवादेव। यत्र त्वदृष्टार्थसन्निपत्योपकारेषु प्रोक्षणदीक्षणीयादिषु स्वजन्यादृष्टमस्ति, तत्रापि तदङ्गानामुत्पवनादीनां 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्'** इत्यादीनां **च स्वराणां, दर्शपूर्णमासज्योतिष्टोमाद्युत्पत्त्यपूर्वसाधनत्वलक्षणया तदर्थत्वमेव। न तु प्रोक्षण-**

---

व्यापाराप्रवेशे तु कारणतास्वरूपस्यैवानिर्वाह इति वैषम्यमिति। व्यापारसत्वे विवक्षणमिति यदुक्तं तद्विवृणोति—**अत एवेति। न तु तदवच्छेदकस्येति।** अग्रे आग्नेयत्वादेरिति शेषः। यागोद्देश्यकप्रयाजादिविधौ यागपदेऽपूर्वसाधनत्वलक्षणायां व्यापारनिरपेक्षमेव यत् कारणतास्वरूपं तावन्मात्रमेव विवक्षितम्। न तु आग्नेयत्वादिधर्मावच्छिन्नयागनिष्ठकारणतास्वरूपं गौरवादिति भावः। अतः प्रदेयप्रकृतिकापूर्वसाधनताविशेषलक्षणायां तात्पर्यग्राहकमपि व्रीहिपदं तथाविधद्रव्यमात्रोपलक्षणं सत् अविवक्षितव्रीहित्वावच्छिन्नद्रव्यपरम्, तथेहापि अवहन्ति पदमित्यभिप्रेत्योपसंहरति—**अत इति**

एतन्निरूपणस्यापि तेषामर्थाधिकरणेन पौनरुक्त्यमस्त्येवेत्यभिप्रायेण कृतं भाष्यकारादिभिर्वर्णकान्तरमाह —**एवं वेति।** आरादुपकारकसन्निपत्योपकारकाङ्गजातविधौ सर्वत्राप्यपूर्वसाधनत्वलक्षणोद्देश्यवाचके पदे इति ज्ञापयितुं साधारण्येनोद्देश्यस्वरूपे इत्युक्तम्। **अपूर्वान्तरमिति।** यदि तज्जन्यमपूर्वं स्यात् तदा तदपूर्वसाधनत्वलक्षणया तदपूर्वप्रयुक्ततैवावघातप्रोक्षणादेः स्यात्। नत्वेतदस्ति। यत्तु व्रीहिविधिना बोधितं नियमादृष्टं न तत् व्रीहिजन्यम्, किन्तु नियमजन्यम्। यद्यपि वा व्रीहिजन्यं भवेत् तथाप्युनुद्देश्यकार्यार्थत्वापेक्षया उद्देश्यकार्यार्थत्वमेव युक्तमिति, तण्डुलनिष्पत्तिप्रणाड्या यत् प्रधानोत्पत्त्यपूर्वसाधनत्वमस्ति व्रीहीणां तदेव व्रीहिजन्यमपूर्वमिति तत्साधनत्वमेव लक्ष्यत इति भावः। यत्तु सम्मीलनादीनां रथन्तरबृहद्धर्माणां व्यवस्थार्थं तत्तत्सामनियमादृष्टसाधनत्वमेव लक्ष्यते। तथा च क्वचिन्नियमाद्यदृष्टसाधनत्वेऽपि लक्षणेति भाट्टालङ्कारे उक्तं तत् तदधिकरण एव निराकरिष्यते। **इत्यादीनाञ्चेति।** 'मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायां उपांशूपसत्सु' इति विहितस्वरान्तराणामादिपदेन सङ्ग्रहः। **उत्पत्त्यपूर्वसाध-**

**दीक्षणीयादिजन्योत्पत्त्यपूर्वार्थत्वं, तस्मिन्नपि फलवत्त्वाभावेनानर्थक्यात्** [1]**इति प्राप्ते—**

**साक्षात्फलवत्त्वाभावेऽपि परम्परया अग्निवत् फलवत्त्वोपपत्तेःअङ्गापूर्वाणामप्यनिर्ज्ञातोपायत्वेन स्वाङ्गाभावे निष्पत्तौ प्रमाणाभावात् अङ्गापूर्वस्वरूपेऽप्यानर्थक्याभावेन तत्साधनत्वलक्षणायामपि बाधकाभावात्, प्रधानापूर्वार्थत्ववादिनाऽपि चाङ्गापूर्वाणामतिप्रसङ्गपरिहारार्थं द्वारत्वस्यावश्यकत्वेन तदर्थतयैवोपपत्तौ प्रधानापूर्वपर्यन्तगमने प्रमाणाभावात्, लक्षितलक्षणाप्रसङ्गाच्च, झडित्युपस्थितदीक्षणीयाद्यपूर्वसाधनत्वमेव दीक्षणीयादिपदैर्लक्ष्यत इति ते धर्मास्तत्प्रयुक्ता एव। अत** [2]**एवारादुपकारकाङ्गानामभिक्रमणयूपादीनां**

---

**मत्वेति।** दीक्षणीयायाः सन्निपत्योपकारकत्वेनोत्पत्त्यपूर्वे उपयोगाद्दीक्षणीयापदे तत्साधनत्वलक्षणासम्भवेऽपि प्रायणीयादीनामारादुपकारकाणां परमापूर्वे उपयोगात् प्रायणीयादिपदानां स्वोपयोगिपरमापूर्वसाधनत्वमात्रपरत्वस्यैव युक्तत्वात् उत्पत्त्यपूर्वपदं तदीयपरमापूर्वस्याप्युपलक्षणम्। **अथवा** दीक्षणीयादिभिरङ्गैरङ्गिनो ज्योतिष्टोमस्यैवाभिधानात् तदव्यवहितमुत्पत्त्यपूर्वमेव द्रागुपस्थितमिति सर्वत्रैव तत्साधनत्वलक्षणेत्यभिप्रायेण वैतद्द्रष्टव्यम्। **आनर्थक्यादिति।** अवघातादिभिर्विनापि व्रीह्यादिस्वरूपनिष्पत्तेः तत्स्वरूपार्थत्वे आनर्थक्यस्य स्वरूपानिष्पत्तिनिबन्धनत्ववदिहाङ्गापूर्वस्यापूर्वत्वादेव तदङ्गजातेन विना उत्पत्तौ प्रमाणाभावान्न स्वरूपा[3]निष्पत्तिप्रयुक्तमानर्थक्यमिति द्योतयितुं फलवत्वाभावेनेत्युक्तम्। ततश्च प्रोक्षणादिजन्यापूर्वसिद्धयेऽनुष्ठितमप्यङ्गजातं निष्फलत्वेन प्रयोजनाभावेऽनर्थकमेवेति तद्गतफलवत्वज्ञापनार्थं प्रधानापूर्वोपस्थितेरावश्यकत्वे लाघवादुपस्थितत्वाच्च तदर्थत्वमेव युक्तमिति पूर्वपक्षाशयः।

**आनर्थक्याभावेनेति।** उभयविधानर्थक्याभावमुपपादयितुं **साक्षात्फलवत्त्वाभावे**-पीति ग्रन्थः। यदुक्तं फलवत्त्वज्ञानार्थं प्रधानापूर्वस्यैव झटित्युपस्थितेः तदर्थत्वमेव युक्तमिति, तन्निरासायाह—**प्रधानापूर्वार्थत्ववादिनापि चेति।** फलवत्त्वज्ञानार्थमपि प्रधानापूर्वोपस्थितिः प्राकरणिक्येव। ज्ञातायामपि तस्यां साक्षात् तदर्थत्वासम्भवे दीक्षणीयाद्यपूर्वोपस्थितिद्वारैव फलवतीति वाक्यादुपस्थितदीक्षणीयापदोपस्थापिततज्जन्यापूर्वार्थत्वमेव युक्तमिति भावः। **लक्षितलक्षणेति।** दीक्षणीयापदेन स्वापूर्वं लक्षयित्वा तदुपकार्यमपूर्वं लक्षणीयम्। **अथवा** दीक्षणीयापदेनाङ्गपरेण सम्बन्धादङ्गिनं ज्योतिष्टोमं लक्षयित्वा तदपूर्वं लक्षणीयमित्येवमुभयथा लक्षितलक्षणेत्यर्थः। यद्यपि दीक्षणीयापदेन स्वोपकारोपकार्यतासम्बन्धेन ज्योतिष्टोमापूर्वमेकमेव

---

1. A आनर्थक्यापत्तेः
2. B. अङ्गानामपि
3 A. रूपनिष्प

**प्रयाजदीक्षादिजन्यापूर्वार्थत्वमेव । न तु दर्शज्योतिष्टोमाद्यपूर्वार्थत्वं** अव्यवहितापूर्वेऽप्यानर्थक्याभावात् ।

---

लक्षयितुं शक्यमिति न लक्षितलक्षणा तथापि तल्लक्षणायां सम्बन्धविषया स्वापूर्वोपस्थितेरावश्यकत्वे तावन्मात्रलक्षणया सम्बन्धलाघवानुग्रहसम्भवात् न गुरुभूतसम्बन्धेनानाकाङ्क्षिताङ्ग्यपूर्वलक्षणा युक्तेति भावः । अत्र तन्त्ररत्नकृता दीक्षणीयाजन्यो दीक्षार्थो यजमानसंस्कारोऽवान्तरापूर्वमित्युच्यते । क्रत्वङ्गभूतयमनियमपरिपालनविषयो मानसः सङ्कल्पो दीक्षेत्युच्यते । तत्कर्तृभूतयजमानसंस्कारार्था दीक्षणीया नापूर्वार्था । नाप्युभयार्था । प्रमाणाभावात् । तद्द्वारेणापि दीक्षणीयाया ज्योतिष्टोमाङ्गत्वोपपत्तेः । अथवा दीक्षणीयोत्पत्त्यपूर्वमवान्तरापूर्वमित्युच्यते । तच्चावश्यमङ्गीकर्तव्यम् । तेन विना स्विष्टकृदाद्युत्तरतन्त्रानुष्ठानं प्रति सापेक्षस्य संस्कारस्य क्रियास्वरूपेण निष्पत्त्ययोगात्, सन्निपातित्वाच्च वाङ्नियमस्यावघातादिवदुत्पत्त्यपूर्वप्रयुक्तता युक्तेति पक्षद्वयमुक्तम् । तत्रोत्तरपक्षाभिप्रायेणाह — **अव्यवहितापूर्वेऽप्यानर्थक्याभावादिति** । सर्वदीक्षणीयाप्रयोगान्ते उत्पद्यमानो दीक्षारूपः संस्कार उत्पत्त्यपूर्वापेक्षया ज्योतिष्टोमापूर्वमिव व्यवहित एवेति तदपेक्षयाऽव्यवहितोत्पत्त्यपूर्वप्रयुक्तमित्यव्यवहितपदेन सूचितम् ।

एतेन फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फलवदेवेति तत्साधकत्वलक्षणा शास्त्रदीपिकायां भासमाना परास्ता । यथाच दीक्षणीयाजन्यो यः संस्कारः स एव दीक्षानामको न तु स दीक्षार्थः ; 'अदीक्षिष्टायं यजमान' इति आवेदनप्रैषानन्तरमेव दीक्षितवादान्ते यमनियमस्वीकारविधानेन यमनियमपरिग्रहानुकूलयोग्यतारूपस्यैव दीक्षात्वादित्यादियुक्त्या तन्त्ररत्नमतखण्डनं पूज्यपादैः कृतं तथा प्रकृतम एव द्रष्टव्यम् । ननु वाङ्नियमस्य दीक्षणीयोद्देशेन विधानात् कथमारादुपकारकत्वं विहाय सन्निपातित्वादवघातवदुत्पत्त्यपूर्वप्रयुक्तत्वं तन्त्ररत्नोक्तं सङ्गच्छत इतिचेत् ; उच्यते, दीक्षणीयायां हि विधीयमानः स्वरः साक्षात् तत्रानिविशमानः आनर्थक्यतदङ्गन्यायेन (पू. मी. ३-१-९) योग्यत्वात् तदङ्गमन्त्रेष्वेव निविशत इति तदङ्गमन्त्रसंस्कारकत्वं स्वरस्य साम्नो ऋगक्षरसंस्कारकत्वमिव न विरुद्ध्यते । एतदभिप्रायेणैवास्मिन् वर्णकान्तरे 'संस्कारे युज्यमानां तादर्थ्यात् तत्प्रयुक्तं स्यात्' इति पूर्वपक्षसूत्रम् । तदुत्तरत्वेन 'तेन त्वर्थेन यज्ञस्य सम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात्' (९-१-२३) इति सिद्धान्तसूत्रञ्च सङ्गच्छते इति न बाधकम् ।

ननु अभिक्रमणस्य प्रयाजापूर्वप्रयुक्तत्वेन विकृतौ प्रयाजानुष्ठाने तदनुष्ठानमिव सौर्ये विधीयमानस्य 'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति कृष्णलहोमस्यापि प्रयाजापूर्वप्रयुक्तत्वेन प्रकृतौ

प्रयोजनं—ज्योतिष्टोमविकारानङ्गभूतपशुषु मेष्यादिद्रव्यकेषु[1] उपाकरणादीनामूहाभावादकरणं पूर्वपक्षे, ज्योतिष्टोमापूर्वस्थानापन्नापूर्वाभावेन प्राकृतकार्याभावात्। सिद्धान्ते तूह इति द्रष्टव्यम्। एवं दैक्षधर्मानतिदेशोऽपि पूर्वपक्षप्रयोजनमनुसन्धेयम्।

यत्तु भाष्यकारेणाश्वमेधे 'त्रैधातवीया दीक्षणीया भवति' इति वचनेन दीक्षणीयाकार्ये यजमानसंस्कारे विहितायां त्रैधातवीयायां पूर्वपक्षे दीक्षणीयाधर्मप्राप्तिः।

---

प्रयाजानुष्ठानेऽनुष्ठानं स्यादिति चेत्। उच्यते। सत्यं प्रयाजाङ्गत्वं कृष्णलहोमस्य तथापि न तत् प्रयाजापूर्वकथंभावाकाङ्क्षालक्षणप्रकरणात्, अत्र प्रयाजानां विध्यभावेन [घात्]; प्रकृतौ च निर्ज्ञातोपायस्य प्रयाजापूर्वस्य तदाकाङ्क्षाया एवाभावात्। किन्तु प्रयाजे प्रयाजे इति श्रुत्यैव तत्। तत्र प्रयाजस्वरूपेणेव तदपूर्वेणापि प्रकृतौ निर्ज्ञातप्रकारेण कृष्णलहोमशेषित्वे आनर्थक्यस्य तदवस्थत्वात् सौर्यापूर्वसाधनत्वोपहितत्वरूपेणैव प्रयाजापूर्वसाधनत्वलक्षणयैव तच्छेषित्वमिति प्रयाजापूर्वद्वारा सौर्यापूर्वप्रयुक्तत्वमिष्टमेवेति न दार्शिकप्रयाजेषु तदापत्तिः। एवञ्च " अत एवारादुपकारकाणामभिक्रमणयूपादीना"मिति मूले यूपादीनामित्यादिपदेन येषामव्यवहितापूर्वार्थत्वेन विधाने एव आनर्थक्यं परिहृतं भवति तान्येवाङ्गानि गृह्यन्ते तेषामेव तदव्यवहितापूर्वप्रयुक्तत्वम्, न तु कृष्णलहोमादिरूपाणामिति ध्येयम्।

अवान्तरापूर्वार्थत्वपरमापूर्वार्थत्वविचारस्य प्रयोजनकथनव्याजेनाध्यायार्थोहोपयोगितां दर्शयति—प्रयोजनमिति। पशुषु—पशुयागेषु। ज्योतिष्टोमापूर्वस्थानापन्नेति। यदि ज्योतिष्टोमविकृतिसोमयागाङ्गं ते पशुयागाः स्युः तदा तेषां ततो धर्माकाङ्क्ष्यपूर्वेतिकर्तव्यताकाङ्क्षयाऽपेक्षिता धर्मा यावन्तो ज्योतिष्टोमापूर्वप्रयुक्ताः ते सर्वेऽपि अतिदेशेन प्राप्ता उपाकरणादय ऊहिता भवन्ति। न तु स्वतन्त्रपशुयागेषु दैक्षविकृतिभूतेष्वपि सोमयागापूर्वप्रयुक्तानां धर्माणामतिदेशस्यैवाभावे कुत ऊहः सिध्यतीति भावः। तमेवातिदेशाभावं प्रयोजनान्तरकथनव्याजेनाह—एवं दैक्षधर्मेति। अनेन च पक्षद्वयेऽपि धर्मप्राप्त्यभावात् प्रयोजनान्तरं मृग्यमित्यधिकरणान्ते तन्त्ररत्ने उक्तम्, तत्सुगमरूपतया दर्शितं भवतीति भावः।

दीक्षणीयाकार्ये इति। त्रैधातव्यादीक्षणीयापदार्थयोः अभेदेनान्वयस्यैकत्र लक्षणां विनाऽनुपपत्तेः प्राथम्यादविरोधाच्च त्रैधातव्यापदे तदनङ्गीकारेण सञ्जातविरोधज्ञाने जघन्ये दीक्षणीयापद एव तत्कार्यलक्षणा। तस्मिन् त्रैधातव्याविधानं युक्तमिति भावः। पूर्वपक्षे इति।

---

1. इदं तद्धर्मावच्छिन्नभिन्नवृत्तित्वलाभाय

**सिद्धान्ते तु प्रसिद्धत्रैधातवीयाया धर्मा एवेति प्रयोजनमुक्तं, तन्न**—पूर्वपक्षवत् सिद्धान्तेऽपि **स्थानापत्तौ बाधकाभावात्।** यदि तु **स्थानापत्त्यतिदेशापेक्षया त्रिविधातिदेशस्यापि बलवत्त्वस्याष्टमे साधितत्वात् नामातिदेशेन प्रसिद्धत्रैधातवीयाधर्मा एवेत्याशङ्क्येत** तत्पूर्वपक्षेऽपि तुल्यम्।

---

पूर्वपक्षे हि ज्योतिष्टोमापूर्वप्रयुक्तत्वेन तद्विकृत्यपूर्वस्य तत्स्थानीयस्य प्रयोजकस्य सत्त्वात् सर्वेऽपि दीक्षणीयाधर्माः त्रैधातव्यायां भवन्ति। सिद्धान्ते तु दीक्षणीयापूर्वप्रयुक्तत्वात् तदपूर्वाभावेन तद्विकृतित्वाभावाच्च न तद्धर्माः। अपि तु प्रसिद्ध त्रैधातव्याधर्मा एव नामातिदेशादित्यर्थः। **पूर्वपक्षवत् सिद्धान्तेऽपीति।** पूर्वपक्षवत् सिद्धान्तेऽपि स्थानापत्त्या धर्मलाभोपपत्तेरित्युक्त्या धर्मलाभ एव पूर्वपक्षवदिति दृष्टान्ताप्रदर्शनं कर्तुं युक्तं, तद्विहाय स्थानापत्तिलाभ एव तद्दृष्टान्तप्रदर्शनं पूज्यपादैः कृतम्, तस्यायमभिप्रायः—नहि पूर्वपक्षे परं ज्योतिष्टोमापूर्वप्रयुक्ततायामपि त्रैधातव्यायां दीक्षणीयाधर्मप्राप्तिः सम्भवति। आग्नावैष्णवापूर्वस्य द्वारभूतस्य तस्यामभावात्। नहि वितुषीभावरूपद्वाराभावे कृष्णलचराववघातः प्राप्नोति। त्रैधातव्यापूर्वस्य दीक्षणीयापूर्वस्य च भिन्नत्वात्। अतश्च [यथा] दर्शपूर्णमासापूर्वसाधनेष्वपि स्रुवादिषु द्वारा[1]भावान्न प्रोक्षणम् तथाऽत्रापि न तद्द्वारं तस्या इति न धर्मप्राप्तिः। यदि तु पूर्वपक्षेऽपि त्रैधातव्याया दीक्षणीयाकार्ये विधानस्य तुल्यत्वेन दीक्षणीयाकार्यं यजमानसंस्कारो दीक्षा। अथवा तदुत्पादकमुत्पत्त्यपूर्वं तदेव त्रैधातव्यायाः कार्यमिति न द्वारभेद इत्युच्यते, तदा तत्स्थानापत्तित्वस्वीकारे तत्रावश्यके तत एव ममापि सिद्धान्ते धर्मलाभः सूपपाद एव। दीक्षणीयाऽवान्तरापूर्वस्य प्रयोजकस्य तत्रापि सत्त्वादिति।

ननु सिद्धान्तेप्यपूर्वेयं त्रैधातवीष्टिर्धर्माकाङ्क्षिणी स्थानापत्त्या दीक्षणीयाधर्मास्तदा गृह्णीयात् यदा त्रैधातव्यापदं गौणं नामधेयं प्रसिद्धत्रैधातव्याधर्मलाभकं न स्यात्। अत्र तु त्रैधातव्यापदस्य नामातिदेशकस्य सत्वात् तस्य च प्राबल्यात् प्रसिद्धत्रैधातव्याधर्मा एव तस्यां भविष्यन्ति न दीक्षणीयाधर्मा इति कर्मान्तराभिप्रायेणाशङ्कां प्रतिबन्द्या परिहरति—यदि त्विति। **तत्पूर्वपक्षेऽपि तुल्यमिति।** प्रसिद्धत्रैधातव्याधर्मकमेव हि कर्मान्तरमेतत् दीक्षणीयाकार्ये विधीयमानं द्वारतापादकमपि धर्मानाकाङ्क्षत्वात् न दीक्षणीयाधर्मान् गृह्णातीति भावः। स्यादेतत्। त्रैधातव्या तावन्न दीक्षणीयाविकृतित्वेन तद्धर्मान् गृह्णातीत्युभयपक्षयोरपि समानम्। दर्शपूर्णमासविकृतित्वेन तत एवोभयत्रापि धर्मलाभे परस्परमतिदेशकल्पने प्रमाणाभावात्। किन्तु दीक्षणीया-

---

1. A. रमेदाज

**वस्तुतस्तु नेयं त्रैधातवीया प्रसिद्धत्रैधातवीयातः कर्मान्तरं सत्यप्यनुपादेयगुणयोगे आख्यातसामानाधिकरण्याभावात्। अतः प्रसिद्धायास्तद्धर्मकाया एव त्रैधातवीयाया यजमानसंस्कारार्थत्वेन विधानात् धर्माकांक्षाविरहेण क्व स्थानापत्त्यतिदेशप्रसक्तिः ॥ २ ॥**

---

प्रकरणपठितानां वैशेषिकधर्माणामेवावान्तरपरमापूर्वार्थत्वविचारफलभूता तद्धर्माणां त्रैधातव्यायां प्राप्त्यप्राप्तिचिन्तेयम्। तत्र परमापूर्वार्थत्वपूर्वपक्षे यथैव प्रकृतिप्राप्ताङ्गसहितदीक्षणीयया स्वापूर्वजननेऽपि ज्योतिष्टोमापूर्वोत्पत्तौ प्रमाणाभावात् तदपूर्वार्थत्वेनाविधीयमाना वाङ्नियमादयो धर्माः दीक्षणीयापूर्वद्वारा ज्योतिष्टोमाङ्गमिति दीक्षणीयासत्त्वे लभ्यते, तथैव विकृतिपरमापूर्वस्य तत्स्थानीयस्य प्रयोजकस्य सत्वात् तस्य च प्रसिद्धत्रैधातव्यानो लब्धधर्मिकया दीक्षणीयापूर्वजनकत्वेन विहितयापि स्वरं विना उत्पत्तौ प्रमाणाभावात्, द्वारलाभाच्च सम्भवन्त्येव विकृतिपरमापूर्वाकाङ्क्षया तद्धर्मास्त्रैधातव्यायां पूर्वपक्षे; सिद्धान्ते तु दीक्षणीयापूर्वप्रयुक्तत्वे प्रयोजकस्य विकृतावभावेन यावत् तत्स्थानापन्नत्वेन तदीयधर्मग्रहणं तावत् पूर्वमेव नामातिदेशेन त्रैधातव्याधर्मलाभा[1]त्तु तद्धर्मग्रहणं तस्या इत्यस्त्येव वैषम्यमिति कथं पूर्वपक्षेऽपि तत्तुल्यमिति वार्तिकतन्त्ररत्नपूज्यपादानामुक्तिः सङ्गच्छते इत्यभिप्रेत्यैव परमसिद्धान्तं कर्मान्तरत्वाभावकथनव्याजेनाह—वस्तुतस्त्विति। अयमर्थः। अनुपादेयसहितं यद्याख्यातश्रवणं भवेत् तदा विधिशक्तेरनुपादेये सङ्क्रान्त्यभावात् वाक्यान्तरविहितस्य यागादिधात्वर्थस्य पुनर्विधानासम्भवे भिन्नं कर्मान्तरमेव विधातुं शक्यम्। तच्च विधीयमानं दीक्षणीयोत्पत्त्यपूर्वजनकत्वेनैव कल्प्येतेति द्वारलाभात् विकृतिपरमापूर्वस्य प्रयोजकस्य सत्त्वात् पूर्वपक्षे, अवान्तरापूर्वसत्त्वात् सिद्धान्ते वा तद्धर्मप्राप्तिर्भवेत्। नह्यत्र तच्छ्रवणमस्ति। ततश्च सर्वेभ्यो ज्योतिष्टोम इत्यत्रेव त्रैधातव्यानाम्नोपस्थापितप्रसिद्धत्रैधातव्याया एव दीक्षणीयाकार्ये विधीयमानाया भावनाभेदमात्रमनेन वचनेन क्रियते।

"विधने भावनामात्रं धात्वर्थो नाग्रजिश्रुतेः" (तन्त्रवा. २-३-११)

इति न्यायात्। अज्ञातधर्मकं हि तदाकाङ्क्षं कार्यापत्त्या धर्मान् लभते। अत एव कलभानां पशुसोमानां निष्कृत्यर्थमसम्भवे

'इष्टिं वैश्वानरीं चैव निर्वपेदिष्टपूर्तये'[2] इति सोमादिकार्यापन्नापि वैश्वानरीष्टिः न सोमधर्मान् लभते तेनैव न्यायेनेयमपि त्रैधातव्या स्वधर्मस्वापूर्वविशिष्टत्वेन यादृशी उत्पन्ना

---

1 A. omits न

2. A. पेदब्दपर्यये (मनु—११—२६)

## (३)—फलदेवतयोश्च ॥ ४ ॥ न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥

पूर्वोक्ताया अपूर्वसम्बन्धित्वेनोद्देश्यताया: क्वचिदाक्षिप्यसमाधानार्थमिदमधिकरणम्। दर्शपूर्णमासयोः 'अगन्म सुवस्सुवरगन्म' इति स्वर्गप्रतिपादको मन्त्रः 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिश्चाग्न्यादिप्रकाशको मन्त्रश्श्रुतः। तयोश्च स्वर्गत्वाग्नित्वादिनैव स्वर्गाग्न्यादिलिङ्गकल्प्यश्रुतावुद्देश्यता उपस्थितत्वात्, न तु अपूर्वसम्बन्धित्वेन, मुख्य पदार्थे विनियोगस्यौत्सर्गिकताया:

---

तादृश्येव दीक्षणीयाकार्यं यजमानसंस्काररूपं साधयिष्यति इति तस्या धर्माकाङ्क्षाभावात् अवान्तरापूर्वस्य दीक्षणीयोत्पत्त्यपूर्वस्य द्वारस्य प्रयोजकस्य वा अभावात् न दीक्षणीयोत्पत्त्यपूर्वजनकत्वेन विहितधर्माणां तस्यां प्राप्तिरुभयपक्षेऽपि। यजमानसंस्काररूपदीक्षया प्रयोजकत्वम्। किन्तु अपूर्वप्रयोजकत्वेन विधानाभावं सूचयितुं यजमानसंस्कारार्थत्वेनेत्युक्तमित्यलं विस्तरेण।

---

### फलदेवतयोश्च

अत्र प्रथमाधिकरणेन सर्वधर्माणां सप्तमाद्यसिद्धमपूर्वार्थत्वं स्मारितम्। तत एव संस्कारस्याप्यपूर्वार्थत्वं प्रतिज्ञामात्रेणोक्तम्, उत्तरैस्त्रिभिरधिकरणै श्रुत्या विरोधान्न सम्भवतीत्याशङ्क्य उपपाद्यते। तत्र वाक्यसंयुक्तानां तदर्थत्वमुपपादितं पूर्वाधिकरणे। इह लिङ्ग—संयुक्तानां तदर्थत्वं लिङ्गविरोधान्न सम्भवतीत्याशङ्क्य स्थिरीक्रियत इत्येवमधिकरणरचनां कुर्वाणैः वार्तिककारादिभिः यथा दीक्षणीयापूर्वप्रयुक्तः स्वरो न परमापूर्वप्रयुक्तः तथेहापीति पूर्वतनसिद्धान्तेनैव फलदेवताप्रतिपादकमन्त्राणामपि दर्शपूर्णमास सम्बन्धीयः स्वर्गोऽग्निश्च तत्प्रयुक्तत्वं नतु दर्शपूर्णमासापूर्वप्रयुक्तत्वमिति पूर्वपक्षोत्थानादापवादिकी अनन्तरसङ्गतिरुक्ता। तत्र पौनरुक्त्यदोषस्तावत् अधिकविचाराभावात् स्फुट एवेत्यभिप्रेत्य प्रथमाधिकरणे सन्निपातिनां अग्न्यादिस्वरूपप्रयुक्तत्वमानर्थक्यापत्तिभिया निराकृत्यापूर्वार्थत्वमुक्तम्। ततश्चोद्देश्यवाचकपदेऽपूर्वसाधनत्वलक्षणादपूर्वसाधनत्वरूपेणोद्देश्यतेति साधितम्। तद्यत्रानर्थक्यप्रसक्तिः तत्र तद्रूपेणास्तामुद्देश्यता। यत्र तु स्वरूपप्रयुक्तत्वेप्यानर्थक्यं सुपरिहरं तत्र किमित्यपूर्वार्थत्वं किमिति वा तदनुरोधेन तत्साधनत्वरूपेणोद्देश्यतास्वीकरणमित्याक्षेपमुखेनैवास्याधिकरणस्य प्रवृत्तिं विशेषतो दर्शयति—**पूर्वोक्ताया इति। औत्सर्गिकतयेति।** यत्र हि मन्त्राणां लिङ्गकल्प्यश्रुत्या विनियोगस्तत्र स्वार्थबोधजनकशक्तिमत्त्वरूपलिङ्गस्य शक्यार्थ एव सम्भवात्तत्रैव विनियोगः। अन्यथा मन्त्रस्य तत्तत्पदे लक्षणापत्तेः लिङ्गबाधस्यैवापत्तेः। यत्र तु प्रत्यक्षश्रुत्यैव सः यथा मनोतैन्द्री-

साधितत्वेनतेन रूपेण स्वर्गादिपदैरनभिधानात्। न च स्वर्गादिस्वरूपे आनर्थक्यं साक्षात्फलरूपस्य तस्यानिर्ज्ञातोपायत्वाविशेषेण तदर्थत्वे वैयर्थ्याभावात्। मन्त्रजन्यप्रकाशनव्यतिरेकेणेतराङ्गयुक्तप्रधानमात्रादेवोत्पत्तिसिद्धेरानर्थक्यमपूर्वेऽपि तुल्यम्। प्रयोगविधिना सर्वाङ्गसाहित्यावगतेर्मन्त्रजन्यप्रकाशनव्यतिरेकेणापूर्वानुत्पत्तिरिति तु स्वर्गेऽपि तुल्यम्। एवं देवतायामपि मन्त्रार्थवादेतिहासादिवशात् सत्यप्यपूर्वे तज्जनितदेवताप्रसादादेव फलोत्पत्त्यवगतेः प्रसादस्य च मन्त्रजन्यप्रकाशनव्यतिरेकेणोत्पत्तौ प्रमाणाभावात् तदर्थत्वम्। अत एव लिङ्गकल्प्य [1]विनियोगविधौ उपस्थितत्वात् प्रसादाश्रयीभूताग्नेरेव तत्त्वेनोद्देश्यता, न त्वपूर्वीयदेवतात्वेनेति न सौर्यादौ ब्रह्मवर्चससूर्यादिपदोह इति प्राप्ते—

न तावत्सर्वेषामेवावघातादीनामपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शङ्कितुं शक्यं, व्रीह्यादिपदेन प्रत्यासन्नतया तेषामर्थाधिकरणन्यायेनाग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्षणात्। एवमपूर्वाङ्गीकारेण देवताप्रसादार्थत्वमवघातादीनां निराकर्तव्यम्। देवताप्रसादस्यापूर्वजन्यत्वेनाप्रत्यासन्नत्वात्।

उदाहृतमन्त्रस्थलेऽपि च न स्वर्गमन्त्रस्य स्वर्गार्थत्वसम्भवः; तद्धि किं दर्शपूर्णमासजन्यस्वर्गव्यक्तिं प्रत्येव मन्त्रजन्यप्रकाशनस्योपयोगः उत स्वर्गव्यक्त्यन्तरं प्रति। नान्त्यः—तथात्वे दर्शपूर्णमासाङ्गत्वाभावात् सामान्यसम्बन्धबोधकप्रमाणाभावेन लिङ्गकल्प्यश्रुतेरेवाकल्पनेन स्वर्गार्थत्व एव प्रमाणाभावात्। न च स्वर्गाधिकार एव सामान्यसम्बन्धबोधकं प्रमाणं; स्वर्गस्य यागाख्यकरणेनैव निराकांक्षतया तदधिकारस्याकल्पकत्वात्। न च मन्त्रस्य प्रयोजनाकांक्षयैव लिङ्गेन श्रुतिकल्पनं; वाचस्तोमे विनियोगेनैव तस्य निराकांक्षत्वात्। अत एव लिङ्गमात्रेणापि न श्रुतिकल्पनम्। पाके समर्थस्यापि देवदत्तस्याकांक्षाभावे विनियोगादर्शनात्। नाद्यः, तथात्वे हि दर्शपूर्णमासजन्यस्वर्गव्यक्तीनां न स्वर्गत्वादिनोद्देश्यता अतिप्रसङ्गात्। नापि दर्शपूर्णमास[2] जन्यस्वर्गत्वेन [3] तस्यापूर्वद्वारकत्वेन गुरुभूतत्वात्। किन्तु विजातीयापूर्वसम्बन्धित्वेनैव। अत एव सन्निपत्योपकारकत्वेऽपि स्वर्गप्रत्यासन्नत्वादपूर्वमपि परमापूर्वमेव न त्ववान्तरापूर्वमुद्देश्यतावच्छेदक-

---

मन्त्रयोः, तत्र प्रत्यक्षश्रुत्या लिङ्गबाधेप्यक्षतेः, मन्त्रस्थपदेषु लक्षणयैवेन्द्रादिषु लाक्षणिकार्थेष्वपि विनियोग इष्ट एवेत्यभिप्रायेणौत्सर्गिकतयेत्युक्तम्। साधितत्वेनेति। तृतीये द्वितीयपादाद्याधिकरणे लिङ्गविनियोगविचारे इति शेषः।

अत्र सिद्धान्ते आनर्थक्यभिया मन्त्राणां स्वरूपार्थत्वं निराकृत्य लक्षणयाऽपूर्वीयफलदेवताप्रकाशकत्वं साधितम्। तत्र शक्त्याऽपूर्वीयत्वेनानुपस्थितेः लक्षणायां 'मुख्य एवार्थे मन्त्राणां

1. B. कल्प्यश्रुतिविनि
2. B. मासफलोपहितस्वर्ग
3. तत्फलोपहितस्य

कोटिप्रविष्टम्। स्वर्गत्वस्य तु व्रीहित्वादिवदेवाप्रवेशः गौरवात्। अतश्चैवं मन्त्रलिङ्गकल्प्याश्रुतिः अनेन मन्त्रेण शक्तिजन्यबोधद्वारा परमापूर्वसाध्यं संस्कुर्यादिति। शक्तिजन्यबोधश्च वस्तुतः स्वर्गत्वप्रकारकस्स्वर्गविशेष्यक एव द्वारतायां शक्तिजन्यबोधत्वेन प्रविष्टः; न त्वपूर्वसम्बन्धित्वप्रकारकः तथात्वे शक्तिजन्यत्वानुपपत्तेः। अत एव ब्रह्मवर्चसादौ द्वाराभावात् स्वर्गपदलोपे ब्रह्मवर्चसविषयकशक्तिजन्यबोधसिद्ध्यर्थं ब्रह्मवर्चसपदोहः। इतरथा प्रकृतावेव लक्षणया स्वर्गपदेनापूर्वसम्बन्धित्वप्रकारकबोधजनने ब्रह्मवर्चसस्यापि तेनैव रूपेण बोधोपपत्तेरूहानुपपत्तिः।

अत एव पुत्राद्यर्थदर्शपूर्णमासप्रयोगेऽपि मन्त्रलोपः। तत्रापूर्वसाध्यफलस्य स्वर्गत्वेन बोधानुपपत्तेः। अत एव च मुख्य एवार्थे मन्त्राणां विनियोग इत्यप्युपपन्नम्। शक्तिजन्यबोधेन चापूर्वसाध्ये ज्ञातताया आधानात्तस्य संस्कार्यत्वमुद्देश्यत्वापरपर्यायं नानुपपन्नम्। तादृशबोधस्य च स्वजन्यश्रद्धाजन्यादृष्टद्वारा परमापूर्व एव फलोत्पत्त्यनुकूलयोग्यताजननात् फले उपयोगः, न तु फलोत्पादकत्वं, तथात्वे समप्राधान्यापत्त्या प्रकरणबाधापत्तेरित्याद्यन्यत्र विस्तरः।

एवमग्न्यादिप्रकाशकमन्त्रेष्वपि स्वतन्त्राग्निप्रकाशनार्थत्वस्यानुपयुक्तत्वात्सामान्यसम्बन्धबोधकप्रमाणाभावाच्च पूर्ववत् तत्कल्पनानुपपत्तेरवश्यमाग्नेयसम्बन्ध्यग्निप्रकाशनार्थत्वस्यैव कल्पनीयत्वादाग्नेयस्वरूपे चानर्थक्येन प्रत्यासन्नतया तदुत्पत्त्यपूर्वीयदेवतात्वेनैवाग्न्यादेरुद्देश्यत्वकल्पना। न तु प्रसादाश्रयत्वेन, प्रसादस्य परमापूर्वजन्यत्वेन

---

विनियोग' इत्येतदनुपपन्नं स्यादित्याशङ्क्य वार्तिककारादिभिः समाहितम्—नहि मुख्यार्थो नाम मुख्यशक्तिमात्रप्रतिपाद्य इत्यर्थः। किन्तु मुख्यशक्तिप्रतिपाद्य एवाग्न्यादिरूपार्थः सर्वैरपि मन्त्रपदैरपूर्वसम्बन्धित्वरूपेण लक्ष्यते। नतु तदतिरिक्तमर्थान्तरम्, नवा तत्सदृशमर्थान्तरं मन्त्राभिधेयानामेव स्वर्गाग्न्यादीनां प्रकृतापूर्वसम्बन्धित्वात्। ततश्च प्रकरणसहकृतलिङ्गकल्प्यया अनेन मन्त्रेणापूर्वीयफलदेवताप्रकाशनद्वारा अपूर्वं कुर्यादिति श्रुत्या विनियुक्तो मन्त्रो मुख्ययैव वृत्त्याऽभिहिताग्निप्रकाशको भवति। अपूर्वीयत्वरूपेण प्रकाशनन्तु लक्षणयेति न दोष इति। अस्माच्चापूर्वसम्बन्धित्वप्रकारकापूर्वसम्बन्धिविशेष्यकप्रकाशः मन्त्रेभ्यो जायत इत्यर्थप्रतीतेः अपूर्वसम्बन्धित्वप्रकारकापूर्वसम्बन्धिविशेष्यकबोधस्यैव द्वारतेति भाति तन्निरासायाह—**शक्तिजन्यबोधद्वारेति**। तदेवोपपादयति—**शक्तिजन्यबोधश्चेति**। तथा च लक्ष्यार्थबोधस्य द्वारत्वे सूर्यरूपलक्ष्यार्थबोधमादायैव विकृतावपि मन्त्रप्राप्तेरूहासिद्धेर्न तस्य द्वारत्वमित्यर्थः। अधिकरणसमाप्तिपर्यन्तं स्पष्टार्थम्। **तत्र ज्ञाततायाः आधानादिति**। यद्यपि कार्यस्य समवायिकारणजन्यत्वान्न भविष्यति फले ज्ञाततोत्पत्तिः शक्यते वक्तुम्; तथापि ध्वंसव्यावर्तकभावत्वस्य कार्यतावच्छेदककोटिनिवेशापेक्षया लाघवात् समवेतकार्यत्वस्यैव लघुभूतस्य ज्ञातताव्यावृत्तिसाधारणस्य समवायि-

विप्रकृष्टत्वात् तद्वदेव प्रयोजकत्वानुपपत्तेः। अत एव नाग्नित्वादेरपि उद्देश्यतावच्छेदककोटिप्रवेशः गौरवात्। एवं च प्रसादाश्रयत्वस्याप्युद्देश्यतावच्छेदकत्वकल्पने ऊहसिद्धिरप्रत्यूहैव। परं तु प्रसादसामान्याश्रयत्वस्याग्निहोत्रादावतिप्रसङ्गान्नोद्देश्यतावच्छेदकत्वं आग्नेयापूर्वजन्यप्रसादाश्रयत्वापेक्षया तदीयदेवतात्वस्य लघुत्वाच्च। अतश्चा-

---

कारणजन्यतावच्छेदकत्वस्वीकारान्न कोऽपि दोषः। तद्वदेवेति। परमापूर्ववदेव विप्रकृष्टत्वादित्यर्थः। एवञ्चेति। यथैवापूर्वसम्बन्धित्वलक्षणायामपि न गौरवभियाऽग्नित्वादिप्रवेशः तथैव प्रसादाश्रयलक्षणायां तस्य प्रवेशोऽसतीत्यर्थः।

अत्रेदमवधेयम्। प्राचां ग्रन्थेषु अनेन मन्त्रेण देवताफलप्रकाशनद्वारमपूर्वं कुर्यादिति विनियुक्तो मन्त्रो मुख्ययैव वृत्त्या प्रकाशयतीति लिखनात् लिङ्गेन प्रकरणसनाथेन कल्पितं श्रुतिस्वरूपमनेन मन्त्रेण फलदेवताप्रकाशनद्वारमपूर्वं कुर्यादित्येव प्रतीयते। तत्र प्रकाशनस्य द्वारत्वान्यथानुपपत्त्यैव कर्तव्यतासिद्धौ न तत्कर्तव्यताज्ञापकश्रुत्यन्तरस्यापि कल्पनं, गौरवापत्तेः। अत एव 'अनेन मन्त्रेणापूर्वीयदेवतां संस्कुर्यादि'ति लिङ्गकल्पितश्रुतिस्वरूपप्रदर्शनमप्यर्थत ऐक्याभिप्रायेणैव द्रष्टव्यम्। तत्र पदसमूहात्मकमन्त्रस्य करणत्वान्यथानुपपत्त्या शक्तिलक्षणान्यतरवृत्त्या या स्मरणरूपा पदार्थोपस्थितिः सैव प्रकाशनपदेन द्वारतया गृह्यते, लाघवात्। अत एव मन्त्राणां स्मारकत्वप्रसिद्धिरेतदभिप्रायिकैव। अस्तु वा तादृशस्मरणजन्यज्ञाततापरपर्यायमेव प्रकाशनं द्वारम्। उभयथाप्याहार्यसम्बन्धेन देवस्यत्वादिपदार्थविशिष्टनिर्वापसम्बन्ध्यग्निप्रकारकाग्निविशेष्यकं यत् स्मरणं शक्तिजन्यं तदेव मुख्यं प्रकृतौ मन्त्राणां कार्यम्। तथा च भवन्मते व्रीहित्वावच्छिन्नव्रीहिसंस्कारकत्वेन अवघातादीनां सत्यपि प्रकृतिवदित्यतिदेशे नीवारद्रव्यकयागभावनायाः व्रीहित्वावच्छिन्नव्रीहिसंस्काररूपकार्यविषयाकाङ्क्षाया एवाभावेन तद्व्यतिरिक्तविषयत्वस्यैवातिदेशवाक्ये कल्पनादतिदेशवाक्येन प्राकृतसंस्काररूपोपकारस्यैवाप्राप्तेः न तत्पृष्ठभावेन नीवारद्रव्कविकृतौ प्राप्तिः सम्भाव्यते। एवमिहापि सौर्यभावनायाः प्राकृततादृशप्रकाशनस्यानाकाङ्क्षितत्वेनातिदेशशास्त्राविषयत्वेन मन्त्राणां नैव प्राप्तिः स्यात्। मन्त्रप्राप्तौ हि कथं नामायं मन्त्रः सूर्यप्रकाशकः स्यादित्यपेक्षया सूर्यपदप्रक्षेपो भवेत्। यत्र हि प्रकरणे मन्त्रः पठितः तत्र स्वशक्त्या स्वार्थप्रकाशकः सन् अङ्गतां प्रतिपद्यते। न च विकृतौ मन्त्रः पठितोऽस्ति येन तस्याङ्गतानिर्वाहाय कथञ्चित् सूर्यपदप्रक्षेपेण शक्तिजन्यबोधोऽपि कल्प्येत।

वस्तुतस्तु तदानीमपि न सूर्यपदप्रक्षेपः सिद्ध्यति। विकृतावग्न्यादिघटितमन्त्रपाठे हि मनोतास्थाग्निपदेनेव लक्षणयैव सूर्यप्रकाशनापत्तेः। नचातिदेशप्राप्तमन्त्राङ्गतानिर्वाहाय तस्वी-

**त्वाप्यनेन मन्त्रेण शक्तिजन्यबोधद्वारा आग्नेयोत्पत्त्यपूर्वीयदेवतां संस्कुर्यात्' इति लिङ्गकल्प्यश्रुतिं कल्पयित्वा ऊहसिद्धिः पूर्ववदुपपादनीया। उक्तयोगोऽपि निर्वापादिमन्त्रेषु**

---

कार इति वाच्यम्। तथात्वेऽपि सूर्यपदप्रक्षेपासिद्धेः। तथाहि—सौर्ययागभावनाया हि प्रकाराकाङ्क्षया प्रकृतिवदतिदेशवाक्यकल्पनया येन प्रकारेण प्रकृतिभावनासम्पादिता तेन प्रकारेणेयमपि सम्पादनीयेत्यर्थकातिदेशवाक्येन प्राकृतभावनाप्रकारस्याङ्गत्वं विकृतौ बोध्यते। प्राकृतभावना-प्रकारश्च मन्त्रजन्याग्नित्वप्रकारकाग्निविशेष्यकप्रकाशनमेव भवन्मते इति तस्यैवातिदेशशास्त्रेण प्राप्तावदृष्टार्थत्वेनाप्यङ्गतानिर्वाहात् [न] तदर्थं सूर्यपदप्रक्षेपः सिद्ध्येत्।

यदि तु अग्नित्वप्रकारकाग्निविशेष्यकप्रकाशनपरत्वे आनर्थक्याददृष्टार्थत्वापत्तेश्च प्रकृतावेवापूर्वीयदेवतास्वरूपप्रकाशनमेव मन्त्राणां कार्यम्। ततश्च विकृतावतिदेशवाक्येन, यथा प्रकृतौ मन्त्रैः शक्त्या स्वजन्यापूर्वीयदेवताप्रकाशनरूपप्रकारविशिष्टता भावनायां सम्पादिता, तथा विकृतावपि शक्त्या स्वजन्यापूर्वीयदेवताप्रकाशनविशिष्टता कार्येत्यर्थकेन प्रकृतौ तस्याः मन्त्रपदैरेव कृतत्वेन विकृतावपि मन्त्रपदैरेव कर्तव्यतानियमेन मन्त्रा[1]प्राप्तौ [मन्त्रप्राप्तौ ? ] अङ्गतानिर्वाहाय आवश्यक एव सूर्यपदप्रक्षेपः इत्युच्यते; तर्हि अपूर्वीयदेवताप्रकाशः कस्या मन्त्रपदैः ज्ञायत इत्येतद्वदतो व्याघातः, वस्तुगत्याऽपूर्वीय एवाग्निरत्र देवता विशेष्यभूतोऽग्निपदेन शक्त्या प्रकाशयितुं शक्यते तथापि तद्गतापूर्वीयत्वं[2] प्रकारतया उपलक्षणतया वा यावन्न बोध्यते न तावदानर्थक्यपरिहारो भवतीत्यवश्यं लिङ्गकल्प्यश्रुतौ शाब्दबोधनिर्वाहायाग्निपदे अपूर्वसाधनत्व-लक्षणा संस्कारवाक्येष्विवावश्यिकी। संस्कारवाक्येष्वपि वस्तुगत्या द्रव्यादीनामेव संस्कारान्वयेऽपि अपूर्वीयरूपेण भानस्यैव लक्षणयाङ्गीकारात्। स्पष्टीकृतमेतत् द्रव्यसङ्ख्याहेतुसमुदायं वेत्यधिकरणे शास्त्रदीपिकादिषु। ततश्च मन्त्रलिङ्गस्य कल्पकस्य कल्प्यायाश्च श्रुतेः समान-विषयत्व एव मूलमूलिभावनिर्वाहात् यद्धर्मप्रकारकयद्विशेष्यकबोधविषयतापर्याप्त्यधिकरणता यस्य तस्यैव तेनैव रूपेण तज्जन्यज्ञातताश्रयत्वमित्येवं नियमस्यातिप्रसङ्गपरिहारार्थमवश्यकल्पनीय-त्वानुरोधाच्च मन्त्रपदजन्याग्नित्वप्रकारकाग्निविशेष्यकस्याग्निरित्याकारकस्य, अथवा अपूर्वीयोऽग्निरित्याकारकस्यैव प्रकाशनस्य द्वारत्वापत्त्या पूर्वोक्तदूषणापरिहारे किमग्नित्वाद्यप्रवेशकथनमात्रेण स्यात्।

वस्तुतस्तु अपूर्वसाधनत्वावच्छिन्नस्य संस्कारवाक्ये उद्देश्यत्वेऽपि अपूर्वसाधनत्वांशस्यायोग्य-त्वात् संस्कारान्वयित्वाभावेऽपि प्रकृते अपूर्वीयत्वांशस्य प्रकाशनविषयतायां बाधकाभावादपूर्वीयेयं

---

1. A. मन्त्रप्राप्ताङ्गता

2. A त्वलक्षण

**स्मृतिदार्ढ्येन प्रयोगकाले झडिति देवतास्मृतिद्वारोत्पत्स्यपूर्वानुकूलयागनिष्ठयोग्यता[1]-सम्पादन एवेत्यन्यत्र विस्तरः ॥ ३ ॥**

---

देवतेति विशिष्टाकारकबोधजनकत्वमेव मन्त्राणां युक्तम्; तस्मादपूर्वीयदेवतामात्रप्रकाशनमेव मन्त्राणां कार्यमग्नित्वाद्यविवक्षया वाच्यम् । नन्वेवमग्निपदेन मन्त्रगतेनापूर्वीयदेवतालक्षणात् अपूर्वीयदेवताप्रकाशनद्वाराऽग्न्यादिपदघटितमन्त्रस्यैव विकृतौ प्राप्तेः अतिदेशप्राप्ताङ्गतानिर्वाहाय ऐन्द्रीमन्त्रस्य गार्हपत्य इव लक्षणया सूर्यप्रकाशनोपपत्तेः नोहसिद्धिरित्यापादितदूषणापरिहार इति चेत्; उच्यते, यथैव हि अपूर्वीयदेवताबुभुत्सया प्रयुक्तमग्निपदं स्वार्थाविवक्षया प्रयुक्तं तथैव स्वरूपाविवक्षयापि प्रयुक्तम् । अपूर्वीयदेवतास्वरूपबोधस्य यत्किञ्चिद्देवतावाचिपदप्रयोगेणापि सम्भवेन यत्र प्रकृतौ मन्त्राम्नानं तत्राग्नेरेव देवतात्वात् अर्थसमाजग्रस्तत्वेनाग्निपदेनैव करणात् । तथा च प्रकृतावेवाग्निपर्यये वह्न्यादिपदनिवृत्तयेऽग्निपदाम्नानबलात् अग्निपदघटितमन्त्रजन्यप्रकाशनादेवापूर्वसिद्धिरित्येवं नियमकल्पनयाप्यार्थसमाजग्रस्ततयापि पठिताग्निपदप्रयोजनलाभेनैव 'यत्रापूर्वीयदेवतास्वरूपप्रकाशनं कर्तव्यं तत्राग्निपदेनैवे'त्येवं नियमाश्रयणं युक्तम्, तथात्वेऽग्निपदस्य तत्तदर्थविशेषप्रकाशनसामर्थ्याभावेनानेकार्थलक्षणापत्त्याऽप्राकृतकार्यकारितापत्तेः । अत एवाग्निदेवत्यायां विकृतौ अर्थसमाजपठिताग्निपदेनैव अपूर्वीयदेवताप्रकाशनसम्भवेन नाप्राकृतकार्यकारित्वप्रसक्तिः । तत्र मुख्याग्निपदघटितमन्त्रस्यैव प्राप्तिर्नतूहः । अतश्च प्रकृतापूर्वीयदेवताप्रकाशनं मन्त्रेण कर्तव्यमित्येव शास्त्रार्थः । अपूर्वे प्रकृतत्वं देवतायामग्निविशेषरूपत्वं, तद्वाचकश्चाग्निपदं तन्निष्ठा वृत्तिश्चेत्येतत्सर्वमार्थिकमविवक्षितमिति विकृतौ शास्त्रीयस्यार्थस्यैवातिदेशेन आर्थिकस्य अविवक्षितस्य चार्थस्यानतिदेशादेव अग्निपदाप्राप्तौ लक्षणाया अप्रसक्तेर्यथा अपूर्वीयदेवताप्रकाशनं प्रकृतौ मन्त्रेण कृतं तथैव विकृतावप्यपूर्वीयदेवताप्रकाशनं मन्त्रेण कर्तव्यमित्यतिदेशशास्त्रादेव प्राकृतापूर्वीयदेवतावाचकपदघटितमन्त्रजन्यप्रकाशनसिध्यर्थं सूर्यपदप्रक्षेपरूपोहसिद्धिरविकलैव । अत एवाग्निपदेनापूर्वीयाकारलक्षणेति वाचोयुक्तिरपि अर्थसिद्धाग्निपदपाठाभिप्रायेणैव ज्ञेया । एतदेवाभिप्रेत्यात्राद्याधिकरणे वार्तिकतात्पर्यवर्णनपरः तन्त्ररत्नग्रन्थः —

"इदमत्राकूतम् । यः खलु इत्थंभावः शास्त्रान्तरेऽङ्गीकृतः स एव शास्त्रान्तरे तथा कुर्यादित्यतिदिश्यते, नत्वार्थिकः । आग्नेयभावनायाश्च मन्त्रसम्पादिताग्निप्रकाशनवत्त्वमार्थिकम् । नह्ययमग्निः स्वरूपप्रयुक्तः किन्तर्हि अपूर्वप्रयुक्त इति फलदेवतयोश्चेत्यत्र वक्ष्यामः ।

---

1. B. omits यागनिष्ठ

तेनायं शास्त्रार्थः प्रकृतौ, आग्नेयेन कुर्यात्; कथम्? अनेन मन्त्रेण देवताप्रकाशनं कृत्वेति। मन्त्रकृतात्मीयदेवताप्रकाशनविशिष्टत्वाऽऽग्नेयभावनायाः प्रकारत्वेनोक्ता। सैव सौर्यभावनाया-मतिदिश्यते। तेन साप्यनेन मन्त्रेण देवताप्रकाशनं कृत्वा कर्तव्या। सूर्यश्च तत्र देवता तेन स एव मन्त्रेण प्रकाशयितव्य इति सिद्ध ऊह"इति।

तथाऽत्रैव तृतीयपादाद्याधिकरणे सिद्धान्ते शास्त्रदीपिकाग्रन्थः—प्रकृतावग्निपदं न स्वरूपविवक्षया पठितम्—अग्निपदयुक्तोऽयं मन्त्रः कथंनाम स्यादिति। यदिह्येवं भवेत् ततः तेनैव यथाकथञ्चित् प्रकाशेत सूर्यः। देवतावाचिपदविवक्षयात्विदं पठितम्—देवता-वाचिपदयुक्तोऽयं मन्त्रः कथन्नाम स्यादित्येवमभिसन्धायाग्निपदम्, तस्यैव प्रकृतौ देवतावाचित्वात्। अवश्यं हि देवतापदयुक्तं मन्त्रमधिजिगांसमानैः अग्निपदमेवाध्येतव्यम्। अतः तद्रूपविवक्षयाऽ-ग्निपदं पठितम्। तथा दृष्टार्थं भवति। स्वरूपविवक्षायान्तु अदृष्टार्थतैव स्यात्। एवं विकृतावपि देवतावाचिपदयुक्तमन्त्रप्रयोग एव कर्तव्यः। नचाग्निपदस्य ताद्रूप्यमस्ति अतः सूर्यपदप्रक्षेपः। एवं व्रीहिपदमपि हविः प्रकृतिद्रव्यवाचिपदाभिप्रायम्, न स्वरूपाभिप्रायमिति नीवारादिषूहसिद्धिः। बहुषु तद्वाचिषु सत्सु व्रीह्यादिपदमेव पठितम्, ततो नियमादृष्टमात्रं कल्प्यतेऽवघातादिवत्। स्वरूपं त्वपूर्वीयसाधनविशेषवाचिपदविवक्षया प्रयुक्तम्, दृष्टार्थत्वात्। तस्मादूहः। ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुज्यत इति वैषम्यमिति।

किञ्चाग्नित्वप्रकारकाग्निविशेष्यकबोधमात्रस्यैव लाघवेन द्वारतौचित्ये किमिति शक्तिजन्य-त्वप्रवेशो द्वारतायाम्? येन तत्सिध्यर्थमूहापेक्षा भवेत्। ततश्च यथैवाग्नित्वप्रकारकाग्निविशे-ष्यकबोधद्वारा अनेन मन्त्रेणापूर्वीयदेवतां संस्कुर्यादिति लिङ्गकल्प्यश्रुतिकल्पने य एव दोषाः तथैव शक्तिजन्यबोधस्यापि द्वारतायां तुल्याः। अतः शक्तिजन्यबोधस्य द्वारतायां यावतां मन्त्रपदानां शक्तिजन्यबोधद्वारा प्रकृताविव विकृतावप्यस्ति समवायः तावद्भागमात्रस्यैवातिदेशेन अग्निपदमात्ररहितमन्त्रस्यैव प्राप्तिः। अथवा यावन्ति वाक्ये पदानि तावतां सम्भूयार्थप्रतीति-कारित्वनियममूलैकमन्त्रत्वानुरोधात्, मुख्य एवार्थे मन्त्राणां विनियोग इति सिद्धान्ताच्च, एकतरमन्त्र-भागस्यार्थप्रतिपादकत्वाभावात् प्रत्युत तद्भागस्य देवताप्रकाशकत्वाभावेन तत्पृष्ठभावेन तत्साध-नीभूतस्यातिदेशेनापि प्राप्त्यसम्भवात् यवप्रयोगे व्रीहीणांमेधेति मन्त्रस्येव सर्वस्यापि मन्त्रस्या-प्राप्तिरेवापद्यत इति न मन्त्रगतेतरपदानुरोधेनाप्यूहसिद्धिः।

आस्तां वा प्राकृताग्निपदस्यार्थिकत्वानङ्गीकारेणापूर्वीयदेवतापरत्वं प्रकृतौ शास्त्रार्थः। तावता प्रकृतावग्निपदस्य लक्षणयाऽपूर्वीयस्वरूपपरत्वेन तद्घटितसकलमन्त्रस्यापूर्वीयदेवताप्रकाशनं

कार्यम्; तदेव प्रयोजकं यथा, तथा केवलाग्निपदस्य अग्निरूपार्थप्रकाशनमपि शास्त्रार्थत्वेन भवत्येव प्रयोजकम्। ततश्च विकृतौ अपूर्वीयदेवताप्रकाशने प्राकृतेऽतिदिष्टे तत्साधनत्वेन प्राकृताग्निपदघटितमन्त्रस्य प्राप्तावपि अग्निरूपार्थप्रकाशनस्य प्रयोजकान्तरस्याभावेनाग्निपदे निवृत्ते देवताप्रकाशनपृष्ठभावेनातिदेशप्राप्तमन्त्रस्याङ्गतानिर्वाहाय 'स्वायत्ते शब्दप्रयोगे' इति न्यायेन सूर्यपदप्रक्षेपोहसिद्धिः। नत्वेतावताऽपूर्वीयदेवताप्रकाशनपृष्ठभावेन साधनतया प्राप्तेऽग्न्यादिपदघटितमन्त्रे तदन्तर्गताग्निपदस्य शक्यार्थबाधे सूर्यरूपार्थान्तरे लक्षणयैवाग्निपदप्रयोगसम्भवे ऊहासिद्धिः शङ्क्या। पाशाधिकरणन्यायेन यत्र प्रकृतावेकपाशायां बहुवचनान्तमन्त्रस्य पाठः तत्रागत्या तदनुरोधेन छान्दसविधिप्रवृत्तिमूलैकत्वलक्षणाङ्गीकारेऽपि विकृतौ द्विपाशायां पाठाभावे छान्दसविधिप्रवृत्त्यभावेन तन्मूलद्वित्वलक्षणायां असम्भवात् साम्प्रतिकलक्षणायाश्च वेदेऽनङ्गीकारत् द्विवचनान्तोहस्यैव 'स्वायत्त' इति न्यायेन साधनात्। इहापि प्रकृतावन्यथानुपपत्त्याऽपूर्वीयाकारलक्षणायामपि विकृतावर्थान्तरे तदप्रसिद्ध्योहसिद्धेः। अत एव प्रकृतौ यादृशार्थनिर्णायकत्वं विकृतौ तादृशार्थनिर्णायकत्वेनैव प्राकृतमन्त्रगतसमवेतार्थकपदप्राप्तावेव प्रकृतिवद्भावस्वारस्यमनुगृहीतं भवति, नान्यथा इत्यभिप्रेत्यैव 'एकधाऽस्य त्वचमाच्छ्यता' दिति मन्त्रगतप्राकृतैकधापदस्य पशुगणे प्रवृत्तेः एकधापदाभ्यासरूपोहः साधयिष्यतेऽत्रैव तृतीयपादे। एवञ्चापूर्वीयदेवताप्रकाशने प्रकृतितोऽतिदिष्टे तत्पृष्ठभावेन साधनतया मन्त्रमात्रस्यैवातिदेशकल्पने लाघवान्न मन्त्रगततत्तत्पदार्थप्रकाशनपृष्ठभावेन तत्तत्पदनिष्ठवृत्तिद्वारा तत्तत्पदातिदेशस्यापि पृथक्कल्पनं प्रमाणवत्।

अस्तु वा तत्कल्पनम् तावतापि विकृतौ योऽर्थः समवेतः तत्प्रकाशनपृष्ठभावेन व्यापारभूतायाः शक्त्यादिवृत्तेः तदाश्रयपदस्यातिदेशोऽपि अग्न्यादिरूपस्यार्थस्य समवेतत्वाभावे तत्प्रकाशनस्य अपेक्षाभावेनानतिदेशात् उपकारपृष्ठभावेनैव च पदार्थानामतिदेशान्न तत्पृष्ठभावेन तत्पदवृत्तिवृत्तेः अतिदेश इति न प्राकृतवृत्तिनिर्वाहार्थं सूर्यपदप्रक्षेप इत्यर्थः; किन्तु प्रकृतिवद्भावस्वारस्यनिर्वाहार्थं स्वायत्त इति न्यायलभ्य एव। अत एवापूर्वीयाकारप्रकाशनपृष्ठभावेन लक्षणावृत्तिद्वारा विकृतौ यद्यपि प्राप्तमग्निपदं तथापि विशेषप्रकाशनायावश्यके सूर्यादिपदप्रक्षेपे तेनैव लक्षणावृत्तिद्वाराऽपूर्वीयाकारप्रकाशनरूपोपकारलाभान्न तत्पठितव्यम्। प्रयोजनाभावात्। अन्यत उपकारलाभे स्वातन्त्र्येण तत्प्रयोजकत्वकल्पनानुपपत्तेश्च। अतोऽपूर्वीयाकारप्रकाशनद्वारा प्राप्तस्यापि अग्न्यादिघटितमन्त्रस्य न लक्षणया सूर्यादिप्रकाशकत्वम्।

अपि च प्रकृतावनेन मन्त्रेण शक्तिजन्यबोधद्वाराऽपूर्वीयदेवतां प्रकाशयेदिति लिङ्गकल्प्यश्रुतौ मन्त्रकरणत्वान्यथानुपपत्त्या मन्त्रगतपदनिष्ठशक्तिजन्यबोधस्यैव द्वारत्वं वक्तव्यम्। ततश्च यथैव 'धान्यमसी'ति मन्त्रगतधान्यपदस्य समवेतार्थत्वसाधनाधिकरणे प्राकृतप्रकाशन-

रूपोपकारपृष्ठभावेन प्राकृतपदनिष्ठवृत्तिव्यापारातिदेशः तत्पृष्ठभावेन चाग्न्यादिरूपपदार्थातिदेशः। अत एव वृत्त्यभावे व्यापाराभावात् विकृतावग्न्यादिपदाप्राप्तेः न लक्षणया सूर्यप्रकाशनमिति भवद्भिरुपपादितयैव रीत्या यावत्पठितपदसमूहात्मक एव मन्त्रत्वपर्याप्तेः तावत्पदनिष्ठशक्तिरूपव्यापाराभावे विकृतौ कथं तद्घटितमन्त्रप्राप्तिरिति विवेचनीयम्। अतोऽग्निदेवत्यायां विकृतौ द्वारलाभेन मन्त्रप्राप्तेः सुलभत्वेऽपि सूर्यादिदैवत्यायामूहकरणेऽपि [न] प्राकृतयावत्पठितपदनिष्ठशक्तिजन्यबोधस्य द्वारत्वम्; गौरवात्। अपितु मन्त्रगतपदनिष्ठशक्तिजन्यत्वेनैव, लाघवात्। ततश्च प्रकृतौ मन्त्रगतपदनिष्ठशक्तिजन्यबोधस्यैव विकृतावप्यूहेन सूर्यपदघटितत्वं मन्त्रेऽङ्गीकृत्य मन्त्रगतत्वस्य सूर्यपदेऽपि सत्वेन मन्त्रगतपदनिष्ठशक्तिजन्यबोधस्य व्यापारत्वोपपत्तेः मन्त्रप्राप्तिः सुलभैवेत्युच्येत, तर्हि ऊहेन प्राकृतद्वारलाभात् ऊहसहितप्राकृताग्न्यादिपदघटितमन्त्रप्राप्त्यापत्तिः ऊहितमन्त्रसिद्धौ द्वारलाभः द्वारसिद्धौ च मन्त्रप्राप्त्युपजीव्यान्यथानुपपत्त्या ऊहसिद्धिः इत्यन्योन्याश्रयापत्तिश्च। सूर्यरूपापूर्वीयदेवताप्रकाशनानुरोधेन ऊहितमन्त्रप्राप्तिसिद्धौ शक्तिजन्यबोधसिध्यर्थं ब्रह्मवर्चसपदोह इति वचसोऽकिञ्चित्करत्वापत्तिश्च।

एवं 'धान्यमसी'ति मन्त्रे गौणसामर्थ्यकल्पितश्रुतौ शक्तिजन्यबोधस्य द्वारत्वाभावे अनेन मन्त्रेण लक्षणाजन्यबोधद्वाराऽपूर्वीयविकारं प्रकाशयेदित्येवंरूपार्थकल्पने [1]स्वपदनिष्ठलक्षणाजन्यबोधद्वाराभावात् मांसप्रकाशनार्थं विकृतौ धान्यपदनिवृत्तावपि प्राकृतलक्षणाजन्यबोधसिद्ध्यर्थं मृगपदप्रक्षेपापत्तिश्च। तस्मादपूर्वीयदेवतास्वरूपपरत्वं लक्षणया अग्न्यादिपदानामङ्गीकृत्य मन्त्राणामपूर्वीयदेवताप्रकाशनमात्रमेव कार्यमतिदिश्यते। विकृतौ तत्पृष्ठभावेन च मन्त्राणां प्राप्तावङ्गतानिर्वाहार्थं प्रकाशनकार्यानुरोधेन अग्निपदस्थाने सूर्यादिपदोहः स्वाधीने शब्दप्रयोगे इति न्यायानुसरणमूल एव। प्राकृत्याः शक्तिलक्षणान्यतररूपाया अपि वृत्तेः न प्रकृतौ द्वारतायां निवेशः, प्रयोजनाभावात्। अत एवार्थिकत्वान्न विकृतावप्यतिदेशस्तयोः। अथवाऽग्न्यादिरूपविशेषप्रकाशनरूपोपकाराभावादेव सौर्यादावग्निपदलोप इत्येवं पूर्वोपपादितरीत्या तृतीयपादाद्याधिकरणीय-[1]प्राचीनग्रन्थमर्यादालभ्यं निर्णयकारणं साधु। ननु शक्तिजन्यबोधस्य द्वारत्वं नवा वृत्तिमात्रस्यातिदेश इति युक्तम्। एवमपूर्वीयाकारेषु तत्तन्मन्त्रगतपदानां लक्षणायामपि पुत्राद्यर्थयवसाध्यप्रयोगयोः पुत्रयवविकारप्रकाशनकर्तव्यताया अतिदेशादिप्रमाणप्रमितत्वाभावे तत्पृष्ठभावेन मात्राणामप्राप्त्यैवोहानुपपत्तेः स्वर्गव्रीह्यादिपदैः तदभिधानाशक्तेः न स्वर्गव्रीहिमन्त्रयोः प्राप्तिः। विकृतिप्रयोगे तु अतिदेशप्राप्तस्य ऊहेन निर्वाहात् भवत्येव प्राप्तिरिति। एतेन मन्त्रलिङ्गकल्प्य-

1. A. नेनोपपद

1 B. रणप्रभृतिसकलाधिकरणीय

शुनापरग्न्यादिपदेऽपूर्वसाधनत्वलक्षणायामपि मन्त्रगताग्न्यादिपदेषु तल्लक्षणायां प्रमाणाभावादिति तृतीयपादाद्याधिकरणे साधितमपि निरस्तम्। पूर्वोक्तरीत्या तत्रापि तल्लक्षणाया आवश्यकत्वात्। एतदभिप्रेत्यैव एतदधिकरणे वार्तिकतन्त्ररत्नादिग्रन्थाः---तथाहि-प्रोक्षणवत्तूत्तरम्। नह्यग्निस्वरूपप्रकाशनस्य प्रयोजनमस्ति। तेन फलाभावात् प्रतिहते स्वरूपार्थत्वे प्रकरणसहितेन लिङ्गेनापूर्वीयदेवताप्रकाशनार्थतया विनियुज्यते। नन्वेवं लक्षणा स्यात् तत्र मुख्यार्थे मन्त्राणां विनियोग इति न्यायो बाध्येत; न, अर्थस्वरूपाभिप्रायत्वात्तस्य। सर्वाण्येव पदान्येकवाक्यभूतानि पदार्थान्तरान्वितमर्थं लक्षयन्ति। कदाचित्तु तत्सम्बन्ध्यर्थान्तरम्। कदाचित्तु सदृशम्। तत्र मन्त्रा मुख्यमेवार्थमर्थान्तरान्वयितया लक्षयन्ति न तु गौणं लाक्षणिकं वेत्येतत् तत्र तत्रोक्तम्। तदिहापि नैव बाध्यते। मन्त्राभिधेयानां स्वर्गाग्न्यादीनामेव प्रकृतापूर्वसम्बन्धित्वात्। तदिदमुक्तं भाष्यकारेण "शब्दार्थस्य फलदेवतेन सम्प्रतिपन्नत्वाददुष्टा लक्षणे"ति। तेनानेन मन्त्रेण देवताफलप्रकाशनद्वारमपूर्वं कुर्यादिति विनियुक्तो मन्त्रो मुख्ययैव वृत्त्या प्रकाशयति। स्वरूपमात्रार्थत्वे त्वानर्थक्यमदृष्टार्थता वा स्यादिति। शास्त्रदीपिकायामपि "तस्मादेवं वक्तव्यम्। मन्त्रप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयती"ति। ततश्च विकृतौ फलान्तरदेवतान्तरवत्यां 'अगन्म ब्रह्मवर्चसम्, 'सूर्यस्याहमुज्जितिम्' इत्यूहनीयम्। तथाहि प्रकृतिवत् कृतं भवतीति। तदेतादृशप्राचीनमर्यादया यदत्र युक्तं तत्सुधिय एव विचारयन्त्वित्यलं विस्तरेण।

---

(४)—देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ आर्थप. त्याच्च ॥ ७ ॥ ततश्च तेन सम्बन्धः ॥ ८ ॥ अपि वा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिः ॥ ९ ॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥

एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतं, इह तु तदनङ्गीकृत्य देवताप्रसाद एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गान्निराक्रियते। तत्र देवतायास्सम्प्रदानत्वात् तस्य च कर्मकारकापेक्षयाऽप्यभिप्रेयमाणत्वेन प्राधान्यात् यागस्य पूजारूपस्य तत्संस्कारकत्वावगतेः तस्याश्चोपयोगापेक्षायां 'स एवैनं भूतिं गमयति, तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्याद्यर्थवादानुसारात् प्रसन्नायाः फलदातृत्वावगतेः यागस्यैव फलजनकत्वे प्रमाणाभावे अपूर्वसत्वे[1] सुतरां प्रमाणाभावः। [2]अस्तु वा देवताया अभिप्रेयमाणत्वोक्तावपि तस्य 'ब्राह्मणाय गां ददाति' इत्यादौ ब्राह्मणस्य फलदातृत्वासम्भवेनोपयो-

---

देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्। द्वारताश्रयणेऽपि पूर्वोक्तरीत्या ऊहः सिद्ध्यत्येवेति नास्य विचारस्योहोपोद्घातत्वमिति सूचयन्नाह—एवं तावदिति। देवतायाः सम्प्रदानत्वादिति। यद्यप्याग्नेय इत्यादावग्न्यादेर्देवतात्वबोधने नैव सम्प्रदानत्वार्था चतुर्थ्यस्ति येन सम्प्रदानत्वं तस्याः प्रतीयेत तथापि अग्निः देवता अस्येत्यर्थे व्युत्पन्ने आग्नेयशब्दे अग्निदेवताया अस्येति पदोपात्तद्रव्यविशेषणत्वस्य प्रतीयमानस्य अग्न्युद्देशेन द्रव्यदानं विनाऽसम्भवात् अर्थाद्द्रव्योद्देश्यकत्वेन यागक्रियाव्याप्यद्रव्यं प्रत्यपि व्याप्यमानत्वात्तस्याः सम्प्रदानत्वमुक्तम्। ननु यदि देवता सम्प्रदानं तर्हि यागस्य दानरूपत्वापात इत्याशङ्कां निरस्यन् यागस्य पूजारूपत्वं देवतायाश्च पूज्यरूपत्वमाह—पूजारूपस्येति। यजि देवपूजासङ्गतिकरणदानेषु इति शाब्दिकस्मरणात् पूजारूपो दानरूपोऽपि वा यागपदार्थः नत्वेतदतिरिक्तः कश्चनान्यः सः। उभयरूपस्यापि तस्य निर्विवादमेव देवतार्थत्वमिति भावः। सम्प्रदानत्वेन पूज्यत्वेन वा प्राधान्यमभिप्रेत्य 'तस्माद्यजेत स्वर्गकाम इत्यस्यायमर्थः—यागेन देवतामाराधयेत् ततः देवतायाः स्वर्गो भविष्यती'ति तन्त्ररत्नकृता पूर्वपक्षोपसंहारः कृतः तं दूषयति—अस्तुवेति। चतुर्थीस्थले यत्रापि सम्प्रदानत्वं शब्देनैवोपात्तं तत्रापि क्वचित्फलपदान्तरासमभिव्याहारे प्राधान्याव्यभिचारि भवत्येव यथा मैत्रावरुणाय

---

1. A. अपूर्वसाधनत्वे

2. B. reads यद्यपि for अस्तु वा

**गाभावात् प्राधान्यासम्भवेन प्राधान्यव्यभिचारेण तत्कल्पनानुपपत्तेः प्रत्युत भावार्थाधिकरणन्यायेन यागकरणिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयात् देवताया अपि संस्कार्यत्वे उद्देश्यत्वे क्रत्वनिमित्तवाक्यभेदापत्तेः देवताया एव यागाङ्गत्वं, तथाऽपि यागस्य फलजनकत्वे** व्यापारापेक्षायाम् **श्रुतापूर्वकल्पनापेक्षया रात्रिसत्रवदर्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्रयुक्तत्वसिद्धिः। प्रसादस्य च विग्रहभोगादिव्यतिरेकेणानुपपत्तेरर्थवादाद्यनुसारेण विग्रहभोगादिकल्पनेऽपि न दोष इति प्राप्ते—**

**प्रसादो हि यदि इच्छारूपस्तदा तस्येच्छात्वेन तत्फलं प्रति कारणत्वे अतिप्रसङ्गापत्तेरवश्यं दर्शादिकर्तुस्तत्फलं भवत्वित्येवमाकारिकेच्छात्वेन तद्वाच्यं, तथाच कारणता-**

---

दण्डं प्रयच्छतीत्यादौ मैत्रावरुणे। तस्य प्रैषानुवचनोपयोक्ष्यमाणत्वेन तन्निर्वाहात्। यत्र तु वेदविदे गां ददातीत्यादौ असत्यपि फलान्तरपदे विश्वजिन्न्यायेन तत्कल्पनस्यावश्यकत्वेन स्वर्गादिरूपमस्त्येव फलान्तरं, तत्राप्यग्रे वेदविदादेरुपयोगाभावेन प्राधान्यासम्भवात् सम्प्रदानस्य गुणत्वमेवेत्यर्थे सिद्धे सुतरां तद्धिताद्युपात्तदेवताकयागेषु देवताया गुणत्वम्। फले हि चोद्यमानो यागः स्वनिर्वृत्तिमपेक्षते सा च द्रव्यदेवतामन्तरेण न सम्भवतीति द्रव्यदेवतमपेक्षते। अपेक्ष्यमाणञ्च तत् कारकरूपेणैवापेक्ष्यते न भाव्यांशेन स्वर्गस्यैव भाव्यस्य लब्धत्वात्। अपुरुषार्थस्य द्रव्यदेवतादेः साध्यत्वानुपपत्तेश्च। नहि देवतायाः पुरुषार्थजनकत्वं केनचिदपि विधिनाऽवगतम्, येन तत्संस्कारकत्वं यागस्य स्यात्। तत्र द्रव्यस्य करणत्ववाचकतृतीयया कारकत्वं; देवतायास्तु तद्धितचतुर्थीद्वितीयाभिः। यद्यपि चतुर्थ्यादिना उद्देश्यत्वबोधनात् प्राधान्यमपि प्रतीयते। परन्तु तदार्थिकमेव। तदिदमुक्तं वार्तिकतन्त्ररत्नयोः—"तच्च देवताकारकं यागं प्रति यदि न प्राधान्यं प्रतिपद्यते तथासति यागो नैव निर्वर्त्यते यागनिर्वृत्यभावाच्च कारकमेव देवता न स्यात्। तथा यदि च यागस्तस्य देवताकारकस्य गुणतां न प्रतिपद्येत ततः आत्मानमेव न प्रतिलभेत। तस्माद्यागेन फलसाधनभूतनिर्वृत्तिमपेक्षमाणेन तत्सिध्यर्थं नान्तरीयकेण व्यापारेण गुणभावः प्रतिपत्तव्यः। तथा देवताकारकेणापि यागं निर्वर्तयता नान्तरीयकः प्रधानभावः प्रतिपत्तव्यः। न च नान्तरीयको व्यापारः गुणभावे प्रधानभावे वा कारणम्, अचोदितत्वात्। यागस्यैव फले चोदितत्त्वेन श्रुत्यादिप्रमाणेन यागं प्रत्येव तस्याः शब्दतो गुणत्वप्रतीते"रिति। **व्यापारापेक्षायामिति।** विनष्टक्रियारूपस्य यागस्य फलजनने तद्ध्वंसस्य व्यापारत्वकल्पनायाः ध्वंसतत्प्रतियोगिनोरेकत्वाजनकत्वनियमात्, कीर्तननाश्यत्वानुपपत्तेश्चासम्भवात् युक्तैव व्यापारापेक्षेति भावः। यथा च पराभिमतव्यापारान्तराणां निरासस्तथोपपादितमपूर्वाधिकरणे कौस्तुभे।

वच्छेदके गौरवम्। दर्शादिजन्यफलभोगे जातेऽपि तत्कर्तृत्वानपायादन्यकृतदर्शपूर्णमास-जन्यप्रसादादन्यस्य फलापत्तिश्च। अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तिकतुः सा फलव्यक्तिर्भवत्वित्येवमाकारिकेच्छात्वेन कारणत्वं वाच्यं; तथा चानेककार्यकारणभाव-कल्पनं कारणतावच्छेदके गौरवं च।

किञ्चैतादृशप्रसादो यदि ब्राह्मणतर्पणान्ते, तदा यागानां नष्टत्वादेवोत्पत्त्यनापत्तिः। यदि तु तत्तद्यागेभ्योऽप्यवान्तरप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवत्वित्या-कारिका इष्यन्ते, तदा देवतानाममोघेच्छत्वस्यार्थवादेषु प्रतिपादनात् दैवादग्नीषोमीयाद्य-करणेऽपि फलापत्तिः। अथैतस्यार्थवादत्वमेवाभ्युपगम्य तादृशमहाप्रसादस्य विजातीये-च्छात्वेनैवापूर्ववादिन इव विजातीयफलत्वावच्छिन्नं प्रति कारणता, अवान्तरप्रसादानां च विजातीयतत्तदिच्छात्वेनैव महाप्रसादं फलं च प्रति कारणता, कारणतावच्छेदकसम्बन्धश्च स्वजनकयागसमवायित्वं कार्यतावच्छेदकसम्बन्धश्च फलांशे समवायः, नातः कर्त्रन्तरे फलापत्तिः। अवान्तरप्रसादमहाप्रसादयोः परस्परं कार्यकारणभावे प्रत्यासत्तिस्तु उभयत्र स्वजनकयागसमवायित्वमेव। देवतानिष्ठमेव वा तं कार्यकारणभावमङ्गीकृत्य समवाय एव प्रत्यासत्तिरस्त्विति चेत्; सम्बन्धगौरवस्यैव दोषत्वात्। यागनिष्ठकारणतानिरूपितका-र्यताघटकसम्बन्धस्य भवता निर्वक्तुमशक्यत्वाच्च। मन्मते तु सर्वकार्यकारणभावानां सम-वाय एव सम्बन्ध इति लाघवम्। एतेन प्रसादो नाम सुखविशेष इत्यपि पक्षः प्रत्युक्तः।

न चास्य गौरवस्यार्थवादिके प्रसादाख्ये व्यापारे सिद्धे फलमुखत्वमिति वाच्यं, अर्थवादस्य स्तावकतयाऽप्युपपत्तौ स्वतस्तत्कल्पकत्वाभावात्। व्यापारापेक्षायां रात्रिसत्र न्यायेन तद्वाचकपदान्तरकल्पनया तस्य व्यापारत्वकल्पने च व्यापारत्वस्य

---

अथैतस्येति। अमोघेच्छत्वप्रतिपादकशास्त्रस्येत्यर्थः। स्वजनकयागेति। स्वपदं-महाप्रसादरूपेच्छापरम्। तथा च समवायसम्बन्धेन यत्र फलोत्पत्तिस्तत्र स्वजनकयागसमवा-यित्वसम्बन्धेन देवतामहाप्रसादः कारणमित्येवं कार्यकारणभावकल्पनायाः स्वजनकयागसम-वायित्वस्यात्मनि सत्वात् नासम्भव इति भावः। देवतानिष्ठमेव वेति। आग्नेयादियागैः प्रत्येक-मग्न्याद्यवान्तरप्रसादा ये उत्पद्यन्ते ते अग्न्यादिदेवतास्वेव समवायसम्बन्धेनोत्पद्यन्ते तैश्च सर्वैः सम्भूय महाप्रसादोऽपि तास्वेव उत्पाद्यते इति युक्त एवावान्तरप्रसादमहाप्रसादयोर्देवतानिष्ठकार्य-कारणभावे समवायः सम्बन्धः। निर्वक्तुमशक्यत्वाच्चेति। यागेनात्मनिष्ठेन देवतायां प्रसादे जनयितव्ये स्वनिरूपितोद्देश्यताकत्वं कारणतावच्छेदकः सम्बन्धः कथञ्चिद्वाच्यश्चेदपि गौरवमिति भावः।

कारणताघटितत्वेन तस्यास्सम्बन्धावगमपूर्वकत्वात् सम्बन्धगौरवस्य फलमुखत्वानुपपत्तेः। अतो ये तावत्प्रसादादिप्रतिपादकास्ते देवस्य त्वादिमन्त्रवदेव प्रसादादिविशिष्टदेवताप्रकाशनार्थास्सन्तो विशेषणांशे प्रकाशनस्यादृष्टार्थत्वान्नानुपपन्नाः। वैशिष्ट्यघटकसम्बन्धश्च आहार्यो वा अनाहार्यो वेत्यन्यदेतत्। अर्थवादाश्च तेनैव सम्बन्धेन स्तावका इति नेष्वपि न स्तुतिलक्षणातोऽन्या काचिल्लक्षणा। अस्तु वा सा, तथाऽपि विधौ गौरवापत्तेस्सा न दोषः।

न चैवं विध्यनपेक्षितत्वादर्थवादिकप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्याप्यर्थवादस्यासति प्रमाणान्तरविरोधे स्वशक्यार्थेऽपि प्रामाण्याभ्युपगमात् विग्रहभोगप्रसादादिस्वीकारादपूर्वार्थत्व एव प्रसादस्वीकरणमस्त्विति वाच्यं; अन्यतात्पर्यकस्य वाक्यस्यान्यत्र प्रामाण्यायोगात्। अन्यथा शुद्धपुरुषतात्पर्यके यष्टीः प्रवेशय' इत्यादौ परान्नभोजननिवृत्तितात्पर्यके 'मृदं भुङ्क्ष्व' इत्यादौ च प्रमाणान्तराविरोधात् स्वशक्यार्थेऽपि प्रामाण्यापत्तिः। अतस्सकृदुच्चरितस्य शब्दस्यानेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां शक्यार्थे प्रामाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः।

---

फलमुखत्वानुपपत्तेरिति। किञ्च निषेद्धव्येषु देवताभावात्तत्प्रसादस्य व्यापारत्वकल्पनानुपपत्तेः तत्रावश्यकल्प्यापूर्वस्यैव विधेयेष्वपि तत्कल्पनौचित्यात् तस्यैव द्वारत्वोपपत्तौ तत्र प्रसादस्य द्वारत्वकल्पनाऽयुक्तेत्यपि द्रष्टव्यम्। क्वचिद्विधिशेषत्वेन श्रुतास्तादृशा अर्थवादाः रात्रिसत्रन्यायेन तद्विधिविधेयेष्वेव तस्य द्वारतामापादयेयुः, नान्यत्र, प्रमाणाभावात्। वस्तुतस्तु तत्रापि न ते प्रसादस्य द्वारतासमर्पका इत्याह—अतो ये इति। तद्वदेवेति। 'देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामि'त्यादिपदार्थवैशिष्ट्यं वस्तुगत्या बाधितमपि आहार्यम्; तद्वदेव प्रसादादिवैशिष्ट्यमपि न वास्तवमित्यर्थः। तदिदमुक्तं भाष्यकारेण''एवमिदं देवताख्यं साधनं साधयितृतमं अचेतनादिवत् सम्बुध्य साधयतीति चेतनवदेवोपचर्यमाणः सम्बुद्धिशब्देनामन्त्र्यते। तथा सम्बोधनशब्देन निर्दिश्योच्यत'' इति। अर्थस्य देवतात्वपक्षे विग्रहादिमत्त्यास्तस्याः फलदातृत्वसम्भवेन फलदातृत्वस्य वास्तवस्यापि वैशिष्ट्येन प्रकाशनं श्रद्धातिशयजननद्वाराऽदृष्टार्थमेव; विशेष्यमात्रस्यैव देवतात्वेन प्रकाशनापेक्षितत्वादित्यभिप्रेत्य तेनैवेत्युक्तम्। विधौ गौरवापत्तेरिति। स्तुतिलक्षणापेक्षया यद्यपि अवान्तरार्थलक्षणापि क्रियेत, तथापि विधेः स्वतः स्तावकत्वकल्पने गौरवापत्त्या स्तुतिलक्षणैवावश्यकी तदतिरिक्तार्थे अतिरिक्तलक्षणापीति न स्तुतिलक्षणायां दोषः अपेक्षितत्वात् अन्यस्य तु दोष एवेति भावः।

न च तथाऽपि शब्दस्यार्थविशिष्टप्राशस्त्य एव लक्षणयाऽर्थवादानां तात्पर्याद्विशेषणांशेऽपि प्रामाण्योपपत्तिः, लक्ष्यतावच्छेदके गौरवापत्तेः। अन्यथा व्रीहित्वादेरपि विवक्षापत्त्या ऊहानापत्तिः। अतः कथमपि न विग्रहादिस्वीकारः। किन्तु शब्दमात्र

---

यस्त्वत्रार्थदेवतात्ववादिभिरुक्तम्—आग्नेय इत्यादौ प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमं प्रत्ययत्वसामान्येन प्राप्तमतिक्रम्य शब्ददेवतात्वपक्षे तद्धितचतुर्थीभ्यां प्रकृतिशब्दान्वितार्थाभिधानं यत्स्वीकार्यं तत् प्रकृत्यर्थाभावात्, उत प्रकृत्यर्थस्य देवतान्वयानर्हत्वाद्वा ? नाद्यः; वायव्याग्नेयसौर्यादिकतिपयदेवतापदप्रकृत्यर्थानां प्रत्यक्षसिद्धत्वेन लौकिकमानसिद्धत्वात्। ऐन्द्रार्थानामपि स्वर्गवदर्थवादादिसिद्धत्वात्। विध्यपेक्षिते स्वर्गस्वरूपे सम्भवति अर्थवादादिप्रामाण्यम्, न तु विध्यनपेक्षितेन्द्रादिस्वरूपे इति चेत्; कथमनपेक्षितमेतत्, यावता प्रत्ययान्तरवत् प्रकृत्यर्थान्वितत्वेन तद्धितादिसमर्पितस्य देवताकारकस्य विधाने प्रवर्तमानो विधिस्तन्निर्वाहाय प्रार्थयत्येव प्रकृत्यर्थविशेषरूपम्। स्फुटश्चेन्द्रत्वादिफलार्थकाश्वमेधादिकार्थविधीनां इन्द्रादिस्वरूपापेक्षत्वम्। किञ्चेन्द्राय जुष्टं इन्द्रमावह इन्द्रं स्वाहा इत्याद्या देवताशब्दाः सुब्विभक्तयः तावच्छ्रूयन्ते। नचैता इन्द्रशब्दस्याप्रातिपदिकत्वे सङ्गच्छन्ते। न चार्थशून्यस्य प्रातिपदिकत्वसम्भवः। अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति [ पा-सू १—२—४५ ] पाणिनीयोक्तेः। अतोऽपि नेन्द्रादिशब्दानामर्थशून्यत्वम्। न द्वितीयः। यदि हि त्यागकालीनोच्चार्यत्वलक्षणं देवतात्वं शब्दसमवायार्हं तद्धितवाच्यत्वेन निर्णीतं स्यात्ततः प्रकृत्यर्थस्य तदन्वयानर्हत्वं सिद्ध्येत्। नचैवं वृद्धव्यवहारादिना निर्णीतमस्ति। यद्यपि वा लोके तद्धितार्थत्वेन शब्दसमवायि देवतात्वं प्रसिद्धं स्यात् तथापि 'वायुर्वै क्षेपिष्ठा देवते'त्यादि वाक्यशेषात् वायव्यादिकतिपयतद्धितैस्तावदर्थगतमेव देवतात्वमभिधेयम्। यैव हि वायव्यपदसमर्पिता देवता विधिविहिता सैवेह वाक्यशेषे क्षिप्रगामित्वगुणेन स्तूयत इत्यविवादम्। न च शब्दस्य प्रसिद्धोऽयं गुणः स्तुत्यै निर्देष्टुं शक्यते। अतो यथा 'आदित्यः प्रायणीयः पयसि चरु'रित्यत्र 'अदितिमोदनेने'ति वाक्यशेषात् चरुशब्दस्य लोकप्रसिद्धस्थाल्यर्थत्वपरित्यागेन ओदनवाचित्वे निर्णीते यत्रापि सौर्यं चरुमित्यादौ न वाक्यशेषस्तत्रापि वेदावधृतशक्त्यनुरोधेन ओदनवाचित्वमेवाश्रीयते। तद्वद्वायव्यतद्धितस्य वाक्यशेषादर्थगतदेवताभिधायित्वे निर्णीते, यत्रापि यदि नासौ तत्रापि तद्गततदभिधायित्वमेव स्वीकार्यम्। एवञ्च सूर्यगतत्वेन प्रसिद्धगुणप्रकाशको याज्यादिमन्त्रो "ज्योतिष्कृदसि,, " विश्वमाभासि " (तै सं. १—४—२९) इत्यादिपदनिचयः सङ्गच्छते। एवं तद्धितोक्तन्यायेन चतुर्थीमात्रप्रमाणकमपि देवतात्वमर्थगाम्येव। कथमन्यथा'एष ह वै

देवता। अर्थस्तु प्रातिपदिकानुरोधात् चेतनोऽचेतनो वा कश्चित्स्वीक्रियते। न तु

हविषा हविर्यजत' इत्यादिवाक्यशेषगतमन्त्रवर्णाः सङ्गच्छेरन्। तस्मादर्थानामेव देवतात्वम्। अत एव तिर्यगधिकरणे देवानामनधिकारसिद्ध्यै भाष्यकारोक्तो हेतुः सङ्गच्छते। 'न देवानां देवतान्तराभावात्' इति। शब्ददेवतात्वे तदुच्चारणस्य अस्माभिरिवेन्द्रादिभिरपि कर्तुं शक्यत्वान्नानेन हेतुना तेषामनधिकारः सिद्ध्यति। निरस्तश्चैतच्छब्ददेवतामतमेतद्भाष्यबलेन मिश्रैः। अतोऽर्थस्य देवतात्वेऽपि तद्गुणककर्मण एव फलमिति न प्राधान्येन फलदातृत्वं तस्या इत्यपूर्वसिद्धिरिति। तन्निरासायाह—अर्थस्तु **प्रतिपदिकानुरोधादिति।** इन्द्रादिशब्दानां विवक्षितार्थत्वेऽपि स एवार्थो वाक्यशेषमन्त्रवर्णादौ प्रतिपाद्यत एव। न तु तद्गतविग्रहादिकमप्यनपेक्षितं प्रतिपाद्यते। यदि तदपि प्रतिपाद्येत तदा तन्निष्ठप्रसादस्य अवान्तरव्यापारस्यापेक्षिततमस्यापि प्रतिपादने तात्पर्यात् अपूर्वसिद्ध्यनापत्तिः। अतोऽर्धजरतीयाङ्गीकारे प्रमाणाभावात् यथैव वायुदेवतायामर्थवादप्रतिपादितमपि वर्तमानभूतिप्रापकत्वमनुपपन्नं तद्देवताकयागस्तुत्यै आहार्यं स्वीक्रियते न तु देवतास्तुतौ तात्पर्यं, तथैव तत्र देवतानिष्ठतत्तद्विग्रहादिकमप्याहार्यमेव स्वीक्रियत इति न किञ्चिद्बाधकम्।

वस्तुतस्तु इन्द्रादिरूपार्थप्रतिपादनस्यापि विधेरनपेक्षणात् तत्प्रतिपादनतात्पर्यकत्वस्यैवार्थवादादीनामसिद्धौ दूरे तद्विग्रहादिप्रतिपादकत्वं तेषाम्। कथं तर्हि अग्न्यादिरूपेऽर्थे विद्यमाने शब्ददेवतात्वसिद्धिरिति चेत्। अयमभिप्रायः—देवतोद्देशपूर्वकद्रव्यत्यागो हि यज्यर्थः। तत्र यदि देवतोद्देशो नाम 'इदं द्रव्यमग्न्यादिस्वामिकम्, अथवा 'अग्नेरिदम्' अथवा 'अग्न्यर्थमिदम्' इत्याकारकारोपज्ञानं द्रव्यत्यागश्च 'इदं मदीयं ने' त्याकारकं ज्ञानं तदा ज्ञाने विध्यनुपपत्तिः। तस्य कृतिसाध्यत्वाभावात् यदाकारकं ज्ञानं तदाकारकत्यागस्यैवापत्तौ अग्नय इदं न मम इति त्यागानुष्ठानानापत्तेश्च। तादृशमानसज्ञानोत्पत्तिमात्रेणैव त्यागानुष्ठानसिद्धौ वाचनिकतादृशत्यागे प्रमाणाभावप्रसङ्गाच्च। अतो द्रव्यत्यागकाले देवतावाचकपदस्य चतुर्थीप्रकृतिकत्वेनोच्चारणमात्रमेव देवतोद्देशपदार्थः कृतिसाध्यो विधिविषयः, द्रव्यत्यागोऽपि च द्रव्यवृत्तिस्वस्वत्वनिवृत्त्यनुकूलेदं न ममेत्याकारकज्ञानपूर्वो व्यापारः इदं न ममेत्याकारकशब्दोच्चारणरूपः स एव; तथैव त्यागानुष्ठानसाक्षिभिर्वृद्धव्यवहारेण शक्तिनिर्णयात्। अग्नय इदं न ममेति त्यागानुष्ठान एव प्रधानत्यागो निर्वृत्त इति व्यवहाराच्च। एतेन त्यागकाले देवतावाचकचतुर्थ्यन्तपदप्रयोगे स्पष्टस्य वचनस्यानुपलम्भात् प्रमाणाभाव इति केषाञ्चिदुक्तमपास्तम्। त्वष्टारमन्तूपलक्षयेदिति तार्तीयलिङ्गपादाधिकरणकौस्तुभप्रदर्शितरीत्या यजिपदार्थस्य तत्रैव वृद्धव्यवहारेण शक्तिनिर्णयात् तत्प्रयोगप्रमाणान्वेषणप्रयासवैयर्थ्यात्।

अत एव— नामगोत्रे समुच्चार्य तुभ्यं संप्रदद इति ।
नममेति स्वस्वताया निवृत्तिमपि कीर्तयेत् ।
दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः ॥

इति हेमाद्रिधृतवृद्धवसिष्ठवचनमपि वृद्धव्यवहारसाक्षिकशक्तिज्ञापकमेव न तु तादृशविशिष्टोच्चारणस्य यागदानादावङ्गताबोधकम्, अदृष्टान्तरकल्पनापत्तेरित्यपि ध्येयम् ।

अपि च धृतिहोमास्तावत् गोभिलगृह्यसूत्रे विवाहप्रकरणे 'उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोति अष्टाविह धृतिरिति'। (गोः गृ. २-४-९) गोनामभिर्होमोऽपि तत्रैव आश्वयुजीयकर्मणि श्रूयते 'गोनामभिश्च पृथक्काम्यासी'ति (गो गृ-३-४-३) एतेषु धृतिहोमेषु त्यागकाले चतुर्थ्यन्तदेवतावाचकपदप्रयोगस्य होमपदार्थान्तर्गतत्वेन प्राप्तस्य "धृतिहोमे न प्रयुञ्ज्यात् गोनामसु तथाष्टसु" इति शूलपाणिधृतच्छन्दोगपरिशिष्टवचनेन निषेधकरणमेव अन्यत्र तदावश्यकत्वं गमयति । न च च्छन्दोगपरिशिष्टभाष्यकारैः भाराादित्यप्रभृतिभिस्तथाऽऽश्वलायनसूत्रभाष्यकारेण तथा वृत्तिकृता नारायणेन च यथाम्नातेषु स्वाहान्तेषु मन्त्रेषु धृत्यै स्वाहेत्येव चतुर्थीनिषेधकत्वेनैतस्य व्याख्यानान्न प्रधानशरीरान्तर्गतदेवतावाचकपदोत्तरं चतुर्थीनिषेधकत्वं येन तत्प्रयोगस्य अन्यत्रावश्यकत्वं ज्ञाप्येतेति वाच्यम् ; तथात्वे विनापि वचनं 'चित्तञ्च स्वाहा' 'आकूतं च स्वाहे''त्यादिमन्त्राणामिव यथापाठं चतुर्थीं विनैव प्रयोगोपपत्तौ वचनवैयर्थ्यापत्तेः । अतस्त्यागकालीनचतुर्थ्यन्तपदप्रयोगनिषेधकत्वमेव तस्य युक्तमित्यन्यत्र तच्छक्तिनिर्णये भवत्येव तत्प्रमाणं तद्वचनमिति । अतश्च अग्नये इत्येतन्मात्रोच्चारणकालीनस्य 'इदं न मम' त्युच्चारणपूर्वकद्रव्यत्यागस्यैव यजिपदार्थत्वेन विधिना विधानात् केवलमग्नये इति चतुर्थीप्रकृतिकत्वेनाग्निशब्दमुच्चार्य द्रव्यत्यागानुष्ठाने शास्त्रार्थत्वेन ज्ञापिते अग्निशब्दस्य स्वोच्चारणकालवृत्तित्वसम्बन्धेन द्रव्यत्यागे वैशिष्ट्यं प्रतीयते । यैरप्यर्थस्य देवतात्वं वक्तव्यं तैरपि तस्य शब्दोच्चारणद्वारैव द्रव्यत्यागे वैशिष्ट्यं स्वीकर्तव्यम्। तत्र स्वार्थप्रतिपादकशब्दोच्चारकालवृत्तित्वरूपसम्बन्धापेक्षया स्वोच्चारणकालवृत्तित्वरूपसम्बन्धस्य लघुत्वात् । द्रव्यत्यागकालीनचतुर्थ्यन्तपदोच्चारणकर्मीभूतपदप्रतिपाद्यत्वरूपदेवतात्वकल्पनापेक्षया तादृशोच्चारणकर्मत्वस्यैव तस्य लघुत्वाच्च विहिताग्न्यादिशब्दवृत्त्येव देवतात्वं कल्पयितुं युक्तम्; नत्वर्थवृत्त्यपि तस्याविहितत्वात्। तावत्पर्यन्तदेवतात्वकल्पने प्रमाणाभावाच्च । अत एव प्राकृतस्य गुणस्य श्रुतावित्यधिकरणे (१०–४–६) भाष्यकारेणोक्तम्–'देवताशब्दस्य हविषश्च सम्बन्धः साक्षादुच्यते' इति । विधिशब्दस्य मन्त्रत्वे (१०–४–३) इत्यधिकरणे मिश्रैरप्युक्तम् 'सर्वत्र देवताविधौ शब्द एव विधीयते नार्थ' इति। न चाविहिता देवता भवति अतिप्रसङ्गादिति । न देवताग्निशब्दक्रियमित्यधिकरणेऽप्युक्तं मिश्रैः–

यावदर्थं विहिता सा देवतेति। एवञ्चाभिधेयस्यार्थस्य देवतात्वानवबोधाच्चतुर्थीप्रकृतिभूताग्निरि त्यानुपूर्वीविशिष्टवर्णानामेव देवतात्वे विध्यवगते आग्नेय इति तद्धिते अग्नय इति चतुर्थीस्थलेऽपि पूर्वोक्तलवुभूतदेवतात्वरूपप्रधानभूतप्रत्ययार्थानुरोधेनाग्न्यादिप्रकृतिपदेन लक्षणयाऽग्निरित्यानु-पूर्वीविशिष्टवर्णानामेव देवतात्वमुच्यते अर्थस्य देवतात्वव्यवहारस्तु शब्दद्वारौपचारिक एव। अग्निरित्यानुपूर्व्याश्चतुर्थीप्रकृतिभूताया एव देवतोद्देशपदार्थे निवेशात् अग्नय इत्यादि चतुर्थ्यन्त-शब्दस्य द्रव्यत्यागे वैशिष्ट्येऽपि न तदानुपूर्व्या देवतात्वमिति ध्येयम्।

यत्त्वत्र शब्ददेवतात्वपक्षे चतुर्थ्यन्तत्वेन त्यागकालोच्चार्यत्वरूपदेवतात्वसम्भवेऽपि भाट्टालङ्कारकारणामापादनम्—तथाहि शब्दस्य देवतात्वे सौर्यादिविधिगतेष्वावाहनादिषु निगमेषु[1] प्राकृतदेवतापदस्थानेऽवश्यकर्तव्ये वैकृतदेवताभूतशब्दप्रकाशकप्रक्षेपे 'स्वाधत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे इति न्यायात् सूर्यशब्दायेत्येवोहः प्रसज्येत न सूर्यायेति। ननु दशमे तथोत्तरस्यां ततौ तत्प्रकृतित्वादित्यधिकरणे सौर्याङ्गभूतेषु निगमेषु सूर्यदेवताप्रकाश-नायानियतशब्दोच्चारणं पूर्वपक्षीकृत्य न सौर्यविधिना त्यागवेलायामेव सूर्यशब्दो नियम्यते। किन्तु कृत्स्नप्रयोगे यावत्सु प्रदेशेषु देवतावाचिशब्दोच्चारणमपेक्ष्यते तत्र सर्वत्रापि युगपदेकसूर्य-शब्दोच्चारणं नियम्यते। कारकाणां भावनान्वयनियमेन देवतात्मककारकविशेषात्मनः शब्दस्यापि भावनान्वयनियमात्, विततभावनाया एव प्रयोगत्वादिति सिद्धान्तितम्। ततश्च कालादिवत् प्रयोगानुबन्ध्यङ्गत्वं यद्यपि देवताया नास्ति तथापि त्यागे निगमेषु च शब्दैक्यनियमात् त्यागवेलायामप्रयुक्तस्य शब्दशब्दशिरस्कसूर्यशब्दस्यादित्यादिशब्दानामिव न निगमेषु प्रयोगाप-त्तिरिति चेन्मैवम्।

यद्यपि सर्वत्र सूर्यशब्दनियमेन तत्पर्याया निवर्तन्ते तथापि नास्यैकरूप्यमपि नियम-गोचरः। नहि त्यागवेलायां चतुर्थ्यन्तोऽसौ प्रयुक्त इति निगमेष्वपि तथैव निगम्यते। अतो यथैव तत्तन्निगमकार्यभूतवाक्यार्थप्रतीत्यानुगुण्येन सूर्यशब्दस्यैव द्वितीयान्तषष्ठ्यन्तरूपेण प्रयोगः सम्भवति तथैव यागीयदेवताभूतशब्दप्रकाशनात्मककार्यानुरोधेन [शब्द] शब्दशिरस्कस्यैव तस्य प्रयोगः सिध्येदिति।

तदयुक्तम्। यागशरीरान्तर्गतचतुर्थीप्रकृतिशब्दोच्चारणरूपदेवतोद्देशपदार्थे उच्चार-णीयप्रकृतिविशेषापेक्षया विधानार्थं प्रवृत्तेन सौर्यमिति पदेन सूर्येत्यानुपूर्वीमात्रस्यैव त्यागकाले नियमनात्, तेनैव निगमेष्वपि तावन्मात्रनियमस्य भवद्भिरप्यवश्यवक्तव्यत्वात्, अप्राकृत-

1. A. निगदेषु

कार्यकारित्वापत्तेश्च शब्दशब्दशिरस्कसूर्यशब्दोहानुपपत्तेः। यथैव ह्यर्थस्य देवतात्वेऽपि तस्य सूर्यशब्दप्रतिपाद्यत्वेऽपि न सूर्यशब्दप्रतिपाद्यायेत्यादिजातीयः त्यागकाले प्रयोगः तदर्थप्रतिपादकत्वेन सूर्ये त्यानुपूर्वीमात्रविशिष्टवर्णानामेवोच्चार्यत्वतियमात्। एवं ममापि तदुपपत्तिः सुलभैवेति न शब्ददेवतात्वपक्षे काचनानुपपत्तिरिति।

ननु 'अग्नये' 'आग्नेयम्' इत्यादौ प्रथमतः शक्तिजन्यार्थोपस्थित्याऽर्थगतदेवतात्वप्रतीतौ लक्षणाभावकृते लाघवे बुद्धे अर्थघटितस्य देवतात्वस्य द्रव्यत्यागघटकसम्बन्धस्य चोत्तरकालिकस्य गुरुभूतस्यापि कल्पनेऽपि न दोष इति चेन्न। देवतावाचकाग्नयादिपदार्थाकाङ्क्षया भावनायां अग्न्यादिपदार्थानन्वयात्। नह्यग्न्यादिपदार्थानां भावनान्वये साकाङ्क्षत्वं देवतावाचकपदोच्चारणकालीनद्रव्यत्यागकरणकभावनाया यथैव करणाकाङ्क्षया द्रव्यादीनां त्यागद्वारा तत्रैवान्वयः तथैवोच्चारणद्वाराऽपेक्ष्यमाणः शब्द एव देवतावाचकोऽन्वेतुं युक्तो न त्वर्थो बाधात्। अतश्च प्रधानान्वयानुरोधेनाकाङ्क्षाक्रमेणान्वयक्रमेऽर्थवाचकस्याप्यग्न्यादिशब्दस्य शब्दपरत्वं यल्लक्षणयाऽऽश्रयणीयं तदेव फलमुखं गौरवं न दोषावहम्।

अस्तु वा कारकाकाङ्क्षयापि भावनान्वयः तथापि अग्न्यादिवृत्तिदेवतात्वस्य यागादिधात्वर्थद्वारैवान्वयस्य वक्तव्यत्वात् तत्र देवतोच्चारणपूर्वकद्रव्यत्यागे धात्वर्थेऽर्थस्य कथमप्यन्वयासम्भवे शब्दद्वारैवान्वयस्य त्वयापि वक्तव्यत्वेन शब्दलक्षणायां न किञ्चिद्बाधकम्। अत एव हविस्त्यागकालीनचतुर्थ्यन्तत्वेनोच्चारणकर्मत्वेन विहितत्वसमनियतं देवतात्वमखण्डोपाधिरूपं शब्दवृत्त्यपि [1] शक्यत एव निरूपयितुम्। धृत्यादिहोमेष्वपि धृत्यादौ त्यागकालीनोच्चारणकर्मत्वाभावेऽपि तत्कर्मत्वेन विहितत्वं निषिद्धत्वेऽपि नैव विहन्यते। सम्प्रदानादिवारणाय हविः पदं। गवादेर्द्रव्यत्वेऽपि हविष्ट्वाभावात्। अस्तु वा धृत्यादिसाधारणं हविस्त्यागकालीनोच्चारणकर्मत्वव्यापकमेव देवतात्वमखण्डम्। न तु तद्व्याप्यम्। अत एव यदा देवतात्वं सखण्डं तदापि अग्नयेजुहोतीत्यादौ [2]लक्षिताग्निशब्दवृत्त्युच्चारणकर्मत्वस्यैव स्वसमानकालीनद्रव्यत्यागकरणकत्वसम्बन्धेन भावनान्वये समानसंवित्सम्वेद्यतयैवोच्चारणे हविस्त्यागकालीनत्वबोधसिद्धावप्यन्यलभ्यत्वेन न तदंशे[3] चतुर्थ्यादेः शक्तिर्लक्षणा वा। अपि तूच्चारणकर्मत्वमात्रे एव। अनयैव च रीत्या यज्यादीनामपि द्रव्यत्यागमात्र एव शक्तिः न तु देवतोद्देशपूर्वकत्वेऽपि। विशिष्टविधिफलीभूतार्थमादायैव च तत्तद्विशिष्टरूपेऽर्थे तद्धितस्य यज्यादेश्च शक्त्यादिव्यवहारः।

1. A. तत्त्वं निषिद्धत्वेऽपि
2. B. आकाङ्क्षित
3. A. ऽपि

यदाप्यखण्ड देवतात्वं तदापि तस्य स्वाश्रयोच्चारणकालीनत्वादिपूर्वोक्तसम्बन्धेन भावनान्वयात् देवतात्वे सखण्डदेवतात्वसमनियतत्वस्य द्रव्यत्यागे च देवतोद्देशपूर्वकत्वस्य लाभो नासुलभः। उभयथाप्यग्न्यादिशब्दानां विशिष्टविधिनैव विधानात् विशिष्टविध्यर्थानुष्ठानस्य यजमानकर्तृकस्याग्नये इदं न ममेत्युच्चारणपूर्वकतदाकारमानसज्ञानेनैव सम्पादनीयस्य विधिगत-शब्दं विनाऽसिद्धेः त्यागकाले तच्छब्दनियमः सिद्ध्यति। तव तु अग्न्यादिरूपार्थवृत्त्युद्देश्य-त्वनिरूपकत्वस्य यागे बोधेऽप्यग्निशब्दोच्चारणस्य यागविधायकविधिना अबोधनात् विशिष्टभावना-विधायकत्वेन चरितार्थस्य ब्राह्मणस्य पुनस्त्यागकाले विधिगतशब्दनियमनांशेऽपि व्यापारकल्पनम-त्यन्तगौरवावहम्।

यद्यपि च देवतावाचकस्य चतुर्थीप्रकृतित्वेन शब्दस्योच्चारणमात्रं यागशरीरप्रविष्टमिति केवलमग्निरित्यानुपूर्वीविशिष्टशब्दमात्रं देवता, न तु चतुर्थ्यन्तं[1] विशिष्टं पदमित्युक्तम्। तथा च चतुर्थ्यां विकल्पितं रूपद्वयमस्ति। तत्र विधिगतं यादृशं रूपं तस्यैव त्यागकाले उच्चारण-नियमानापत्तिः। ततश्च 'मौद्रं चरुं निर्वपेच्छ्रियै श्रीकामः'। मरुद्भ्यः स्वतवद्भ्यः सप्त-कपालम्' इति विहितयागयोः श्रियै इति स्वतवद्भ्य इति शब्दोच्चारणेनेव श्रिये इति स्वत-वद्भ्य इति शब्दोच्चारणेनापि देवतोद्देशसिद्ध्यापत्तिः **तथापि** श्रीस्वतवत्प्रकृतिपदाभ्यामुपरि प्रयोक्तुं युक्तं चतुर्थीगतं रूपद्वयम्; तत्र किमुच्चारणीयमिति सन्देहे विकृतौ प्रकृतिदृष्टत्वस्येव विधिदृष्टचतुर्थीरूपस्यापि युक्तमेवोच्चारणनियामकत्वमिति न तदंशेऽपि विधिव्यापारः कल्पनीयो गौरवात्। अत एव मन्त्रवर्णकल्प्यदेवतावाचिपदे सम्भवद्विकल्पितचतुर्थीरूपद्वयप्रकृतित्वं, तत्र त्यागे अन्यतरप्रयोगेऽपि न बाधकम्। नियामकान्तराभावात्। अत एवाग्नेयमित्यादिदेवता-तद्धितस्थले अग्निर्देवता अस्येति विग्रहादग्निशब्दमात्रस्यैव देवतात्वं प्रतीयते। तत्र यद्यग्नय इति चतुर्थीविशिष्टानुपूर्व्या देवतात्वं तदा स्वार्थवाचकत्वरूपशक्यसम्बन्धेनार्थपरस्य अग्निपदस्य लक्षणया तद्वाचकशब्दपरत्वेऽपि तदुत्तरचतुर्थ्यन्तपर्यन्तलक्षणायां शक्यसम्बन्धाभावेन कथञ्चि-त्सम्बन्धकल्पने निषिद्धलक्षणात्वापत्तिरतो देवतात्वाश्रयप्रकृतिमात्रम्, तदुत्तरचतुर्थीप्रयोगः त्याग-काले यजिपदार्थान्तर्गतत्वेन विधिविहितत्वादनुष्ठेयः।

अत एव तद्धितेन देवताविधानात् तत्पूर्वं विहितत्वघटितं नावगतमिति कथं तेन विहितत्वघटितं देवतात्वमभिधीयतामित्याशङ्कानिरासायैव तत्र हविस्त्यागकालीनोच्चारणकर्मत्वेन विहितत्वसमनियतं तद्व्यापकं वा वस्तुगत्या देवतात्वमखण्डोपाधिरूपमेव पूज्यपादैः प्रदर्शितमेव प्रागुपपादितम्।

1 A. न्तपदविशिष्टं

एतेन यदत्र भाट्टालङ्कारकृता विधिशब्दस्य मन्त्रत्वे (१०–४–२३) इत्यधिकरणे मिश्रैः शब्दनियमप्रदर्शनावसरे चतुर्थ्यन्तमग्निशब्दमुच्चार्येति विहायाग्नय इति शब्दमुच्चार्य हविस्त्यजेदिति वाक्यार्थप्रदर्शनात् योग्यताबलाद्यादृशशब्दोच्चारणं द्रव्यत्यागे योग्यतयान्वेति तादृशस्यैव देवतात्वं युक्तमिति अग्नये इत्यानुपूर्व्या एव शब्ददेवतात्ववादिना देवतात्वस्य वक्तव्यत्वात् यथैव चतुर्थ्यन्तस्य तद्धितार्थान्वयाय तद्धितप्रकृत्या स्वार्थवाचकत्वमव्याप्यवर्तिनमपि सम्बन्धं निमित्तीकृत्य अग्नय इति शब्दो लक्षयितव्यः। तद्वदाग्नेयं चतुर्धा करोतीति आग्नेयपदे अग्निशब्दलक्षणावत् अग्नीषोमीयशब्देन्द्राग्नशब्दयोरपि लक्षणायां बाधकाभावात् अग्नीषोमीयपुरोडाशेऽपि शब्ददेवतात्वमते चतुर्धाकरणापत्तिरित्युक्तं परास्तम्। अपि चार्थदेवतात्वपक्षेप्यर्थस्य शब्दद्वारेण कर्मणि समवायो, द्रव्यस्य तु तत्र स्वरूपेण समवाय इति मीमांसकमर्यादयैवाग्नेयं पय इति विहिताग्नेयपयोद्रव्यके यागे देवतासामान्याद्बलीयसा द्रव्यसादृश्यबलेन सान्नाय्यस्यातिदेश इति साधितमष्टमे 'विप्रतिपत्तौ हविषा नियम्येतेत्यधिकरणे (८–१–३२)। शब्दद्वारेणार्थस्य कर्मणि समवाये च स्ववाचकशब्दस्यैव योग्यताबलात् द्वारत्वेऽपि तदुत्तरं चतुर्थीप्रयोगः स किं 'इदं न ममे'त्युच्चार्यमाणपदार्थान्वययोग्यतया, उत यजिपदस्य मदुक्तप्रकारेण चतुर्थीविशिष्टानुपूर्व्यां शक्तिबलाद्वा? नाद्यः, अग्न्यर्थमग्नेरित्येवमाकारस्य पदस्य योग्यतरस्य स्वाधीने शब्दप्रयोगे इति न्यायेनोच्चारणापत्तेः। प्रकृतिविकृतिभाव एव तादर्थ्यचतुर्थीविधानेन तादृशप्रयोगस्यैवायोग्यत्वाच्च। ददातिधातुयोगाभावे सम्प्रदानचतुर्थ्या अप्रसक्तेश्च। दादत्यतिरिक्तक्रियान्तरसमभिव्याहाराभावेनाग्नये जुहोतीतिवत् लक्षणयापि सम्प्रदानत्वार्थकचतुर्थ्यनुपपत्तेश्च। अतो यजिशक्त्यैव चतुर्थीप्रयोगे विद्यमानेऽपि यथा न चतुर्थीसहितस्य देवतावाचकत्वं, अक्लृप्ततद्वाचकत्वकल्पने गौरवात्, किन्तु चतुर्थीप्रकृतिभूतस्यैव; एवं देवतात्वमपि लाघवाद्यस्तद्वाचकः शब्दः तस्यैव कल्प्यते। अत एव चतुर्थीविशिष्टतद्वाचकपदोच्चारण एव शक्तिर्न त्वग्नय इत्याकारकानुपूर्वीविशिष्टे। तथात्वे चतुर्थ्यन्तप्रयोगस्य तत्तदादेशद्विवचनबहुवचनभेदभिन्नत्वेन तत्तदाकारकशक्तिकल्पने अनन्तशक्तिकल्पनापत्तेः। अत आग्नेयमित्यादितद्धिते अग्निशब्दमात्रलक्षणात् तद्देवत्यपुरोडाश एव चतुर्धाकरणं नान्यत्र। अग्नय इति शब्दमुच्चार्य हविस्त्यजेदिति मिश्रलिखनं वन्हय इत्याकारकोच्चारणापादनखण्डनमात्रपरम्। न त्वग्निशब्दस्य देवतात्वाभावप्रदर्शनपूर्वकं चतुर्थीसहिततादृशानुपूर्व्या देवतात्वप्रदर्शनपरमिति न बाधकम्। न च शब्दस्य देवतात्वे तस्यापि स्वरूपेणैव द्रव्यस्येवान्वयात् कथं दौर्बल्यम्, येनाग्नेये पयसि आग्नेयविध्यन्तो न भवेदिति केषाञ्चिदापादनं युक्तमिति वाच्यम्। अर्थस्य शब्दद्वारेणान्वयवादिमतेऽपि उच्चारणद्वारकृतान्वयप्रतीतिगतं विलम्बमवलम्ब्यैव द्रव्यापेक्षया दौर्बल्यस्य वक्तव्यत्वात् तादृशविलम्बितप्रतीतिकान्वयस्य द्रव्यापेक्षया शब्दे ममापि वक्तुं शक्यत्वात्। अत एव यजिपद-

शक्त्यन्तर्गतश्चतुर्थीप्रकृतिको देवतावाचकः शब्दः तदुच्चारणं यागविधिना विहितम्। तत्राग्नि-शब्दस्याग्निरूपार्थविवक्षया प्रातिपदिकसञ्ज्ञया चतुर्थीप्रकृतित्वयोग्यतायामपि इदंशब्दसमभिव्याहार-मात्रेणोपपदविभक्तित्वेनापि चतुर्थीविधानं यद्यपि स्पष्टं नोपलभ्यते, तथापि सूर्यायेत्याद्यूहस्य वेदापेक्षितत्वेन वैदिकत्ववत् त्यागकालीनचतुर्थ्यन्तप्रयोगस्यापि यजेतेत्यादिविध्यपेक्षितत्वेन वैदिकत्वात् छन्दसि बहुलमित्याद्यनुशासनेनैव स्वामित्वरूपसम्बन्धविशेषार्थिका चतुर्थी विधीयते। तत्रार्थगतैकत्वबहुत्वविवक्षया एकवचनादिप्रयोगः न तु शब्दरूपदेवतागतैकत्वादिविवक्षया। इतः पूर्वं शब्दगतदेवतात्वानवगमेन तदनुरोधेनार्थवाचकस्यात्रत्याग्निशब्दस्य शब्दपरत्वे लक्षणायां प्रमाणाभावात्। ततश्च द्रव्यत्यागकाले अग्नय इदं न ममेत्युच्चार्यमाणाद्वाक्यात् अग्निरूपार्थ—स्वामिकमिदं नममेत्यर्थादर्थगतस्वामित्वावगमेऽपि पूर्वोक्तरीत्या लाघवाच्छब्दगतमेव देवतात्वं कल्प्यते अर्थदेवतात्वव्यवहारः स्वामित्वाश्रयव्यवहारश्च शब्दरूपदेवतावाच्यत्वादौपचारिक इति दर्शयिष्यते **पूज्यपादैः** मेधपतिभ्यामिति मन्त्रस्योहानूहविचारे नियमोवेत्यधिकरणे (९–३–४१.)। तमिममौपचारिकं व्यवहारमादायैव "देवस्वं न गृह्णीयादि"त्यादिव्यवहाराः। एतदर्थमेव शब्ददेवतात्ववादिना अर्थोऽपि प्रातिपदिकानुरोधात् स्वीकृत इति सिद्धम्। अत एव 'मारुतं सप्तकपाल'मित्यादौ 'मरुतो यस्य हि क्षये' इत्यादिमन्त्रवर्णात् बहूनां मरुतां देवतात्वप्रतीतेः मरुतः देवता अस्येति विग्रहेऽपि मरुत्प्रातिपदिकबहुवचनाभ्यां लक्षणयैकमरुच्छब्दगतदेवतात्व-प्रतिपादनेन तस्यैकत्वेऽपि त्यागकाले मरुद्भ्य इति चतुर्थीप्रयोगे नैव किञ्चिद्बाधकम्। एव-मग्नीषोमादिद्विदैवत्ययागेष्वप्यग्नीषोमाभ्यामिदं न ममेति त्यागोपपादनं द्रष्टव्यम्।

अस्तु वा त्यागवचनान्तर्गताग्न्यादिपदानामपि शब्दपरत्वम्, द्विदेवत्ये इव शब्दद्वयसत्त्वा-द्विवचनप्रयोगः। मरुद्भ्य इत्यत्राप्यनेकार्थाभिधायकत्वुप्तानेकशब्दलक्षणाद्बहुवचनप्रयोगः। देवतायां स्वामित्वञ्च देवतात्वाश्रयत्वमेव। द्रव्ये च स्वत्वं तादृशाश्रयतासमानाधिकरणदेवतात्व-निरूपकत्वम्। एतादृशस्वस्वामिभावसम्बन्धमादायैव देवस्वादिव्यवहार इत्यपि सुवचम्। एतादृशविषये च मरुदादिशब्दस्य देवताभूतस्यैकत्वेऽपि अनेकार्थप्रदिपादकशब्ददेवत्यत्वेनानेक-देवत्यत्वम्। अग्नये पवमानायेत्यादौ च एकार्थप्रतिपादकशब्ददैवत्यत्वेनैकदेवत्यत्वमिति तत्तद्यागे व्यवहारोपपत्तिरप्युपपादयितुं सुलभैव।

**एतेन** अग्नये पवमानायेत्यादौ अनेकशब्दोपात्तैकदेवत्ये यागे आग्नेयविध्यन्तः। मारुतं सप्तकपालमित्यादौ चैकशब्दोपात्तानेकदैवत्ये कर्मणि ऐन्द्राग्नादेरिति सकलमीमांसक-याज्ञिकप्रसिद्धा व्यवस्था शब्ददेवतात्ववादे विपरीता स्यादित्यापादनं भाट्टालङ्कारोक्तमपास्तम्। अनभिमतार्थानां केवलशब्ददेवतात्ववादिनां तदापत्तावपि अर्थाङ्गीकारेण शब्दमात्रदेवतावादि-

मते ऽदनापत्तेः। अत एव शब्दारौपचारिकोऽर्थनिष्ठो द्रव्यनिरूपितः स्वामित्वसम्बन्धस्त्याग-वचने यत्राबाधितः तत्कर्मणि मनुष्यादेरधिकारसम्भवेऽपीन्द्रादिदेवतानामिन्द्रशब्दोच्चारणेन याग-निर्वृत्तिसिद्धावपि इन्द्रायेदं न ममेति त्यागवचनार्थस्य बाधान्नाधिकारः कर्मणीति ध्येयम्। एतदभिप्रायकमेव देवतान्तराभावादनधिकार इति षष्ठाधिकरणे भाष्यकारादीनां वचनम्। यद्यप्य'ग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिनक्षत्रेष्टिवाक्यशेषेषु 'प्रजापतिः प्रजा असृजते' त्याद्युपक्रम्य 'स एतं प्रजापतये रोहिण्यै चरुं निर्वपेदि'त्येवंरूपेषु देवानामपि कर्माधिकारः प्रतीयते। तथाप्यर्थवादगतत्वान्न विधितात्पर्यक इत्युभयमतेऽपि समानम्। इत-रथा स्वस्मै स्वकर्तृकद्रव्यत्यागासम्भवेन प्रजापत्यादिशब्दानामेव तव मते देवतात्वापत्तेः। अतो युक्तमेव शब्दस्य देवतात्वम्।

**यदपि** भाट्टालङ्कारकृता शब्ददेवतात्वे दूषणान्तरमुक्तम्—उपांशुयागसमिदादियागेषु सर्वत्र मन्त्रवर्णाद्देवतालाभ इति तत्तदधिकरणेषु प्रतिपादितं शब्ददेवतात्वपक्षे न युज्यते। यदि ह्याग्ने-यादियागेष्विवोपांशुयागादिविधिबलात् शब्दस्यैव देवतात्वमवधारितं स्यात् ततोऽवधारितदेवता-प्रकाशनं विना मन्त्राणामङ्गत्वानुपपत्तेः मन्त्रगतेन्द्रविष्ण्वादिसमिदादिशब्दैः लक्षणया देवताभूत-शब्दप्रकाशनं स्यात्। यदि चोत्तमप्रयाजयाज्यामन्त्रे सूक्तवाके चाग्नेयादियागान्तरीय-देवताप्रकाशनार्थत्वमहिम्नाऽग्न्यादिशब्दानां लक्षणया शब्दपरत्वनिर्णयवदुपांशुयागादिमन्त्रेषु विष्ण्वादिशब्दानां शब्दपरत्वनिर्णयः स्यात् तत उत्तमप्रयाजप्रस्तरप्रहरणयोरिवोपांशुयागादिष्वपि शब्दानां देवतात्वमाक्षिप्योपांशुयागादिदेवताभूतशब्दप्रकाशनार्थास्तत्तन्मन्त्रा भवेयुः। न चान्यतरदप्येतत् सिद्धमस्ति। अतो न शब्दस्य देवतात्वमिति।

तदपि शिथिलम्। यतः आग्नेयादिष्वपि न प्रथमत एव आग्नेयपदे शब्दलक्षणया देवताऽवधा-र्यते; अनुपपत्तिप्रसङ्गाभावेन लक्षणायां प्रमाणाभावात्। अपि तु यजिशक्तिमहिम्ना शब्दस्योच्चारण-कर्मत्वेन देवतात्वेऽवधृते 'स शब्दविशेषः क' इत्यपेक्षयाऽन्वीयमानतद्धितान्तपदोपस्थाप्याग्न्या-दिपदार्थानां योग्यतया शब्दपरत्वमेवेति इहापि यजिपदमहिम्ना शब्ददेवतात्वावगत्यनुरोधेन शब्दविशेषापेक्षया क्रमपठितैः लिङ्गविनियुक्तैः तत्र मन्त्रैः यदर्थप्रकाशनं तद्वाचकः समिदादि-शब्द इत्येव मन्त्रवर्णकल्प्यश्रुत्या देवताविधानं सुलभमेव। नच प्रयोगकाले मन्त्रवर्णात्पूर्वं शब्दस्य देवतात्वेनाननुभूतस्य कथं स्मरणं मन्त्रैः कर्तव्यमिति वाच्यम्। यजिपदशक्त्यन्त-र्गतत्वेन सामान्यतः पदार्थोपस्थितिविधयाऽनुभूतैः अर्थदेवतात्वपक्षेऽपि अवश्यवक्तव्यायामपि वक्तुं शक्यत्वात्। अत एव यजिपदशक्त्या शब्ददेवतात्वेऽवधृते 'इन्द्रमावह' इत्यादि-

मन्त्रगतेन्द्रादिशब्दानामर्थपराणामपि यागाङ्गदेवताप्रकाशनानुरोधेन शब्दपरत्वं आवाहनकर्मत्वं चाहार्यमेव स्वीक्रियते

अथवा 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना—इति दाशमिकाधिकरणपूज्यपाददर्शितरीत्या शब्दवत् अर्थस्यापि तत्प्रतिपाद्यत्वसम्बन्धेन यागाङ्गत्वात् तस्यैव शक्त्या इन्द्रादिपदे तत्स्मरणोपपत्तेः लक्षणा नाङ्गीक्रियते चेदपि न बाधकं; अर्थदेवतात्वपक्षेऽपि इन्द्रादीनामावाहनेन आगमनस्य प्रत्यक्षबाधितत्वेन आहार्यस्यैवाङ्गीकार्यत्वात्। यत्रापि'सौर्यं चरु' मित्यादौ सूर्यरूपार्थदेवताद्रव्यसम्बन्धप्रतीतिः तत्राप्यर्थेन सह द्रव्यस्य सम्बन्धः तादृशार्थप्रतिपादकशब्दोच्चारणकालीनतदीयत्यागं विनाऽनुपपन्नः सन् तद्रूपयागस्वरूपं निर्वपतिना लक्षयित्वा पश्चात् लाघवसहकृततर्केण शब्दस्य देवतात्वे ऽवधृते शब्दद्वारा औपचारिक एवेति न किञ्चिद्बाधकम्।

एतेन शब्दस्य देवतात्वे 'स्रुवेण पार्वणौ जुहोति' इति विहितहोमयोरमावास्यापौर्णमासीसमुदायद्वयदेवताकत्वेन तत्संस्कारयोः विकृतौ संस्कार्याभावान्नातिदेशः इति नवमाधिकरणसिद्धान्तानुपपत्तिः; अर्थस्य देवतात्वाभावेन पर्वशब्दमन्त्रोच्चारणेन प्रकृताविव विकृतावपि तदतिदेशोपपत्तेरिति भाट्टालङ्कारोक्तं दूषणमपास्तम्। 'अमावास्याया इदं पूर्णमास्यै इदं' इति त्यागीयप्रयोगकाले तत्तदर्थस्वामित्वसम्बन्धप्रतीतेरपि पूर्वोक्तयुक्तिभिः प्रतिपादितत्वात्। तादृशप्रयोगेण समुदायस्मरणस्यापि सम्भवेन समुदायसंस्कारकत्वेन क्लृप्तयोः विकृतौ तत्तदर्थाभावे तादृशत्यागादिप्रतिपादकशब्दप्रयोगम्यासम्भवेन तदनापत्तेः

वस्तुतस्तु अर्थस्य देवतात्वेऽपि पार्वणहोमयोर्विकृतावतिदेशापत्तेर्दुर्निवारत्वस्य तदधिकरणे पूज्यपादैर्वक्ष्यमाणत्वात् यथैव रीत्या तव मते तयोरनतिदेशः तथैव रीत्या ममापि तदनतिदेशः सूपपाद एवेति न काप्यनुपपत्तिः। यदपि भाट्टलङ्कारकृता शब्ददेवतात्वपक्षे आपादितं—सर्वत्र तद्धितचतुर्थ्योः मन्त्रापेक्षया प्राबल्यं वदद्भिरपि मीमांसकैः तद्धितचतुर्थीभ्यां देवतात्वे समर्पितस्य गुणस्य मन्त्रसमर्पितगुण्यपेक्षितदेवतात्वं स्वीक्रियते। अत एव 'पत्नीवतं ग्रहं गृह्णाति' इति विहिते ग्रहे तद्धितोपात्तपत्नीवन्मात्रदेवताकेऽपि 'अग्ना ३ इ पत्नीवन् सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा' इति मन्त्रवर्णात् अग्नेर्विशेष्यभूतस्य गुणिनः सङ्कीर्तनात पत्नीवदग्नेर्देवतात्वमङ्गीकृत्य 'इन्द्रपीतस्य' इति मन्त्रस्य पत्नीवदग्निपीतस्येत्यूहेन प्रयोगः कर्तव्यः। तत्र यद्यपि मन्त्रवर्णे त्वष्टुः साहित्यदर्शनेऽपि देवतात्वाभावान्न त्वष्टुरप्यूह इत्युक्तं तृतीयद्वितीयपादे कृत्वाचिन्ताविचारे।

तथाचार्थस्य देवतात्वपक्षे गुणस्य गुणिनं प्रति नित्यसापेक्षत्वात् पत्नीवत्त्वरूपगुणविशिष्टाग्नेरेव देवतात्वात् त्वष्टुश्च गुणित्वाभावान्न देवतात्वमिति सम्भवत्यूहविचारः। पत्नीवच्छब्द-

मात्रस्य देवतात्वे तु नायं विचारः सङ्गच्छते; गुणस्य गुणिनं प्रति नित्यसापेक्षत्वमादायैव चतुर्थ्युपात्तदेवताके 'शेषात् स्विष्टकृते समवद्यती'ति वचनविहिते स्विष्टकृद्यागे स्विष्टकृद्गुण-विशिष्टस्याग्नेर्देवतात्वमङ्गीक्रियते, न स्विष्टकृन्मात्रस्य। अत एव 'अग्नीवरुणौ स्विष्टकृतौ यजति" इत्यावभृथिकवचनविहितयोः अग्निवरुणयोः स्विष्टकृद्गुणविशिष्टयोः देवतात्वम्, स्विष्टकृद्गुण-विशिष्टाग्नेः प्रकृतौ देवतात्वदर्शनात्, नतु स्विष्टकृन्मात्रस्थानापत्त्येति सिद्धान्तितं दशमे। अत एव यत्र गुणिनो गुणं प्रति न नित्यसापेक्षत्वं तत्र तद्धितचतुर्थीभ्यां देवतात्वेन समर्पितस्य गुणिनो न मन्त्रसमर्पितगुणापेक्षं देवतात्वमित्युररीकृत्यैव सौर्याङ्गभूतनिर्वापमन्त्रे सूर्यायेत्येव प्रयोगः; न तु 'उदुत्यं जातवेदस'मिति मन्त्रार्थजातवेदसूर्यायेति प्रयोगो याज्ञिकानाम्। अतश्चैतादृश-व्यवहारबलादर्थस्यैव देवतात्वं न शब्दस्येति।

अत्रेदं विभावनीयम्। यदि पत्नीवस्विष्टकृच्छब्दौ अग्नौ योगरूढौ तदा कमलपदा-समभिव्याहृतादपि पङ्कजपदात् कमलविशेष्यकबोधवत् अग्निपदनिरपेक्षाभ्यामपि ताभ्यामग्निबोधो-पपत्तेः न तयोर्गुणवाचकत्वेन गुण्यपेक्षोपपद्यते। यदा तु पत्नीवच्छब्दस्य त्वाष्ट्रं पात्नीवत-मालभेतेत्यादौ त्वष्ट्रादिपदसमभिव्याहारदर्शनान्नाग्नावेव योगरूढत्वम्। किन्तु यौगिकत्वम्। तावताप्यर्थस्य देवतात्वपक्षेऽपि 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायन् वषट्करोति' इति वचन-विहितध्यानानुरोधेन विशेष्यरूपार्थविशेषापेक्षायां मन्त्रवर्णप्रकाशितस्याग्नेः समर्पणेऽपि केवलपत्नीव-त्पदादुत्पन्नेन तद्धितेनाग्निरूपार्थपर्यन्तदेवतात्वकल्पने मानाभाव एव। नहि मूर्खानयनव्यावृत्तये प्रयुज्यमानं पण्डितमानयेति वचने पण्डितपदं नित्यसापेक्षम्। पण्डितसामान्यविशेष्यकबोध-जननेनैव निराकाङ्क्षत्वात्। इतरथा पत्नीवदग्नय इति त्यागानुष्ठानापत्तेः। किञ्चानया रीत्या त्वाष्ट्रं पात्नीवतं अग्नये पवमानायेत्यादौ पत्नीवत्पवमाननिष्ठदेवतात्वबोधनेनापि मन्त्रवर्णबोधित-तत्तद्विशेष्यवृत्तिदेवतात्वोपपत्त्या त्वष्ट्रग्न्यादिपदानां तद्धितचतुर्थ्यन्तानां वैयर्थ्यापत्तिः। अत एव तादृशविषये भिन्नभिन्नचतुर्थीतद्धितलभ्यं देवतात्वं, परं भिन्नभिन्नमेव। अधिष्ठानन्त्वेकमेवे-त्येतदर्थं पृथक्पदप्रयोग इति दर्शयिष्यते पूज्यपादैरेतत्तृतीयपादान्त्याधिकरणे।

अपिच यथैव गुणस्य गुणिनं प्रति नित्यसापेक्षत्वात्तावत्पर्यन्तदेवतात्वा[1]कल्पने न निराकाङ्क्षत्वम्, एवमवयवानां हनूदन्तलोमादीनामप्यवयविनं प्रति नित्यसापेक्षत्वात्तावत्पर्यन्त-देवत्व[ा]कल्पने निराकाङ्क्षत्वानापत्तिः। अतो यावतः प्रातिपदिकादुत्पन्नस्य प्रत्ययस्य तावन्मात्रप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमानुरोधेन पत्नीवन्मात्रदेवतावरुद्धे यागे नैराकाङ्क्ष्याम्न

1. A reads त्वकल्पने निर

मन्त्रवर्णबोधितोऽग्न्यादिः देवतात्वेनान्वेतीति । पत्नीवन्मात्रदेवताकत्वेनैव चमकानुवाके 'पात्नीवतश्च मे' इति निर्देशदर्शनात् । भक्षमन्त्रेऽपीन्द्रपीतस्येतिवत् पत्नीवत्पीतस्येत्येव न्यायागत ऊहः प्राप्नोति, तथापि स्वाधीने शब्दप्रयोग इति न्यायेनोहितप्रयोगस्य स्वाधीनत्वात् निस्सन्दिग्ध एव प्रयोग उचितः कर्तुमित्यभिप्रायेणैव पत्नीवदग्निपीतस्येत्यूहप्रयोगे व्यवस्थिते अर्थदेवतात्वाभिप्रायेण वास्तवं सोमपानं पत्नीवतोऽभिप्रेत्य त्वष्टुरपि पानसद्भावस्य मन्त्रवर्णे प्रतीतेरूहप्रयोगे उल्लेख इति पूर्वपक्षोत्तरमर्थस्य देवतात्वेऽपि त्वष्टुः साहित्येऽपि पानासम्भवात् देवताभावान्नोल्लेखः ।

वस्तुतस्तु देवतायाः शब्दरूपत्वात् वास्तवपानस्याभावेऽसम्भवे सुतरां त्वष्टुर्न सम्भवतीति क्वोल्लेखप्रसक्तिरित्येवंरूपेण तदधिकरणसिद्धान्तस्य शब्ददेवतात्वपक्षेऽपि सूपपादत्वमेवेति न कापि क्षतिः । स्पष्टमेवार्थदेवतात्वाभिप्रायेण पूर्वपक्षसिद्धान्तरचनायां शब्ददेवतात्वात् वास्तवं पानं न सम्भवतीत्येव मुख्या युक्तिः । त्वष्टुः साहित्येऽपि "सहैव दशभिः पुत्रैः" इतिवत् क्रियासम्बन्धाभावेऽपि तदुपपत्तिरिति त्वभ्युच्चययुक्तिः, पत्नीवत एव केवलं देवतात्वमित्येतत्त्रितयमपि तदधिकरणे शास्त्रदीपिकालिखनात् स्पष्टं प्रतीयते ।

तदधिकरणे ह्ययं सिद्धान्तग्रन्थः शब्दतस्तावदग्नेरेव पानं गम्यते त्वष्टुःसहभावमात्रम् । न च सहभावस्तत्क्रियासम्बन्धाव्यभिचारि, विनापि दर्शनात् 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'ति । यद्यपि च पानं स्यात् तथापि देवतात्वमप्रमाणकम् । नहि देवता पिबति । उद्देशलक्षणत्वात्तस्याः । विस्पष्टश्च चोदनायां तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं गम्यमानं न मान्त्रवर्णिक्या देवतया बाधविकल्पसमुच्चयान् सहते । अतो नोपलक्षणीयस्त्वष्टेति" ।

एवं स्विष्टकृच्छब्दस्य यद्यपि दाशमिकरीत्या नाम्नो रूढत्वं, किन्तु यौगिकत्वम्, तथापि स्विष्टकृद्गुणविशिष्टस्याग्निरूपस्य विशेष्यभूतस्य गुणिनोऽपेक्षितत्वेऽपि यत्तस्य देवतात्वं तत्त्वमते स्विष्टकृत्पदेनैव प्रतिपाद्यत इति वक्तव्यम्; तच्छक्त्या लक्षणया वा? उभयथापि भवदुपपादितपत्नीवदग्निपीतस्येत्यूहप्रयोगस्येव स्विष्टकृदग्नय इति प्रयोगस्य त्यागवेलायामनुष्ठानापत्तिः । यदि तु येयजामहेऽग्निं स्विष्टकृतं' 'अग्नेः स्विष्टकृतोऽहम्' इत्यादिषु विशेष्यास्याग्नेः प्रथमं निर्देशात् अग्निवाचकपदस्य प्रथमं प्रयोगः, तदा अग्ना ३ इ पत्नीवन्निति मन्त्रेऽप्यग्नेः प्रथमनिर्देशात् 'अग्निपत्नीवत्पीतस्ये'त्येव प्रयोगापत्तिः । यदि तु तद्धितेन पत्नीवतो देवतात्वावगमोत्तरं तदाकाङ्क्षया कल्प्यमानस्याग्नेः पाश्चात्यमेव देवतात्वावधारणमिति तत्क्रमेणैव देवतावाचकपदप्रयोगः, तदा स्विष्टकृत्यपि समानमेतत् । अतःस्विष्टकृत्पदस्य यौगिकत्वेऽपि वस्तुगत्या यःस्विष्टकृद्गुणवान् स

देवतेति क्वचिदग्निपदसामानाधिकरण्यात् स्विष्टकृच्छब्दमात्राभिलप्यत्वेनाग्नेः 'शेषात् स्विष्टकृते समवद्यती'ति वचनेन देवतात्वाविधानेऽपि 'अग्नीवरुणौ स्विष्टकृतौ यजती'ति वचनेन यः स्विष्टकृद्गुणवत्त्वेनाग्निरूपां देवतां यजति तामग्नीवरुणौ यजतीत्यग्निस्थान एवाग्नीवरुणयोः विधानात् स्विष्टकृद्गुणवत्त्वबाधे प्रमाणाभावात्, सस्विष्टकृच्छब्दयोरग्नीवरुणयोर्निगमेषु प्रयोग इति दाशमिकाधिकरणसिद्धान्तस्यार्थदेवतात्वपक्षे सूपपादत्वेऽपि अग्निपदाभिलप्यत्वेनाग्नेः प्रकृतौ त्यागादिपूच्चारणे प्रमाणं गवेषणीयमेव। स्विष्टकृत इति नैरपेक्ष्येण चतुर्थीश्रवणात्। यदा तु अग्निं स्विष्टकृतं यजतीति भाष्यकारलिखितवचनात् तृतीयानुयाजे स्विष्टकृतोऽग्नेश्च पृथग्देवतात्ववत् 'यदग्नये स्विष्टकृते समवद्यती'ति तैत्तिरीयशाखास्थवचनात् भिन्नविभक्तिकपदद्वयप्रतिपाद्यत्वप्रतीतेरग्निपदाभिलप्यत्वेनैवाग्नेः पृथक्देवतात्वम्। तद्वाचकपदप्राथम्यादेव तद्वाचकपदस्य प्रथमं प्रयोगः। तदा गुण्यपेक्षितदेवतात्वं चतुर्थ्या समर्प्यत इत्येतदभिधानं भवदीयमसङ्गतमेव। नचैवं स्विष्टकृद्यागेऽग्नेरपि विधिशब्दविधेयत्वे विधिनिगमभेदात् प्रकृतौ, तत्प्रकृतित्वाद्विकृतावपि भेदः स्यादिति दाशमिकाधिकरणस्था "उच्यते। स्विष्टकृद्विकारो हि वनस्पतिः स्विष्टकृति च विधिशब्दादन्येन प्रकाशनं कृतं प्रकृतौ, विकृतौ च चोदकेन तथैव प्राप्नोती"ति कथं तन्त्ररत्नकृदुक्तिः सङ्गच्छते। ये दैव्या ऋत्विजः स्तेभिरग्ने' इत्यादिनिगमेषु अग्निशब्देन प्रकाशनस्य विधिशब्दादन्येनासम्भवादिति वाच्यम्; तत्राग्निस्विष्टकृद्रूपविधिशब्दापेक्षया केवलाग्निपदेन प्रकाशनस्यान्यपदेन विवक्षणात्। अत एव तदधिकरणे स्पष्टं शास्त्रदीपिकायां तथा स्विष्टकृच्छब्दको विधिरग्निं स्विष्टकृतं यजतीति, निगमस्तु अस्विष्टकृच्छब्दकः—'ये दैव्या ऋत्विजस्तेभिरग्ने' इत्यादी"ति ग्रन्थेनाग्निस्विष्टकृद्देवतावाचकपदद्वयविधायकविधिप्रदर्शनपूर्वकं निगमेषु अस्विष्टकृच्छब्दरूपकेवलाग्निप्रदर्शनेन विधिनिगमभेदो दर्शितः। तस्मादग्नेः स्विष्टकृतो देवतात्वं वाचनिकमेव युक्तम्।

वस्तुतस्तु स्विष्टकृत्पदस्य रूढत्वेन अर्थस्य देवतात्वेऽपि स्विष्टकृत्पदस्य स्विष्टकृत्कार्ये लक्षणायामपि स्विष्टकृद्रूपार्थस्य कार्यान्वयः शब्दद्वार एव विहित इति स्विष्टकृच्छब्दकार्यमेव लक्षयित्वा पूर्वपक्षः कर्तव्यः। सिद्धान्तोऽपि स्विष्टकृत्पदस्य यौगिकत्वेन कार्यलक्षणायाश्च मानाभावात् स्विष्टकृद्गुणवतोऽग्नेः प्रकृतौ देवतात्वेन तद्वाचकपदद्वयप्रयोगवदिहापि स्विष्टकृद्गुणकयोरग्नीवरुणयोर्देवतात्वात् तद्वाचकपदद्वयप्रयोगोऽपि कर्तव्य एवेत्येवं कर्तव्यः। न ह्येवंविधपूर्वपक्षसिद्धान्तरचना शब्ददेवतात्वपक्षे कथमप्यसमञ्जसेति शक्यते वक्तुम्। अतो गुणस्य गुणिनं प्रति नित्यसापेक्षत्वेन गुणिवाचकपदात् तद्धितचतुर्थ्यभावेऽपि केवलं मन्त्रवर्णदर्शनमात्रेण देवतात्वकल्पनम्, गुणिनश्च गुणं प्रति नित्यसापेक्षत्वाभावात् तद्धितचतुर्थ्युपात्तदेवताकल्पनं

मन्त्रवर्णदृष्टगुणयोगमात्रेण। गुणसापेक्षं देवतात्वमिति नैव कल्पना युक्ता। किन्तु यत्र यावतोऽर्थस्य देवतात्वं प्रतीतं तावन्मात्रान्वयेनैव देवताकाङ्क्षाशान्तेर्नेतरस्य तत्कल्पनं प्रमाणवत् इत्येव साधु। **अतो युक्तमेव शब्दस्य देवतात्वम्**

प्रत्युतार्थस्य देवातात्वे पशौ वनस्पतिं यजतीति विहितयागे स्विष्टकृद्यागविकारे वनस्पते र्विशेष्यनूतार्थस्य अपूर्वस्य प्राकृताग्निरूपविशेष्यस्थानापन्नत्वस्यैवापत्तेः स्विष्टकृद्गुणस्थानापत्त्यभावेन तद्बाधे प्रमाणाभावात् स्विष्टकृद्वनस्पतेर्देवतात्वापत्तिः। शब्ददेवतात्वे तु प्रकृतौ अग्निशब्दस्विष्टकृच्छब्दयोः समुच्चयेनैकयागार्थत्वेऽपि प्राकृतशब्दद्वयरूपदेवतास्थानेऽपूर्वस्य वनस्पतिशब्दस्य देवतात्वेन विधानात् स्विष्टकृच्छब्दलोपो युक्तः। एवमर्थदेवतात्वपक्षे [यत्र ?] अर्थस्य देवतात्वेनान्वितस्यैकस्याग्नये पावकायेत्येवं पर्यायद्वयेन विधानं, तत्र त्यागादिषु अन्यतरशब्दोच्चारणस्यैवापत्तेः पर्यायद्वयप्रयोगानापत्तिरिति स्पष्टमेव दूषणमुक्तं शास्त्रदीपिकायां 'विधिशब्दस्य मन्त्रत्वे भावः स्याच्चोदने'ति दशमाधिकरणे।

अत एव तदधिकरणे एतद्दोषापत्तिभियैवाग्नेयोऽष्टाकपाल इत्यत्र प्रथममर्थस्य देवतात्वं पश्चाच्च शब्दोच्चारणं विधीयत इति हविषा अर्थेन प्रथमतः सम्बन्ध इति मतं निराकृतं तत्रैव। तन्त्ररत्नवार्तिकयोरपि स्पष्टमेव शब्दस्य देवतात्वप्रसाधनपूर्वकमेव त्यागनिगमादिषु विधिगतशब्दनियमसिद्धान्तोपपादनं शब्ददेवतात्वपक्षे लाघवोपष्टंभकं दृश्यते।

तथाहि—"सिद्धान्तस्तु—अग्निशब्द एवाष्टाकपालेन सम्बध्यमानोऽर्थाद्देवतात्वं प्रतिपादयति अर्थस्य। यथा वैष्णवीमृचमनुब्रूयादिति विहिता सती ऋगुच्यमाना अविवक्षितमप्यर्थं प्रतिपादयति। न चैतावता स विवक्षितो भवन्पृथगर्थः कार्यः; योगेन स्वाभाव्यात्तु प्रतीयते केवलम्। एवमिहाप्यग्न्यर्थो न कार्ययोगेन विवक्षितः। शब्द एव तु कार्येण हविस्त्यागेन सम्बध्यते। अपि च योऽप्यर्थमष्टाकपालेन सम्बन्धयितुमिच्छति तस्याप्युत्तरकालमवश्यं वाचिका श्रुतिरुच्चारयितव्या। तद्द्वारेण हि देवता क्रियया सह सम्बध्यते न स्वरूपेण। तत्र द्वे कल्पने प्राप्नुतः, प्रथममर्थस्य देवतात्वं पश्चाच्च शब्दोच्चारणं विधीयत इति शास्त्रेणैवार्थद्वयं श्रुत्यर्थाभ्यां बोधयितव्यमिति। यस्य पुनरग्निश्रुतिरेवाष्टाकपालेन सम्बध्यते तदुच्चारणमेव केवलं विधीयते अग्नय इत्युच्चार्याष्टकपालं त्यजेदिति तस्याग्न्यर्थो देवतेत्ययं यथाप्राप्तानुवाद एव न तु श्रुत्या वा अर्थाद्वा विधीयत इति लाघवम्।

"नन्वर्थस्य देवतात्वं शब्दतः प्रतीयमानमुत्सृज्याप्रतिपन्नस्य शब्दोच्चारणस्य चोदनार्थता न युक्ता वक्तुमत आह—यथा पूतीकानभिषुणुयादिति योगार्थोलभ्यते—अस्यार्थः। अत्र हि

श्रूयमाणेऽप्यभिषवे तदन्यथानुपपत्तिकल्पितं यागसाधनत्वमेव पूतीकानां विधीयते। तद्विधौ चाभिषवोऽनुवादः। अभिषवविधौ हि तदन्यथानुपपत्त्या यागोऽप्यत्रैव विधेयः स्यात्; अङ्गेन प्रधानस्यानाक्षेपात्। अतश्च विध्यायासः स्यात्। यागसाधनत्वविधौ तु तत्संस्कारोऽभिषवः प्राप्त एवेति नास्य विधेरायासः। तेन यथाऽत्र लाघवलिप्सया आर्थिकमपि यागसाधनत्वमेव विधीयते तथेहापि अभ्यर्थस्यैव देवतात्वे शब्दाभिहितेऽप्यर्थानुपपत्तिबलसिद्धं शब्दोच्चारणमेव विधीयते। तद्विधौ च स्वार्थमनुवदति—अभिधानस्य चार्थनिष्ठत्वान्न तद्धितानुपपत्त्यादिदोषापत्ति"रिति। अतश्च शब्दस्यैव विहितत्वाद्धविस्त्यागकालीनचतुर्थीप्रकृतिशब्दोच्चारणकर्मत्वस्य तत्समनियताखण्डोपाधिरूपस्य वा देवतात्वस्यापि तद्वृत्तित्वकल्पने बाधकाभावात् तद्द्वारा तदर्थे देवतात्वस्यार्थसिद्धत्वेनौपचारिकत्वकल्पनेनाप्युपपत्तेरविधेयत्वेन च लाघवाच्छब्दस्यैव युक्तं देवतात्वम्।

अत एव देवातात्वस्य गुरुभूतस्य कल्पनापत्तिभियैव शुद्धस्यार्थस्य देवतात्वं, तच्च त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वम्। तच्चाग्नये पावकायेत्यादावेकस्मिन्नेवार्थे तत्तच्छब्दघटितं देवतात्वद्वयम्। तच्चैकवाक्योपादानात् समुच्चितम्। तेन न तत्रैकपदोच्चारणापत्तिरिति। तथा शब्दविशिष्टार्थ एव प्रातिपदिकलक्षणया तस्यैव निरुक्तदेवतात्वेनान्वय इति न्यायसुधाकृत्स्वारस्यञ्च निराकरिष्यते पूज्यपादैः विधिशब्दस्येत्यधिकरणे।

एतेन देवतोद्देशेन द्रव्यत्यागरूपे यागे विधिना विधेये देवतोद्देशपदार्थनिर्णयवेलायां योग्यतया देवतावाचकपदोच्चारणरूपत्वावसायात् शब्ददेवतात्वावगतेः पूर्वमर्थनिष्ठदेवतात्वस्यैवावगतस्य बाधे प्रमाणाभावात् किमित्यनावश्यकशब्दनिष्ठदेवतात्वकल्पनमित्यपास्तम्। आवश्यकत्वेन विधिविधेयशब्दरूपदेवतापदवाच्यत्वेन भाविसंज्ञामादाय व्यवहारस्य त्वयाप्यकामेन वक्तव्यत्वात्। नहि त्यागघटितं देवतात्वं त्यागपदार्थज्ञानात्पूर्वं सिद्धमस्ति, येन ततः पूर्वमपि अर्थगतदेवतात्वमवगतं भवेत्। अतो यत्त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वेन यस्य देवतात्वमग्रे सम्भावितं तद्दशदेवतावाचकशब्दोच्चारणस्यैव देवतोद्देशपदार्थत्वमुभयमतेऽपि स्वीकार्यमिति नैतावता अर्थनिष्ठदेवतात्वस्यैव प्रागवगतिः सम्भावयितुं शक्यत इति।

वस्तुतस्तु देवतावाचकशब्दोच्चारणस्यैव देवतोद्देशपदार्थत्वे प्रमाणाभावात् देवतारूपशब्दोच्चारणस्यैव पूर्वलिखितवार्तिकतन्त्ररत्नस्वारस्याद्वृद्धव्यवहाराच्च देवतोद्देशपदार्थत्वं युक्तं कल्पयितुम्। यथा च यजेतेति विधिना कञ्चिद्देवतारूपं शब्दमुच्चार्य हविस्त्यजेदिति विहिते कोऽसौ देवतारूपः शब्द? इत्यपेक्षायां यच्छब्दप्रतिपाद्यार्थस्य चतुर्थीतद्धितादिभिर्देवतात्वं

प्रतिपाद्यते, अथवा यच्छब्दाद्देवतावाचकं तद्धितचतुर्थ्यादि श्रूयते सः अग्न्यादिशब्द इत्यन्वयाकाङ्क्षयाऽग्न्यादिपदेषु शब्दलक्षणया विधीयत इति शब्दगतदेवतात्वावगतिरर्थदेवतात्वावगतेः प्रागपि सूपपादैवेति न काचनानुपपत्तिः ।

एतेन यागादिविधिना चतुर्थ्यन्तं कञ्चिच्छब्दमुच्चार्य हविस्त्यजेदिति ज्ञाते कोऽसौ शब्द इत्याकाङ्क्षायां यदर्थस्य देवतात्वं निर्णीतं स शब्दो विधेयतया निर्णीत इति प्रथममर्थविशेषस्य देवतात्वनिर्णयेन भवितव्यमिति भाट्टालङ्कारोक्तमपास्तम् ।

यदपि भाट्टालङ्कारकृता शब्दस्य देवतात्वे दूषणद्वयमुक्तं वाक्यशेषादिना भिन्नार्थत्वेनावगताभ्यां भिन्नविभक्त्यन्ताभ्यां शब्दाभ्यां प्राप्तकर्मानुवादेन देवतासमर्पणे वाक्यभेद इति मीमांसकाः; यथाहुः—

अनेकपदसम्बद्धं यद्येकमपि कारकम् ।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते ॥ (तं. वा २-२-५)

इति । अत एव यदग्नये च प्रजापतये इत्यस्य तत्प्रख्यशास्त्रत्वं नेच्छन्ति मिश्राः । एकार्थत्वेन प्रसिद्धाभ्यां शब्दाभ्यां प्राप्तकर्मानुवादेन तत्समर्पणे न वाक्यभेद इत्यपि मीमांसकानां प्रसिद्धिः । अत एवाभ्युदयेष्टिवाक्ये प्रकृतयागानुवादेना'ग्नये दात्रे' इति देवताविधौ नासावित्युक्तं षष्ठे (६–५–१) । अर्थानपेक्षशब्दमात्रस्य देवतात्वे भिन्नविभक्त्यन्तयोश्शब्दयोः विधेयत्वे तुल्ये कथमेषा व्यवस्था सिद्ध्यतीति तथा नवम एव तृतीयपादे अध्रिगुप्रैषे 'उपनयत मेध्या दुरः आशासाना मेधपतिभ्यां मेधम्' इति शाखाभेदेन द्विवचनैकवचनान्तपाठेन पठितयोः प्रकृतावग्नीषोमीये पशौ अग्नीषोमाधिष्ठानस्य द्वित्वात् तद्वृत्तिदेवतात्वस्य व्यासक्तस्यैकत्वाच्चाविकारेणैव प्रयुक्तयोः "एतान्पशूनादित्येभ्यः कामायालभत" इति विहितेष्वनेकदेवत्येषु पशुष्वतिदेशेन प्राप्तयोरधिष्ठानबहुत्वात् द्विवन्निगदस्योहेन प्रवृत्तिः तद्वदेकवन्निगदस्यापि बहुष्वेकवचनस्यासामर्थ्यात् ऊह इति पूर्वपक्षीकृत्य प्रकृतिवद्देवतात्वस्य व्यासक्तस्यैकत्वादनूह इति नियमो वा बहुदेवते विकारः स्यात् । विकल्पो वा प्रकृतिवदिति पूर्वोत्तरसूत्रद्वयेन (९-३-४२) सिद्धान्तितम् । नहि शब्दस्य देवतात्वे प्रकृतावग्निरिति सोम इति शब्दद्वयरूपाधिष्ठानभेदे सत्यपि निर्दिष्टविकृतावादित्यशब्दस्यैव देवतात्वाधिष्ठानत्वात् द्विवन्निगदस्योहेन प्रवृत्तिर्युज्यते । अतो न शब्दस्य देवतत्वं युक्तमिति ।

अत्रेदं विवेचनीयम् । तत्र मेधपतिभ्यामिति मन्त्रस्य बहुदेवत्येषूहोपपादनं शब्ददेवतात्वपक्षेऽपि परम्परया अर्थरूपाधिष्ठानाभिप्रायेण युज्यत एवेति तावत्तदधिकरणे आशङ्कोत्तर-

त्वेनोपपादयिष्यत एव पूज्यपादैरिति नात्र यतितव्यमिति। अभ्युदयेष्टिवाक्येऽपि अर्थस्य देवतात्वपक्षेऽपि पौर्णमास्यधिकरणस्थकौस्तुभदर्शितरीत्या वाक्यभेदो भवन्मते दुरुद्धर एव। तथाहि—यत्र विशिष्टभावनाविधानं तत्रानेकविशेषणविशिष्टभावनारूपैकार्थ एव तात्पर्यादेकविधायकत्वस्वाभाव्यभङ्गाभावान्न वाक्यभेदः। यत्र तु भावनायाः प्राप्तत्वेनाविधानं तत्रानेकेषां कारकाणां भावनान्वयिस्वभावानां परस्परान्वयस्याव्युत्पन्नत्वेन विशिष्टरूपेण विधानाशक्तेः प्रतिकारकं विध्यावृत्तिलक्षणवाक्यभेदो भवत्येवेति मीमांसकमर्यादयैव तत्तदधिकरणेषु पूर्वोत्तरपक्षोपपादनं दृश्यत एव, तत्र दात्रादिपदानां यौगिकानां श्रुत्यैवाग्न्यादिवाचित्वस्य सामानाधिकरण्यादेव सिद्धत्वात् परमत इव विशेषणविभक्तेः साधुत्वार्थकत्वमङ्गीकृत्य द्वयोः पदार्थयोरभेदेनान्वयाङ्गीकारेण विशिष्टस्यैकस्यैवाग्निरूपकारकस्य विधानान्न वाक्यभेद इत्युच्यते, तदा स्तोत्रानुवादेन पञ्चदशान्याज्यानीत्यत्रापि पञ्चदशपदस्यापि यौगिकत्वात् सङ्ख्याविशिष्टाज्यविधानापत्त्या वाक्यभेदानापत्तिः। ततश्च चित्राधिकरणे पञ्चदशान्याज्यानीत्यत्रापि च समासाभावान्न सङ्ख्याविशिष्टद्रव्यप्रतिपत्तिरस्ति। तत्रोभयोर्द्रव्यसङ्ख्ययोर्विधानात् वाक्यभेद इत्यादि वाक्यभेदप्रदर्शनपरोक्तिः कथं पार्थसारथिप्रभृतीनां सङ्गच्छते। अतः समासाभावे यौगिकपदार्थस्याऽपरनामार्थेऽभेदेनान्वयस्य मीमांसकमतेऽव्युत्पन्नत्वात् वाक्यभेदापेक्षया लक्षणाया लघुत्वात्, तन्त्ररत्नाद्युपपादितरीत्या यौगिककृदन्तानां सन्निहितद्रव्यवाचकत्वाद्वा पदद्वये एकस्मिन्नेव वा पदे इतरपदतात्पर्यग्राहत्वाङ्गीकारेण लक्षणयैव विशिष्टविधानाङ्गीकारेण वाक्यभेदः परिहर्तव्यः। तत्र सामानाधिकरण्यात्, तल्लक्षणया वा दातृत्वगुणविशिष्टाग्निरूपैकार्थस्य प्रत्यक्षविधिना विधानेऽपि तद्वाचकत्वस्योभयपदव्यासक्तत्वात् त्यागकाले विधिगतशब्दनियमापेक्षया आर्थिकविधिना उभयशब्दोच्चारणं विधीयते तथैव ममापि विशिष्टार्थपरस्य पदद्वयस्य स्ववाचकत्वसम्बन्धेनोभयपदानुपूर्वीलक्षकत्वात् लक्षितार्थस्य पदद्वयानुपूर्वीरूपस्यैकत्वात् तस्य विधेयत्वे क्व वाक्यभेदप्रसक्तिः।

अत एव पार्थसारथिना अभ्युदयेष्ट्यधिकरणे 'नचानेकार्थविधानं दातृशिपिविष्टादिपदानां यौगिकानां श्रुत्यैवाग्निपदसामानाधिकरण्यात्। पदद्वयप्रतिपादितं विशिष्टदेवताकारकमेकेन विधिना शक्यं विधातुमि'त्याशङ्कोत्तरग्रन्थेन विशिष्टैककारकवाचकता पदद्वये स्पष्टं प्रतिपादिता। 'यदग्नये च प्रजापतये च' त्यत्र तु विशिष्टकारकैक्याभावेन भिन्नार्थत्वात् तद्वाचकतायाश्च प्रत्येकपर्याप्तत्वेन स्ववाचकत्वसम्बन्धेन शब्दलक्षणायां पृथक् पृथक् शब्दलक्षणया भिन्नभिन्नलक्ष्यार्थविधानात् स्फुट एव वाक्यभेदः। अत एव चित्राधिकरणे तेनैव 'नचैककारकविधानादवाक्यभेदः विभक्तिपृथक्त्वेन कारकनानात्वादित्याशङ्कोत्तरग्रन्थेन भिन्नार्थस्थले विशेषण-

विभक्तित्वाभावेन साधुत्वार्थकत्वकल्पनायोगात्। कारकविभक्तित्वेन पृथक् कारकप्रतीत्या तद्वाचकता प्रत्येकपदपर्याप्ता दर्शिता।

वस्तुतस्तु यद्यपि प्राचां मते टाबन्तारुणाशब्दस्यापि आकृत्यधिकरणन्यायेन गुणवचनत्वेऽपि तस्यैव करणत्वोपपत्तेः टाबर्थस्त्रीत्वस्यापि सामानाधिकरण्यसम्बन्धेन गुण एवान्वयोपपत्तेः तदर्थमपि द्रव्यलक्षणाक्षेपाद्यनङ्गीकारात् एकहायनीपिङ्गाक्षीशब्दवत् बहुव्रीहिसमासाभावेन यौगिकत्वाभावे द्रव्यवाचकत्वावश्यंभावनियमानपेक्षणात् तस्य च साक्षात् क्रयरूपकरणावरुद्धायां भावनाया-मन्वयासम्भवे ततः प्रच्युतस्य क्रयरूपे धात्वर्थेऽपि कारकत्वात्तदनुपपत्तेः तदन्यथानुपपत्त्या मत्वर्थलक्षणामाश्रित्य धात्वर्थेऽन्वयः स्वीक्रियतां नाम। परन्तु पिङ्गाक्ष्यैकहायनीशब्दयोरपि दात्रादिपदानामिव यौगिकत्वविशेषे केन वा विशेषेण तदर्थयोरध्याहृतगोपदार्थे, अथवा परस्परमेवाभेदेनान्वयो न स्वीक्रियते। किन्तु मत्वर्थलक्षणया क्रय एव, दात्रादिपदानान्तु भावनान्वययोग्यानामपि तदन्वयमुपेक्ष्य परस्परान्वयोऽङ्गीक्रियते। तत्र बीजं न विद्मः एककार्यकारण-भावकल्पनालाघवस्याविशेषेण विशेषणविभक्तेर्निरर्थकत्वकल्पनाभावस्य चोभयत्र तुल्यत्वात्। नहि एककर्मत्वभङ्गभिया कर्मद्वयस्यैकपदोपात्तत्वप्रत्यासत्त्या करणावरुद्धायां करणान्तरस्येव वा द्वयो-र्देवताकारकयोर्युगपदन्वये किञ्चिद्बाधकमस्ति। एकतरस्य पूर्वमन्वयाभावेनैकतरेणावद्धत्वाभावात्। येषामपि मते 'सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे (ब्र.सू १–२–१) ब्रह्मणः सर्वशब्दवाच्यत्व-मुपपादयितुं श्रीकण्ठाचार्यभाष्ये नीलादिशब्दानां गुणविशिष्टवाचकत्वं दृष्टान्ततयोपात्तं व्यवस्था-पयितुं नक्षत्रवादावल्युक्तदिशा गुणवचनानां गुण इव गुणिन्यपि शक्तिरेव। नीलं रूपमितिवत् नीलो घट इति प्रतीत्या नीलत्वादिजातेर्नीलशब्दप्रवृत्तिनिमित्तभूतायाः साक्षात् परम्परया वा उभयत्र स्वीकारात्। तत्रारुणयेत्यत्रारुणापदे गुणगुणिनोरुपादाने तुल्ये पिङ्गाक्ष्यादिपद-समभिव्याहारप्रतीतद्रव्यपरसामानाधिकरण्याबाधेन गुणिपरत्वेनान्वयेऽपि विशेष्यगोगतकरणत्वप्राप्ता-वपि लोहितोष्णीषा ऋत्विज इतिवत् विशेषणसङ्क्रान्तकरणत्वविधायकतया साधुत्वार्थकल्पना-प्रसक्तेर्न किञ्चिद्बाधकमित्यङ्गीकारः तेषां तु मीमांसकैकदेशिनां सुतरां दात्रादिपदार्थवत् अरुणा-पदार्थस्यापि परस्परमभेदान्वयापत्तिर्दुरुद्धरैव। पूज्यपादैस्तु यद्द्रव्यपरैकहायनीपिङ्गाक्षीपद-सामानाधिकरण्यादरुणापदस्य गुणिपरत्वाश्रयणं तयोरेवाकृत्यधिकरणन्यायेनारुणापदस्यैव वा एक-हायनपिङ्गाक्षरूपगुणपरत्वमस्तु समासानुशासनस्य मतुब्लोपानुशासनस्येवोपपादयितुं शक्यत्वात्। अतः सर्वत्रैव गुणस्यैव करणत्वमित्युपपादितं अरुणाधिकरणे (पू.मी ३–१–६) तावतापि दात्रा-दिपदानामपि तेनैव न्यायेन दातृत्वादिरूपगुणपरत्वेऽपि तस्यैवार्थदेवतात्वपक्षे शब्दलक्षणया साक्षादेव वा तेनैव न्यायेन भावनायामेवान्वयः समान एव, न तु परस्परमभेदेनेति स्फुटमेव।

यत्तु भाट्टभास्करे एकहायन्यादिपदानामेकहायनादिसम्बन्धवद्द्रव्यादिपरत्वे सम्बन्धस्य सम्बन्धिज्ञानपूर्वकत्वात् प्रथमावगतसम्बन्धिरूपद्रव्यशक्त्यैव निर्वाहे आकृत्यधिकरणन्यायाविषयत्वात् अरुणापदवैलक्षण्यान्न विशेषणीभूतसम्बन्धवाच्यत्वमिति द्रव्यपरत्वमेव समर्थितम्। तत् सम्बन्धस्यापि शब्दवाच्यत्वमभिप्रेत्यैव। वस्तुतस्तु संसर्गसम्बन्धस्य संसर्गविधया भानस्यारुणापदेऽप्यवश्याङ्गीकार्यत्वे तस्य वाच्यत्वकल्पने प्रमाणाभावात् अरुणापदवदाकृत्यधिकरणन्यायविषयतायास्तुल्यत्वात् एकहायनादिरूपगुणपरत्वं युक्तमेवेति नैव किञ्चिद्वैलक्षण्यमित्यवधेयम्। अत एव सर्वथाप्यरुणादिपदोत्तरविभक्तिभिः शब्दान्तरन्यायेन प्रकृत्यर्थभेदेन भिन्नभिन्नकरणत्वप्रतीतिवत् अग्नये दात इत्यादावपि तत्तत्प्रकृतिपदोत्तरविभक्त्या देवतात्वभेदप्रतीतेः प्राप्तभावनानुवादेनानेकदेवताविधाने दुरुद्धरवाक्यभेदापत्तिभियैव पूज्यपादैः तदधिकरणे विशिष्टभावनान्तरविधिपक्ष एव सर्वदोषपरिहारेणाश्रितः। एवं स्थिते यच्चित्राधिकरणे अग्नये शुचय इत्यत्र द्वयोः पदयोर्विशेषणविशेष्यभावाभावे सत्युभयोः प्रत्येकमन्वयात् प्रत्येकदेवतात्वापत्तेः देवतात्वरूपगुणभेदेनादृष्टार्थतापादककर्मान्तरत्वप्रसङ्गात् एकक्रियावशीकारावसायात् तदन्यथानुपपत्त्या विशेषणविशेष्यभावावगतेः एकमेव देवतात्वमित्युक्तं न्यायसुधाकृता तदपास्तम्। अनेककारकाणां प्रत्येकमन्वयस्यैकवाक्योपादानेन समुच्चयापादकतया अदृष्टकल्पनापादककर्मान्तरत्वानापादकत्ववत् देवताकारकद्वयस्यापि प्रत्येकमन्वये तदनापादकत्वस्य तुल्यत्वेन बाधकाभावात्। अत एव पार्थसारथिना त्वाष्ट्रं पात्नीवतमित्यादौ देवतावाचितद्धितभेदात् देवतात्वभेदप्रतीतेः भिन्नमेव देवतात्वमिति 'पात्नीवते तु पूर्ववत्वादवच्छेदः' इति द्वितीयतृतीयपादे सिद्धान्तमुक्त्वा 'न च प्रत्येकमपि देवतात्वे विकल्प' इत्याशङ्का 'युगपदेकेन वाक्येन विधानादि'ति परिहृता। 'यदग्नये च प्रजापतये चे'त्यादौ देवतात्वभेदस्तु तवापि सम्मतः। इयांस्तु विशेषः, भिन्नार्थत्वेन यत्र पार्ष्ठिकोऽपि नाभेदान्वयः सम्भवति तत्र देवतात्वाधिष्ठानस्यापि भेदः। यत्र तु स सम्भवति तत्राधिष्ठानैक्येऽपि देवतात्वभेदस्तु नापह्नोतुं शक्यः।

यत्त्वत्रैतादृशे विषये गुणप्रमाणकृतभेदनिरूपणप्रस्तावे अभ्युदयेष्टेः कर्मान्तरत्वाभावसाधनाय[1] देवताद्वयविधाननिमित्तवाक्यभेदोद्धरणं भाट्टालङ्कारकृतम्—यद्यपि चा'ग्नये दात्र' इत्यत्र चतुर्थ्यौ भिन्नौ वर्तेते तथापि न ते तद्धितवत् देवतात्वं शक्त्या वदतः। लक्षणया तु तत्प्रतिपाद्यत्वेन कल्प्यमानं देवतात्वं समानाधिकरणप्रकृतिद्वयोक्ताभिन्नार्थान्वयानुरोधेनाभिन्नमेव कल्प्यत इति न तद्भेदनिमित्तो दोषः। त्वाष्ट्रं पात्नीवतमित्यत्र तु तद्धिताभ्यां श्रुत्यैव देवतात्वाभिधानान्न तावत् देवतात्वस्य कल्पनं; येन लाघवादभिन्नं कल्प्येत। न च प्रकृत्यर्थभेदप्रतीत्य-

1. A. adds. सम्भावना

नुरोधात् अभिन्नदेवताकारकाभिधायित्वं तद्धितयोरिति शङ्क्यम्। प्रातिपदिकजन्यप्रतीतिगतमुख्यविशेष्यताभाजोरेवाभेदान्वययोग्यत्वेनाताद्दशयोस्त्वष्टृपत्नीवतोरभेदाप्रतीतेः। नहि भवति देवदत्तीयं ब्राह्मणगृहमित्यत्र देवदत्तब्राह्मणयोरभेदान्वयबोधः। भवति तु तत्र गृहयोः प्रकृते हविषोस्ताद्दशयोस्तद्बोधः। यथा चासति शास्त्रान्तरीयकर्माभेदप्रत्यये स्ववाक्यश्रुतं कर्म विषयीकुर्वन् विधिः शास्त्रान्तरीयाद्भिनत्ति एवमालभेतेति विशिष्टविधिरर्थात् विशेषणेषु व्याप्रियमाणोऽप्रतीयमानाभेदे देवताकारके प्रत्येकं विषयीकुर्वन् तयोर्भेदमाक्षिपतीति ध्येयमिति।

अत्रोच्यते। यत्र नामार्थयोः प्रथमबोध एवाभेदबोधः तन्नामपदोत्तरप्रत्ययद्वयेनाप्यभिन्नार्थस्यैव प्रतिपादनम्। यत्र तु न तयोरभेदप्रतीतिः प्रथमतः, तत्र तन्नामोत्तरप्रत्ययेनापि भिन्नाभिन्नार्थस्यैव प्रतिपादनम्। तच्च शक्त्या लक्षणया वेति हि भवतोऽभिमतम्। तत्र यदि दात्रग्न्यादिपदयोः पर्यायत्वेनैवाभिन्नार्थत्वं विवक्षितम्, तदा पर्यायद्वयस्य युगपत् प्रयोगासम्भव एव। नहि तदा नामार्थद्वयाभावे[1] तयोरभेदान्वयप्रतिपत्तिर्युज्यते। यदि तु केनचिद्रूपेण प्रकृत्यर्थभेदेऽपि विशेष्यभूतैकार्थकत्वेनाभिन्नार्थत्वं तदा तदुत्तरचतुर्थीभ्यामुच्यमानं लक्षणयापि देवतात्वं किमभिन्नार्थानुरोधेन भिन्नम्, अथवा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात् तद्भेदेन तद्वृत्ति भिन्नमेवेत्यत्र किं विनिगमकम्? प्रत्युताभिन्नदेवतात्वोक्तौ एकयैव चतुर्थ्या तत्सिद्धौ इतरोपादानवैयर्थ्यापत्तिः। यदि त्वभिन्नत्वेन रूपेण बोधार्थमुभयोपादानं तदा अग्निवृत्तिदेवतात्वाभिन्नं दातृवृत्तिदेवतात्वं विधीयते इत्यर्थे कथं कारकयोः परस्परमन्वयः?। कथं वा नामार्थयोः प्रथमबोध एवाभेदान्वयसिद्धिः? यद्वृत्तिदेवतात्वयोरभेदः स तयोरभेदं विनानुपपन्नः सन् पार्ष्ठिकमाश्रययोरप्यभेदं बोधयतीति नियमस्याग्नीषोमवृत्तिदेवतात्वाभेदेऽपि तदाश्रययोरभेदाभावेन व्यभिचरितत्वेन पार्ष्ठिकाभेदबोधोऽपि दुरुपपाद एव। एताद्दशनियमाङ्गीकारेणाश्रययोः पार्ष्ठिकाभेदस्वीकारे यद्देवताकद्रव्ययोरभेदः स तद्देवतयोरभेदं विनाऽनुपपन्नः सन् तयोरपि पार्ष्ठिकाभेदं बोधयतीति नियमाङ्गीकारात् त्वष्टृपत्नीवतोरपि पार्ष्ठिकाभेदबोधेऽपि नैव किञ्चिद्बाधकम्। एकस्मिन् द्रव्ये उभयोर्भिन्नदेवतयोः समुच्चयेन समावेशस्येव तस्मिन्नेव सामान्यविशेषरूपार्थपरपदद्वयोपात्तस्यापि विशेष्यभूतैकार्थस्यापि समावेशस्य 'देवदत्तधनं पण्डितसत्ताक'मित्यादौ दृष्टत्वात् देवदत्तपण्डितपदार्थयोः पार्ष्ठिकाभेदवत् त्वष्टृपत्नीवतोरप्यभेदप्रतीत्युपपत्तेः। यदि त्वग्नीषोमयोः परस्परं विशेष्यानपेक्षत्वेन पार्ष्ठिकाभेदाभावेऽपि दात्रादिपदस्य विशेष्यसाकाङ्क्षत्वात् विशेष्याकाङ्क्षाशामकाग्निपदार्थेनाभेदान्वय आवश्यक इत्युच्यते तदा 'त्रिंशच्च परार्थत्वादि'ति

1. B. reads भावेन

(३-२-३६.) तार्तीयाधिकरणे पत्नीवच्छब्दस्य सर्वैरपि यौगिकत्वप्रदर्शनात् तस्यापि विशेष्यसाकाङ्क्षस्य त्वष्टृपदार्थेनाभेदान्वयः कथं निवारयितुं शक्यते। न च विशेषणवाचिनामपदोत्तरविभक्तेः साधुत्वमात्रार्थकतया निरर्थकत्वं भवता वक्तुं शक्यते। तथात्वे चतुर्थीद्वयस्याभिन्नार्थकत्वोक्तेरसङ्गतत्वापत्तेः। सम्भवति सार्थक्ये निरर्थकत्वकल्पनस्यायुक्तत्वाच्च। अतः प्रकृत्यर्थगतप्राथमिकभेदाभेदौदासीन्येनैव यत्र प्रकृतिद्वयोत्तरं प्रत्ययद्वयं तत्र शब्दान्तरगुणादिप्रमाणकः प्रत्ययार्थभेद एव। प्रकृत्यर्थयोर्विशेष्यानाकाङ्क्षयोर्भेदात् तदधिष्ठानस्यापि भेद एव। यथा 'यदग्नये च प्रजापतयेचे' त्यादौ। यत्र तु विशेष्यसाकाङ्क्षत्वं तत्र पार्ष्ठिकाभेदस्याङ्गीकारात् अधिष्ठानैक्यमेवेत्येव युक्तमित्यभिप्रेत्य 'पात्नीवते तु पूर्ववत्त्वादवच्छेदः' इति द्वितीयतृतीयपादाधिकरणे 'अग्नये शुचये' 'त्वाष्ट्रं पात्नीवत' मित्यादौ अधिष्ठानैक्येऽपि देवतात्वभेदस्य कौस्तुभे प्रदर्शितस्य 'मेधपतिभ्यां' 'मेधपतये' इति मन्त्रद्वयस्य पत्नीवद्यागे देवतात्वस्य भेदात् अधिष्ठानस्य चैक्यात् तत्तत्सङ्ख्यावशेनोह इति प्रयोजनमत्रैव तृतीयपादान्त्याधिकरणे पूज्यपादैः प्रदर्शयिष्यते।

युक्तश्चैतत्—त्वाष्ट्रं पात्नीवतमित्यादौ देवतातद्धिते तद्धितोक्तस्य देवतात्वस्य कारकत्वात् द्रव्यसम्बन्धात् प्रथमत एव भावनान्वयात् पश्चादरुणैकहायनीन्यायेन यौगिकपत्नीवच्छब्दार्थस्यापेक्षावशात् स्वावाक्योपात्तत्वष्टृपदार्थेनाभेदान्वयस्य स्वीकारे बाधकाभावात्। कारकतातिरिक्तसम्बन्धेन तद्धितादिवृत्तौ परस्परान्वयस्वीकारेऽपि कारकतासम्बन्धेन तद्धितादिवृत्तौ प्रथमतो भावनान्वयस्यैव विद्वद्वाक्यविहितकर्मानुवादेनाग्नेयादिवाक्यस्थाग्नेयादिपदैः द्रव्यदेवतोभयविधौ वाक्यभेदप्रसङ्गापादनार्थं पौर्णमास्यधिकरणे साधितत्वादित्यलं विस्तरेण।

प्रकृतमनुसरामः। न च शब्दस्य देवतात्वे शब्दद्वयस्याधिष्ठानस्य भेदात्कथं अधिष्ठानभेदाभेदव्यवहार इति वाच्यम्। शब्दद्वाराऽर्थस्याप्यौपचारिकद्रव्यसम्बन्धवत्त्वेन देवतात्वस्वीकारात्। तदभिप्रायेण प्रागुपपादितैकानेकदैवत्यव्यवहारस्यैवार्थभेदाभेदाभिप्रायेण तद्भेदाभेदव्यवहारस्य शास्त्रप्रतिपादितत्वस्य मेधपतिभ्यां मेधमित्यधिकरणे पूज्यपादैरेव प्रदर्शयिष्यमाणत्वात्। अतः कथमपि शब्ददेवतात्वे बाधकाभावात् युक्तमेवोक्तं पूज्यपादैः "देवता तु शब्दमात्रम्। अर्थस्तु प्रातिपदिकानुरोधाच्चेतनोऽचेतनो वा स्वीक्रियताम्। न तु विग्रहादिमानि"ति।

एवं निरपवादे शब्ददेवतात्वे सत्यपि तस्मिन्नेकजीववादे मनः प्रत्ययमलभमाना नानाजीववादमिवार्थस्याविधेयत्वेऽपि शब्दस्य विधेयत्वमङ्गीकृत्यापि अजागलस्तनतुल्यमर्थस्य देवतात्वमाश्रयन्ते भाट्टालङ्कारप्रभृतयो नवीनाः। तदर्थं देवतात्वलक्षणमप्यर्थनिष्ठमेव कुर्वन्ति। तथाहि —

प्रधानलोपप्रयोजकव्यतिरेकप्रतियोग्युद्देशविषयत्वं देवतात्वम्। निरूपितं ह्येतत् षष्ठे अग्नय इत्येवंरूपोद्देशविशेषाभावे सत्याग्नेययागलोप इति। सम्प्रदानत्वाभिमतब्राह्मणस्य चैत्रायेत्येवं-रूपोद्देशविशेषव्यतिरेकेऽपि न दानलोपः; अङ्गान्तरव्यतिरेक इव तस्मिन्नसत्यपि परस्वत्वापादन-विशिष्टस्वत्वत्यागात्मकदानस्य सिद्धिसम्भवात्। यद्यपि चन्द्राभ्युदयविशिष्टदर्शप्रयोगे नित्यदेवतो-द्देशव्यतिरेकेऽपि न प्रधानलोपः तथापि प्रयोगान्तरे तद्व्यतिरेकप्रयुक्तस्य प्रधानलोपस्य स्वीका-रान्न क्षतिः। अशास्त्रमूलकत्वेन वा विशेषणीयो व्यतिरेकः। वह्नय इत्युद्देशव्यतिरेकस्य चाग्नेयलोपप्रयोजकत्वाभावात् न तादृशोद्देशविषयेऽतिप्रसङ्गः। यद्यपि नेन्द्रवाय्वाद्युद्देशः सोम-यागाङ्गत्वेन विहितः तथाप्युभयाकाङ्क्षया तयोः साध्यसाधनभावनियमस्यावश्याभ्युपेयत्वादस्त्ये-वैन्द्रवायवादिदेवतोद्देशव्यतिरेकस्य स्वप्रतियोगिसाध्यप्रधानलोपप्रयोजकत्वमिति न तात्स्वप्रसङ्गोऽपि। यद्वा यादृशो यज्जातीयक्रियासाधनत्वेन वेदबोधितो यदा यत्तादृशोद्देशविषयत्वमात्रेण तज्जातीयं क्रियाकारकं तदा तज्जातीयक्रियाया देवतेति। यादृशेत्युक्त्या चाग्नेययागे 'पावकाये'त्युद्देश-विषयस्य देवतात्वनिरासः। नहि तादृशोद्देशविषयस्तद्विधिविधेयतावच्छेदकीभूतवैजात्यविशिष्टे कर्मणि कारकं भवति। विषयत्वान्यव्यापारनिरासार्थेन मात्रचा सम्प्रदाननिरासः। इन्द्र-वाय्वाद्युद्देशस्याङ्गत्वेन वेदबोधितत्वाभावेऽपि साधनत्वेन तद्बोधितत्वमस्त्येवेति तात्स्वप्रसङ्गोऽपि। यदा यदित्युक्त्या नाभ्युदयेष्टिप्रयोगान्तर्गतयागव्यक्तिषु नित्याग्न्यादीनां देवतात्वप्रसङ्गः अभ्युदये-ष्टिप्रयोगकाले तासां नित्यप्रयोगक्लृप्तोद्देशविषयत्वेन तत्तद्विधिविधेयतावच्छेदकीभूतवैजात्यविशिष्ट-तत्तद्यागकारकत्वाभावात्।

यद्वा दानत्वाव्याप्यत्यागवृत्तिविधेयतावच्छेदकीभूतजात्यवच्छिन्नफलोपहितोद्देशविषयः तज्जातीयक्रियादेवतेति। दानवृत्तिवैजात्यावच्छिन्नफलोपहितोद्देशविषये सम्प्रदानेऽतिप्रसङ्गवा-रणाय—**दानत्वाव्याप्येति**। 'इदं होत्रे' इदमध्वर्यवे' इति विभागप्रसङ्गोद्देशविषयेऽति-प्रसङ्गवारणाय—**त्यागवृत्तीति** विधेयताविशेषणम्, न तु जातेः। तथासति क्रियात्व-मादाय दोषतादवस्थ्यात्। दर्शस्य नित्यप्रयोगे 'वह्नय' इत्युद्देशस्य, अभ्युदयनिमित्तकप्रयोगे 'अग्नये' इत्युद्देशस्य तादृशजात्यवच्छिन्नफलोपधानाभावान्न तद्विषयेऽप्यतिप्रसङ्गः। अत्र सर्वत्रोद्देशपदार्थः चतुर्थ्यन्तपदजन्या पारार्थ्य[1]निरूपकत्वप्रतीतिः। तथैव याज्ञिकनिबन्धव्यवहारात्। न च धृत्यादिहोमे तदसम्भवः, छन्दोगपरिशिष्टवचने गोभिलसूत्रतद्व्याख्यातृवचोनुसारेण न्यायमङ्गीकृत्य मन्त्रगतचतुर्थीनिषेधकत्वस्य वक्तुमुचितत्वात्। अस्तु वा त्यागकालीनचतुर्थी

1. B. यागस्यनि०

**विग्रहादिमान्**। उपासनादौ **परं ध्यानमात्रमाहार्यं तस्येति** जैमिनिमतनिष्कर्षः। **ममत्वेवं वदतोऽपि वाणी दुष्यतीति**[1] **हरिस्मरणमेव शरणम्** ॥ ४ ॥

---

निषेधकत्वं तथापि तादृशोद्देशस्य शास्त्रार्थत्वे सति षष्ठ्यादिविभक्त्योपस्थापितचतुर्थ्यन्तजन्यां तां प्रतीतिमादाय शक्यत एव धृत्यादिहोमेऽपि उक्तविधोद्देशो निरूपयितुम्। सा च सम्प्रदाने प्रदानात्मिका। देवतायान्त्वाहार्यात्मिकेति भेदः। अत एव वेदबोधिततत्साधनताकारोपात्मकोद्देशविषयस्तद्देवतेति लक्षणसिद्धिः। अत एवैतादृशदेवतात्वस्यार्थाश्रितस्य तद्वाचकशब्दमात्रविधानापेक्षित्वेऽपि अर्थविधानं विनानुपपत्तेः अर्थाङ्गीकारेणैव देवतात्वस्य विधिबोधनात् अर्थगतविशेषापेक्षायां तत्प्रतिपादकानां मन्त्रार्थवादानां भवत्येव स्वार्थेऽपि प्रामाण्यम् नावमिकन्यायस्तु विध्यनपेक्षिते देवतायाः फलदातृत्वादौ प्रामाण्यनिरासार्थतया नेयः। अतोऽर्थस्यैव देवतात्वं युक्तमिति।

तेषां मते तादृशोद्देशविषयत्वघटितदेवतात्वस्य चतुर्थ्यन्तपदजन्यपारार्थ्यनिरूपकत्वप्रतीतिविषयत्वरूपस्य चतुर्थ्यन्तपदोच्चारणकर्मत्वरूपास्मदभिमतदेवतात्वापेक्षया गुरुभूतत्वं स्फुटमेव। अर्थस्याविधेयस्यापि पूर्वोक्तशब्ददेवतात्वपक्षोपन्यस्तदूषणगणपरिहाराय देवतात्वेन यथाश्रयणं तत्त्वयुक्तमेव। तस्य पूर्वमेव परिहृतत्वात्। मन्त्रार्थवादादिप्रतिपादितदेवानास्वरूपे विधेरपेक्षा। तत्प्रतिपादितेऽपि तत्प्रसादे न तस्यापेक्षेति विशेषोऽपि दुरुपपाद एवेति न्युक्तमर्थस्य देवतात्वमिति दिक्।

ननु विग्रहाद्यस्वीकारेण शब्दमात्रस्यैव देवतात्वेन यागादिकर्मसिद्धावपि तत्तद्विग्रहादिध्यानं विना उपासनायाः सफलत्वासम्भवादवश्यं ध्यानविध्यनुरोधेनार्थगतविग्रहादिस्वीकारापत्तिरित्यत आह—**उपासनादाविति**। यथैव हि शब्दमात्रस्य देवतात्वेऽपि द्रव्यसम्बन्धस्तस्मिन् कर्मस्वारोपित एव। एवमुपासनादौ मन्त्रप्रतिपाद्यार्थस्यास्माभिरपि स्वीकारात् तस्मिन्नर्थे विग्रहाद्यारोपेण वाचनिकं ध्यानमात्रं विधीयते। तद्विशिष्टाच्चोपासनारूपकर्मणः फलम्। तत्रापि तु मन्त्रमात्रमेव देवतेति भावः। अत एवोक्तं पार्थसारथिना "मन्दधियस्तु श्रद्धालवस्तात्पर्यमजानाना भ्राम्यन्तु नाम देवता फलं प्रयच्छतीति। वस्तुतः कर्मण एव तत्" इति। ननु सर्वदेवतानां विग्रहास्वीकारे नास्तिकत्वापत्तिरित्यत आह—**जैमिनिमतनिष्कर्ष इति**। न वस्तुगत्या मया विग्रहखण्डनं क्रियते किन्तु जैमिनिमतनिष्कर्षमात्रं कृतमित्यर्थः। वस्तुतस्तु ममैतादृशमतनिष्कर्षकरणमप्ययुक्तमेवेत्याह—**मम त्विति**।

---

1. B. दुष्यति तत्र

(५)—द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥ अर्थकरिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥ अर्थो वा स्यात् प्रयोजनमितरेषामचोदनात् तस्य च गुणभूतत्वात् ॥ १३ ॥ अपूर्वत्वाद्व्यवस्था स्यात् ॥ १४ ॥ तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥ तद्युक्तस्येति चेत् ॥ १६ ॥ नाश्रुतित्वात् ॥ अविकारादिति चेत् ॥ १८ ॥ तुल्येषु नाधिकारस्स्यादचोदितश्च सम्बन्धः पृथक्सतां यज्ञार्थेनाभिसम्बन्धस्तस्मात् यज्ञप्रयोजनम् ॥ १९ ॥

अत्र मूले द्रव्यसङ्ख्याहेतुसमुदायानां यत्र श्रुत्या उद्देश्यता तत्र व्रीहित्वादिनैव, न त्वपूर्वसाधनत्वेन, प्रकरणेन श्रुतिसङ्कोचायोगादित्याशङ्क्य स्वरूपे आनर्थक्यापत्तेरपूर्वसाधनत्वेनेति सिद्धान्तितम्। तत्र 'व्रीहीन् प्रोक्षति' इति द्रव्योदाहरणस्य, 'चतुर्होत्रा पौर्णमासीम्' इति समुदायोदाहरणस्य च कथञ्चित्सम्भवेऽपि सङ्ख्योदाहरणस्य 'त्रीन् परिधीन्' इति मन्त्रस्य 'अगन्म सुवः' इति मन्त्रवत् अपूर्वसाधनीभूतपरिधीयत्ताप्रका-

---

यत्तु प्रकाशकारैः पूर्वपक्षे यागस्य पूजारूपत्वेन लौकिकपूजास्वभावानुसारित्वात् येनैव प्रकारेण अग्निः पूज्यते तेनैव सूर्य इति देवतान्तरत्वादयुक्तम्। कदाचिद्विपरीतमपि स्यात् इति तत्प्रकारानतिदेशादनूहः, तथा देवतायाः प्राधान्यात् तत्सादृश्यस्यैव गुणभूतद्रव्यसादृश्यापेक्षया बलवत्त्वं चेति प्रयोजनद्वयमुक्तम्; तत् शास्त्रागते पूजाप्रकारातिदेशे सति विपरीतफलापादकत्वासम्भवात् पूर्वोक्तरीत्या तत्प्रसादस्य द्वारत्वेऽप्यूहोपपत्तेरुक्तत्वात् देवताया गुणत्वाङ्गीकारेणापि तत्प्रसादस्य द्वारताश्रयणे तत्सादृश्यप्राबल्यानापत्तेश्चायुक्तमित्युपेक्षितं पूज्यपादैः।

---

। द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात्। समुदायोदाहरणस्य चेति। अस्मिंश्चोदाहरणे पौर्णमास्युद्देशेन चतुर्होतृमन्त्रकरणकमभिमर्शनं तावद्विधीयमानं तदीयहविर्द्वारैवेत्यत्र नैव प्रमाणं दृश्यते। तथा पौर्णमासीशब्दोऽपि यद्येकवचनानुरोधेन समुदायपरस्तदा समुदाये विधीयमानमभिमर्शनं आनर्थक्यतदङ्गन्यायेनापि समुदायानङ्गभूते हविषि नैव प्राप्यते। यदि तु समुदायियागपरस्तदा प्रधानयागप्रयुक्तत्वाद्विकृतौ तदभावेऽभिमर्शनानूहफलकपूर्वपक्षसम्भवे

ङ्गानार्थत्वस्य सिद्धत्वादनुदाहरणत्वमिति वार्तिककारेणैवोक्तम्। तथा हेतूदाहरणेऽपि। यत्तु— 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यन्नकरणहेतुना तस्य व्याप्यत्वावगमात् व्याप्यस्य च सर्वत्र प्राधान्यदर्शनात् अन्नकरणोद्देशेन होमस्संस्कारकतया विधीयत इत्याशङ्क्य तृतीयया होमं प्रति शूर्पस्य करणत्वावगतेः 'तेन ह्यन्नं क्रियते' इत्यस्य चार्थवादत्वात् होमोऽयमारादुपकारकोऽपूर्वार्थ इति विचारितम्। तत् व्याप्यस्यापि जुह्वादेः क्रतुं प्रति प्राधान्यादर्शनादर्थवादत्वस्य च हेत्वधिकरणे स्थापितत्वात्तद्विचारस्य चोहानुपयोगित्वाच्चोपेक्षितम्।

किञ्च सर्वस्यैवास्य विचारस्याद्याधिकरणेन गतार्थतेत्यन्यथा वर्ण्यते—यद्यपि यज्ञकर्मेति सूत्रेण सन्निपत्योपकारकमात्रे अपूर्वसाधनत्वलक्षणा सिद्धा। संस्कारे चेति सूत्रेण चान्तरालिकानां यागत्वादिकारणतावच्छेदकानामविवक्षा सिद्धा। तथाऽपि श्रुतस्य व्रीहित्वादेः कारणतावच्छेदकस्य त्यागे प्रमाणाभावः। न च युगवद्वृत्तिद्वय-

---

ऽपि सूत्रोक्तसमुदायोदाहरणत्वानुपपत्तिः। यदा तु शास्त्रदीपिकाप्रकाशकारोक्तरीत्या अभिमृष्टहविष्क-यागसमुदायत्वेनोद्देश्यता तदा पार्वणहोमन्यायेन पूर्वपक्ष इवापूर्वसाधत्वलक्षणायां सिद्धातेऽपि विकृतावनूहप्रयोजनं समानमिति नोभयोः पक्षयोः कश्चन विशेषः। अथोच्येत पूर्वपक्षे समुदायार्थत्वमेव। सिद्धान्ते तु विद्वद्वाक्यफलवाक्ययोः यजिसामानाधिकरण्यात् पौर्णमास्या-दिशब्दो यागानामेव नामेति तेषामेव फलकरणतैत्येकवचनद्विवचनोक्तसङ्ख्या अगत्योपसर्जनतया लक्षिते समुदाय एवान्वेति, तद्वदिहापीति यागानामेव वस्तुगत्योद्देश्यत्वात् तद्गतसाहित्यस्य अविव-क्षितत्वेन प्रत्येकमेवोद्देश्यत्वपर्यवसाने तत्रानर्थक्यादपूर्वसाधनविशेषलक्षणावश्यंभावादपूर्वान्तर-साधनेप्यूहोऽभिमर्शनस्येत्यस्त्येव प्रयोजनभेद इति तथापि सूत्रोक्तसमुदायोदाहरणत्वानुपपत्तिर-स्त्येवेत्यादि सुधीभिरूहनीयम्। कथञ्चिच्छब्देन पूज्यपादैः सूचितम्। अतएव समुदा-योदाहरणस्येत्यनेनैव कथञ्चिच्छब्दान्वयः। अथवा श्रुतेः प्रकरणेन सङ्कोचायोगादितिहेतुक-विशेषाशङ्कासम्भवाभिप्रायकः कथंञ्चिच्छब्दः। ततश्चैतादृशविशेषाङ्काहेतोः कल्पितश्रुतिवि-नियोगवस्तु मन्त्रहेतूदाहरणेषु न कथमपि सम्भव हत्यर्थः। जुह्वादेरिति। अव्यभिचरितक्रतु-सम्बन्धित्वेन व्याप्यत्वस्य सर्वसम्प्रतिपन्नत्वाज्जुह्वादेरित्युक्तम्। तथापि श्रुतस्येति। यदि केवलव्रीहित्वावच्छिन्नमेवोद्देश्यं तदा प्रकरणाननुग्रहः। यदि तद्वशादपूर्वसाधनत्वावच्छिन्नमात्रं तदा श्रुतिसङ्कोचः। अतः उभयानुग्रहायापूर्वसाधनीभूतव्रीहित्वावच्छिन्नमेव भवत्युद्देश्यं यागत्वा-दीनामान्तरालिकानामश्रुतानां तु न विवक्षेति वैषम्यं श्रुतिपदेन सूचितम्। ननु नापूर्व-साधनव्रीहित्वावच्छिन्नमुद्देश्यम्। तदा केवलशक्त्या व्रीहित्वस्य लक्षणया अपूर्वसाधनत्वस्य च प्रतिपादनेऽर्थद्वयप्रतिपादकत्वापत्तेः, एकया वृत्त्या एकार्थप्रतिपादकत्वस्य सकृदुच्चरितः शब्दः सकृदर्थं बोधयतीति व्युत्पत्तिसिद्धस्य भङ्गापत्तेरिति प्राचां युक्तिमाशङ्क्य निराकरोति-नचेति।

विरोधः अपूर्वसाधनीभूतव्रीहित्वावच्छिन्नस्यैव लक्षणयोद्देश्यत्वाङ्गीकारात्। अतश्च तादृशत्वस्य नीवारादावसत्त्वान्नोहसिद्धिरिति प्राप्ते—

लक्ष्यतावच्छेदके गौरवापत्तेः श्रुतस्य व्रीहित्वस्य च लक्षणोपयोगिशक्यप्रतिपादकत्वेनापि चरितार्थत्वान्न विवक्षा। अत एव तत्तद्व्यापारिकाया विजातीयापूर्वसाधनताया एव लक्षणेति कौस्तुभे स्पष्टम्। तत्तद्व्यापारकसाधनतात्वावच्छिन्नसाधनताया एव लक्षणाच्च व्रीहियवनिष्ठ कारणताया गुणादिप्रमाणेन भेदेऽपि यवसाधारण्यलाभोऽपीत्यपि तत्रैव व्यक्तम्। अतश्च व्रीहित्वादेरविवक्षितत्वाद्युक्तो नीवारादिषूहो विकृतौ॥

एवं यत्रापि नापूर्वसाधनत्वं 'व्रीहीनवहन्ति' इतिवत्पूर्वप्रमितं, स्ववाक्य एव तु संस्कारविशिष्टस्य व्रीह्यादेः साधनत्वविधानं यथा 'प्रोक्षिताभ्यामुलूखलमुसलाभ्याम्' इत्यादौ तत्समानजातीयवाक्यान्तरे वा तत्रापि प्रोक्षणविशिष्टस्य व्रीहित्वविशिष्टस्य च विधेयक्रियाविशेषणत्वेन विधौ कृते पश्चादरुणैकहायनीन्यायेन परस्परान्वयात्, प्रकृतौ तज्जातीयस्य प्रोक्षणेऽपि विकृतौ तज्जातीयलोपेऽपि तत्स्थानापन्नद्रव्यान्तर एव प्रोक्षणलाभात्सि[1] ध्यति प्रोक्षणं प्रति विशेषणविधिवेलायामपूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वम्। लक्षणा परं न तत्रास्ति, व्रीहिपदेन व्रीहित्वस्यैवाभिधानात्। अपूर्वसाधनत्वस्य कल्पितविधावेव [2] स्वपदेनैवाभिधानात्।

---

लक्षणसङ्गतिं विचारस्योपसंहारव्याजेन कथयति—अतश्चेति। गौरवापत्तेरिति। न चाजहत्स्वार्थलक्षणानुरोधेन तदङ्गीकरणं युक्तम्। अपूर्वसाधनत्वावच्छिन्नमात्रलक्षणायामपि रूपान्तरेण यवादिसाधारण्येन व्रीहिरूपशक्यार्थस्यापि सङ्ग्रहेण जहत्स्वार्थत्वानापत्तेः। गङ्गायां घोष इत्यादौ तु तीरत्वेन तीरलक्षणायां नैव प्रवाहरूपशक्यार्थसङ्ग्रहः सम्भवतीति विशेष इति भावः। अत एवेति। लक्षणोपयोगिशक्यर्थप्रतिपादकव्रीहिपदस्याम्नानादेव स्रुवादिव्यावृत्तापूर्वसाधनताविशेषलक्षणेत्यर्थः। तत्रैव व्यक्तमिति। यद्यपि व्रीहियवयोः शब्दान्तरादिना कारणता भिन्ना तथापि तदवच्छिन्नजन्ययागव्यक्तौ परस्परं व्यभिचारवारणाय तृणारणिजन्ययोर्वह्न्योरिव वैजात्याभ्युपगमेऽपि तज्जन्यापूर्वव्यक्तौ वैजात्यकल्पने प्रमाणाभवात् एकजातीयापूर्वनिष्ठकार्यतानिरूपिततत्तद्व्यापारसाधनतात्वावच्छिन्नस्योद्देश्यतावच्छेदकरूपस्य व्रीहियवयोरुभयोरपि सत्त्वाद्धर्मलाभोपपत्तिः। नहि व्रीहिनिष्ठसाधनताविशेषस्य शक्यसम्बन्धविधया प्रवेशेऽपि उद्देश्यतावच्छेदके लक्ष्यतावच्छेदके वा प्रवेशः स्वीक्रियते गौरवात्। अतः तत्तद्व्यापारकसाधनतात्वावछिन्नत्वस्यैवोद्देश्यत्वान्न यवेषु धर्माणामप्राप्तिरिति भावः। तत्समानजातीयेति। 'प्रोक्षितैर्व्रीहिभिर्यजेतेत्येवंरूपेत्यर्थः। लक्षणा परमिति। सा न श्रुतविशिष्टविधौ, तत्र व्रीहीणामु-

---

1. A सिद्ध्यत्यूहः  2. B. क्तप्रत्ययेनाभिधानात्।

एवं यत्रापि संस्कारविध्युत्तरं तच्छब्देन संस्कृतस्य विनियोगः, यथा 'तप्ते पयसि' इत्यादौ, तत्रापि संस्कारवाक्ये पयस्त्वसमानाधिकरणधर्मावच्छिन्नोद्देशेनैव दध्यानयनविधिः न तु पयस्त्वावच्छिन्नोद्देशेन आनर्थक्यात्। स च धर्मः उत्पत्तिवाक्ये इष्टसामान्यमिव सामान्यत एव पयःपदेन प्रथमं प्रतीयते, पश्चाच्च तच्छब्देन पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वे प्रमिते स धर्मोऽपूर्वसाधनत्वरूप इति प्रतीयते। तत्र च पयः पदस्य लक्षणेति पश्चादवगम्यते इति न कश्चिद्विरोधः।

वस्तुतस्तु—यद्यपि सप्तमीश्रवणात्तापविशिष्टपयोऽधिकरणकदध्यानयनस्य विहितस्य प्रयोजनापेक्षायामुद्देश्यवाचकं[1] पदमनुमीयते। तथाऽपि मन्त्रवर्णाद्यनुरोधाद्दध्यविशिष्टपयोवाच्यामिक्षापदसमभिव्याहृततच्छब्दबलेन[2] पयस एवोद्देश्यत्वावगतेस्तन्निष्ठविजातीयापूर्वसाधनत्ववाचिपदस्यैव कल्पनात् न तल्लक्षणाऽपीति ध्येयम्॥ ५॥

---

पादेयत्वेन व्रीहित्वेनैवान्वयात्। कल्प्ये विशेषणविधौ तु उद्देश्यवाचकपदकल्पनायां लाघवादपूर्वसाधनत्वावच्छिन्नमित्यपूर्वसाधनत्वावच्छिन्नपदस्यैवाध्याहारान्नाङ्गीकार्येति भावः।

एतेन न हि व्रीहिसम्बन्धः प्रोक्षणस्य साधनत्वेनैवोपदिश्यमानं द्रव्यं संस्कारेण व्रीहित्वेन च तत्र विशेष्यते इति व्यक्तः साधनसम्बन्धः। अयं हि तत्र वाक्यार्थः, व्रीहिजातीयं प्रोक्षणसंस्कृतञ्च यत् तेन यजेतेति प्राथमिकविशिष्टविधिवाक्यार्थवर्णनं पार्थसारथिकृतमपास्तम्। व्रीहित्वजात्यवच्छिन्नेनैव सह प्रोक्षणसंस्कृताभेदस्य प्रथमवाक्यार्थे प्रतीयमानत्वेनाशाब्दसाधनरूपाभेदबोधे प्रमाणाभावात्। तव मते यौगिकपदप्रतिपाद्यार्थयोः श्रुत्यैवाभेदान्वयस्य 'अग्नये दात्रे' इतिवदुपपादयितुं शक्यत्वात्। प्रथमबोधे उपादेयत्वेन साधनलक्षणायां प्रयोजनाभावाच्च। अस्तु वा द्वयोः सुबन्तार्थयोःप्रथमत एव भावनान्वयः तथाप्यरुणैकहायनीन्यायेन पार्ष्ठिकाभेदो व्रीहित्वाच्छिन्नेनैव सहेति न वारयितुं शक्यम्।

एवं यत्रापीत्ययं ग्रन्थोऽपूर्वसाधनत्वलक्षणाप्रस्तावे आद्याधिकरणे व्याख्यातचरः। पयस्त्वावच्छिन्नस्येति। पयस्त्वसमानाधिकरणधर्मावच्छिन्नेत्यर्थः। पश्चादवगम्यत इति। पूर्वं या पयस्त्वसमानाधिकरणयत्किञ्चिद्धर्मावच्छिन्ने पदस्य लक्षणा कृता साऽपूर्वसाधनत्वरूपविशेषधर्मावच्छिन्ने इति पश्चान्मनसाऽवगम्यत इत्यर्थः। एतच्च 'तप्ते पयसी'त्यत्र सप्तम्या प्राधान्यलक्षणा मूले पयः पदलक्षणेत्युक्तम्। यदा तु तस्याधिकरणत्वमेव तदाह—वस्तुतस्त्विति। पयस एवोद्देश्यत्वावगतेरिति। तच्छब्दपरामृष्टत्वेन पयस उपयोगित्वप्रतीत्या संस्कार्यत्वयोग्यतावगतौ

---

1. A. adds सामर्थ्यात् पयस्या

2. A. पयस्यायां

सप्तम्यन्तपदोपस्थापितत्वेनोपस्थितपयोवाचकं पदं कल्पनीयं तावत् स्वाधीने शब्दप्रयोगे इति न्यायेन तद्वृत्त्यपूर्वसाधनत्वावच्छिन्नपदमेव लाघवात् कल्पयितुमुचितमिति भावः। नन्वनेन न्यायेन स्रुवेणावद्यतीत्यत्रापि विधेयसामर्थ्यात् द्रवद्रव्योपस्थितौ तद्वृत्त्यपूर्वसाधनत्ववाचिपदमेव लाघवात् कल्प्यताम् न द्रवपदम्, तत्कल्पनेऽप्यपूर्वसाधनत्वलक्षणागौरवापत्तेरिति चेन्न। अपूर्वसाधनत्वावच्छिन्नयोग्यविशेष्ये लक्षणायास्तवाप्यावश्यकत्वात्। तद्वरं प्रथमत एव निस्सन्दिग्धो द्रवपदाध्याहार एव युक्तः तदन्वयेनैव सकर्मकावद्यतेः कर्माकाङ्क्षाशान्तेः। तदनु कल्प्यमानाया अपूर्वसाधनत्वलक्षणायाः फलमुखत्वेन गौरवानापादकत्वात्। यत्तु द्रवमित्यध्याहारेऽपि तस्य स्वतः स्रुवकरणत्वं प्रत्युद्देश्यत्वानुपपत्तेः चतुरवत्तचोदनाप्राप्तावदानस्यैव तत्प्रतीतेः तत्र द्रवपदार्थान्वये विशिष्टोद्देशवाक्यभेदापत्तिपरिहारायावद्यतिपदे द्रवावदानलक्षणया, अथवा विधेयसामर्थ्यानुरोधेन 'यस्योभयाग्नी' इति पुनराधानविधावुभयत्वाविवक्षायामपि उभयाग्न्यनुगमन एव पुनराधानविधानवदिहापि द्रवकर्मकावदानोद्देशेनैव स्रुवविधानस्याङ्गीकार्यत्वात् न द्रवपदाध्याहारे किञ्चिदस्ति प्रयोजनम्। यद्यत्र स्रुवविशिष्टावदानभावनाविधानं स्यात् तदा भावनाया भाव्यापेक्षायां विश्वजिता यजेतेत्यत्र स्वर्गकामपदाध्याहारवत् द्रवमित्यध्याहार आवश्यकः स्यात्। न त्विह विशिष्टविधानमस्ति। प्राप्तावदानानुवादेन स्रुवकरणत्वविधाने धात्वर्थस्यैव कर्मत्वेनान्वयात्। अतो न द्रवपदाध्याहारप्रयोजनमिति प्रथमान्त्याधिकरणे कौस्तुभे पूज्यपादैरुक्तम् तत्तथैव। परन्तु पदसमभिव्याहाररूपाकाङ्क्षया नित्यं कर्मसाकाङ्क्षावद्यतेः द्रवपदाध्याहारं विना कथं कर्माकाङ्क्षानिवृत्तिः शाब्दी ह्याकाङ्क्षा शब्देन पूरणीयेति नियमादिति विचारणीयम्। अत एव विश्वजिता यजेतेत्यत्र यजतेरकर्मकत्वात् स्वाधीनस्यापि स्वर्गमिति पदस्य नाध्याहारः। अपि तु पश्चादपि लक्षणयाऽवश्यकल्पनीयस्वर्गपरत्वस्य स्वर्गकामपदस्यैवेति मीमांसकसरणिः। अन्यथाऽवदानस्वरूपे आनर्थक्यप्राप्तावपूर्वसाधनत्वलक्षणायां विधेयसामर्थ्यानुरोधेन द्रवादिनिरूपितसाधनताया एव प्रणालीघटकत्वेनाङ्गीकारात् प्रथमं शक्यार्थबोधवेलायां द्रवकर्मत्वबोधस्याप्यनावश्यकत्वापत्तेः। अतोऽवद्यत्याकाङ्क्षापूरकद्रवपदाध्याहारस्तत्रावश्यक एव। यदि तु 'अवद्यादि'त्यनेन दध्यानयनन्यायेनापूर्वसाधनत्वाद्यवच्छिन्नमिति पदाध्याहारेणापि कर्माकाङ्क्षानिवृत्तिस्तदा अस्तु तत्रापि न द्रवपदाध्याहारः।

यदा तु विशेषे लक्षणा पदाध्याहारेऽपि आवश्यिकीति विभाव्यते तदा तेनैव न्यायेन दध्यानयनविधिप्रवृत्त्युत्तरकल्प्यविधावपि पयश्शब्दाध्याहार एवास्त्वित्यवहितेन मनसाऽऽलोचनीयमिति दिक्।

(६)—देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥ यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ अनुवादश्च तदर्थवत् ॥ २२ ॥

सोमे, 'त्सरा वा एषा यज्ञस्य तस्मात् यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इति श्रुतम्। तत्रोपांशुत्वं किं ज्योतिष्टोमसम्बन्ध्यग्नीषोमप्राग्भागधर्मस्सन् तदीयपरमापूर्वप्रयुक्तं उताग्नीषोमीयप्राग्भागवर्तितत्तत्पदार्थधर्मस्सन् तत्तज्जन्यावान्तरापूर्वप्रयुक्तमिति चिन्तायां—

---

अत्र 'द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगादि'ति सूत्रे द्रव्यसमुदायोदाहरणं व्रीहीन् प्रोक्षति चतुर्होत्रा पौर्णमासीमभिमृशेदिति स्पष्टमेव। 'त्रीन् वृणीते' इति लिङ्गविनियोगरहितं सङ्ख्योदाहरणं, 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते असंस्थितो हि तर्हि यज्ञः' इत्यर्थवादस्थहेतु बलात् असंस्थावदहस्त्वावच्छिन्नस्योद्देश्यत्वात् हेतूदाहरणं द्रष्टव्यम्।

---

**देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात् तस्य च तत्र भावात्।** अत्र प्राचां ग्रन्थेषु प्राचीनपदार्थोद्देशेनोपांशुत्वविधाने अग्नीषोमादीत्यस्य [अग्नीषोमीयादित्यस्य] प्राचीनपदार्थे विशेषणत्वे विशिष्टोद्देशवाक्यभेदापत्तेः, अवश्यं कस्य प्राचीनमित्याकाङ्क्षयाऽन्वीयमानस्य यज्ञपदार्थस्यावयवित्वेनान्वयात् तदवयवरूपः प्राग्भाग एवात्रोद्देश्यम्। न च तत्रापि विशिष्टोद्देशत्वात् तुल्यो वाक्यभेदः। यज्ञस्येत्यस्य षष्ठ्यन्तत्वेनोपपदार्थेऽन्वयस्य व्युत्पन्नत्वेन तदप्रसक्तेः। यद्यग्नीषोमीयेण प्राचीनपदं विशेष्येत, तदा तस्यानवयवित्वात् अवधिमात्रेणावस्थापितपदार्था एव त्वभिधीयेरन्। न त्वेतदस्ति। अत एव त्सराशब्दविशेषणत्वाभावात् प्रवृत्तिविशेषकरतापि यज्ञपदस्योपपद्यते। अस्तु वा त्सराशब्दविशेषणत्वमव्यवधानात्; तथापि प्राचीनशब्दस्य ससम्बन्धिकस्य प्रतिसम्बन्ध्यपेक्षायां प्रकरणादेव यज्ञरूपप्रतिसम्बन्धिलाभोपपत्तेः प्राग्भागधर्मत्वमेवेति पूर्वपक्षेऽग्नीषोमीयपदार्थविशेषणत्वमेव मुख्या युक्तिः साधिकेति भाति। अत एवाग्नीषोमीयपदार्थेनानन्वये तस्याविवक्षितार्थत्वापत्तेः, यज्ञस्य प्राग्भावः कतरस्मात् पदार्थादिति विशेषान्वयं विना निराकाङ्क्षत्वाभावादवश्यं तत्रापि अग्नीषोमीयपदार्थविशेषणत्वे कल्पनीये सति तदुपस्थापितपदार्थबोधकत्वमेव युक्तं प्राचीनपदस्येति पदार्थधर्म एवेति सिद्धान्तेऽग्नीषोमीयपदार्थविशेषणत्वमपि साधकत्वेनोपन्यस्तम्। तत्रावश्यकमग्नीषोमीयपदार्थविशेषणत्वमङ्गीकृत्यापि भागधर्मत्वपूर्वपक्षकरणं सुकरमित्येवं तत्रोपांशुत्वं किं ज्योतिष्टोमसम्बन्ध्यग्नीषोमीयप्राग्भागधर्मः सन्

**विधेये उपांशुत्वे** उद्देश्यसमर्पकस्तावत् तच्छब्द इत्यविवादम्। **स च पूर्वप्रक्रान्ताग्नीषोमीयप्राग्भागमेव परामृशति न तु पदार्थान्, प्राचीनशब्दस्याकृत्यधिकरणन्यायेन प्राग्भागमात्रवाचित्वात्। एकवचनप्रयोगेण भागस्यैव तदुक्तस्य तच्छब्देन परामर्शाच्च। अत एवैकेनैव तच्छब्देनोद्देश्यसमर्पणात् पूर्वपक्षे सिद्धान्ते वा अग्नीषोमीयादेर्विशेषणत्वेऽपि न विशिष्टोद्देशः।** तत्र च भागं प्रति **अग्नीषोमीयोऽवधित्वेन विशेषणं यज्ञश्च** प्रयोगद्वारा **सम्बन्धित्वेन। अत एव यज्ञपदं न त्सराशब्दविशेषणं** अप्रवृत्तिविशेषकरत्वापत्तेः। **अस्तु वा तस्मात्पदेन व्यवधानात्, यज्ञस्य** छद्मगतिरित्येवमर्थाङ्गीकारेण **त्सराशब्दस्यैव विशेषणं यज्ञशब्दः। तथाऽपि प्रकृतत्वाद्भागो यज्ञसम्बन्ध्येव। आवश्यकं चेदं सिद्धान्तिनोऽपि।**

---

तदीयपरमापूर्वप्रयुक्तं उतेति सन्देहे पूर्वपक्षकोटौ यदुपक्षिप्तमग्नीषोमीयविशेषणत्वं तदेवोपपादयितुं उद्देश्यकोटिं विविनक्ति—**उद्देश्यसमर्पक इति।** स्पष्टार्थमन्यत्। ननु सूत्रभाष्यवार्तिकग्रन्थेषु पूर्वपक्षे प्राग्भागधर्मः, यज्ञस्येत्यस्य प्रागित्यनेनान्वयात्। तस्याश्चावयवव्यतिरेकजनितत्वाद्यज्ञसम्बन्धिप्रागवयव इत्येवं व्यवहारदर्शनात् भागदेशावप्यत्रावयवरूपावेव गृह्येते। ततश्च प्राचीनशब्दस्याकृत्यधिकरणन्यायेन प्रागवयववाचित्वे तत्राग्नीषोमीयपदार्थविशेषणत्वे पञ्चम्यनापत्तिः। 'अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चम्या "अवयववाचिना योगे तु ने" ति वार्तिकेण निषेधात्। अत एव प्राचां पूर्वपक्षे तस्य तद्विशेषणत्वं न स्वीकृतमित्याशङ्कानिराकरणायाह—**तत्र च भागं प्रतीति।** सत्यम्। अवयववाचिना योगे पञ्चमी निषिद्धा तथापि यन्निरूपितावयववाचिता यस्य तेन योगे तदवयविवाचकात्[1] पञ्चमी निषिद्धा। न तु अवधिवाचकपदादपीति तदर्थात्, यज्ञपदोत्तरं तदप्राप्तावपि अग्नीषोमीयपदात्तदुत्पत्तौ न किञ्चिद्बाधकमित्यर्थः। तत्रापि यज्ञस्येत्यस्य प्राचां पूर्वपक्षे प्रागित्यनेनान्वयेऽपि ग्रहयागाभ्याससमुदायमात्ररूपस्य सोमयागप्रधानस्य कतिपयाभ्यासावयवकत्वसम्भवेऽपि अग्नीषोमीयावधिकयत्किञ्चिदवयवकत्वानुपपत्तेः कथं यज्ञसम्बध्यग्नीषोमीयावधिकावयवधर्मत्वपूर्वपक्षसिद्धिरित्यत उक्तम्—**प्रयोगद्वारेति।** नायमर्थो यज्ञस्य प्राग्भाग इति किन्तु यज्ञप्रयोगो हि समाप्तिपर्यन्तं विततोऽस्ति। तस्मादग्नीषोमीयावधिकः प्राग्भाग इति। ततश्च तस्य महाप्रयोगस्याग्नीषोमीयावधिकः पदार्थप्रयोगो भवति कल्पितः पूर्वभागः। तदुद्देशेनोपांशुत्वविधिरिति पूर्वपक्षाभिप्रायः। **अप्रवृत्तिविशेषेति।** यज्ञशब्दस्य विधिगतप्राचीनपदार्थविशेषणत्वे परमापूर्वप्रयुक्तत्वेन यत्पूर्वपक्षे प्रयोजनं वक्ष्यते तद्विषयप्रवृत्तिकरता भवति; अन्यथा नेत्यतो विधिविशेषणत्वं युक्तमित्यर्थः। **छद्मगतिरिति।** अनेन त्सराशब्दार्थो दर्शितः।

---

1. A. अवयविवा

अग्नीषोमीयावधिकयज्ञप्राग्भागवर्तिपदार्थत्वस्यैव तन्मते उद्देश्यतावच्छेदकत्वात्। तन्न च पदार्थानामनुक्तेर्लाघवाच्चाग्नीषोमीयावधिकयज्ञप्राग्भागत्वमेवोद्देश्यतावच्छेदकं तदवच्छिन्नोद्देशेनोपांशुत्वविधिः भागे चोपांशुत्वस्य साक्षादसम्बन्धात् तदारम्भकपदार्थाङ्गमन्त्राणां द्वारत्वं योग्यताबललभ्यम्। उद्देश्यस्य च भागस्य स्वरूपे आनर्थक्ये प्रसक्ते भागजन्यापूर्वसद्भावे प्रमाणाभावत् दीक्षणीयाकाङ्गनियमन्यायासम्भवेन भागसम्बन्धियज्ञजन्यपरमापूर्वसाधनत्वमेव भागनिष्ठं लक्ष्यत इति परमापूर्वप्रयुक्तमुपांशुत्वम्। एवं चोपांशुत्वस्य दृष्टार्थत्वं सम्पद्यते। अग्नीषोमीयावधि उपांशुकरणे श्रमाभावेन सौत्येऽहनि बहुकर्तव्यपदार्थानामविक्षेपेण करणात्।

एवं च तत्तत्पदार्थधर्मत्वाभावात् तद्भागारम्भके विकृतावपूर्वेऽपि पदार्थे दर्वीहोमादौ उपांशुत्वस्योहः। इतरथा तत्तत्पदार्थावान्तरापूर्वप्रयुक्तत्वेऽप्राकृतकार्यापन्ने वेदान्तरीये स्वरातिदेशरहिते च तस्मिन्नुपांशुत्वस्य कथमप्यप्राप्तेः।

---

यज्ञभागधर्मो हि स्वरो विकृतावपि तद्भागारम्भकेऽपूर्वेऽपि पदार्थे ऊहितव्यो भवतीति प्राचां ग्रन्थेषु पूर्वपक्षप्रयोजनं दर्शितम्। तदुपपत्तिं दर्शयति—**भागे चेति**। **तदारम्भकेति**। अग्नीषोमीयावधिकप्रयोगारम्भका ये तद्घटकीभूताः पदार्थाः तदङ्गमन्त्राणामित्यर्थः। यदि हि प्रयोगाङ्गं पदार्थाः स्युः तदा आनर्थक्यतदङ्गन्यायावतारः स्यात् इति तदङ्गमन्त्राणां द्वारत्वं न्यायसिद्धं भवेत्; नत्वेतदस्ति। अतो योग्यताबललभ्यमित्युक्तम्। अत्र वार्तिकतन्त्ररत्नयोः परमापूर्वप्रयुक्तत्वे प्रथमं तावत्पदार्थाः, तैः स्वापूर्वाणि, तैरपि परमापूर्वं लक्षयितव्यम्। एवं लक्षितलक्षणापत्तिः सिद्धान्तवर्णनवेलायामुक्ता। तां योग्यताबललभ्यमित्यनेन सूचितपरिहारामपि उद्देश्यवाचकपदे लक्षणेयत्ताप्रदर्शनेन पुनः परिहरति—**उद्देश्यस्य चेति**। पदार्थाङ्गमन्त्रास्तावत् विधेयगतयोग्यताबलेनोपस्थिताः। भागस्य च ससम्बन्धिकत्वात् सम्बन्धिनो यज्ञस्याप्युपस्थितिरार्थिकीति नोभयबोधार्थं लक्षणापेक्षा। अपि तु विशिष्टापूर्वसाधनत्वलक्षणैवेति भागसम्बन्धियज्ञजन्येत्यादिना सूचितम्। **भागनिष्ठमिति**। यद्यपि समस्तस्यैव साङ्गप्रयोगस्य परमापूर्वसाधनत्वं प्रयोगविधिना बोधितम्, तथापि भागस्यापि तदन्तर्गतत्वेन साधनत्वाविघात इत्यभिप्रायेणेदम्। **अप्राकृतेति**। 'बर्हिषा यूपावटमवस्तृणाति' इति विहिते बर्हिषि अप्राकृतकार्यापत्तेर्यथा न बर्हिर्धर्मा इति तृतीयेऽष्टमपादे सिद्धं तथात्रापि तादृशे उपांशुत्वलाभो नैवेत्यर्थः। **वेदान्तरीयेति**। यदि सः अपूर्वः पदार्थः प्रधानवेदपठितः स्यात् तदा 'उपांशुयजुषे'ति सामान्यविहितमुपांशुत्वं प्राप्नुयादेवेति न पूर्वोत्तरपक्षयोर्विशेषो भवेत्। यदा तु प्रधानं यजुर्वेदीयं अपूर्वस्तु पदार्थः ऋग्वेदीयः तदा तदीयोच्चैष्ट्वस्वरबाधेनोपांशुत्वस्यैवोहेन प्राप्तिरिति भावः। तत्राप्यपूर्वः पदार्थः यदि स्वतन्त्रातिदेशवान् भवेत् तदा विशेषातिदेशप्राप्त एव स्वरो भवेत्;

**यत्तु भाष्यकारेण 'मासाग्निहोत्रे** तद्धागारम्भके **उपांशुत्वस्योहः' इति प्रयोजनमुक्तं, तत् नामातिदेशप्रापितस्य विरुद्धस्याविरुद्धस्य वा स्वरस्य सत्त्वे** चोदनालिङ्गातिदेशप्रापितो-**पांशुत्वप्राप्त्यनुपपत्तेरुपेक्षितम् ।**

**यदपि** वार्तिकादौ **'पुरस्तादुपसदां सौम्येन प्रचरन्ति' इत्यादौ उपांशुत्वोहः इत्युक्तं तदपि सौम्यमात्रपुरस्कारेण** कल्पितस्यातिदेशस्य **सामान्यविहितोपांशुत्वातिदेशापेक्षया प्राबल्यादुपेक्षितम् ।**

**न चोपांशुत्वातिदेशस्य प्रधानसम्बन्धितया प्राबल्यं**; आधानसामादाविव **प्रधानसम्ब-न्धित्वस्याङ्गेषु स्वरप्राप्तौ दौर्बल्याप्रयोजकत्वात् । इतरथा मासाग्निहोत्रेऽपि** तदापत्त्या **भाष्यकारमतदूषणानुपपत्तेः ।** न चैवं **प्रकृतावेव** दीक्षणीयाद्यङ्गेषु **तदनापत्तिः । औपदेशि-**

---

नोपांशुत्वोहः सिध्येत् । तत्सिद्ध्यर्थं-स्वरातिदेशरहितेत्युक्तम् । **तद्धागारम्भके**—कौण्ड-पायिनामयनसम्बन्ध्यग्नीषोमीयावधिकप्राग्भागारम्भके मासाग्निहोत्रे इत्यर्थः । तस्यो'पसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती'ति वचनेन उपसदुत्तरमपूर्वतया विधानात् । **चोदनालिङ्गातिदेशेति ।** कौण्डपायिनामयनगतो द्वादशाहपरम्पराप्राप्तः चोदनालिङ्गातिदेशः । तेन ज्योतिष्टोमविहितोपांशु-त्वस्य प्राप्तत्वादूह इत्यर्थः । 'सौम्येन प्रचरन्ती'त्यादावित्यादिपदेन 'अन्तरात्वाष्ट्रेणोपरिष्टाद्वै-ष्णवेने'ति विहितयागद्वयसङ्ग्रहः । **कल्पितस्यातिदेशस्येति ।** विशेषरूपस्येति शेषः । **आधानसामाद्ववेति ।** याजुर्वैदिके आधाने सामवेदपठितानामपि वारवन्तीयादिसाम्नामङ्गभूतानां प्राप्तोऽपि स्ववेदनिबन्धनोच्चैष्ट्वस्वरो न भवति; किन्तु साङ्गे आधानप्रयोगे यजुर्वेदविधिना विहिते तद्गतस्वरस्याङ्गेषु कल्प्यमानस्यापि प्रधानाश्रितत्वेन प्राबल्यात् प्रधानस्वर एव, नत्वङ्गाश्रितः स्ववेदस्वर इति साधितं तृतीये गुणमुख्याधिकरणे । न त्वेतावता तेन न्यायेनानङ्गभूतसौम्यादि-यागगतः स्वरः प्रधानभूतराजसूयसम्बन्धिस्वरात् दुर्बलः, सौम्यादियागानामपि राजसूयपदवाच्यत्वेन प्रधानत्वादिति भावः । **तदापत्त्येति ।** कौण्डपायिनामयनरूपप्रधानसम्बन्धित्वेनोपांशुत्वप्राप्त्या-पत्त्येत्यर्थः । **नचैवमिति ।** सौम्यादिषु विशेषातिदेशप्राबल्येन सामान्यविहितोपांशुत्वबाधे सतीत्येवंशब्दार्थः । **दीक्षणीयाद्यङ्गेष्विति ।** दीक्षणीयादिरूपाण्यङ्गानीति न कर्मधारयः । यतो दीक्षणीयादिप्रधानेषु 'उपांशु यजुषे'ति विधिना तृतीयान्तयजुः पदाभिधेययजुर्वेदविहितसाङ्ग-कर्मणि उपांशुत्वस्वरविधानेनोपांशुत्वस्य प्राप्तावपि तस्य प्राक्स्विष्टकृतः प्रथमस्थाने मध्यमेनेडायाः शेषं तृतीयस्थानेनेति विहितप्राकृतस्वरवैचित्र्येण स्वरविशेषातिदेशप्रापितेन बाधितस्य पुनः प्रतिप्रसवरूपेण प्रवृत्तेन प्राचीनोपांशुत्वविधिना लभ्यमानस्योपांशुत्वस्य "यावत्या वाचा कामयेत" इति प्रधानमात्रे विहितस्वरान्तरावरुद्धदीक्षणीयादिप्रधानेषु सिद्धान्तिनाप्यनङ्गीकारात् । अपि

**क्त्वेन तत्रोपांशुत्वस्य** प्राबल्यात्। **इतरथा प्रकृतावेव नामातिदेशविषये** तादृशि **उपांशुत्वस्य प्रातयनापत्तेः। अतः पूर्वोक्तविषय एवोपांशुत्वप्राप्तिः प्रयोजनमिति प्राप्ते**—

---

तु दीक्षणीयाद्यङ्गेषु विशेषस्वरानवरुद्धेषु प्राचीनवाक्यविहितोपांशुत्वस्वरनिवेशस्य स्वीकारात् दीक्षणीयादीनामङ्गेष्विति षष्ठीतत्पुरुष एव द्रष्टव्यः ततश्च दीक्षणीयादीनामङ्गेष्वपि दीक्षणीयातिदेशेन विशेषरूपेण स्वरवैचित्र्यस्यैव प्राप्त्यापत्त्या सामान्यविहितोपांशुत्वानापत्तिरिति शङ्कार्थः। **प्राबल्यादिति।** सामान्यविहितस्याप्युपांशुत्वस्यौपदेशिकत्वेन विशेषविहितस्याप्यतिदेशस्य कल्प्यत्वेन दौर्बल्यात् तत्प्राबल्यं वक्तव्यम्। अन्यथा आस्तां सौम्यादिषु विशेषातिदेशप्राबल्यकथा। नामातिदेशस्य सामान्यविहितातिदेशापेक्षया प्राबल्यं वदतो वार्तिककारस्यापि मते ज्योतिष्टोम एव नामातिदेशविषये तदङ्गभूते ऋग्वेदान्तर्गते यागविशेषे सामान्यातिदेशप्राप्तोपांशुत्वानापत्तिः, अतः उभयत्रापि औपदेशिकत्वेन तव नामातिदेशापेक्षया प्राबल्यमिव ममापि विशेषातिदेशापेक्षया प्राबल्यमुपांशुत्वस्य शक्यत एव वक्तुमिति भावः। **तादृशीति।** वेदान्तरीये पदार्थे इत्यर्थः। अत्र च सिद्धान्तिना प्राचीनमिति पदोपात्तदेशधर्मत्वपूर्वपक्षे यच्छब्दस्य प्राचीनशब्देनान्वयापत्त्या किञ्चिच्छब्देन प्रतीयमानान्वयबाधापत्तेः। किञ्चिच्छब्दस्यापि वीप्सायां प्रवृत्तस्य बहुष्वेव सम्भवात् एकस्मिंश्च देशेऽन्वयाङ्गीकारे बाधापत्तेश्च तत्तद्देशगतपदार्थाङ्गमेवोपांशुत्वमिति सिद्धान्तितम्। तत्र ननु नायं वीप्सावाचीत्याशङ्क्य सिद्धान्तितं भाष्यतन्त्ररत्नादिषु—उच्यते, किञ्चिच्छब्दोऽयमज्ञाते ज्ञातुमिष्टे वर्तते। देशश्च ज्ञात एव; प्राचीनशब्दस्य तद्वाचिनः श्रवणात्। तत्राज्ञातवचनः किञ्चिच्छब्दोऽनुपपन्नः स्यात्। मत्पक्षे तु तद्देशगताः पदार्थविशेषास्त्वज्ञाताः। विशेषशब्दस्येह श्रवणात्। अतस्तेषु प्राचीनशब्दात् सामान्येन ज्ञातेष्वपि विशेषरूपेणाज्ञातेषूपपद्यते किञ्चिच्छब्दः तस्माद्वीप्साफलोऽयमस्मिन् वाक्ये वर्तते। अतश्च तस्य मुख्यत्वात्तदनुसारेण प्राचीनशब्दस्य जघन्यस्यवर्णनात् सोऽपि पदार्थपरः। तस्मात् पदार्थधर्मोऽयमिति।

यत्त्वत्र विधिरसायनकृता—

**यद्येकानेकविषयप्रसृतिमुखभवः सङ्करो** लक्षणानामिष्येतान्याश्रयत्वप्रथमचरमताद्युत्थसाङ्कर्यनीत्या। **दैक्षादन्योऽपि दण्डः प्रकृतिजुषि भवेत् प्रैषकार्ये प्रशास्तुः स्यात्पक्षे स्तोत्रसाम्नां क्रतुनिकरजुषा**—**मुत्तरास्वेव गानम्**॥ ( वि.र. ) इति नवमश्लोकावतारिकायां अज्ञातार्थत्वखण्डनेन वीप्सार्थत्वस्थापनं यत्किञ्चिच्छब्दस्य कृतम्, यत्किञ्चिदिति यद्यदितिशब्दवत् वीप्सायां प्रसिद्धः वीप्सा च व्याप्तुं—साकल्येन सम्बन्धुमिच्छा। तथा च यत्किञ्चिदित्यनेनाग्नीषोमीयप्राग्भागवर्तिनः

सकलस्याप्यङ्गस्योपांशुत्वसम्बन्ध एव तात्पर्यमवसीयते। ननु यत्किञ्चिच्छब्दो वीप्सितार्थ इव अज्ञातेऽपि 'प्रागिवात्क (पा.सू. ५-३-७०) इत्यधिकारे अज्ञाते (पा-२२-५-७३) इति सूत्रविहितप्रागिवीयप्रत्ययवत् प्रसिद्धः। अस्ति चात्र प्राग्भागवर्तिनामङ्गानां विशिष्याज्ञातत्वं, प्राचीनमिति शब्देन प्राग्भागस्यैव तद्वर्तिनामङ्गानामनिर्दिष्टत्वात्। तथा च यत्किञ्चिदित्यस्याज्ञातार्थकत्वोपपत्तेः नात्र वीप्सानिश्चय इति चेन्मैवम्। किमिदमित्यादिप्रश्नोत्तरे यत्किञ्चिदित्यत्र अज्ञातत्वानादरणीयत्वादिबोधन इव अत्राज्ञातत्वबोधने प्रयोजनाभावेन प्रवृत्तिविशेषकरस्य साकल्यार्थकत्वस्यैव ग्राह्यत्वात् यत्किञ्चित्पदादीनां साकल्यार्थकत्वस्यैव ग्राह्यत्वात्। यत्किञ्चित्पदादीनां साकल्यार्थत्व एव 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा' 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्' इत्यादौ तत्पदेन प्रतिनिर्देशस्य दर्शनाच्च। विशेषज्ञातविशेषानादरणादिमात्रपरत्वे यत्किञ्चिदिदं यत्किञ्चिदानयेत्यादौ तदप्रयोगात्। अतो वीप्सार्थत्वनिश्चय इति।

तत्रेदं विभाव्यताम्। यत्किञ्चित्पदं वीप्सार्थमुत वीप्सितार्थम्? नाद्यः व्याप्तुमिच्छारूपवीप्साया उपांशुत्वविधावुद्देश्यत्वासम्भवात्। प्रत्यादीनामिव यत्किञ्चिच्छब्दस्य वीप्सार्थत्वेऽनुशासनस्य कोशस्य वा प्रमाणस्याभावाच्च। नहि प्रतिपर्यनूनां केवलवीप्साद्योतकानामेव प्रयोगेण 'अनुसिञ्चति'प्रतिसिञ्चती'त्यादौ उद्देश्याकाङ्क्षाशमनमस्ति। न वा वीप्साद्योतकप्रत्यादियोगे वृक्षमिति कर्मवाचकपदान्तरोपादानवदिहोद्देश्यवाचकपदान्तरोपादानमस्ति। वस्तुतस्तु प्रत्यादीनामपि न वीप्सार्थद्योतकत्वं द्विर्वचनं विनेत्यनुपदमेव वक्ष्यते।

न द्वितीयः—यद्यदितिवत् द्विरुक्तिरूपज्ञापकाभावे वीप्सितार्थप्रतीतावेव प्रमाणाभावात्। अत एव वृक्षं प्रतिसिञ्चतीत्यादावेकवृक्षपदोपादानान्न वीप्सितार्थप्रतीतिः किन्तु द्विरुपादानेनैवेत्यभिप्रेत्यैव 'वृक्षं वृक्षं प्रतिपर्यनुवा सिञ्चती'त्युदाहृत्योक्तं मनोरमायां 'अत्र द्विर्वचनेनैव वीप्सा द्योत्यते परिशब्दस्तु क्रियया सम्बध्यते। कर्मणि द्वितीया; कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं ने'ति। अस्माच्च द्विर्वचनं विना न वीप्सितार्थप्रतीतिरित्युक्ते केवलं प्रयुक्तानां प्रत्यादीनां न वीप्सितार्थवाचित्वमित्यप्युक्तं भवति। यदि च वृक्षपदोत्तरद्विर्वचनं विनापि केवलं प्रत्यादिपदादेव वीप्सार्थप्रतीतिः तर्हि प्रत्यादीनां वीप्सार्थविवक्षया वृक्षं प्रति सिञ्चतीति प्रयोगापत्तिः अनिवार्यैव।

कथं तर्हि लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव इति सूत्रे (पा-१-४-९) प्रत्यादीनां वीप्सार्थत्वोक्तिरिति चेत्। उच्यते। तद्धि सूत्रं एष्वर्थेषु वाच्येषु द्योत्येषु वा न कर्मप्रवचनीयसंज्ञाविधायकं, अपि तु एष्वर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः

स्युरिति व्याख्यानेन वीप्साद्यर्थविषय एव तद्विधायकम्। अत एव स्पष्टमेवोक्तमेतदपि तत्रैव मनोरमायां—"यतो द्विर्वचनवीप्साद्योतकत्वं न प्रत्यादेः अत एवैतदर्थमेव लक्षणादयो विषयतयोपात्ता इति व्याख्यातमाकरे—" इति। एवञ्च 'प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः' इति त्रिकाण्डीसरणमप्येवमेव व्याख्येयम्। अतश्च यद्यदितिवत् वीप्सितार्थ-विवक्षायां 'सर्वस्य द्वे' (पा-सू ८-१-१) इत्यधिकारविहितस्य 'नित्यवीप्सयो'रिति सूत्रविहितस्य द्विर्वचनस्य सर्वथाप्यापत्तेः, तदभावे वीप्सार्थग्राहकप्रमाणस्यैवाभावान्न वीप्सितार्थवाचकोऽत्र यत्किञ्चिच्छब्द इत्यभिप्रेत्य भाष्यकारादीनां वीप्सार्थत्वाभावपरा पूर्वलिखितोक्तिः। अतोऽ-ज्ञातविशेषार्थकत्वमेव युक्तम्।

यत्तूक्तम्—किमिदमिति प्रश्नोत्तरे यत्किञ्चिदित्यत्राज्ञातानादरणीयत्वादिबोधन इव अत्राज्ञातत्वबोधने प्रयोजनाभावेन प्रवृत्तिविशेषकरस्य साकल्यार्थकत्वस्यैव ग्राह्यत्वादिति। तन्न, उत्तरदातुः स्वस्यैवाज्ञातत्वानादरणीयत्वबोधतात्पर्यकत्वे यत्किञ्चिच्छब्दस्य स्वीक्रियमाणे अज्ञातविषयकोत्तरवाक्ये तदुपपत्तावपि यत्र वक्तुः स्वमुष्ट्यादिगतगोपनीयज्ञातवस्तुविषयकं किमिदमिति प्रश्नोत्तरं यत्किञ्चिदिति, तत्र वस्तुनोऽज्ञातत्वाभावात् गोप्यत्वेन चानादरणीतत्वस्या-प्यभावात् यत्किञ्चिच्छब्दोपपत्तेः दुरुपपादत्वात्।

अथ वक्तुर्वस्तुविषयके ज्ञानेऽज्ञाने वा आदरेऽनादरे वा सत्यपि पृच्छकस्यैवाज्ञात-मनादरणीयं भवत्विति विवक्षया सर्वत्र यत्किञ्चिच्छब्दप्रयोग उपपद्यत एव। गोप्ये च वस्तुनि गोप्यतानिर्वाहायैवाज्ञातत्वानादरणीयत्वयोरावश्यकत्वम्, गगनमण्डलवर्तिसूक्ष्मवस्तुविषयके च प्रश्नो-त्तरे उभयोरप्यज्ञातत्वानादरणीयत्वेऽपि पृच्छकनिष्ठाज्ञातत्वानादरणीयत्वादिबोधविवक्षा वक्तुरस्त्ये-वेति न बाधकमित्युच्येत; तथात्वे प्रश्नोत्तराभावेऽपि परमतखण्डनादौ यत्किञ्चिदेतदिति प्रयोगे अज्ञातत्वानादरणीयत्वादिबोधविवक्षासत्वेऽपि पृच्छकवृत्तितद्बोधविवक्षाऽभावेन तत्पद-प्रयोगानुपपत्तेः। न च पृच्छकत्वेन न परस्य निवेशः, किन्तु परत्वेनैव। अस्ति च तत्र वादिरूपः कल्पितः परः इति न बाधकमिति वाच्यम्। तथात्वेऽपि स्वाभिलषितद्रव्याशया प्रवृत्तस्य गुप्तदानानन्तरं गृहे परावृत्तस्य बन्धनमुद्राद्युद्घाटनेन दानीयद्रव्यविमर्शकारिणः स्वस्यै-वाभिलषितवस्तुप्राप्त्यलाभेन खिन्नस्य 'दत्तं, परन्तु भ्रान्तेन यत्किञ्चिदेव दत्त'मिति प्रयोगे कल्पितस्यापि परस्याभावात् तच्छब्दस्य प्रयोगानुपपत्तेः। एतादृशे विषयेऽनादरणीयत्वस्य कथञ्चित्सद्भावेऽपि अज्ञातत्वांशस्य सर्वथाऽसम्भवाच्च। अतश्चैकरूपेण यत्किञ्चिच्छब्दार्थ-निर्वाहार्थं बहुतरप्रयोगानुरोधेनानिर्देश्यत्वे सति विशेषज्ञानविषयत्वेनानादरणीयत्वमेव तत्पदप्रवृत्ति-

निमित्तं युक्तमाश्रयितुम्। यत्किञ्चित्पदप्रयोगोत्तरमनिर्देश्यमिदं वस्तु एतस्य विशेषज्ञाने नैव प्रयोजनं किञ्चिदिति विवरणात्। अनिर्देश्यत्वञ्च शब्दे निर्देष्टुमशक्यत्वं तच्च नानारूपेण —कचिदज्ञानेन, कचिद्गोपनीतया, तथा कचिदसम्बद्धार्थकत्वेन, कचित्प्रयोजनाभावगौरवापत्त्यादि-नेत्याद्यूह्यम्। एवञ्चानिर्देश्यानादरणीयवस्तुपर एव यत्किञ्चिदिति विशिष्टाव्ययरूपः शब्दोऽस्तु नाम सर्वत्रेति, प्रकृतेऽपि तथाविधयत्किञ्चिच्छब्दार्थग्रहणे बाधकाभावात् अनिर्देश्यत्वानादरणीय-त्वबोधने प्रयोजनाभावपर्यनुयोगस्यापौरुषेये वेदेऽशङ्क्यत्वान्न काप्यनुपपत्तिः।

वस्तुतस्तु नास्मिन् स्वरविधायके वाक्ये यत्किञ्चिदित्येकमव्ययम्। अपि त्वग्रिमतच्छब्दा-पेक्षितपूर्वार्थप्रतिपादकं यदिति सर्वनामपदं भिन्नं। भिन्नञ्च किञ्चिदित्येतावन्मात्रमव्ययम्। भाष्यकारो हि 'नहि यदित्यनेन देशोऽभिसम्बध्यते। किन्तर्हि?तद्देशगताः पदार्थाः। यदि देशो हि [भि? ] सम्बध्येत यत्प्राचीनमग्नीषोमीयादिति भवेत् न यत्किञ्चिदि'ति वदन् यच्छब्दस्य पृथक्त्व-मेवानुमन्यते। नहि यत्किञ्चिच्छब्दस्यैकाव्ययत्वे यच्छब्दस्ततः पृथक् भवितुमर्हति, येन प्राचीनपदेनान्वय आपाद्येत। किञ्चिच्छब्देनाव्यवधानात्। तेनैव पदार्थवाचकेन यच्छब्दान्वयो न तु व्यवहितेन प्राचीनपदेनेत्येव तत्तात्पर्यमवसीयते। स्पष्टञ्च पूर्वलिखिततन्त्ररत्नादिग्रन्थेषु पृथक्कारेणैव किञ्चिच्छब्दस्य प्रकृते अज्ञातविशेषवाचित्वेऽपि अनादरणाद्यर्थकत्वस्य भाष्यकारादि-भिरभियुक्तैरनभिधानात्। किञ्चित्पदेनाज्ञातविशेषव्यक्तिपरामर्शात् तस्यैव यच्छब्देन बुद्धि-स्थतयोपस्थितस्याग्रिमतच्छब्देन ग्रहणमिति न बाधकम्।

वस्तुतस्तु भाष्यकारादिदर्शितरीत्या अन्यत्रापि यत्किञ्चिच्छब्दे पृथक्कृतं शब्दत्रयमेव। न तु विशिष्टमेकमव्ययम्। अव्ययपदेषु तथाविधविशिष्टाव्ययापाठात्। तत्र च यत्किञ्चिच्छब्दौ सर्वनामानौ। चिदित्येकमव्ययम्। त्रयाणामपि समभिव्याहारविशेषे विजातीयविशिष्टार्थबोधः। अत एव यच्छब्दकिंशब्दाभ्यां परतः स्त्रीत्वादित्रिविधलिङ्गस्य एकत्वबहुत्वादीनां च विवक्षायां 'ये केचित्' 'या काचित्'' यत् किञ्चिदित्यादौ टाप्सुबेकवचनादि विभक्तिप्रत्ययश्रवणं, नास्ति चित्पदोत्तरम्। तत्र यत्किञ्चिदिति समभिव्याहारविशेषस्य यत्रासाकल्ये प्रयोगः यथा बहुषु निर्धारणे—यत्किञ्चित्फलमानेयम्, यानि कानिचिदानेयानीति, तत्र बहुतरानिर्धारितव्यक्त्य-पेक्षया साकल्येनैव एकत्वद्वित्वबहुत्वविवक्षाभेदेन तावन्मात्रकतिपयव्यक्तिप्रतीतिर्भवति। यत्रापि स्वल्पादिभोजने तत्राप्यसाकल्यविवक्षैव किञ्चिन्मात्रव्यक्तिप्रतीतिः 'असाकल्ये तु चिच्चने'त्यमर-कोशे चिदित्यव्ययस्य असाकल्यार्थत्वोक्त्या तत्पदेनासाकल्यबोधनात्। कचित्तु यत्र सर्वमनेन भुक्तमित्यर्थे 'यत्किञ्चिद्गृहे विद्यमानं' इति प्रयोगः तत्र साकल्यप्रतीतिरप्यस्तु। एतादृशेषु

यत्किञ्चिच्छब्दस्य सामान्यधर्मपुरस्कारेणोक्तेषु तत्तद्विशेषधर्मपुरस्कारेणानुक्तेषु बहुषु पदार्थेष्वेव[1] प्रयोगान्नपुंसकनिर्देशाच्चाग्नीषोमीयावधिकयज्ञप्राग्भागवर्तिधर्मत्वेनैव तत्तत्पदार्थानामुद्देश्यता। अन्यथा भागस्य पुंलिङ्गत्वात् नपुंसकनिर्देशो 'यत्प्राचीनम्' इत्येतावतैव संभवे यत्किञ्चिच्छब्दश्च व्यर्थस्स्यात्। एकवचनं च सामान्याभिप्रायेण बहुत्वलक्षणार्थम्।

---

च विषयेषु चिदित्यव्ययस्यार्थभेदेन अनेकार्थत्वाङ्गीकारेऽपि यत्किञ्चिच्छब्दयोः सर्वानुस्यूतपूर्वोक्तार्थग्रहणे बाधकाभावात् किमित्यज्ञातविशेषार्थत्वखण्डनेनैव साकल्यार्थत्वसाधने प्रयासकरणं तच्च न विद्मः। अत एव 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा' इति श्रुत्यन्तरे सर्वपदोपादानं सार्थकम्। साकल्यार्थत्वे पौनरुक्त्यापत्तेः अज्ञातविशेषार्थत्वोपपत्तिमूलिकाया एव फलतः साकल्यप्रतीतेः भाष्यादौ स्थापनाच्च। एवञ्च यच्च किञ्चिज्जगत्यस्मिन् इत्यादावपि चकारस्य अप्यर्थत्वात् किञ्चिदपि यदित्यर्थे अज्ञातविशेषवस्तुमात्रग्रहणे न कापि क्षतिः। यत्किञ्चिद्गृहे स्थितं तद्दत्तमित्यादौ अज्ञातविशेषवस्तुमात्रस्यापि तच्छब्देन परामर्शदर्शनात्। विशेषाज्ञातविशेषानादरणादिमात्रपरत्वे यत्किञ्चिदानयेत्यादौ तच्छब्दाप्रयोगादिति वचनमपि भवदीयं कथमादरणीयम्। अनादरणादिरूपार्थस्य तु भाष्यकारादिभिरनुक्तत्वात् तत्प्रतीतिः क्वचिज्जातापि वक्तृविशेषविवक्षाधीना, न तु शब्दतः प्रतीत्यधीनेत्याद्यूह्यम्।

अस्तु वा शब्दतोऽनादरणीयत्वप्रतीतिः तथापि अनादरणीयत्वस्य विशेषज्ञानविषयतायामौदासीन्येनापि प्रकृते उपपादितत्वान्न बाधकम्। परमार्थतस्तु यत्रापि सांकल्यप्रतीतिस्तत्रापि असाकल्यमेव चिदित्यव्ययाद्भासते इति न तदर्थत्वत्यागः। यथैव हि सर्वशब्देन बुद्धिस्थं समुदायमुपलक्षणीकृत्य घटत्वपटत्वादिनैव रूपेण तत्तद्व्यक्तिमात्रबोधः, यथावा वनमित्येकाकारप्रतीतौ समुदायोपलक्षणतया तत्तद्वृक्षत्वेनैव वृक्षाणां बोधः एवमिहापि अनुक्तविशेषसमुदायं बुद्धिस्थमुपलक्षणीकृत्य सुवर्णमुक्तारूप्यत्वादितत्तद्धर्मावच्छिन्नव्यक्तिमात्रस्यैव बोधः। अतश्च प्रत्येकमेकैकवस्तुविषयत्वेनासाकल्यबोधेऽपि उपलक्षणीभूतसमुदायमपेक्ष्य साकल्यं बुध्यमानं फलतः सिद्ध्यति। अत एव यत्किञ्चिद्गृहे स्थितं सुवर्णमुक्तादि तत्सर्वं दत्तमित्यसकलपदार्थविषयकं सकलपदार्थविषयकतापर्यवसायि विवरणं दृश्यते। वीप्साफलोऽयमस्मिन् वाक्ये यत्किञ्चिच्छब्द इति प्राचां ग्रन्थोऽप्येतदभिप्रायक एव। सर्वथाऽनुक्तविशेषं सामान्यतो वस्तुमात्रं तत्तद्रूपेण यत्किञ्चित्पदवाच्यमित्यनेकापेक्षो यत्किञ्चिच्छब्दो देशपरत्वेऽनुपपन्नः स्यादिति सिद्धम्। तदेतत्सर्वमभिप्रेत्याह —यत्किञ्चिच्छब्दस्येति। अत्र प्राचां ग्रन्थस्थं किञ्चिच्छब्दार्थान्तर्गतं अज्ञातपदमुक्तरीत्या-

---

1. A. reads बुद्धपदार्थेषु

**अतश्च तत्तत्पदार्थानामेवोद्देश्यत्वात् तत्स्वरूपे आनर्थक्यप्रसक्तौ तत्तद्वान्तरापूर्वसाधनत्वमेव लाघवाल्लक्ष्यते। इतरथा पदार्थसमुदायरूपभागस्य साक्षाद्यज्ञापूर्वसाधनत्वे प्रमाणाभावात्पदार्थद्वारा तदाश्रयणे लक्ष्यतावच्छेदके गौरवम्। पुनश्चोपांशुत्वस्य साक्षाद्भागेऽनन्वयात् पदार्थमन्त्राणां द्वारत्वकल्पनमित्यतिगौरवम्। अतस्तावत्पदार्थधर्म एवोपांशुत्वम्। अतश्च विकृतौ तद्भागारम्भके अपूर्वे न तस्योहः।**

**इदं चोपांशुत्वं विशेषविहितनिरवकाशस्वरान्तरावरुद्धप्रायणीयादिपदार्थातिरिक्तपदार्थविषयमिति स्वरचर्चायां** कौस्तुभे व्यक्तम् ॥ ६ ॥

---

ऽनिर्देश्यत्वपरमिति ज्ञापयितुं उक्तानुक्तपदद्वयप्रयोगः। अतश्चेति। यतो बहुत्वलक्षणार्थमप्येकवचनं तथापि तद्बहुत्वमुद्देश्यविशेषणत्वादविवक्षितं अतः तत्तत्पदार्थानामेवोद्देश्यत्वं न पदार्थसमूहस्येत्यर्थः। **अतस्तावत्पदार्थधर्म एवेति।** य एवाग्नीषोमीयावधिका अपूर्वा आरादुपकारकाः सन्निपत्योपकारकाश्च पदार्थास्ते उभयविधा अपि तावत्पदार्थपदस्यार्थः। तेषाञ्चोद्देश्यत्वं तदङ्गमन्त्रद्वारेति सर्वपदार्थधर्म इत्यर्थः। ननु उपांशुत्वस्याग्नीषोमीयावधिकपदार्थमात्राङ्गत्वमयुक्तं, 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्। मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायां, उच्चैःप्रवर्ग्येण उपांशूपसत्स्वि"त्यादि विशेषवचनैः तत्तत्पदार्थेषु विशेषस्वरविधानेन तेषु निवेशासंभवादित्याशङ्कां निरस्यति—**कौस्तुभे व्यक्तमिति।** ज्योतिष्टोमे तावत् तत्तद्विनियोगविध्यनुसारेण नानावेदस्वरे प्राप्ते दर्शपूर्णमासप्रकृतिकाङ्गविषये प्राकृतेन स्वरेण तस्य बाधः। तत्रापि "यत्किञ्चित् प्राचीन"मिति वचनेनाग्नीषोमीयपशुप्राग्भाविपदार्थाङ्गत्वेन विहितमुपांशुत्वं सामान्यविहितं नानावेदस्वरमिव प्राकृतमपि स्वरं बाधते, तत्रापि च "यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात् मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायां उपांशूपसत्स्वि"त्यादिनिरवकाशवचनविहिताः स्वराः दीक्षणीयादिप्रधानमात्रांशे बाधन्ते न तु तदङ्गांशेऽपि। "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या" इतिवत् प्रधानमात्रोद्देशेन विहितत्वात्। अत एवो"च्चैः प्रवर्ग्येणे" त्यनेन "अप्स्ववभृथेन चरन्ती"तिवत् साङ्ग एवोच्चैष्ट्वादिविधानात् साङ्ग एव प्रवर्ग्ये उपांशुत्वबाधकता। एवञ्चोपसत्सु अग्नीषोमीयप्राग्भावित्वादेवोपांशुप्राप्ते "रुपांशूपसत्स्वि"त्यादिविधिसरूपं वचनमर्थवाद एव। उपसत्पदस्य निरवकाशविषयातिरिक्तपदार्थमात्रोपलक्षणविषयत्वमङ्गीकृत्यौचित्येन दीक्षणीयादिस्वरप्रशंसार्थत्वेनाप्युपपत्तौ भिन्नवाक्यतापादकविध्यन्तरकल्पने प्रमाणाभावात्। अत एव नानेन "यत्किञ्चित्प्राचीन"मिति वाक्यस्योपसंहारः यत्किञ्चित्पदस्य बह्वर्थकत्वेन उपसन्मात्रविषयकेण तदनुपपत्तेः। उपसत्पदस्योपलक्षणत्वेन तदङ्गीकारे एकतरवचनवैयर्थ्यापत्त्यपेक्षयाऽर्थवादत्वस्यैव युक्तत्वात्। अग्नीषोमीयादौ तु दर्शपूर्णमासप्रकृतिके "मन्द्रया आज्यभागान्तं परं मध्यमया

## (७) प्रणीतादि तथेति चेत् ॥ २३ ॥ न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २५ ॥

**इदमधिकरणं सूत्रकारेण पूर्वाधिकरणेऽन्तरागर्भिणीत्वेन कृतमपि** व्याख्यासौकर्यार्थं **पृथगभिधीयते। दर्शपूर्णमासयोः "यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूय ङ्गतो यज्ञं तन्वाते तस्मात्प्रणीताः**

---

उत्तमयाऽनूयाजादि। तथा, प्राक्स्विष्टकृतः प्रथमस्थानेन, मध्यमेनेडायाः, शेषं तृतीयस्थानेने" त्येवं विहितं प्राकृतं त्रैस्वर्यमेव। अतत्प्रकृतिकेऽतिदेशप्राप्तस्य बाधकत्रैस्वर्यस्याभावात् नानावेदस्वर एव। तत्तद्विनियोगविध्यनुसारात्। सुत्यायान्तु अङ्गप्रधानसाधारण्येन "मन्द्रं प्रातस्सवने चरन्ती"त्यादिवचनविहितैः सवनक्रमेण मन्द्रमध्यमोत्तमस्वरैः प्राकृतानां सवनीयादौ स्तोत्रादौ च नानावेदस्वरस्य बाधः। चरन्तीति प्रयोगवाचिधातुसमभिव्याहारेण प्रातस्सवनादिशब्दस्यापि स्वशक्यघटितप्रयोगैकदेशलक्षकत्वावगमात् सोमयागाभ्यासविशेषमात्रवाचित्वाभावेन प्रधान-मात्रार्थत्वाभावात्। सुत्योत्तरकालीनेषु तु दर्शपूर्णमासप्रकृतिकेषु प्राकृतः अपूर्वेषु नानावेदस्वर इति स्पष्टमेव। दर्शपूर्णमासयोस्तु अङ्गप्रधानयोस्तत्तद्विनियोगविध्यनुसारेण प्रयोगविधितः उपांशुत्वादौ प्राप्तेऽपि मन्द्रयाऽऽज्यभागान्तमित्यादिपूर्वलिखितवचनाभ्यां प्राप्तबाधविधया भागधर्मस्य त्रैस्वर्यस्य विधानात् मन्द्रादिस्वरः। तत्रापि विशेषवचनात् क्वचिदुच्चैष्ट्वादीत्येवं द्रष्टव्यम्। एवं तद्विकृतीनामकाम्यानां प्रधानांशे, प्राकृताङ्गांशे, तत्कार्योपपन्नाङ्गांशे च, तावत् प्राकृतस्वरस्यैव ग्रहणम्। काम्यविकृतीनां प्रधानमात्रांशे तु "यज्ञाथर्वणं वै काम्या इष्टय" इति वचनादुपांशुत्वम्। अस्याप्यपवादो विशेषवचनादिनोह्य इत्यादि तार्तीयतृतीयपादे गुणमुख्यव्यतिक्रमाधिकरणे कौस्तुभे व्यक्तमिति भावः।

---

प्रणीतादि तथेति चेत्।

पूर्वाधिकरणेऽयं सूत्रक्रमः सिद्धान्तोपक्रमाधिकरणरचनया भाष्ये प्रदर्शितः "देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्। तस्य च तत्र भावात्-२। यज्ञस्य वा तत्संयोगात् ३। अनुवादश्च तदर्थवत् ४। प्रणीतादि तथेति चेत् ५। न यज्ञस्याश्रुतित्वात् ६। तद्देशानां वा सङ्घातस्या-चोदितत्वात्" ७ 'इति। अस्मिंश्च क्रमे उपांशुत्वस्य यज्ञभागधर्मत्वं प्रणीतावाग्यमदृष्टान्तेन पूर्वपक्षिणाऽऽशङ्कितं सिद्धान्ते दूषयितुं प्रणीतावाग्यमदृष्टान्तमेकेन 'प्रणीतादितथेति चेत्' इति

प्रणेष्यन् वाचं यच्छति तां स हविष्कृता विसृजति' इति श्रुतम्। तत्रायं वाग्यमः प्रणीताप्रणयनाङ्गमेव विधिवाक्यस्थल्टृप्रत्ययेन[1] तन्मात्रार्थत्वावगमात्। अतो हविष्कृदाह्वानकालावधिकवाग्यमस्य तन्मात्रार्थत्वावगमात् न भागधर्मत्वं, न वा तावत्पदार्थधर्मत्वम्। यदि तु "प्रणीताः प्रणेष्यन्" इति वाक्यस्य वाग्यमोत्पत्तिपरत्वे उत्पत्तिशिष्टकर्त्रैकत्वानुपपत्तेः, तत्र यजमानप्राप्त्यभावात् पूर्ववाक्यस्यार्थवादत्वानुपपत्तेः, यजमानमात्रविधानस्य वा सुतरामनुपपत्तेरवश्यं 'यज्ञं तनिष्यन्तौ' इति वाक्यस्यैव वाग्यमविधायकत्वमुच्येत ततोऽस्तु तत्रत्यल्टृश्रुत्या यज्ञविस्तारार्थत्वमेव। तदा हि उत्तरवाक्याभ्यां वाग्यमानुवादेन प्रणीताप्रणयनहविष्कृदाह्वानयोः पूर्वोत्तरावधित्वेन विधी। अत एव तत्रत्यमेकवचनमप्यनुवाद्यगतत्वात् 'ग्रहं सम्मार्ष्टि' इतिवदविवक्षितम्। अतश्च विधेयसामर्थ्यानुसारादुद्देश्यभूतो यज्ञविस्तारापरनामधेयो यज्ञभागोऽपि तदवधिक एव। यत्तु मूले पूर्वपक्षे यज्ञ-

---

सूत्रेणानूद्यापरेण न यज्ञस्याश्रुतित्वादिति सूत्रेण परिह्रियते इति भाष्यारूढं व्याख्यानमुक्त्वा वार्तिककृता तद्देशानां वा सङ्ख्यातस्येत्युपांशुत्वस्य भागधर्मत्वपूर्वपक्षनिरासार्थसिद्धान्तसूत्रे स्थितादुत्तरमिति भाष्यग्रन्थात् प्रणीतादीति सूत्रद्वयं अन्तरागर्भिणीत्वेन पूर्वपक्षसिद्धान्तपरं प्रकारान्तरेण व्याख्यातम्। तत्रोपांशुत्वाधिकरणपूर्वपक्षेण पूर्वपक्षोत्थानादन्तरागर्भिणीत्वम्। तदेतादृशमन्तरागर्भिणीत्वं प्रणीतादितथेतिचेदिति सूत्रे तथेतिपदोपादानेन सूत्रकृतोपेक्ष्योपांशुत्वाधिकरणसिद्धान्तसमाप्त्यनन्तरं स्वयं पार्थक्येनाधिकरणभेदप्रदर्शनेन कृतम्। तन्मूलं केवलं व्याख्यासौकर्यमेवेत्याह—**व्याख्यासौकर्यार्थमिति**। अत्र प्राचीनैः वाग्यमो भागधर्मः पदार्थधर्मो वेति विचारः कृतः; तमाक्षिप्य समाधत्ते—**तत्रायमिति**। **तत्र यजमानप्राप्त्यभावादिति**। "प्रणीताः प्रणेष्यन् वाचं यच्छति" इत्येकवचनश्रवणादेकस्य कर्तुः तत्राध्वर्यवकाण्डे पाठादध्वर्योरेव कथञ्चित्प्राप्तावपि यजमानस्य प्राप्त्यभावे "अध्वर्युयजमानौ वाचं यच्छत" इति वाक्येन यजमानविधानं तु तावन्न संभवति; उत्पत्तिशिष्टाध्वर्युरूपकर्त्रैकत्वानुपपत्तेः अतोऽर्थवादस्यापि तस्यानुवादत्वसिद्ध्यै यजमानसम्बन्धोऽवश्यमपेक्षितः तदैव भवेद्यदि "अध्वर्युयजमानौ वाचं यच्छत" इत्यस्योत्पत्तिविधित्वं भवेदित्यर्थः। **तत्रत्यल्टृश्रुत्येति**। यज्ञं तनिष्यन्ताविति वाक्यगततनिष्यन्ताविति ल्टृश्रुत्येत्यर्थः। **तत्रत्यमेकवचनमिति**। वाचं यच्छतीत्येकवचनमित्यर्थः। **उद्देश्यभूत इति**। यथैव 'यस्योभावग्नी' इति वाक्यविहितपुनराधेयस्य वाक्यान्तरावगतसहिताग्निद्वयजनकत्वरूपसामर्थ्यादविवक्षितेऽपि उभयत्वरूपे निमित्तविशेषणे उभयाग्न्यनुगमननिमित्तानुविधायित्वमेव भवति तथाऽत्रापि वाग्यमस्य वाक्यान्तरावगतप्रणीताप्रणयनहविष्कृदाह्वानरूपपूर्वोत्तरावधिकत्वसामर्थ्यात् यज्ञविस्तारोऽप्युद्देश्यभूतः तदवधिक एव फलतीति भावः। **अनङ्गीकृत्य भागधर्मत्वमिति**।

---

1. ल्टृशेषे च इति क्रियार्थायां क्रियायां तद्विधानात्।

**शब्दस्य विस्तारविशेषणत्वमनङ्गीकृत्य** भागधर्मत्वमुक्तं, **तत् यज्ञशब्दस्य विस्तारं विनाऽन्य-वान्वयस्य दुरुपपादत्वात्** भागवाचकपदाश्रवणाच्चोपेक्षितम्। **अतोऽध्वर्युयजमानकर्तृक-वाग्यम एव यज्ञविस्तारपदवाच्यभागधर्मत्वेन विधीयते, न तु पदार्थधर्मत्वेन तद्वाचकपदा-भावात्। अतश्च पूर्वाधिकरणपूर्वपक्षवदेव यज्ञापूर्वप्रयुक्तो भागधर्मश्च वाग्यमः इति प्राप्ते—**

**यजमानाध्वर्युकर्तृविशिष्टवाग्यमस्य यज्ञभागार्थत्वे षष्ठविधिप्रकारापत्तेस्सन्निपत्यो-पकारकत्वलाभाय द्वितीयविधिप्रकारलिप्सया चा**ध्वर्युयजमानसंस्कारकत्वेनैव **वाग्यमविधिः। यथा च नैवं सत्युद्देश्यानेकता** तथोक्तं **ग्रहैकत्वाधिकरणे कौस्तुभे। तस्य च दृष्टार्थत्वात् मनःप्रणिधानमेव संस्कारः। संस्कृतयोश्च तयोरुपयोगापेक्षायां तत्तत्प्रमाणककरिष्यमा-णकर्मार्थत्वमेव कल्प्तं न तु भागार्थत्वम्। न च तयोर्भागोपयोगित्वस्यापि** तद्द्वारा **कथञ्चित्सत्त्वात् 'यज्ञं तनिष्यन्तौ' इति विशेषणसामर्थ्यात् यज्ञविस्तरोपयोग्यध्वर्युयज-मानसंस्कारकत्वमेव वाग्यमस्य कल्प्यतामिति वाच्यं; 'यज्ञं तनिष्यन्तौ' इत्यस्योद्देश्य-विशेषणत्वेनाविवक्षितत्वात्। अतश्च** हविरुभयत्ववत् **'यज्ञं तनिष्यन्तौ' इत्यनुवादो**

---

तत्र हि यज्ञं तनिष्यन्तावित्यर्थवादगतयज्ञपदश्रवणमात्रेण यज्ञसंयोगप्रतीतिमभिप्रेत्य भागधर्मत्वं पूर्वपक्षीकृतम्। सिद्धान्ते वाग्यमसम्बन्धं विहाय यज्ञसंयोगस्य विस्तारसम्बन्धतारूपदूषणप्रति-पादनाज्ज्ञायते; न तु यज्ञपदस्य विस्तारविशेषणत्वमङ्गीकृत्येत्यर्थः। अस्तुवा यज्ञपदस्य तनिष्यन्ता-वित्यनेनान्वयेन वाग्यमसम्बन्धः तावतापि न भागधर्मत्वपूर्वपक्षासिद्धिः इत्याह—**भागवाचकेति अध्वर्युयजमानसंस्कारकत्वेनैवेति।** यद्यपि तयोस्तत्र कर्तृतया गुणत्वेनैवान्वयः प्रतीयते, तथापि तस्य प्रयोजनापेक्षायां दृष्टार्थतालाभायोपस्थितत्वात् तद्वाचकपदान्तरकल्पनया तत्संस्कार-कत्वेनैव विधानम्; नतु प्रकरणात् प्रधानमात्राङ्गमदृष्टार्थत्वापत्तेः। तयोः संकार्यत्वेनैव च कर्तृत्वस्य प्राप्तत्वात् तदंशेऽनुवाद इत्याशयः। **तथोक्तमिति।** करोत्यर्थाया आख्यातार्थ-भावनायाः करोतेरिव नित्यं सकर्मकत्वेऽपि नानेककर्मत्वं, घटञ्च करोतीति [घटं पटं करोतीति ?] चकारं विनोभयोः घटपटयोः कर्मत्वेनान्वयादर्शनात्। अतश्च तस्या अप्येककर्मत्वमङ्गक्रिया नानेकोद्देश्यत्वं यद्यपि; तथापि एकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वरूपस्य एक कर्मत्वस्य प्रकृतेऽपि सद्भावान्न तद्भङ्गापत्तिः। अत्रहि अध्वर्युत्वयजमानत्वयोः कर्मत्वाधिकरण-तावच्छेदकयोरेकबोधविषयत्वाभावेऽपि द्वन्द्वोत्तरविभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्ज्य-वृत्तित्वावसायात् तत्पर्याप्त्यधिकरणतावच्छेदकधर्मस्य अध्वर्युयजमानोभयत्वस्य द्वन्द्वजन्यैकबोध-विषयत्वेनैककर्मत्वोपपत्तिः कौस्तुभे प्रतिपादितेति भावः। **तद्द्वारेति।** करिष्यमाणपदार्थ-द्वारेत्यर्थः। **हविरुभयत्ववदिति।** उभयमपीत्यर्थेन स्तुत्यर्थमनुवादस्तद्वदित्यर्थः।

---

वाग्यमस्तुत्यर्थः। अतो दृष्टार्थत्वलाभाय पूर्वोत्तरावधिकतावत्पदार्थधर्मत्वमेव। न च लट्श्रुत्या प्रणीताप्रणयनमात्रार्थत्वमेव कल्प्यतामिति वाच्यम्। हविष्कृदाह्वानावधेरदृष्टार्थतापत्तिभयेन तस्यापि कालोपलक्षणत्वात्। अतस्सिद्धं वाग्यमस्यापि तावत्पदार्थधर्मत्वम्॥ ७॥

---

(८)—अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत्॥ २३॥ अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात्॥ २७॥ चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात्॥

अग्नौ श्रुते 'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति' इत्यादौ **किमग्निशब्देन** संस्थानविशेष-**साधनीभूता इष्टका एवोच्यन्ते तदर्थं च प्रोक्षणं, उतेष्टकारब्धमवयव्यन्तरमेवाग्निशब्देनोच्यते तदर्थं च प्रोक्षणमिति चिन्त्यते।**

---

**अग्निधर्मः प्रतीष्टकम्।**

**प्रोक्षतीत्यादाविति।** आदिपदेन 'दध्ना मधुमिश्रेणाग्निं प्रोक्षति' 'वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति' इति विहितानां सङ्ग्रहः। अत्र भाष्यतन्त्ररत्नादिषु "अग्निधर्मः प्रतीष्टकं सङ्घातात् पौर्णमासीवदि"ति सूत्रस्वारस्यमनुगृह्य "अग्निं प्रोक्षती"त्यादौ ज्वलनवाचिनोऽप्यग्निशब्दस्य सिद्धान्ते स्थण्डिलपरत्वस्येवेह पूर्वपक्षे इष्टकासमुदायपरत्वास्याङ्गीकारात् अमूर्ते च समुदाये प्रोक्षणासम्भवात् तल्लक्षितेष्टकारूपसमुदायिसंस्कारार्थत्वात् प्रतीष्टकं प्रोक्षणविकर्षणादि कर्तव्यमित्यनया भङ्ग्या पूर्वपक्षः कृतः। तत्राग्निपदस्य समुदायपरत्ववादिनाऽन्ततः समुदायिपरत्वेऽवश्यकल्पनीये प्रथमत एव तत्परत्वकल्पनं युक्तम्। न तु समुदायपरत्वमपि गौरवादित्यभिप्रायेण यदीष्टकाव्यतिरिक्तोऽवयवी अग्निपदाभिधेयः ततः सकृत्। अथेष्टका एव संहता अग्निधारणार्थेन स्थापिता अग्निशब्देनाभिधीयन्ते ततः तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यमिति शास्त्रदीपिकाग्रन्थेऽपि संहतेष्टकामात्रपरत्वस्यैव प्रतीतेः स्वयमपीष्टकामात्रपरत्वमेवानुसन्धत्ते—**संस्थानविशेषेति**। एतेन "इष्टकाभिरग्निं चिनुत" इति शब्दतस्तावदिष्टकानां तृतीयान्तानां परार्थेनावगतत्वात् तदर्थं प्रोक्षणं न भवति। गुणानाञ्च परार्थत्वादिति न्यायात। किन्तु द्वितीयासंयोगादग्न्यर्थं प्रोक्षणमिति सिद्धान्ते तन्त्ररत्नकारस्य "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्" (पू. मी. ३-१-१२) इति न्यायोपन्यसनमपास्तम्। इष्टकाभिरग्नि"मिति वाक्येऽपि "अग्निशब्दस्य पूर्वपक्षे ज्वलनाश्रयीभूतसंस्थानविशेषमात्रपरत्वस्यैवाङ्गीकारात्। प्रोक्षणवाक्ये च संस्थानविशेषारब्धावयविसद्भावे

**तत्र, यत्रैकावयवाकर्षणेनेतरावयवाकर्षणं, यत्र वा न सन्धिदर्शनं तत्रैव शरीरघटादौ अवयव्यन्तराभ्युपगमः। न चेहैकेष्टकाकर्षणेनेतरेष्टकाकर्षणं** सन्धिश्च **पुरीषच्छन्नानामपीष्टकानामनुमानेन दृश्यत एव।** अतो व्यापकाभावात् **पक्वामसंयोगो न द्रव्यान्तरमिति** काश्यपवचनाच्चावयव्यन्तरे **प्रमाणाभावादिष्टकासंस्कारार्थमेव प्रोक्षणम्। अतश्चेष्टकात्वसमानाधिकरणमेवापूर्वसाधनत्वमग्निपदेन लक्ष्यत इति तस्य प्रत्येकवृत्तित्वात्** प्रतीष्टकं **प्रोक्षणमित्यपि सिद्धं भवति।** न **चैवं व्रीहिपात्रप्रोक्षणादावपि प्रत्येकं तदापत्तिः।** न्यायत-

---

प्रमाणाभावेन तत्साधनेष्टकापरत्वस्यैवाग्निशब्दे स्वीकारे बाधकाभावात्। एकत्र गुणभूतानामपि व्रीह्यादीनामन्यत्र संस्कार्यत्वस्य शतशो दृष्टत्वेन न्यायोपन्यासवैयर्थ्यात्। यद्यपीष्टकापरत्वे अग्निमित्येकवचनानुपपत्तिः; अत एव 'पौर्णमासीमभिमृशेदि'त्यादौ समुदायिपरस्यापि पौर्णमासीपदस्य तदुपसर्जनसमुदायपरत्वमङ्गीक्रियत एव। एवमिहापि समुदायपरत्वमेवावश्यकम्; तथापि ग्रहैकत्वन्यायेनेहैकत्वस्याविवक्षितत्वात् सर्वसंस्कारस्यापेक्षितत्वाच्च न तद्वाचकत्वकल्पनं प्रमाणवत्। सूत्रमप्यस्मिन्नर्थे शक्यत एव सुधीभिर्योजयितुमिति भावः।

ननु मध्यमस्थितानामिष्टकानामवयवसंयोगचाक्षुषज्ञानाभावरूपसन्धिदर्शनाभावसत्वात् अवयव्यन्तराभ्युपगमापत्तौ सन्धिश्च न दृश्यते इत्येतत् प्रकृतेऽसाधकमित्यत आह—**सन्धिश्चेति।** अयमर्थः, यत्र यत्रावयव्यन्तरं तत्र तत्र एकावयवाकर्षणप्रयुक्तेतरावयवाकर्षणस्य [णम्] अथवा अवयवसंयोगचाक्षुषज्ञानस्याभावो वा नियत इत्यन्वयव्याप्तौ गृहीतायां यत्रैकावयवाकर्षणप्रयुक्तेतरावयवाकर्षणस्य अथवाऽवयवसंयोगचाक्षुषज्ञानाभवस्य व्यापकस्याभावः तत्रावयव्यन्तराभाव इति व्यतिरेकव्याप्तिमुखेनावयव्यन्तराभावः साध्यते; स च व्यापकाभावो यथैकावयवाकर्षणप्रयुक्तेतरावयवाकर्षणाभावः तथा अवयवसंयोगचाक्षुषज्ञानाभावाभावोऽवयवसंयोगचाक्षुषज्ञानरूपोऽपि। स च यद्यपि मध्यस्थितेष्टकासु नास्ति तथापि प्रान्तस्थितेष्टकासंयोगश्चक्षुषा ज्ञायत एवेति तद्गृहीतव्याप्त्या मध्यस्थास्वपि सन्ध्यनुमानं भवत्येवेत्यानुमानिकं सन्धिदर्शनमस्त्येवेति तत् ज्ञापयितुं पुरीषच्छन्नानामित्युक्तम्। नत्वानुमानिकज्ञानस्य व्यापकाभावत्वकल्पने तात्पर्यम्। तथात्वे शरीरघटादिदृष्टान्तकथनानुपपत्तेः। तत्रावयवसंयोगज्ञानस्यानुमानिकत्वेनावयव्यन्तरसाधने तदभावस्य व्यापकत्वासंभवादिति। **व्यापकाभावादिति।** कृतार्थमेतत्। **काश्यपेति।** काश्यपो गौतमः। **प्रतीष्टकं प्रोक्षणमिति।** यद्यपि प्राजापत्यपशुष्वनेकचतुरवत्तसंस्कारस्यापि प्रक्षेपस्य सकृदनुष्ठानवदिहापि सकृदेव तत्प्राप्नोति तथापि हिरण्यशकलादीनामद्रवत्वेन तत्कृतप्रोक्षणस्य मुख्यत्वासंभवेन उक्षतिना संयोजनमात्रस्यैव लक्षणया विधानात् तस्य प्रतीष्टकं [सम्भवात्] तन्त्रत्वानुपपत्तिरित्याशयः। अत एव यत्र मुख्यं प्रोक्षणं तत्र भवत्येव तन्त्रानुष्ठानमिति वैषम्यं दर्शयति—**नचैवमिति।**

स्तथाऽऽपस्तावपि "अग्नये वो जुष्टं प्रोक्षामि", "शुन्धध्वम्" इति मन्त्रे बहुवचनोपादानबलेन तन्त्रत्वप्रतीतेः। प्रकृते तु नादृशागमकाभावात् प्रत्येकमेवेति प्राप्ते—

एकावयवाकर्षणेनेतरावयवाकर्षणश्च नावयविव्यापकत्वं नापि सन्ध्यदर्शनस्यः वृक्षपटादौ व्यभिचारात्। अतो यत्रैकाकारप्रतीतिरबाधिता तत्रैवावयविस्वीकारः। इतरथा इष्टकाया अपि स्वीकारे प्रमाणाभावः। काश्यपीयं तु वचनं मूलाभावादनादरणीयम्। वनमित्यादौ तु बाधिता एकाकारप्रतीतिः। अतश्चाग्निपदेनावयविन एवोक्तत्वात्तदर्थमेव प्रोक्षणम्। तस्य चैकत्वात्सकृदेव प्रोक्षणम्।

न चैवमवयविस्वरूपे[1] आनर्थक्ये अपूर्वसाधनीभूताग्न्याधारत्वलक्षणायां[2] अग्नाविवोत्तरवेद्यामपि हिरण्यशकलप्रोक्षणादिधर्मापत्तिः इष्टकादिसम्पादितलौकिकस्थलविशेषे अग्न्यादिपदप्रयोगाभावेनादृष्टविशेषावच्छिन्नस्थलविशेषस्यैवाग्न्युत्तरवेद्यादिशब्दाभिधेयत्वात्। तत्र चानर्थक्याभावेनापूर्वसाधनत्वलक्षणाया एवाभावात्। अतश्च नाग्न्युत्तरवेदिधर्माणां साङ्कर्यम्। न चैवमुत्तरवेदिधर्माणामग्नावतिदेशकथनं सङ्कर्ये विरुध्येतेति वाच्यम्। दैक्षवत् अग्नौ बहुतरवैशेषिकधर्माम्नानेऽप्यपेक्षितहविर्धानपूर्वदेशवर्तित्वादिकतिपयधर्माणां स्थानापत्त्यतिदेशेनोत्तरवेदितः प्राप्तेरविरोधात्। उत्तरवेद्यां तु यावदपेक्षितधर्मसाकल्यान्न वैपरीत्याशङ्का।

---

बहुवचनोपादानेति। वस्तुतस्त्वपूर्वसाधनत्वरूपोद्देश्यतावच्छेदकावच्छिन्ने एव क्रियान्वयनियमात् तादृशोद्देश्यतावच्छेदकतायाः अश्वशफमात्रपुरोडाशप्रकृतिभूतव्रीहिराशावेव व्यासक्तत्वेन तदवच्छिन्नव्रीहिषु युक्तं सकृदनुष्ठानम्। प्रकृते तु तादृशावच्छेदकतायाः प्रतितत्तन्मन्त्रकरणकोपधाने प्राप्तसाधनभावास्विष्टकासु प्रत्येकवृत्तित्वात् तदवच्छिन्ने प्रसक्तं प्रोक्षणं प्रत्येकमेव युक्तमित्यपि शक्यं वक्तुमिति ध्येयम्। वृक्षेति। यद्यपि वृक्षे आकृष्यमाणे संयुक्तसंयुक्ताकर्षणमस्तीति न व्यभिचारः तथापि तेनाकृष्यमाणतत्संयुक्तयोरेकोऽवयवी शाखादिः सिध्यतां नाम। न तु यन्नाकृष्यते संयुक्तं व्यासक्तो वृक्षादिरेकोऽवयवी सिध्येत्। तेन आकर्षणमप्रयोजकमवयविसिद्धेरित्यभिप्रायेण वृक्षपदं प्रयुक्तम्। यत्रैकाकारेति। यद्यपि वनमिति प्रतीतिरेकाकारापि नावयव्यन्तरसाधिका तथापि तत्र वृक्षाणां भिन्नदेशतया संयोगादवयव्यारम्भानुपपत्तेः विद्यमानापि वनमित्येकबुद्धिर्बाधिता न तत्साधिकेति वक्ष्यते। तत्सूचनायाबाधितेत्युक्तम्। अपि स्वीकारेत्यत्रापिशब्दोत्तरमवयवित्वेति पूरणीयम्। दैक्षवदिति। दैक्षे वैशेषिकधर्माम्नानेऽपि अपेक्षावशा-

---

1. B. अग्निस्वरूपे

2 B यवेष्वि

अतश्च प्रकृतौ [1]तत्तत्प्रोक्षणादिधर्माणामग्न्युत्तरवेदिमात्रा[2]र्थत्वेऽपि यत्र विकृतौ तदुभयकार्यापन्नमुक्तपरिमाणं स्वतस्सिद्धभूमिकं तद्बहिःखातभूमिकं स्थण्डिलमग्न्या-धारत्वेन समाम्नातं तत्र प्रोक्षणादीनामूहसिद्धिः। संस्थानविशेषोपधायकक्रियासाधनी-भूततदवयवार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभावान्न प्रोक्षणादीति ऊहविचारोपयोगित्वं चास्याधिकरणस्य[3]। यदि चैवंविधा विकृतिर्न सम्भाव्यते तदा कृत्वाचिन्तया, उदाह-रणान्तरे चोहोपयोगोऽनुसन्धेयः। प्रासङ्गिकं वेदमधिकरणम् ॥ ८ ॥

---

चोदनालिङ्गातिदेशेन पयोयागधर्माणां प्राप्तिवदित्यर्थः। उपधायकक्रिया चयनक्रिया, तदवयवार्थ-त्वपूर्वपक्षे तदवयवा इष्टकारूपास्ते ते अवयवा इत्यर्थः। तदभावादिति। इष्टकारूपावयवा-भावादित्यर्थः। पूर्वाधिकरणे ग्रहयज्यभ्याससमुदायात्मकज्योतिष्टोमप्रयुक्तमुपांशुत्वं पदार्थ-प्रयुक्तं वेति विचारिते समुदायप्रसङ्गात् हिरण्यशकलप्रोक्षणादिसमुदायप्रयुक्तं अवयविप्रयुक्तं वेति चिन्तार्थमधिकरणमित्यभिप्रायेण प्राचीनसम्मतं प्रासङ्गिकत्वमनुवदति—प्रासङ्गिकं वेति।

---

1. B. तत्प्रोक्षणादि
2. A. मात्रार्थत्वे यत्र
3. चाप्यधि

(९)—पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्॥ लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥ अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥ ३१ ॥ स्याद्वाऽनारभ्यविधानादन्ते लिङ्गविरोधात् ॥ ३२ ॥

द्वादशाहे 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते असंस्थितो हि तर्हि यज्ञः' इति श्रुतम्। तत्र किं पत्नीसंयाजान्तत्वं द्वादशस्वप्यहस्सु विधीयते उत उत्तमवर्जमिति चिन्तायां—

अहस्त्वाविशेषात् सर्वेषु। न चासंस्थायाः पत्नीसंयाजान्तत्वे हेतुत्वावगमात् तस्योत्तमवर्जमेव सत्त्वेन तत्रैव पत्नीसंयाजान्तत्वावगतिः। एतस्य 'तेन ह्यन्नं क्रियते' इतिवत् हेत्वर्थवादत्वेनाहेतुत्वात्। न च तर्हि तेनैव 'अक्ताश्शर्कराः' इतिवन्निर्णयः, तद्वदिह सन्दिग्धत्वाभावेन तस्यानिर्णायकत्वात्। प्रत्युतेदं गुणस्यावश्यकत्वेनाविशेषप्रवृत्तविधेरर्थवादेन सङ्कोचानुपपत्तेश्च। अतश्चार्थवादोऽपि बहुदिनसाध्यत्वाच्चिरसंस्थाभिप्रायेण गौण्या वृत्त्या व्याख्येयः।

ननु [1] विधेरेव स्वस्य नियमविधिलाघवानुरोधेनोत्तमभिन्नविषयत्वेन प्रतीयते। तथा हि—द्वादशानामप्यह्नां एकफलसाधनत्वात्प्रयोगैक्यमवगम्यते। अत एवाग्नीषोमीया-

---

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्। अहस्त्वाविशेषादिति। अहश्शब्देनोपांश्वादिहारियोजनपर्यन्तयागाभ्यासप्रयोग उच्यते इति वक्ष्यते। न च सिद्धान्ते तस्य प्रत्यहं क्रियमाणेऽपि पत्नीसंयाजान्तत्वे समाप्तिरस्ति। अन्त्येऽहनि तन्त्रेण सर्वेषां समाप्तेः। अतः समाप्तिपरस्य सन्तिष्ठतेः पत्नीसंयाजोत्तरमनुष्ठेयतया प्राप्तानामङ्गानामग्रे करिष्यमाणानामधुनोपरमः तत्परत्वं लक्षणया वक्तव्यम्। मम तु प्रत्यहमहस्समाप्तिरेव श्रौती विधीयत इति धात्वर्थविधानाल्लक्षणाभावाच्च सर्वेषामेव पत्नीसंयाजान्तत्वं युक्तम्। न च वक्ष्यमाणरीत्या दृष्टार्थत्वानुरोधेन लक्षणाश्रयणं युक्तम्। निषादस्थपत्यधिकरणन्यायेन (६–१–१३) तत्कल्पनस्यायुक्तत्वादिति भावः। यस्मिन्नहन्यसंस्थितो यज्ञस्तर्हि पत्नीसंयाजान्तानीति वचनव्यक्तिमाश्रित्य असंस्थायाः हेतुत्वमाशङ्कते—नचेति। गौण्या वृत्त्येति। यदि पत्नीसंयाजान्तान्यहानि न क्रियन्ते तदा सर्वस्य प्रयोगस्य दीर्घकालसाध्यत्वादसमाप्त इव भवति—यथा दीर्घकालं भोजने क्रियमाणे नास्य भोजनं समाप्यत इति तथेहाप्यसमाप्तो भवति। अतो दीर्घकालतासाध्यत्वनिवृत्त्यै पत्नीसंयाजोत्तरकृत्यशेषं लुप्यताम् पत्नीसंयाजान्तमात्राणि कर्तव्यानीत्येवं गौण्या वृत्त्येत्यर्थः। अत्र प्राचीनैः कृतां सिद्धान्तरचनामनुवदति—नन्वित्यादिना। अत्र तन्त्ररत्नकृता—भावयेत्

---

1. A. विधिरेव

न्तपदार्थानां तन्त्रेण करणं अवभृथाद्यानां च ब्राह्मणतर्पणान्तानां, अहश्शब्दवाच्यसुत्यानां तु द्वादशत्वसङ्ख्यानुरोधादावृत्तिः। अहश्शब्दोह्युपांशुग्रहाभ्यासादारभ्य हारियोजनयागाभ्यासपर्यन्ते प्रयोगे लक्षणया याज्ञिकानां प्रसिद्धः। अत एव तन्मध्यवर्तीनि सन्निपत्योपकारकाणि आरादुपकारकाणि चाङ्गानि प्रतिसुत्यमावर्तन्त इति वक्ष्यते। एवं च एकैकमहर्यस्मिन् कस्मिंश्चिदङ्गेऽनियमेव समाप्यापरमहरारम्भणीयमिति प्राप्ते, पत्नीसंयाजान्त-

---

प्रजाः; केन? द्वादशाहसंज्ञकेन कर्मणा। तत्र सङ्ख्यया कर्मभेदात् द्वादशयागा एते। यद्यपीयमहर्गतासङ्ख्या दृश्यते, न यागगता तथापि याजयेदिति यागसामानाधिकरण्यात् यागमेवाहस्सम्बन्धादहरिति ब्रवीति; प्रकृतौ च ज्योतिष्टोमे अहश्शब्देन उपांश्वादिहारियोजनपर्यन्तो यागः परिच्छिन्नः। इहापि द्वादशाहे एवं द्रष्टव्यमिति द्वादशाहेन प्रजाकामं याजयेदिति वाक्यार्थवर्णनं कृतम्। तत्र द्वादशत्वसङ्ख्या जहत्स्वार्थलक्षणया अहःपदलक्ष्ये यागेऽन्वीयमाना पृथक्त्वस्वाभाव्याद्यागभेद एव पर्यवसायिनी न त्वहः पदवाच्यसुत्यासु निविशमाना तदावृत्त्यापादिका। तेषाञ्च द्वादशयागानामव्यक्तत्वेन सोमयागविकारत्वात् तदतिदेशेन प्रतियागमुपांश्वादिहारियोजनग्रहाभ्यासपर्यन्तप्रयोगस्य भिन्नतया प्राप्तेः अर्थात् द्वादशत्वं सुत्यानां भवति। नन्वेतावता द्वादशाहवाक्येन अहर्गता द्वादशत्वसङ्ख्या बोध्यत इति। अहः पदवाच्यसुत्यानान्तु द्वादशत्वसङ्ख्यानुरोधादावृत्तिरिति मूलोक्तं यथाश्रुतं न घटते तथापि अन्ययागवदिहोपांश्वादिहारियोजनान्ताभ्यासप्रयोगसम्पाद्यस्यैव यागस्वरूपत्वात् यागगतापि सा सङ्ख्या परिच्छेदके तादृशप्रयोग एव पर्यवस्यति। अत एवाहश्शब्देनोपांश्वादिहारियोजनपर्यन्तो यागः परिच्छिन्न इत्युक्तं तन्त्ररत्ने। तेन तादृशपर्यवसानमादायैव तथोक्तं मूले। अथवा जहत्स्वार्थलक्षणया अहः परिच्छिन्नयागस्य विशिष्टस्यैवाभिधानात् विशिष्टस्यैव भेदिका द्वादशसङ्ख्येति यागानां भिन्नानां द्वादशवत् सुत्यानामपि भिन्नानां द्वादशत्वादावृत्तिरित्यभिप्रायेणेवेदम्। उभयथाप्येकवचनं द्वादशाहेनेत्येतत्समुदायाभिप्रायेण वैश्वदेवेन यजेतेतिवद्द्रष्टव्यमिति नानुपपत्तिः। एतेन पत्नीसंयाजान्तान्यहानीत्यत्रापि अहःशब्दो व्याख्येयः। तत्र बहुवचनबलात्परं समुदायिपरत्वमेवेति। तन्मध्यवर्तीनि चेति। तानि च ग्रहणादीनि सन्निपत्त्योपकारकाणि सवनीययागसवनीयपुरोडाशादीनि चारादुपकारकाणि ज्ञेयानि। तेषाञ्चैष्टिकपाशुककर्मणां तत्तदग्नीषोमीयान्तानां अवभृथाद्यानाञ्चागृह्यमाणविशेषत्वात् तन्त्रत्वेऽपि, गृह्यमाणविशेषत्वात् तन्त्रत्वाप्राप्तौ आधानकालानुष्ठेयपात्रवदावृत्तिः "भेदस्तु तद्भेदात् कर्मभेदः प्रयोगात् स्यात् तेषां प्रधानशब्दत्वात्" (जै. सू. ११-४-६) इत्यधिकरणे एकादशे वक्ष्यते इत्यर्थः। कस्मिन्नङ्गे इति। अन्त्येऽहनि पूर्वेषामन्हां साहित्यं संपादयितुं पूर्वाहश्शेषे स्थापनीये सति स अहश्शेषः कुतः प्रभृति स्थापनीय

त्वविधिरेकादशसु नियमविधिस्सम्पद्यते। अन्तिमे तु सर्वस्यैव समापनीयत्वात्पत्नी-संयाजान्तत्वविधिरपूर्वविधिरापद्येत। अतश्च सर्वार्थत्वे अपूर्वविधिनियमविधिकृत-वैरूप्यापत्तेः, नियमविधिलाघवानुरोधेनोत्तमवर्जमयं विधिरिति चेत्

द्वादशत्वसङ्ख्यानुरोधेनाहश्शब्दवाच्यहारियोजनान्तप्रयोगस्यैवावर्तनीयत्वेन तद्भिन्नाङ्गे

---

इति जिज्ञासायां नियामकाभावात् उपांशुग्रहाभ्यासमारभ्य हारियोजनाभ्यासपर्यन्त एव तन्मध्यतनं यत्किञ्चिदङ्गं ततः शेषः स्थापनीयः। तस्मिन्नेव चानियतेऽङ्गे समाप्तिरनियमेन प्रसक्ता। तत्र हारियोजनान्तत्वं यदह्नः आसीत् तत्र तद्भावेन पत्नीसंयाजान्तत्वे नियमिते अर्थादवशिष्टं हारियोजनप्रभृति पूर्वाहस्सम्बन्धिकर्म उत्तमेऽहनि तन्त्रेण कर्तव्यमित्युपपन्नं साहित्यम्। अत एव पत्नीसंयाजान्तत्वविधेः सहत्वनिर्वाहकतया दृष्टार्थत्वमपीति भावः। तमिमं प्राचीनसिद्धान्तं दूषयति— **द्वादशत्वसङ्ख्येति**। यद्येकादशस्वहस्सु पत्नीसंयाजान्तत्वं संपाद्य उत्तमेऽहनि हारियोजनाद्यह्नः शेषं तन्त्रेणोपरिष्टादनुष्ठीयते तदा नैव हारियोजनान्तप्रयोगस्य द्वादशत्वं सम्पादयितुं शक्यम्। अतस्तदनुरोधेन हारियोजनान्तप्रयोगस्य द्वादशवारमनुष्ठेयस्य तद्व्यतिरिक्ते कस्मिंश्चिदङ्गे न समापनप्रसक्तिरस्ति। येन तादृशसमाप्त्यनुवादेन पत्नीसंयाजान्तत्वनियमविधिः स्यात्।

अत एवानयैव रीत्या कालतत्त्वविवेचनकारैः नभस्यापरपक्षीयपञ्चदशतिथ्यधिकरणकपञ्चदशश्राद्धाभ्यासपक्षे ब्राह्मणानामैक्यं दक्षिणादानमप्यन्तिमे दिने इत्येतत् हेमाद्रयुक्तं निमन्त्रणादिब्राह्मणविसर्जनान्तस्य श्राद्धपदार्थस्यैव पञ्चदशत्वसङ्ख्यानुरोधादावर्तनीयस्य मध्य एव समापनासंभवेन दक्षिणादानस्यान्ते करणाप्रसक्तेर्दूषितम्। एतेन उपांश्वादिहारियोजनान्ताहःपरिच्छिन्नयागस्य हारियोजनपर्यन्तमेव समाप्ते प्राप्तत्वान्न पत्नीसंयाजेषु पक्षेऽपि प्राप्तिरिति न पक्षप्राप्त्यानियमविधित्वं सम्भवतीति विधिरसायनोक्तौ दृष्टार्थो विधिर्नियमविधिरिति लक्षणखण्डनप्रस्तावे भाट्टालङ्कारकृता उक्तम्। 'आस्तां तावदुपांश्वादिहारियोजनान्तयागस्याहश्शब्दवाच्यत्वम्। तावता हारियोजनानन्तरमेवावस्थानप्राप्तिस्तु कथम्? भवति हि ततः प्रागपि यत्र कचिदवस्थाने साहित्यसिद्धिः यागद्वादशत्वञ्च। तथा उत्तरकालीनपदार्थावस्थानेऽपि सुतरां तत्सिद्धि' रिति। तदपास्तञ्च। हारियोजनात् प्रागप्यवस्थाने अहरेकदेशपरिच्छिन्नस्य पुनः पुनरावृत्त्या द्वादशत्वसिद्धावप्यहः पदवाच्यमुख्यापरिच्छिन्नयागस्य द्वादशत्वानुपपत्तेः। प्रधानयागमात्राणामेव द्वादशत्वानुरोधादावर्तनीयानामेकैकप्रधाननिष्पादनेनापि सङ्ख्यानिष्पत्तिसम्भवात्। प्रत्यहं प्रथमप्रधाननिष्पादनेनापि सङ्ख्यानिष्पत्तिसम्भवात्। प्रत्यहं

**यस्मिन् कस्मिंश्चित् समापनस्यैवाप्रसक्तौ सर्वत्रैवापूर्वविधित्वात्।** पत्नीसंयाजानां **हारियोजनोत्तरमेव सर्वाध्वर्युशाखाम्नानेन पत्नीसंयाजानामप्यवभृथादिवत्तन्त्रेणानुष्ठेयत्वात् तेषु पक्षेऽपि समापनस्याप्रसक्तेश्च।**

**अत एव शास्त्रदीपिकायां तन्त्ररत्ने च पत्नीसंयाजोत्तरत्वकथनं हारियोजनस्य**

---

प्रथमप्रधानमात्रकरणेनापि पुनरावृत्तिसंभवे तत्रैवावस्थानप्राप्तेः, तदुत्तरकालीनपदार्थेष्ववस्थानस्य कथमप्यनियमेन प्राप्त्यसम्भवाच्च। द्वादशत्वसङ्ख्यानुरोधात् प्रयोगस्यैव सर्वस्यावर्तनीयत्वे तु, सुतरां पत्नीसंयाजेषु अन्यत्र वाऽवस्थानप्रसक्त्यभावस्योक्तत्वाच्च। यथाच प्रत्यहं हारियोजनानन्तरसमाप्तौ तत्तद्दिवसेषु तत्तत्प्रधानयागानां निष्पत्तेरन्तिमे द्वादशेऽहनि तदहर्यागानुष्ठानेऽपि पूर्वतनानामकरणात् द्वादशयागानां साहित्यानुपपत्त्या हारियोजनाद्यभ्यासरूपाहश्शेषस्थापनमावश्यकमेवेति तथा अदूरेणैव तद्दूषयिष्यते। अतोऽपेक्षितविधित्वं प्राचीनोक्तमयुक्तमिति भावः।

अधुना पत्नीसंयाजान्तत्वनियमविधिरपि न संभवतीत्याह— **पत्नीसंयाजानामिति।** तथा च हारियोजनान्तप्रयोगस्य द्वादशवारमनुष्ठानानुरोधेन हारियोजनान्तप्रयोगं सकृत्समाप्य अपरमहरारम्भणीयमित्येवमनुष्ठाने हारियोजनग्रहाभ्यास एव समाप्तिः प्रसक्ता भवति। न पक्षेऽपि तदनन्तरभाविषु पत्नीसंयाजेष्वित्यर्थः। एवं सत्यपि कदाचित् हारियोजनपूर्वभावित्वमपि तेषां स्यात् **तथापि** विधिरसायनोपपादितदिशा भेदेनानुष्ठेयैष्टिकपाशुककर्मप्रयोगसमाप्त्यनन्तरमेवावस्थानं प्राप्नोति, न पत्नीसंयाजेष्वित्यर्थस्य सिद्धत्वात् पत्नीसंयाजानां हारियोजनोत्तरत्वकथनं यत् पूज्यपादानां तत् पत्नीसंयाजानां तन्त्रेणानुष्ठेयतोपपादनार्थम्। ततश्च यतः कुतश्चिदपि शेषस्थापने प्रधानसाहित्यानुरोधेन हारियोजनरूपशेषस्थापनस्य आवश्यकत्वेन तदुत्कर्षे सति तदाद्युत्कर्षन्यायेन ज्योतिष्टोमे बद्धक्रमाणां पत्नीसंयाजानामप्युत्कर्षापत्त्या तेषां द्वादशेऽहन्येवानुष्ठेयत्वात् एकादशस्वहःसु पत्नीसंयाजानुष्ठानाभावादेव तदनन्तरमवस्थानस्यैवाप्रसक्तौ न तदन्तत्वनियमविधिः सम्भवतीति भावः।

द्वादशस्वहस्सु पत्नीसंयाजानां हारियोजनोत्तरमेवाध्वर्यवे विधानात् पार्थसारथ्यादीनां भ्रान्तिमुद्भावयति— **अत एवेति। तस्मादयमर्थः**—पत्नीसंयाजान्तान्यहानि सर्वाणि कृत्वा हारियोजनाद्यहश्शेषं तन्त्रेण सर्वेषामुपरिष्टादनुष्ठेयमिति सिद्धान्ते शास्त्रदीपिकायां लिखनात् पत्नीसंयाजोत्तरमेव हारियोजनानुष्ठानमवगम्यते। तेनोत्तममहः पत्नीसंयाजान्तं कृत्वाऽवभृथादीन्येव

कार्याणि न तु हारियोजनपर्यन्तमहश्शेषं कर्तव्यमिति पूर्वपक्षान्ते तन्त्ररत्नलिखनात् पत्नीसंयाजोत्तरमेवावभृथात्प्राक् तदनुष्ठानं गम्यते । तन्निर्मूलमेवेत्यर्थः ।

यद्यपि हारियोजनोत्तरमेवाम्नातानां पत्नीसंयाजानां वचनबलादहर्गतहारियोजनान्तत्वाननुष्ठानेऽनेकादशानामह्नां पत्नीसंयाजान्तत्वं कर्तुं पूर्वमनुष्ठानं प्रधानसाहित्यानुरोधेनैव च द्वादशेऽहनि पूर्वाहश्शेषाणां हारियोजनाद्यभ्यासरूपाणां तन्त्रेणानुष्ठानं कृत्वा तदनन्तरं द्वादशाहस्सम्बन्धिपत्नीसंयाजानामनुष्ठानं सिद्धान्ते । पूर्वपक्षे तु द्वादशाहस्साधारण्येनैव पत्नीसंयाजान्तत्वस्य हारियोजनान्तत्वबाधेन विधानात् । तत्रापि एकादशाहस्स्विव हारियोजनशेषस्यानुष्ठानाल्लोप एवेति भेदः । तत्रापि अहर्गतशेषमात्रस्यैव निवृत्त्या द्वादशानामप्येषामह्नामवशिष्टानामवभृथाद्यङ्गानां द्वादशेऽहनि तन्त्रेण करणान्नावभृथाद्यङ्गलोपः पक्षद्वयेऽपि । बर्हिरनुप्रहरणस्य तु तदन्तापकर्षन्यायेन पत्नीसंयाजापकर्षे तदुत्तरमपकर्षेणानुष्ठानं द्वादशस्वहस्सु पूर्वपक्षे । अथवा पत्नीसंयाजान्तत्वभङ्गापत्त्या तस्याहर्गतशेषत्वाभावेन चानिवृत्तिप्रसक्तौ 'न बर्हिरनुप्रहरतीति' निषेधानुवादबलादेव तावन्मात्रस्य निवृत्तिः । अत एव पूर्वपक्षे भाष्यकारेणा''वभृथादयश्चैषां पदार्थाः करिष्यन्त'' इति बर्हिरनुप्रहरणव्यतिरेकेणोक्तम् । अवभृथादीन्येव कार्याणीत्येवं तन्त्ररत्ने विवृतमेतदभिप्रायकमेव सङ्गच्छते । अतश्च न कोऽपि पार्थसारथिवचनस्याध्वर्यवशाखाम्नातस्य परस्परं विरोधः । पूर्वलिखितशास्त्रदीपिकाग्रन्थे सर्वशब्दस्य एकादशाहः परत्वविवक्षणात् द्वादशेऽहनि हारियोजनाद्यहश्शेषानन्तरं पत्नीसंयाजानुष्ठानतात्पर्यकल्पने बाधकाभावात् । तन्त्ररत्नग्रन्थेऽपि एकादशाहस्स्विव अन्तिमेऽपि पत्नीसयाजान्तमेव कृत्वा हारियोजनाहश्शेषस्य सर्वथा लोप एवेति तात्पर्यकल्पनाच्च ।

एवं स्थिते **प्रकाशकारैः** पूर्वपक्षोपपादनवेलायां अहश्शब्देन उपांश्वादिहारियोजनपर्यन्तो यागाभ्यासप्रयोग उच्यते । न च तस्य तव प्रत्यहं समाप्तिरस्ति । अन्त्येऽहनि तन्त्रेण समाप्तेः । किन्तु अहरेकदेशः प्रत्यहं समाप्यते । अतस्तवाहश्शब्दे लक्षणा स्यात् । मम तु प्रत्यहमहस्समाप्तिरेव श्रौती विधीयते इति वैषम्याय सिद्धान्त्यभिमतकोटिं प्रदर्श्य यत् तस्मादयमर्थ इत्यादि पूर्वलिखितशास्त्रदीपिकाग्रन्थव्याख्यानकाले आध्वर्यवशाखाम्नानाविरोधेन हारियोजनाद्यहश्शेषमितिग्रन्थे हारियोजनादीत्यक्षराणि बर्हिरनुप्रहरणादीत्यक्षराणां स्थाने लेखकप्रमादात् पतितानि; तथैव न तु हारियोजनाद्यहश्शेषपर्यन्तमपीति तन्त्ररत्नग्रन्थेऽपीति व्याख्यातम् ।

तत् पूर्वोक्तरीत्या तद्ग्रन्थसामञ्जस्योपपत्तेः स्वोपपदितसिद्धान्त्यभिप्रेतार्थविरुद्धत्वात् यथैव श्रममात्रमिति तथापि हारियोजनान्तत्वबाधेन तत्स्थानेऽथवा सम्पूर्णस्याहः प्रयोगस्य, अथवा

**निर्मूलमेव।** अत एवात्रत्याहश्शब्दस्य हारियोजनान्तप्रयोगवाचकस्य पत्नीसंयाजान्ते प्रयोगैकदेशे लक्षणेति केषांचिदुक्तमपास्तम्। स्वयमेव पत्नीसंयाजानां हारियोजनोत्तरत्वस्योक्तत्वेनैकदेशलक्षणाया अनुक्तिसहत्वात्। अतस्सर्वाण्येवाहानि पत्नीसंयाजान्तानि

---

हारियोजनपर्यन्तमनुष्ठानोत्तरं यथावस्थितदेश एव पत्नीसंयाजान्तत्वविधिरिति त्रेधापि वाक्यार्थसम्भवे यत्रैव बहूनामबाधो लाघवञ्च स एव वाक्यार्थो युक्तः। नहि प्रथमे पक्षे भवदभिमते पूर्वाभ्यासोत्तरत्वं हारियोजनाभ्यासे तदुत्तरत्वं पत्नीसंयाजे अहर्गतं द्वादशत्वञ्चैकादशस्वहःसु अनुग्रहीतुं शक्यते। द्वितीये पक्षे स्वदेशे यथावस्थितपत्नीसंयाजानुष्ठानसहितसर्वाहःप्रयोगान्ते पुनस्तेषामनुष्ठानापत्तिः। पत्नीसंयाजानां तद्गतत्वस्य च अहस्देशेन विधानापत्त्या गौरवञ्च। तेषामेव पूर्वमनुष्ठेयानां सर्वप्रयोगान्ते विधाने स्वदेशबाधश्च। अतो यथावस्थितदेशे एव परप्रयुक्तत्वेन ये पत्नीसंयाजा अनुष्ठेयतया प्राप्ताः तदङ्गत्वेन विधीयत इत्येव पक्षो युक्तः। तथाच लाघवं पर्वाबाधश्चोपपन्नो भवति।

अत एव विधिरसायनकृता 'पत्नीसंयाजान्तोऽग्नीषोमीयस्सन्तिष्ठते' इति वदपूर्वविधिरेवायमित्युपपादितम्। अत एवात्र प्रधानसाहित्यस्य न्यायागतस्यौपदेशिकेन सुत्यागतद्वादशत्वेन बाधात् बर्हिरनुप्रहरणप्रभृति पदार्थानामेव सर्वेषां तन्त्रेणानुष्ठानात् एकोपक्रमैकावसानत्वेन प्रयोगैक्यं तदङ्गकृतसमाप्त्यैव सिद्धान्ते उपपादनार्हम्। अत एव पत्नीसंयाजान्तावसानविधेः नापेक्षितप्रधानाङ्गतच्छेषस्थापकत्वद्वारा प्रधानसहत्वनिर्वाहकतया दृष्टार्थत्वम्। किन्तु सहप्रयोगत्वसम्पादनफलकैकोपक्रमैकावसानत्वनिर्वाहकतयैव द्रष्टव्यम्। एतदवस्थानाभावे एकादशानामपि यागानां ब्राह्मणतर्पणान्तप्रयोगस्य भेदेनैवापत्त्या प्रयोगैक्यानुपपत्तेः; हारियोजनपर्यन्तयागाभ्यासस्य द्वादशवारमावृत्तिविधानबलादेव पत्नीसंयाजान्तवाक्येऽहः पदस्याहः प्रयोगपरत्वम्। तथा चाहः प्रयोगं पूर्वोत्तराङ्गसहितमुद्दिश्य पत्नीसंयाजान्तत्वयुक्तसंस्थाविधानं पूर्वोत्तरपक्षयोः समानमेव वक्तव्यम्। तत्र संस्था समाप्तिः पूर्वपक्षे सिद्धान्ते तु तदुत्तरकर्तव्यशेषस्यैकादशस्वहस्सु उपरममात्रम्। अन्ते च करणमित्येतावान् भेदः। एवञ्च याज्ञिकाचारेणाविरोध इत्याशयः। द्वादशवारमावृत्त्यन्यथानुपपत्त्या न तदेकदेशस्य पत्नीसंयाजान्तत्वम्। अत एव नियमविधावपेक्षितदृष्टार्थविधानं लभ्यते। तेनाहःपदस्यैकदेशे लक्षणापि युक्तैवेति प्रकाशकारोक्तमपि दूषयति—**अत एवेति। अनुक्तिसहत्वादिति।** पत्नीसंयाजानां हारियोजनोत्तरत्वे हारियोजनान्तप्रयोगस्यैकदेशः तन्मध्यपतितयत्किञ्चिदङ्गसमाप्तिको भवेत् न पत्नीसंयाजान्तः; अतः पूर्वोक्तरीत्या हारियोजनाभ्याससाध्ययागमहाप्रयोग एवात्रत्याहःपदस्य लक्षणा युक्तेत्यर्थः।

कार्याणि न त्ववभृथादीनि अन्ते तन्त्रेण कार्याणि। पत्नीसंयाजान्तत्वविधिना तेषां पर्युदासात् पत्नीसंयाजानां च तन्त्रेण प्रसक्तानामावृत्तिरूपफलप्रतिपादनादिति प्राप्ते—

'असंस्थितो हि तर्हि यज्ञः' इति 'तेन ह्यन्नं क्रियते' इति वन्न हेत्वर्थवादः। तद्वदिह हेतुविधित्वे लक्षणाभावात्। तत्र तु होमकालीनवर्तमानान्नकरणत्वस्य बाधितत्वात् लटो भूताद्यर्थकत्वे विधौ लक्षणापत्तेरगत्या हेत्वर्थवादत्वाङ्गीकरणम्। अतो'न ह्यत्रानूयाजान् यक्ष्यन् भवति' इतिवदस्य हेतुपरत्वादसंस्थाहेतुकपत्नीसंयाजान्तत्वविशिष्टसमापनभावनाया

---

एवमुपपादितरीत्या पत्नीसंयाजान्तवाक्यार्थस्य पूर्वोत्तरपक्षयोः निर्दुष्टत्वेन साम्येऽपि द्वादशेऽप्यहनि पत्नीसंयाजान्तत्वमित्यधिकरणपूर्वपक्षे प्रयोजनभेदं सूचयन् यत्तन्त्ररत्ने भाष्यानुसारेणावभृथादीनामन्ते करणं पूर्वपक्ष उक्तं तद्दूषयति—नत्विति। अवभृथादीनामन्ते करणोक्तेरेव दूषणे दत्तदृष्टिभिः पूज्यपादैरनुक्तमपि बर्हिरनुप्रहरणं अवभृथपदस्योपलक्षणत्वेनोक्तमिति तदपि न कर्तव्यम्। यद्यपि हारियोजनाद्यहश्शेषमात्रपरिसङ्ख्यायां सर्वाङ्गान्तरपरिसङ्ख्यायां वा "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरति असंस्थितो हि तर्हि यज्ञ"इत्येवं पाठस्य भाष्यकृता लिखनात् न बर्हिरनुप्रहरतीति केवलबर्हिरनुप्रहरणनिषेधानुवादानुपपत्तिर्दुरुपपादैव पूर्वपक्षे। सिद्धान्ते तु बर्हिरनुप्रहरणं न क्रियते तदा समाप्तो यज्ञो भवति बर्हिषः सर्वसाधारण्येनाग्रेऽपि करिष्यमाणकर्मार्थमपेक्षणेनान्ते एव तस्य कर्तव्यतौचित्येन तदुत्तरं समाप्तेरेव भावित्वात्। तस्मादेकमहरग्रे कर्तव्यमस्ति यदपेक्षया बर्हिः प्रहरणं न क्रियतेऽधुना। अतस्तद्व्यतिरिक्तान्यसंस्थावन्ति। तान्येव च तदन्तानि कार्याणि। बर्हिः प्रहरणन्त्वन्तिमाहरन्ते एवेत्युपपद्यते तदनुवादः तथापि बर्हिर्नानुप्रहरतीत्यर्थस्य पूर्वपक्षे सम्भवेन स्तुत्युपपत्तेर्न विधिसङ्कोचो युक्त इत्याशयः।

आवृत्तिरूपफलप्रतिपादनादिति। अहरुद्देशेन पत्नीसंयाजान्तत्वविधाने सति प्रतिप्रधानं गुणावृत्तिफलप्रतिपादनादित्यर्थः। तन्त्रेण प्रसक्तानामित्येतत् प्राचीनसिद्धान्ताभिप्रायेणोक्तम्। स्वमते प्रत्यहं हारियोजनानुष्ठाने सति तदुत्तरं तत्तत्पश्वङ्गतया पत्नीसंयाजानां भेदेनानुष्ठानस्यैव याज्ञिकसम्मतस्याङ्गीकारात् सर्वान्ते तन्त्रानुष्ठानाप्रसक्तेः पत्नीसंयाजान्तत्वविधेर्नियमविधित्वानङ्गीकारेणापूर्वविधित्वमङ्गीकृत्यैव सिद्धान्तमाह—असंस्थितो हीति। यदा असंस्थित इत्यस्य यतोऽसंस्थितो यज्ञस्तर्हि पत्नीसंयाजान्तानीत्यर्थः तदा असंस्थाया हेतुत्वं स्पष्टमेव। यदापि यदि पत्नीसंयाजान्तानि तर्हि यज्ञोऽसंस्थित इत्यव्यवधानेन तर्हिपदार्थान्वयः तदा तदकरणे प्रत्यहं यज्ञस्समाप्त एव स्यात् न तु समाप्तः कर्तव्योऽस्ति। तस्य द्वादशेऽहनि समाप्यमानत्वात्। अतः समाप्तये पत्नीसंयाजान्तानीत्यर्थात् फलीभूतयज्ञासंस्थायां उपपद्यत एव हेतुत्वमित्यभिप्रेत्याह- असंस्थाहेतुकेति। समापनभावनाया इति। समापनपदेन चात्र व्यापारोपरम उच्यते—

तथाहि—संपूर्वस्य च तिष्ठतेर्यथा समाप्तिवाचित्वं दृष्टं तथा तद्व्यतिरिक्तार्थवाचित्वमपि "बुद्धिरूपेण संस्थिता" [दे.मा.४] 'कलशं संस्थाप्य देवीं संस्थापयेदि'त्यादिषु दृष्टमिति न सर्वत्र समाप्तिवाचित्वनियमः। यत्राप्यारब्धकर्मविषयसमाप्तिवाचित्वं यथा सम्पूर्णप्रयोगसमाप्ताविष्टिः सन्तिष्ठते इत्यादौ तत्रान्त्यपदार्थः तद्ध्वंसो वा समाप्तिर्विवक्षिता। अत एवाग्रे एतदीयं न किञ्चित्कर्तव्यमस्तीति विवरणं कृतिसाध्यपदार्थात्यन्ताभावविषयं दृश्यते। यत्र तु उत्तरप्रयोगशेषे विद्यमाने एव सन्तिष्ठत इति प्रयोगो यथा प्रकृते; तत्र यद्यपि पत्नीसंयाजरूपान्त्यः पदार्थः तद्ध्वंसरूपा वा समाप्तिः सम्भवति तथापि पत्नीसंयाजपर्यन्तं कर्तव्यं नोत्तरतन्त्रमिति विवरणात् उत्तरक्रियाप्रागभावरूपोऽथवा तद्विषयौदासीन्यरूपो वा व्यापारोपरम एव संस्थापदार्थो न तु पत्नीसंयाजरूपा तद्ध्वंसरूपा वा समाप्तिः। प्रकृतावुभयोः सत्वेऽपि समाप्तव्यवहाराभावात्। उत्तरक्रियौदासीन्याभावादेव तत्र समाप्तव्यवहारदर्शनाच्च। अत एव भाष्यकारेण "सिद्धान्ते पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते। तेनैतदुक्तं भवति। शिष्टमवलुप्यत इति। सन्तिष्ठन्ते नानुष्ठीयन्ते इति कर्तुर्व्यापार एषूपरमति" इति व्याख्यानं। न चान्त्यपदार्थस्य तद्ध्वंसस्य वा समाप्तित्वं, अन्त्यत्वञ्च स्वोत्तरपदार्थानुष्ठानासमानाधिकरणत्वं ध्वंसे, तथाविधध्वंसप्रतियोगित्वं वा पदार्थे। न चैतत्प्रकृतावस्ति पत्नीसंयाजेषु, अतः कथं तेषामन्त्यत्वम्। तत्स्वीकारे च आगतमेव समाप्तिपरत्वमिति वाच्यम्। एकादशाहः पत्नीसंयाजोत्तरपदार्थानुष्ठानस्यैवाप्रसक्तत्वेन तदसमानाधिकरणत्वस्यैव च वक्तुमशक्तेः। अतः स्वोत्तरपदार्थरूपप्रतियोग्यनाश्यो यः तत्प्रतियोगिकः प्रागभावः तत्समानाधिकरणत्वं तत्समानाधिकरणध्वंसप्रतियोगित्वं वा ध्वंसतत्प्रतियोगिसाधारणमन्त्यत्वं युक्तम्। प्रकृतौ पत्नीसंयाजेषु नान्त्यत्वम्। पत्नीसंयाजध्वंसोत्तरं तदुत्तरपदार्थानुष्ठानेन प्रतियोगिनाश्यप्रागभावसमानाधिकरणध्वंसप्रतियोगित्वस्यैव सत्वात्। सर्वेष्टिप्रयोगसमाप्तिविषयपदार्थेऽन्त्यत्वं तु स्वोत्तरैतत्प्रयोगीयपदार्थात्यन्ताभावसमानाधिकरणध्वंसप्रतियोगित्वमेव। न चाननुगमः। पूर्वोपपादितविवरणानुसार्यनुभवानुरोधेन तत्कल्पनस्यादोषत्वात्। यद्यपि च समाप्तेर्भा[तिरभा]वरूपत्वं सम्भवति तथापि भावरूपत्वमेव मीमांसकसम्मतम्। अत एवाभावाद्भावोत्पत्त्यनङ्गीकारेऽपि संस्थानां गुणकामविषया फलजनकतोपपादनं सङ्गच्छते। अत एव द्वादशाहीयपत्नीसंयाजेषु यदन्त्यत्वं तदुत्तरपदार्थविषयव्यापारोपरमसमानकालीनत्वयोगादेव ज्ञेयम्। न च व्यापारोपरमरूपः संस्थापदार्थः न काप्यभियुक्तैरुक्त इति वाच्यम्। दशमषष्ठपादे षडहावृत्तौ मध्वशनावृत्तिविचारे 'संस्थिते षडहे' इति वाक्यगतसंस्थापदार्थे व्यापारोपरमरूपत्वस्य सर्वैरप्यङ्गीकारात्। यथा च व्यापारोपरमस्य न समाप्तिरूपत्वं अपितु भाविपदार्थाकरणरूपत्वमेव तथाऽत्रैव

एवाहरुद्देशेन विधानात् विधेयसामर्थ्यानुरोधेनोद्देश्यानामह्नां सङ्कोचोपपत्तेः, उत्तमे चासंस्थारूपहेत्वभावात् पत्नीसंयाजान्तत्वस्याप्यभावोपपत्तेरुत्तमवर्जं पत्नीसंयाजान्तता। न च हेत्वभावेऽपि व्यापकव्यभिचारस्यादोषत्वादुत्तमे पत्नीसंयाजान्तत्वेऽप्यदोषः। विशेषणाभावप्रयुक्तविशिष्टाभावात् साधकप्रमाणाभावेनैव तत्र तस्यासिद्धेः।

अस्तु वा हिशब्दोऽत्र अव्ययानामनेकार्थत्वान्निमित्तत्वपरः। तथा चान्तिमे निमित्ताभावान्नैमित्तिकस्याभावस्सुलभ एव। एवं च निमित्तोपादानबलात् यथैव द्वादशाहे अन्तिमेऽहनि न पत्नीसंयाजान्तत्वं तथैव पञ्चदशरात्रादौ द्वादशेऽहनि न पत्नीसंयाजान्तत्वम्। द्विरात्रादौ च द्वितीयादिरूप एवान्तिमे न तदित्यूहोपयोगिता[1]वत् बाधोपयोगिताऽपि। अत एव प्रकृतौ तत्तद्विजातीयापूर्वसाधनत्वस्यैवाहःपदेन लक्षणायामपि विकृतौ निमित्ताभावादेव न पत्नीसंयाजान्तत्वम्। निमित्तोपादानबलेन वा प्रकृतावसंस्थातत्क्रत्वपूर्वसाधनत्वस्यैव लक्षणान्न कोऽपि दोषः॥ ९॥

---

स्थानापत्तिविचारे स्फुटीकरिष्यते। अतः कर्तव्यशेषे विद्यमान एव तद्विषयकव्यापारोपरमभावनैव विधीयते, अर्थवादप्रतिपादितसमाप्त्यनुरोधात्। न तु समाप्तिभावनेत्यर्थः। ततश्च यद्यपि फलीभूतासंस्थाहेतुकतादृशमुख्यसमापनभावनाया एव शक्यते अन्त्याहस्साधारण्येन विधानं; तथापि तदानीमन्त्येऽहनि तद्विधेरदृष्टार्थत्वापत्तेः, दृष्टार्थत्वलाभप्रयोगैक्यसम्पादकतया तद्विधानस्य युक्तत्वात्, पत्नीसंयाजोत्तरमेकादशान्ताहः कृत्यमवशिष्टमन्त्येऽहनि तन्त्रेण कार्यमेवेति भावः। **अहरुद्देशेनेति**। एतेन धात्वर्थविधानाभावापत्तिर्निरस्ता। **व्यापकव्यभिचारस्येति**। यथा धूमस्य हेतुत्वे यत्र धूमाभावस्तत्र वह्निसत्वेऽपि व्याप्यव्यापकभावानुगुणत्वात् व्यापकव्यभिचारस्य[अ]दोषत्वं एवमिहापि असंस्थारूपहेत्वभावे पत्नीसंयाजान्तत्वविशिष्टसमापनसिद्धावपि न दोष इति भावः। **तत्र तस्येति**। तत्र, उत्तमेऽहनि, तस्य, पत्नीसंयाजान्तत्वस्येत्यर्थः। अनूयाजानां चतुर्गृहीतसम्बन्धस्य वचनान्तरेणावगतत्वात् अनूयाजाभावस्य चतुर्गृहीताभावसाधकता युज्यते। नैवमिहासंस्थाहेतोः समापनभावनायाः सम्बन्धः क्लृप्तः येन तदभावः सिध्येदित्यस्वरसात् पक्षान्तरमाह—**अस्तु वेति**। अत्र च यद्यपि **न्यायेनोत्तमाह**व्यतिरिक्तेषु सर्वेष्वहस्सु पत्नीसंयाजान्तत्वं प्राप्तं तथापि दशमेऽहनि मानसग्रहान्तत्वस्य विशेषतो विधानात् तद्व्यतिरिक्तपरमपि ज्ञेयम्।

**ऊहोपयोगितेति**। एतदधिकरणारम्भे तन्त्ररत्नकृता प्रयोगविकार ऊहो भवतीति लिखनात् प्रयोगोहोप्येकश्चतुर्थो भाट्टालङ्कारकारैः मन्त्रोहादिसमकक्ष उक्तः स यथा गौणो न मुख्य इति तथोपपादितं प्रथम एवाधिकरणे ऊहत्रैविध्यप्रस्तावे। अतः ऊहोपयोगिता मूलोक्तापि गौणोहाभिप्रायेणैव द्रष्टव्या।

---

1. गिता बाधोपयोगितापि

## (१०)—अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मस्स्यात् ॥ ३२ ॥

दर्शपूर्णमासयोस्सामिधेन्यवान्तरप्रकरणे 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति श्रुतम्। तत्रानुवचनं तावत्प्रकरणप्राप्तमनूद्यते त्रिरभ्यासमात्रं तु विधीयते। प्रथमामिति चोद्देश्यसमर्पकमित्यविवादमेव। तत्रापि प्रथमामिति विशेष्यनिघ्नं प्राथम्यविशिष्टमभिधत्ते शुक्लादिपदवत्। तच्च विशेष्यं स्त्रीलिङ्गनिर्देशात् सामिधेनीप्रकरणाच्च ऋगेव। प्राथम्यरूपविशेषणयोगाच्च ऋग्विशेषप्रतीतिरार्थिकी। न तु प्र वो वाजादित्वप्रकारिकोपस्थितिः शाब्दी, तद्वाचकपदाभावात्। अत एव प्राथम्यमेवोद्देश्यतावच्छेदकं ग्रहत्वादिवत्। न तु तदुपलक्षितप्रवोवाजादित्वं, विना कारणं लक्षणायां प्रमाणाभावादित्यविवादमेव।

इदं तु विचार्यते। प्रथमास्वरूपे आनर्थक्ये प्रसक्ते अपूर्वसाधनत्वलक्षणायां अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकऋक्त्वमात्रलक्षणेऽतिप्रसङ्गापत्तेस्तन्निराकरणार्थं उद्देश्यतावच्छेदककोटौ ऋक्त्वविशेषणतया प्रवोवाजादित्वस्य विवक्षणं उत प्राथम्यस्येति चिन्तायां—

प्राथम्यरूपस्य श्रुतस्योद्देश्यतावच्छेदकस्य व्रीहित्वादिवदपूर्वसाधनत्वलक्षणोपयोगिशक्त्योपस्थितावुपक्षीणत्वेन निरुक्तापूर्वसाधनत्वरूपोद्देश्यतावच्छेदककोटिप्रवेशे

---

### अभ्यासः सामिधेनीनाम्।

**सामिधेन्यवान्तरप्रकरण इति।** पूर्वं सामिधेनीः पञ्चदश विधाय एकादशर्चः पठित्वा "त्रिःप्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सम्पद्यन्ते" इत्येवं वाक्यं श्रुतमित्यर्थः। अत्र तन्त्ररत्नादौ स्त्रीलिङ्गसम्बन्धात् तस्य च ऋग्धर्मत्वात् ऋगुपलक्षणार्थं प्राथम्यम्। न स्वयं त्रिरभ्यासेन सम्बध्यते; प्राथम्यञ्च प्रवोवाजाया धर्मः तेन ता लक्षयित्वा तस्यास्त्रिरभ्यासः तत्कार्यौपयिकतया विधीयते। तेन प्रवोवाजाकार्यप्रयुक्तोऽयं त्रिरभ्यासः न प्रथमवचनकार्यप्रयुक्तः तस्माद्यत्रतत्रस्था प्रवोवाजा त्रिरभ्यसितव्या। प्रथमस्थानस्थिताप्यन्या ऋक् न त्रिरभ्यसितव्येति पूर्वपक्षान्ते सिद्धान्तितम्। तत्र प्राथम्यस्य ऋग्धर्मत्वेऽपि प्रवोवाजाधर्मत्वे प्रमाणाभावात् प्रथमाशब्देन प्रवोवाजत्वप्रकारकोपस्थितेरसम्भवेन पूर्वपक्षोत्थानासम्भवेन विचारकरणमयुक्तमेवेति प्रदर्शयितुमुपक्रमते—तत्रेति। **प्राथम्यविशिष्टमिति।** ननु प्रथमाशब्दस्याकृत्यधिकरणन्यायेन प्राथम्यगुण एव शक्तिः न तद्विशिष्टार्थाभिधायकत्वमित्यत आह—**शुक्लादिपदवदिति।** यथा शुक्लपदस्य शुक्लगुणे शक्तस्यापि तद्वति निरूढलक्षणया तद्विशिष्टाभिधायकत्वं तद्वदित्यर्थः। **अपूर्वसाधनीभूतेति।** अत्र च सर्वासामपि सामिधेनीनां समिद्धाग्निप्रकाशनेन दृष्टार्थत्वात्

प्रमाणाभावात् प्रवोवाजादित्वमेव ऋक्त्वविशेषणम्। अतश्च विकृतौ यत्नकुत्रस्था प्रवोवाजैव त्रिरभ्यसितव्या। न तु प्रथमस्थानपतितं ऋगन्तरमिति प्राप्ते—

अतिप्रसङ्गपरिहारार्थमवश्यकल्प्ये[1] क्वचित्तत्तद्व्यापारकसाधनत्वातिरिक्तेन विशेषणे उपस्थितत्वादुपक्षीणेनापि प्राथम्येनैव विशेषणं न त्वनुपस्थितेन प्रवोवाजत्वेन। अवघातादौ तु तण्डुलनिष्पत्तिव्यापारकसाधनतामात्रेणैवोद्देश्यत्वपर्यवसानात् यवानां धर्माकांक्षाबलेन यवसाधारण्यकल्पनेऽपि च वाक्यवैयर्थ्याभावात् नातिप्रसङ्गपरिहारार्थं व्रीहित्वप्रवेशः। प्रकृते तु अतिप्रसङ्गाङ्गीकारे प्रथमोत्तमापदघटितवाक्यद्वयवैयर्थ्यापत्तेः 'ताः पञ्चदश सम्पद्यन्ते' इत्यर्थवादानुपपत्तेश्च विशेषणविवक्षा आवश्यकी। अतश्च

---

तज्जन्यसन्निकृष्टापूर्वासम्भवे विप्रकृष्टप्राधानापूर्वसाधनत्वमेव समिद्धाग्निप्रकाशननिर्वृत्तिप्रणाडिकया लक्ष्यत इति अपूर्वपदेन प्रधानापूर्वं ग्राह्यम्। तत्तद्व्यापारकेति। समिन्धनरूपतत्तद्व्यापारकेत्यर्थः।

आवश्यकीति। एतेन यदत्रापूर्वसाधनलक्षणाक्षेपसमाधानप्रस्तावे त्रिरभ्यासादीनामपि व्रीहिधर्माणां यवेष्विव प्रथमातिरिक्तसामिधेनीष्वपि प्राप्त्यापत्तिमाशङ्क्य भाट्टालङ्कारकृता समाहितम्। यत एव सामिधेन्यो दृष्टार्थाः प्रधानापूर्वलक्षणायाञ्च प्रथमामुत्तमामिति व्यवस्थितनिर्देशस्यानर्थक्यं प्रसज्यते तत एव आनर्थक्यतदङ्ग (३–१–९) न्यायेन प्रथमोत्तमऋग्द्वयसाध्यनियमापूर्वयोरेव प्रथमोत्तमशब्दाभ्यां लक्षणां ब्रूमः। न च प्रत्यृचं नियमादृष्टभेदाभावः। इयमेव प्रथमा इयमेव द्वितीयेत्यादिविभिन्ननियमानां हन्तिपिंषिनियमवत् विभिन्नापूर्वजनकताया एवौचित्यात्। नापि नियमादृष्टस्य धर्मप्रयोजकत्वासम्भवः। तस्याप्युद्देश्यत्वेन तदसत्त्वेऽपि वा तस्य [अ ?]निर्ज्ञातप्रकारत्वेन धर्मग्राहित्वोपपत्तेः। सूक्तवाकाधिकरणवार्तिके तन्न्यायसुधायाञ्च सूक्तवाकस्य दृष्टार्थप्रहरणार्थत्वप्रयुक्तानर्थक्यपरिहाराय नियमादृष्टार्थत्वोपन्यासाच्च। नचैवं प्रोक्षणादिविधावपि सन्निकृष्टव्रीहिनियमादृष्टसाधनत्वस्यैव लक्षणा स्यादिति व्रीहिशास्त्रजशाब्दधीविषयीकृतस्य प्रधानापूर्वसाधनत्वस्यैव लक्षणा [न]स्यादिति शङ्क्यम्। व्रीहिशास्त्रजधीविषयीकृतस्य प्रधानापूर्वसाधनत्वस्यैवासति बाधके लक्षणौचित्यात्। नियमादृष्टस्य नियमजन्यत्वेन व्रीह्यजन्यस्य व्रीहिपदेन लक्षणाऽयोगाच्च। व्रीहिजन्यत्वेऽपि वाऽनुद्देश्यकार्यार्थत्वापेक्षया उद्देश्यकार्यार्थत्वस्य युक्तत्वात्, आग्नेयापूर्वसाधनत्वस्यैव लक्षणौचित्याच्च। यत्र तु

---

1. कल्प्येन केनचित्

**या काचित् प्रथमोत्तमा त्रिरभ्यसितव्येत्यूहोपयोगोऽपि ॥ १० ॥**

---

उद्देश्यकार्यार्थत्वे श्रुतिविरोधः तत्र भवतु धर्माणां नियमापूर्वार्थत्वम् । अत एव बृहद्रथन्तर-साम्यैकपृष्ठमते बृहद्रथन्तरयो र्व्यवस्थया विहितानां समुद्रध्याननिमीलनप्रभृतीनां अन्तरेण सामनियमापूर्वार्थत्वं [न] श्रुतव्यवस्थोपपद्यते इत्येतादृशे प्रतिनियतनिर्देशे नियमापूर्वसाधनत्व-स्यैव लक्षणेति तदपास्तम् ।

प्रथमोत्तमामिति नियतनिर्देशानुपपत्तिरूपबाधकस्य प्राथम्यादीनां विशेषणत्वकल्पनयापि सुपरिहरत्वेन भवदुक्तरीत्यैवासति बाधके प्रधानापूर्वसाधनत्वलक्षणाया एवौचित्यायातत्वात् । शास्त्रबोधितस्यैवादृष्टजनकत्वात् 'इयमेव प्रथमा' 'इयमेव द्वितीया' इत्यादि नियमानां केनापि शास्त्रेणाविधाने तन्नियमस्यादृष्टजनकत्वासम्भवाच्च । इतरथा आग्नेय एव तृतीय इत्यादिव्य-वहारात् तन्नियमानामप्यदृष्टजनकत्वापत्तेः । अतः सामान्यसम्बन्धबोधकप्रकरणावगतप्रधाना-पूर्वसाधनत्वस्यैव प्रथमावगतस्योपस्थितस्य त्यागे प्रमाणाभावात् । प्रोक्षणादिविध्युद्देश्यवाचक-पदे इव प्रधानापूर्वसाधनत्वस्यैवेहापि लक्षणीयत्वम् । तत्र प्रथमोत्तमामिति प्रतिनियत-निर्देशानुपपत्त्या परविशेषणत्वेन भासमानस्य प्राथम्यादेर्विशेषणत्वकल्पनैवावश्यिकी, न तु मन्थरोपस्थितप्रथमोत्तमऋग्द्वयनियमजन्यापूर्वार्थत्वकल्पना । तत्कल्पनायामपि प्राथम्यादेर्विशे-षणत्वकल्पनस्य तवाप्यावश्यकत्वादित्यभिप्रेत्योक्तं पूज्यपादैः—**आवश्यकीति**। **ऊहोपयो-गितापीति**। अपिशब्देन प्रवोवाजत्वस्योद्देश्तावच्छेदकत्वाभावेन प्राथम्यविशिष्टऋक्त्वावच्छिन्न-वृत्तित्वेन श्रुतस्य त्रिरभ्यासादेः विकृतावपि तत्स्थानपतितऋगन्तरस्यापि प्राथम्यविशिष्टऋग्भि-न्नत्वाभावात् तद्भिन्नवृत्तित्वासम्भवेन मुख्योहलक्षणाक्रान्तत्वं नास्योहस्य । किन्तु गौणत्वेन सम्प्रतिपन्नोहोपयोगित्वं सूचितम् ।

अत्र शास्त्रदीपिकापुस्तकेषु क्वचित् प्रवोवाजीयाया धर्म इति पाठः । सोऽपपाठः । 'मतौ छः सूक्तसाम्नो'रिति सूत्रेण सूक्तसाम्नोरेव छप्रत्ययविधानात् । अतः प्रवोवाजाया धर्म इत्येव पाठो युक्तः ।

---

(११)—इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ ३४ ॥ सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

दर्शपूर्णमासयोः 'दर्शपूर्णमासावारप्स्यमाणोऽन्वारम्भणीयामिष्टिं निर्वपेत्' इति श्रुतम्। तत्र न तावदियं प्रकरणात् प्रयाजादिवत् साक्षात् क्रत्वर्था दर्शपूर्णमासावारप्स्यमाण इति पदद्वयवैयर्थ्यापत्तेः। नापि वक्ष्यमाणे आरम्भे निमित्ते भेदनहोमादिवत् नैमित्तिकी। क्रियार्थायां क्रियायामुपपदे विहितेन लृट्प्रत्ययेनास्या आरम्भार्थत्वप्रतीतेरिति तावदविवादम्। आरम्भशब्दार्थश्चोद्देश्यकोटिप्रविष्टः क इति चिन्त्यते। प्रतिप्रयोगमावृत्त्यनावृत्ती तु सूत्रकाराद्युक्ते अपि फलमिति नेहाधिकरणशरीरं, एकादशोपयुक्तत्वेनोहानुपयुक्तत्वात्।

---

इष्ट्यावृत्तौ प्रयाजवदावर्तेत।

अत्र यद्यपि भाष्यकारेणाधिकरणारम्भे दर्शपूर्णमासावारप्स्यमाण इत्येवान्वारम्भणीयोत्पत्तिवाक्यं लिखितम्। तथापि "पुरुषारम्भसंयोगात् पुरुषो दर्शपूर्णमासावारप्स्यमाणो विधीयत" इति मध्ये भाष्यलिखनात् वार्तिकतन्त्ररत्नकारादिभिः स्पष्टमेव शानजन्ततादृशपदलिखनात् तदभिप्रायेण विषयवाक्यमुदाहरति—**दर्शपूर्णमासाविति**। यद्यपि शास्त्रदीपिकायां "आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमाणः सरस्वत्यै चरुम्" इति पठितम्। तन्त्ररत्नवार्तिकयोस्तु शानजन्तपदमात्रपाठ उपलभ्यते न तु तद्धटितः कश्चन वाक्यसन्दर्भः। तथाचान्वारम्भणीयामिष्टिं निर्वपेदिति पदसन्दर्भः क्वापि नोपलभ्यते तथापि आग्नावैष्णवसरस्वतीसरस्वद्यागत्रिकस्याप्यारम्भद्वारकत्वं द्योतयितुं अर्थतः तदेव वाक्यत्रयं पठितमिति ज्ञेयम्। अनारभ्याधीतेयमिष्टिरिति केषाञ्चिद्भ्रमः। तं व्यावर्तयितुं दर्शपूर्णमासयोरित्युक्तम्; भाष्यकारेण स्पष्टं तत्प्रकरण एव समाम्नानस्य दर्शितत्वात्।

अत्र चोपवर्षेण वृत्तिकारेण प्रयाजादिवत्प्रकरणात् साक्षात्क्रत्वङ्गत्वं आरम्भणीयेष्टेरिति तदावृत्तावावर्तते सेति पूर्वपक्षं कृत्वा आरम्भाङ्गत्वेन श्रवणात् आरम्भस्य चैकत्वात् नावर्तनीयेति सिद्धान्तितम्। तदावृत्तावावर्तते सेति पूर्वपक्षं कृत्वा प्रारप्स्यमाणपदेनारम्भाङ्गत्वस्य प्रत्यक्षतो विधाने सति प्रयाजादिवत् साक्षात्क्रत्वङ्गत्वपूर्वपक्षस्यैवानुत्थानादधिकरणारम्भो व्यर्थ एवेत्यभिप्रायेण तदीयं पूर्वपक्षं दूषयितुमुपक्रमते—**तत्र न तावदिति**। हेतौ शानजमभिप्रेत्य नैमित्तिकत्वेनैव साक्षात् क्रत्वङ्गत्वमाशङ्क्य निराकरोति—**नापीति**। अतो भाष्यकारमतेनारम्भाङ्गत्वमङ्गीकृत्यैवाधिकरणारम्भयोग्यं विचारं दर्शयति—**आरम्भशब्दार्थश्चेति**। अत्र शास्त्रदीपिकाप्रकाश-

तत्राग्न्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासारम्भत्वप्रसिद्धेरग्न्यन्वाधानमेव तत्त्वेनारम्भपदार्थः। तदर्था चान्वारम्भणीया तत्कार्यप्रयुक्ता न तु प्रथमपदार्थत्वेन रूपेण प्रथमपदार्थाङ्गं, येन पूर्ववदग्न्यन्वाधानरहितायां विकृतौ आरम्भाङ्गतयोह्येत। न चान्वाधानस्याप्यप्रवृत्तप्रवर्तनविषयत्वेनैवारम्भपदवाच्यता नान्वाधानत्वेनेति कथं न पूर्वाधिकरणविषयत्वमिति वाच्यम्। अन्वाधाने दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य बाधितत्वात्।

तथा हि—दर्शपूर्णमासविषयकप्रवृत्तिसामान्याभाववतः पुरुषस्य या दर्शपूर्णमासविषयिणी प्रवृत्तिस्तद्विषयत्वं तत्। न तु निरुक्तपुरुषस्य यत्किञ्चिद्विषयप्रवर्तनविषयत्वं, तस्याधानभोजनादावपि सत्त्वेनातिप्रसक्तत्वात्। अतश्च निरुक्तपुरुषनिष्ठदर्शपूर्णमासविषयककृतिविषयत्वं दर्शपूर्णमासयोरेव नान्वाधाने, अङ्गप्रधानभेदेन तत्तद्विषयककृत्योर्भेदात्। [1] न ह्यत्र दर्शपूर्णमासकरणिका भावना श्रुता, 'ता उपांशु कर्तव्याः' इतिवत् द्वितीयानिर्देशेन दर्शपूर्णमासकर्मककृतेरेवारम्भपदार्थघटकत्वस्य त्वया वाच्यत्वात्। अतोऽन्वाधाने तस्य बाधात् याज्ञिकप्रसिद्ध्या रूढिरेव तत्रारम्भपदस्य। द्वितीया च षष्ठ्यर्था स त्वनुवादः ततश्च तदर्था चारम्भणीया न तद्रहितायां विकृतावूहितव्या। अतः अन्वाधानस्य प्रतिदर्शपूर्णमासप्रयोगमावृत्तेरावर्तनीया चेति प्राप्ते—

---

कारैः सकृदावृत्तिमात्रविषयो मुख्यसंशयः। तद्धेतुसंशयश्चारम्भशब्दः किंवाचक इत्युक्तम्। तद्दूषयितुं ऊहानुपयुक्तत्वादित्युक्तम्। अतः तन्त्ररत्नाद्युक्तदिशा आरम्भशब्दार्थविचार एव मुख्य इति भावः। **येन पूर्ववदिति**। यथा त्रिरभ्यासवाक्ये प्रथमाशब्देन प्राथम्यगुणविशिष्टत्वेन रूपेणैव ऋगभिधानात् प्रवोवाजात्वेनानभिधाने तद्रहितायां तत्स्थानापन्नायां क्वचित् त्रिरभ्यासोह इति पूर्वाधिकरणे साधितम्। तद्वदिह नेति व्यतिरेकदृष्टान्तप्रदर्शनेनानन्तरसङ्गतिरुक्ता। प्राचीनैरुक्तं सिद्धान्तयुक्तिमनूद्य पूर्वपक्षे दूषयति—**न चेति**। **षष्ठ्यर्था स त्विति**। दर्शपूर्णमासविषयको य आरम्भ इति नार्थः; अपि तु दर्शपूर्णमाससम्बन्धी यः प्रथमः पदार्थ आरम्भः, तदुद्देशेन विधीयते आरम्भणीया। तत्र विशिष्टोद्देशे वाक्यभेदापत्त्या प्रकरणप्राप्तदर्शपूर्णमाससम्बन्धानुवादकं दर्शपूर्णमासपदमित्यर्थः।

अत्र शास्त्रदीपिकाप्रकाशकारैः अन्वाधानग्रहणमत्र सर्वत्र ततोऽपि प्रथमस्य प्रणयनस्योपलक्षणं ज्ञेयमित्युक्तम्। तदपेक्षया ततोऽपि प्राचीनस्य सङ्कल्पस्यैवोपलक्षणमित्युक्तं, तदनन्तरमपि

---

1. A. नत्वत्र

**वृत्तिकारेण तावदेवं सिद्धान्तितं—नाग्नयन्वाधानमारम्भपदार्थः।** तदभावेऽपि **"देवताश्चैवं यज्ञमारभन्ते" इति ज्योतिष्टोमेऽपि आरम्भशब्दप्रयोगात्; किन्तु "इदं मया कर्तव्यमि"ति सङ्कल्पापरपर्यायोऽध्यवसायविशेषः। तदर्थान्वारम्भणीयाऽन्वाधानरहितायामपि विकृतौ सत्त्वात् कर्तव्यैव। प्रकृतौ चाधानोत्तरं सर्वयावज्जीविकप्रयोगाणां सकृदेव सङ्कल्पकरणात् सकृदेवान्वारम्भणीयेति। तन्न—**[1] तत्तत्कालावच्छि**न्नतत्तज्जीवनाख्यनिमित्तवशेन तत्तन्नैमित्तिकसर्वयावज्जीविकप्रयोगाणां तत्तत्काल एवोपस्थितत्वेनाध्यवसायापत्तौ सर्वसाधारणा**ध्यवसाये प्रमाणाभावात्। **तत्र यथैवैकस्मिन् पुत्रे जाते वैश्वानरीं निरुप्य पुत्रान्तरजन्मनि पुनर्निर्वापे नाध्यवसायैक्यं तद्वदिहाप्यध्यवसायभेदात् सकृत्करणानापत्तिः।**

**तस्मादेवं भाष्यकारादिभिस्सिद्धान्तितम्—नाध्यवसायवाच्यारम्भशब्दः तत्राप्यप्रवृत्तप्रवर्तनविषयत्वेनैवारम्भशब्दप्रयोगात् अतोऽप्रवृत्तप्रवर्तनमेवारम्भः तद्विषयत्वात्तु पदार्थेष्वारम्भशब्दप्रयोगः। अतस्तदर्थाऽन्वारम्भणीया। साऽपि न साक्षात्, अपि तु ज्ञानवा कर्तुरुपात्तत्वात्** जञ्जभ्यमानवत् **कर्तारं** आरम्भयोग्यं **करोतीति** तद्द्वारा **आरम्भार्था।**

---

दर्शपूर्णमासावारब्धाविति व्यवहारात्। **तदभावेऽपीति**। ज्योतिष्टोमे दर्शपूर्णमासातिदेशाप्रवृत्त्याऽन्वाधानाभावेऽपीत्यर्थः। **तत्तत्कालावच्छिन्नेति**। सायंप्रातः कालावच्छिन्नेत्यर्थः। **अध्यवसाये प्रमाणाभावादिति**। कर्मसु विदुषोऽधिकारात् आधानानन्तरं नित्यानि कर्माणि कर्तव्यानि। यदि फलार्थी भविता ततः काम्यानामपि कर्ता भविष्यामीति ज्ञानमात्रं भवति। स तु सङ्कल्प इव सङ्कल्पो, न तु परमार्थतः प्रयोगाङ्गभूतः सङ्कल्पः। ज्ञानमात्रन्तु तत् सर्वकर्मसाधारण्याच्च नायं दर्शपूर्णमासारम्भ इति शक्यते वक्तुम्। यद्येवं सङ्कल्पमङ्गीकृत्यारम्भणीयायाः सकृदनुष्ठानमुच्येत ततोऽस्य प्रकृतिविकृतिसाधारणत्वात् विकृतिषु न पृथगारम्भणीया कर्तव्या स्यात्। ततश्च द्वादशाधिकरणविरोधः (पू. मी. १२—२—६)। किञ्च नित्याः प्रयोगाः निश्चितत्वात् तदैव सङ्कल्प्येरन्। काम्यास्तु कामोत्पत्तेरनिश्चयात् न कथञ्चित् संङ्कल्पिता इति तेषु प्रतिप्रयोगं स्यात्। अतो न साधारणाध्यवसायसिद्धिरिति भावः। **जञ्जभ्यमानवदिति**। एतेन क्रतुयुक्तपुरुषधर्मत्वात् फलकल्पनापत्तिर्निरस्ता। **आरम्भयोग्यमिति**। अत एवारम्भयोग्यस्य पुरुषस्याग्रे क्रतुकरणे उपयोगात् संस्कार्यत्वं युक्तम्। स्वर्गकामस्य तु भाव्युपयोगरहितस्य संस्कार्यत्वासम्भवात् यागं प्रत्यङ्गत्वमेव। ननु यागस्याङ्गत्वं भवतीत्यर्थः। नच क्रतुयुक्तपुरुषार्थत्वेऽपि अनुवचनस्य जृंभार्थत्वं, पुरुषद्वारा तस्यापुरुष-

यद्यपि च दर्शपूर्णमासाविति द्वितीयाया विषयत्वार्थकत्वात् दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य च दर्शपूर्णमासाख्यप्रधानस्यैव सम्भवात् ततः पूर्वं प्रयोगमध्य एवान्वारम्भणीयाऽनुष्ठेयेत्यर्थो 'दर्शपूर्णमासावारप्स्यमाण' इत्यस्य प्राप्नोति। तथाऽप्युक्तार्थस्यपाठादेव

---

विशेषणत्वेन साक्षादुद्देश्यत्वेनान्वयायोगात्, तद्वदिहापि साक्षात् पुरुषार्थत्वमेव स्यात् नारम्भार्थत्वमिति वाच्यम्। तत्र जृम्भार्थत्वबोधकाभावेन वाक्यात् पुरुषार्थत्वेऽपि प्रकृते क्रियार्थायां क्रियायामुपपदे विहितेन लट्श्रुत्यैवारम्भरूपक्रियार्थत्वावगतेः। अतः पुरुषद्वारा अरम्भार्थत्वमेव युक्तमित्यभिप्रेत्याह—**तद्द्वारेति**। अत्र तन्त्ररत्नवार्तिकादौ दर्शपूर्णमासावारप्स्यमाण इति क्त्वारम्भात् बहिष्ट्वेन श्रवणात् आरम्भस्य चैकत्वान्न ज्ञायते अस्यायं पुरुषः प्रयोगस्य योग्यो भवति अस्य नेति, अगृह्यमाणविशेषत्वात् सर्वप्रयोगाणाम्। यदि च तन्त्रमध्ये क्रियेत तथासति यस्य प्रयोगस्य तन्त्रं तस्यैव योग्यं करोति, नान्यस्येति गम्येत विशेषः। न चैवमस्ति। यदि हि पदार्थवचनोऽयमारम्भशब्दः स्यात् तथा सत्यन्तः प्रयोगं क्रियेत। ततश्च सकृत्कृता न सर्वत्र प्रयोगाणामुपकुर्यात्। पुरुषप्रयत्नवचनस्त्वयमारम्भशब्दः। तेन दर्शपूर्णमासयोः प्रवृत्तौ भविष्यन्त्यां विहितेयं बहिः प्रयोगं विहिता भवतीत्यगृह्यमाणविशेषत्वात् सकृत्कृतैव सर्वेषामुपकरिष्यतीति नावर्तनीया। अद्यतनानद्यतनसाधारणभविष्यत्सामान्यवाचिनो लटो बहिः प्रयोगानुष्ठानमयुक्तमित्याक्षिपति—**यद्यपीति**। समाधत्ते—**तथापीति**। **पाठादेवेति**। प्रकरणपाठादेवेत्यर्थः।

**यद्यपि** प्रकरणपाठमात्रात् प्रयाजादिवत् साक्षात् क्रत्वङ्गत्वं भवेत् नत्वारम्भयोग्यपुरुषसंस्कारकत्वम्, तद्बोधनाय चावश्यं दर्शपूर्णमासारप्स्यमाणपदयोः सार्थक्यमपि भवत्येव, **तथापि** पुरुषसंस्कारकत्वे 'आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेदि'ति तैत्तरीयवाक्येन प्रधानात्पूर्वमिव पुरुषसंस्कारकत्वाभावेऽपि प्रधानात्पूर्वं क्रियमाणायां तत्प्रयोगमात्राङ्गत्वात् अनुष्ठाने भेदाभावात् पदद्वयवैयर्थ्यं तदवस्थमेवेति भावः।

अत्र च **यद्यपि** पदद्वयवैयर्थ्यं दर्शपूर्णमासपदेन प्रयोगलक्षणया दर्शपूर्णमासप्रयोगारम्भे भविष्यति विहितान्वारम्भणीयायाः प्रयोगात् बहिरनुष्ठानसिद्ध्यर्थं पदद्वयमित्येवं प्रकारेणापि परिहर्तुं शक्यते **तथापि** प्रयोगलक्षणायां प्रमाणाभावात् सत्यामपि वा तस्यां प्रयोगत्वेऽपि प्रधानप्रत्यासत्त्यनुरोधेन यस्मिन् पर्वणि प्रधानं क्रियते तस्मिन्नेव कर्तव्यत्वापत्त्या तत्कालीनप्रयोगमात्रोपकारजनकत्वेन विशेषग्रहणात् प्रयोगान्तरे पुनः कर्तव्यत्वापत्तेः; अकरणे वा विकृतिष्वपि

प्राप्तेः **पदद्वयवैयर्थ्यप्रसङ्गेन** द्वितीया उद्देश्यत्वपरा। **तेनाङ्गविषयप्रवृत्तेरपि प्रधानोद्देश्यकत्वाविघातात् दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वं तत्प्रथमप्रयोगीयाद्यपदार्थ एवेति** तदङ्गमारम्भणीया। **तथा हि—उक्तविधप्रवर्तनविषयत्वं दर्शपूर्णमासोद्देश्यकप्रवृत्तिध्वंसासमानकालीनतदुद्देश्यकप्रवृत्तिविषयत्वं, तच्च न दर्शपूर्णमासीयप्रथमप्रयोगाद्यपदार्थभिन्ने सम्भवति। तदितरस्य सर्वस्य तदुद्देश्यकस्य तादृशध्वंससमानकालीनत्वात्।**

---

तदनापत्तेः न युक्तं प्रयोगाङ्गत्वमित्येवं प्रयोगारम्भाङ्गत्वं स्पष्टमेव वार्तिकतन्त्ररत्नयोः प्रदूष्य पक्षान्तरेण केवलदर्शपूर्णमासारम्भाङ्गत्वमेव साधितम्; तदाहि प्रतिप्रयोगं प्रयोगारम्भाणां भेदेऽपि दर्शपूर्णमासारम्भस्यैकत्वेन तद्द्वारा पुरुषसंस्कारिका सकृदेव कर्तव्या भवति। अत एव काम्यदर्शपूर्णमासप्रयोगे नैवारम्भणीया भवति। विकृतिषु चारम्भविभागात् कर्तव्यैव पुनरित्यनुष्ठानं लभ्यते। अस्मिन्नपि पक्षे यदि दर्शपूर्णमासपदं प्रधानमात्रपरं द्वितीया च विषयित्वार्थिका, तदा प्रधानात्पूर्वमेवान्तः प्रयोगमनुष्ठानापत्त्या बहिः प्रयोगानुष्ठानं कथमपि नैव प्राचामुक्तं सिद्ध्यतीत्यभिप्रायेण तदुपपत्तिं स्वयं दर्शयति—**द्वितीया उद्देश्यत्वपरेति**। उद्देश्यत्वञ्च दर्शपूर्णमासौ मे सिद्ध्येतामित्याकारकेच्छाविषयत्वं ततश्च दर्शपूर्णमाससिद्धये आरभ्यमाण इत्यर्थः। **तदङ्गमारम्भणीयेति**।

अत्र च प्रथमप्रयोगीयाद्यपदार्थाङ्गत्वं यदुच्यते तद्द्वारत्वप्रदर्शनमात्रफलं सत् ऊहोपयोग्यपि भवतीति ज्ञापनार्थम्। परमार्थतस्तु प्राचीनोक्तदिशा आरम्भविषयत्वेनारम्भशब्दस्य प्रथमपदार्थपरत्वात् गौणार्थग्रहणे प्रमाणाभावेन अप्रवृत्तप्रवृत्तिरूपश्रौतारम्भाङ्गत्वं युक्तमिति स्वयमपि प्राक् तथैवाङ्गीकृतमेव। युक्तञ्चैतत्। क्रियार्थायां क्रियायामुपपदे विहितलृट्श्रुत्या आरम्भरूपक्रियार्थत्वस्यैवावगमेन आरभ्यमाणपदार्थार्थत्वकल्पने प्रमाणाभावात्। अतः पुरुषसंस्कारद्वारा दर्शपूर्णमासाङ्गमेव अन्वारम्भणीया पुरुषं प्रथमपदार्थविषयारम्भयोग्यं कुर्वती तादृशारम्भविषययत्किञ्चित्प्रथमपदार्थद्वारैव तदङ्गम्। न त्वध्यवसायान्वाधानत्वादिरूपेणेत्यत्रैव तात्पर्यम्। तेन तादृशद्वारस्य विकृतौ सत्वात् विकृतावूहितव्यैव सेति प्रयोजनस्य वक्ष्यमाणत्वात् यत् **शास्त्रदीपिकाप्रकाशकारैः** तन्त्ररत्नादिदर्शितप्रासङ्गिकत्वानुरोधेनाध्यवसायारम्भपक्षे कथञ्चिदूहोपयोगसत्वेऽपि आरम्भार्थत्वपक्षे ऊहोपयोगाभावात् अस्याधिकरणस्य यथा पूर्वाधिकरणे प्रथमस्थानधर्मः त्रिरभ्यास इत्युक्तं तथा तत्प्रसङ्गात् आरम्भणीयापि प्रथमस्थानधर्म इत्येवं प्रासङ्गिकत्वमुक्तं परास्तं वेदितव्यम्। अत एव अधिकरणारम्भ एव तन्त्ररत्ने "तत्र प्रथमपदार्थद्वारेण श्रूयमाणा दर्शपूर्णमासाङ्गं तावदारम्भणीयेत्यसन्दिग्धम्। सा तु किं प्रयोगे [प्रयोगे] कर्तव्या उत सर्वप्रयोगाणां सकृत् इति चिन्त्यत" इति स्पष्टमारभ्यमाणयत्किञ्चित्प्रथमपदार्थद्वारत्व-

अतश्च दर्शपूर्णमासपदे **अपूर्वसाधनत्वलक्षणायां** तत्पदार्थरहितायां **तादृशप्रथमप्रयोगीया-**

---

मुक्तम् । पूज्यपादैरपि द्वारलोपादेव दीक्षणीयादौ नान्वारम्भणीयेति तस्य द्वारत्वमेवो-क्तप्रायम् । अतो न कोऽपि विरोध इति भावः । **अतश्च दर्शपूर्णमासपदे इति ।**

यद्यपि दर्शपूर्णमासोद्देश्यकारम्भकर्तृपुरुषसंस्कारार्थत्वेन आरम्भणीयाविधावुद्देश्यसमर्पकं दर्शपूर्णमासावारप्स्यमाण इति पदद्वयमेव; तत्समर्पितोद्देश्यस्वरूपे आनर्थक्ये प्राप्ते अपूर्व-साधनत्वलक्षणायां लक्षकं पदद्वयम् । न तु केवलं दर्शपूर्णमासपदमिति दर्शपूर्णमासपदे अपूर्वसाधनत्वलक्षणायामित्युक्तिरनुपपन्नेव भाति;

तत्रायमाशयः- दर्शपूर्णमासोद्देश्यकारम्भकर्तृपुरुषार्थत्वेऽपि न तावदत्र विशिष्टोद्देशकृतो वाक्यभेदः, आरप्स्यमाण इति शानजुपात्तभावनायामपि कारकान्वयस्य व्युत्पन्नत्वेन दर्शपूर्णमा-सपदार्थान्वये बाधकाभावात् । तत्र आरम्भणीयां विनापि दर्शपूर्णमासोद्देश्यकारम्भकर्तृ-पुरुषस्य निष्पत्तेः यदानर्थक्यं तत् केवलदर्शपूर्णमासपद एवापूर्वसाधनत्वलक्षणयापि परिहर्तुं शक्यत एवेति किमिति पदद्वये तदाश्रयणं कार्यम् । ततश्चापूर्वसाधनारम्भोद्देश्यकारम्भकर्तृ-पुरुषसंस्कारार्थाया इष्टेः आरम्भकपुरुषसंस्कारद्वारा अर्थादेव दर्शपूर्णमासापूर्वार्थत्वमेव भवतीति न तदर्थं एकदा आरम्भपदार्थेऽन्वितस्य दर्शपूर्णमासपदस्यावृत्तिः तद्वाचकपदान्तरकल्पना वा नैवाश्रयणीया । अत एवारप्स्यमाणपदे अपूर्वसाधनत्वलक्षणायां व्रीहित्वादिवत् आरम्भ-त्वस्याविवक्षापत्तेः द्वितीयादिप्रयोगेष्वप्यन्वारम्भणीयापत्तेः विवक्षायाञ्च युगपद्वृत्तिद्वयदोषापत्तेः नापूर्वसाधनत्वलक्षणया निस्तार इति **भाट्टालङ्कारोक्तमपास्तम् ।** एवञ्च व्रीहित्ववत् दर्शपूर्णमासत्वस्याविवक्षणात् आरम्भत्वेनैव च द्वारतानिवेशात् भवत्येव विकृतावूह इत्याह— **तत्पदार्थरहितायामिति ।** तस्य दर्शपूर्णमासपदस्य योऽर्थः तद्रहितायामित्यर्थः ।

नन्वेवं दर्शपूर्णमासपदे अपूर्वसाधनत्वलक्षणायां नित्यकाम्यविधिभेदेन अपूर्वभेदस्याव-श्यकत्वात् नित्यापूर्वसाधनचिकीर्षया सकृदारम्भणीयानुष्ठानेऽपि काम्यापूर्वसाधनचिकीर्षया विकृतिष्विव पुनस्तदावृत्तिःस्यात् दर्शपूर्णमासत्वविवक्षायान्तु दर्शपूर्णमासत्वावच्छिन्नारम्भस्य नित्यप्रयोगे एव सत्वेन काम्यप्रयोगेऽभावेन न तदनुष्ठानापत्तिरिति चेत् । उच्यते । न विधिभेदमात्रेणा-पूर्वभेदः । तथात्वे व्रीहियवशास्त्रभेदात् तज्जन्ययागजन्यापूर्वभेदापत्त्या एकार्थत्वाभावेन व्रीहि-यवयोर्विकल्पानापत्तेः । सुतराञ्च संस्कारवाक्येषु अपूर्वसाधनत्वलक्षणायामपि अपूर्वभेदाद्यवेषु संस्कारानापत्तेश्च । अतः कारणतावच्छेदकावच्छिन्नकारणभेदादेव अपूर्वभेदः । तथा-

द्यपदार्थान्तरवत्यां विकृतावूहितव्यैवान्वारम्भणीया। लृट्श्रुत्या च तादृशप्रथमपदार्थप्राग्भाव-

चैकजातीयापूर्वजनके यागे व्रीहियवयोः कारणत्वे परस्परव्यभिचारपरिहाराय तृणारणिजवह्नोरिव वैजात्यमात्रमेव लाघवात् कल्प्यते न तु यागे तज्जन्यापूर्वे वा भेदः गौरवापत्तेः। तथा नित्य-काम्यविधिविधेययोः यागयोः यागभेदे प्रमाणाभावात् कारणभेदाभावे नापूर्वभेदः। किन्तु तत्तत्कामनाविषयसङ्कल्पजन्यत्वात् तस्मिन्नेवापूर्वे वैजात्यमात्रम्। व्यभिचारपरिहाराय कल्प्यमान-मपि च तद्वैजात्यं न दर्शपूर्णमासपदेनापूर्वसाधनत्वलक्षणायामपूर्वविशेषणम्, गौरवात्, तन्निवेशं विनाप्यानर्थक्यपरिहारस्य जायमानत्वाच्च। अतोऽपूर्वसाधनत्वावच्छिन्नारंभस्य नित्यप्रयोग एव सत्वात् तत्रैव तदनुष्ठानम्, न काम्यप्रयोगे इति न काप्यनुपपत्तिः।

एवं स्थिते बृहद्रथन्तरधर्माणामपूर्वसाधनत्वलक्षणायां विधिरसायनोपपादितसाङ्कर्यापत्ति-खण्डनाय भाट्टालङ्कारैरुक्तम्—यथैवापूर्वसाधनत्वलक्षणायामपि प्रथमावगतस्य दर्शपूर्णमासत्वावच्छिन्ना-रम्भस्यैव द्वारत्वमवश्यं स्वीकरणीतं अन्यथा नित्यापूर्वकाम्यापूर्वयोः विधिभेदेन भेदावश्यंभावात् नित्यापूर्वसाधनचिकीर्षयाऽनुष्ठितायाः काम्यापूर्वसाधनतदारम्भचिकीर्षायामावृत्त्यापत्तेः, तथैव 'रथन्तरे प्रस्तूयमाने' इत्यत्र रथन्तरपदेषु अपूर्वसाधनत्वलक्षणायामपि प्रस्तूयमानपदसमभिव्याहारेण रथन्तरीयप्रस्तावाख्यभक्तेरेव द्वारत्वाश्रयणान्न तदीयधर्माणां बृहति प्राप्तिः। प्रथमबोधवेलायां रथन्तरीयभक्तिविशेषस्य द्वारत्वे निर्णीते पश्चादानर्थक्यपरिहाराय सत्यपि रथन्तरादिशब्दस्य लाक्षणिकत्वे बाधकाभावेन पूर्वावगतद्वारविशेषबाधायोगादिति।

तदयुक्तम्। आरम्भयोग्यतासम्पादनद्वारेण दर्शपूर्णमासौ भावयेदिति वाक्यार्थाङ्गी-कारेण तयोरेव मुख्योद्देश्यत्वेन दर्शपूर्णमासपदे एव अपूर्वसाधनत्वलक्षणायाः स्वयमुपपादितत्वात्। अन्वारम्भस्य दर्शपूर्णमासौ प्रति द्वारत्वायोगेन आरम्भे दर्शपूर्णमासनिरूपितत्वलाभेऽपि तत्र दर्शपूर्ण-मासारम्भत्वेन द्वारत्वकल्पने कृष्णलचरौ वैतुष्याभावेनावघातस्येव विकृतौ दर्शपूर्णमासारम्भ-रूपद्वाराभावात् अपूर्वसाधनत्वलक्षणायामपि आरम्भणीयानापत्तेः। अतो यदोद्देश्यसमर्पके अपूर्व-साधनत्वलक्षणया दर्शपूर्णमासत्वमविवक्षितं तदा द्वारकोटावपि तदविवक्षितमेव वाच्यम्। भवदुक्तरीत्याऽपूर्वसाधनं प्रति अन्वारम्भस्य द्वारत्वायोगेन तन्निरूपितत्वकल्पनस्यैव युक्तत्वात्। अतो दर्शपूर्णमासारम्भत्वेन द्वारकल्पनस्यायुक्तत्वात् अपूर्वसाधनारम्भस्यैव द्वारत्वे भवदुक्तरीत्या काम्यप्रयोगे पुनरावृत्तिर्दुरुपपादैवेति मदुक्तरीत्यैव काम्यप्रयोगे अन्वारम्भणीयावृत्तिर्निराकार्येत्यलं विस्तरेण। यथा चैवं सति रथन्तरीयप्रस्तावाख्यभक्तेरपि न द्वारत्वं तथोपपादयिष्यते तदधिकरणे।

**आद्यपदार्थान्तरवत्यां**—आद्यः प्राकृतोऽन्वाधानादिः पदार्थः तत्स्थानपतितपदार्था-न्तरवत्यामित्यर्थः। एवमपि कथं प्रयोगबहिर्भावसिद्धिरित्यत आह—**लृट्श्रुत्येति**।

विधानात् प्रयोगबहिर्भावसिद्धिः । द्वितीयादिप्रयोगे चोक्तविधधर्मावच्छिन्नपदार्थाभावादकरणम् ।

अत्र हि दर्शपूर्णमासयोः न तत्तद्व्यक्तित्वेन प्रवृत्तिं प्रत्युद्देश्यता येन तद्व्यक्तित्वावच्छिन्नोद्देश्यकप्रवृत्तिध्वंसासमानकालीनतद्व्यक्त्युद्देश्यकप्रवृत्तिविषयत्वात् द्वितीयप्रयोगीयाद्यपदार्थाङ्गत्वेनापि सा स्यात् । दर्शपूर्णमासाविति श्रवणात्तु दर्शपूर्णमासत्वमेवोद्देश्यतावच्छेदकम् । आवश्यकी चोभयत्रापि प्रवृत्तिनिरूपितोद्देश्यतावच्छेदकविवक्षा, इतरथा सामान्यतो 'विहितक्रिया मे जायताम्' इत्याकारकोद्देश्यतया गङ्गास्नानप्रवृत्तावपि दर्शपूर्णमासोद्देश्यकप्रवृत्तित्वात् तत्राप्यारम्भणीयापत्तेः । अतो दर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंससमानकालीनतदवच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेनैव प्रथमपदार्थस्योद्देश्यता, । अत सामान्याकारकेच्छया गङ्गास्नानानुष्ठानोत्तरमाद्यदर्शपूर्णमासप्रयोगेऽप्यन्वारम्भणीया न स्यादतः प्रथमावच्छेदकविवक्षा । दर्शपूर्णमासाकरणेऽप्युक्तविधेच्छया गङ्गास्नानकरणे तदापत्तेर्द्वितीयावच्छेदकविवक्षा ।

वस्तुतस्तु 'दर्शपूर्णमासौ मे जायेतां' इत्याकारकेच्छया गङ्गास्नानकरणेऽपि तदापत्तिवारणार्थं यस्मिन् पदार्थे सङ्कल्पादिरूपे कृते दर्शपूर्णमासावारब्धाविति व्यवहारस्तत्पदार्थप्रवृत्तेरेवोद्देश्यतावच्छेदककोटिप्रवेशस्यावश्यकत्वे तत एवोक्तस्थलेऽपि वारणसिद्धेस्तत्तद्व्यक्तित्वादेरुद्देश्यतावच्छेदकत्ववारणार्थमेवावच्छेदकविवक्षा । अत एव तत्पदार्थस्योक्तरूपेणैवारम्भत्वाच्च द्वितीयादिप्रयोगेऽन्वारम्भणीया ।

नन्वेवं 'साङ्गेन ज्योतिष्टोमेन यक्ष्ये' इत्येवं विधसङ्कल्पविषयकप्रवृत्तेर्दीक्षणीयात्वावच्छिन्नोद्देश्यकप्रवृत्तित्वे ततः पूर्वमन्वारम्भणीयापत्तिः । यदि तूद्देश्यतायास्तत्र 'साङ्गो ज्योतिष्टोमो मे जायताम्' इत्येवमाकारकेच्छाविषयविशिष्टवृत्तित्वेन विशिष्टधर्मावच्छिन्नत्वान्नोक्तप्रवृत्तित्वमित्याशङ्क्येत ततो 'दीक्षणीयया यक्ष्ये' इत्येवंविधावान्तरसङ्कल्पात्पूर्वमन्वारम्भणीयाकरणापत्तिः, तस्य निरुक्तप्रवृत्तिविषयत्वात् । अवान्तरसङ्कल्पविषयप्रवृत्तेः 'दीक्षणीया मे जायताम्' इत्येवमाकारकेच्छा[1] जन्यत्वेन दीक्षणीयात्वा-

---

दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वमुक्तपदार्थः । येन तद्व्यक्तित्वेति । करिष्यमाणप्रयोगव्यक्तिः तद्व्यक्तिपदार्थः । उभयत्रापीति । दळद्वयेऽपीत्यर्थः । उक्तरूपेणैवारम्भत्वादिति । अतश्च यस्मिन् पदार्थे कृते दर्शपूर्णमासावारब्धाविति व्यवहारः तस्य पदार्थस्य सङ्कल्परूपस्य अन्वाधानादिरूपस्य वा न तेन रूपेणोद्देश्यतावच्छेदककोटिनिवेशः ।

1. B. रकेच्छायां दीक्ष

वच्छिन्नोद्देश्यकत्वात्। एवं राजसूयगतेष्टिपशुबन्धादिष्वप्यन्वारम्भणीयापत्तिरिति चेन्न—

'दीक्षणीया जायताम्' इत्याकारकेच्छानुत्पत्तावपि 'साङ्गो ज्योतिष्टोमो जायताम्' 'इत्याकारकसाङ्गत्वराजसूयत्वप्रकारकेच्छात एव 'दीक्षणीयया यक्ष्ये' इत्येवंविधसङ्कल्पविषयकप्रवृत्तेस्सम्भवेन तादृशसङ्कल्परूपाध्यवसायस्य दीक्षणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावेन द्वारलोपादेव दीक्षणीयादौ राजसूयगतेष्टिपशुबन्धादौ च अन्वारम्भणीयाभावस्य दशमे वक्ष्यमाणत्वात्। एवं 'सोमो मे जायताम्' इत्याद्याकारकेच्छात एव सोमाद्यसम्भवे वैश्वानरेष्ट्यादौ प्रवृत्तिसम्भवात् 'वैश्वानरेष्ट्या यक्ष्ये' इति सङ्कल्पस्यापि वैश्वानरेष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावेन द्वारलोपादेव न तत्राप्यन्वारम्भणीयेति द्रष्टव्यम्। दर्शपूर्णमासत्वं तु 'साङ्गौ दर्शपूर्णमासौ जायेताम्' इत्याकारकेच्छायां प्रकारत्वात् भवत्युद्देश्यतावच्छेदककोटिप्रविष्टमितिविशेषः। अतस्सिद्धमन्वारम्भणीयाया उक्तविधारम्भाङ्गत्वात् विकृतावूहो, द्वितीयादिप्रयोगे चानङ्गत्वमिति।

यत्तु **मूले** प्रथमप्रयोगारम्भे क्रियमाणाऽऽरम्भणीया सर्वप्रयोगाणामुपकरोति। न चारप्स्यमाण इति अद्यतनकालवाचिलृट्प्रत्ययप्रयोगात्प्रधानदिनकर्तव्यत्वावगतेः कथं

---

किन्तु दर्शपूर्णमासत्वावच्छिन्नोद्देश्यकाङ्गविषयप्रवृत्तिध्वंसासमानकालीनदर्शपूर्णमासत्वावछिन्नोद्देश्यकाङ्गविषयप्रवृत्तिविषयत्वेनैव रूपेण द्वारकोटौ अङ्गत्वादेरेव प्रवेशात् गङ्गास्नानस्य चाङ्गत्वाभावात् द्वितीयप्रयोगाद्यपदार्थस्य च तत्त्वाभावात् नारम्भणीयाप्रसक्तिरिति भावः। **इति विशेष इति।**

ननु 'साङ्गौ दर्शपूर्णमासौ जायेतामि'तीच्छया 'साङ्गेन ज्योतिष्टोमेन यक्ष्य' इति सङ्कल्पवत् 'साङ्गेन दर्शेन पौर्णमासेन वा यक्ष्य' इति सङ्कल्पापत्तेः-, केवल 'दर्शेन पौर्णमासेन बा यक्ष्य' इति सङ्कल्पानुष्ठानं याज्ञिकानां विरुद्ध्येत। **यदि तु** दर्शेनेति तृतीयान्तेन साङ्गस्यैवाभिधानान्न साङ्गपदस्यपृथक् प्रयोगः, अत एव प्रयाजाद्यङ्गेषु न प्रयाजैर्यक्ष्ये इति पृथक्सङ्कल्पः प्रधानसङ्कल्पेनैव तस्य सिद्धत्वादित्युच्येत ततः ज्योतिष्टोमेन यक्ष्ये इति सङ्कल्पापत्तेः साङ्गेन ज्योतिष्टोमेन यक्ष्ये इति सङ्कल्पाभिधानं पूर्वोक्तं कथं युज्यते ? सुतराञ्च तदा प्रयाज इव 'दीक्षणीयया यक्ष्ये' इति पृथक्सङ्कल्पे प्रमाणाभाव इति चेत्। **उच्यते।** सत्यं, दर्शेन यक्ष्ये इति सङ्कल्पवाक्ये तृतीया करणत्वार्था, अभेदार्था वा अस्तु; उभयथापि प्रयाजकरणकप्रधानसङ्कल्पसिद्धेः न पृथक् अङ्गसङ्कल्पः तथापि दीक्षणीयाद्यङ्गेषु दर्शपूर्णमासातिदेशेन सङ्कल्परूपाङ्गस्यापीतराङ्गवत् प्राप्त्युपपत्तेः सङ्कल्पानुष्ठाने न किञ्चिद्बाधकम्। यद्यपि सङ्कल्पस्य साधारण्येन सर्वार्थत्वं न तु दर्शादिमात्रार्थत्वं तथापि प्रकृतिवद्भावानुरोधेनैव विकृतिषु तदनुष्ठानं,

सर्वप्रयोगोपकारकत्वमिति वाच्यं, अद्यतनानद्यतनसाधारणभविष्यत्कालमात्रवाचिलृटः अद्यतनमात्रकालवाचित्वाभावात्। इतरथा 'भविष्यत्यनद्यतने लुट्' इत्यत्र (पा.३-३-१५) भविष्यतीति लृट्प्रत्ययप्रयोगानुपपत्तेः। अतः प्रथमप्रयोगारम्भे कृतैव सर्वेषामुपकारिकेत्युक्तम्। तदन्वारम्भणीयाजन्यस्योपकारस्य यावज्जीवं सत्त्वे विकृतिष्वपि प्रसङ्गादुपकारकत्वापत्तेः असत्त्वे द्वितीयादिप्रयोगेऽप्युपकारकत्वानापत्तेरुपेक्षितम्॥ ११॥

---

अन्यथा प्रकृतिवदनुष्ठाना [ना ?] पत्तेः। अत एव बोधायनसूत्रानुसारिणोऽनुतिष्ठन्त्येवैताद्दशं सङ्कल्पम्। प्रयाजादिषु तु ताद्दशप्रापकप्रमाणाभावान्न तदनुष्ठानमिति विशेषपदेन सूचितं पूज्यपादैः। सर्वथापि दर्शपूर्णमाससङ्कल्पवाक्यन्यायेन ज्योतिष्टोमेन यक्ष्ये इत्येतावन्मात्रवचनस्य साधुत्वे सति यत् साङ्गेनेति विशेषोपादानं तत् तस्यैव विवरणमात्रार्थं, नत्वावश्यकत्वद्योतनार्थमित्यवधेयम्। अतो दीक्षणीयया यक्ष्ये इत्येवं सङ्कल्पस्यातिदेशप्राप्तस्य प्रामाणिकत्वे तद्विषयकप्रवृत्तेर्न दीक्षणीयादित्वावच्छिन्नोद्देश्यकत्वमिति भावः

प्रसङ्गादिति। एतेन प्रयोगाणां भेदेऽपि दर्शपूर्णमासव्यक्तीनां यावज्जीवं करिष्यमाणानां दर्शपूर्णमासत्वानपायात् दर्शपूर्णमासारम्भे अद्यतनेऽनद्यतने भविष्यति सा विहिता युक्ता सर्वतद्व्यक्त्यङ्गत्वेन सर्वासामुपकारिका। विकृतीनान्त्वारम्भभेदादेव भिन्नेति प्रकाशकारोक्तमपास्तम्। आरम्भभेदेऽपि दर्शपूर्णमासतन्त्रपाते सति तदुपकारलाभेन तद्विषयातिदेशकल्पने प्रमाणाभावादेव तदनापत्तेः। अयं ग्रन्थः प्रागर्थतो व्याख्यात एवेति स्पष्टार्थः।

मूलग्रन्थे पक्षान्तरेणोपपादितं सर्वप्रयोगाङ्गत्वं तत्रैव दर्शितमपि तदनूद्य दूषयति —यत्त्विति।

---

(१२)—अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥ ततश्चावचनं तेषामितरार्थं प्रयुज्यते ॥ ३७ ॥

एवं तावदुपोद्घातमुखेनोहविषयश्चिन्तितः। इदानीं साक्षादेव तद्विषयश्चिन्त्यते। तत्र 'फलदेवतयोश्च' इत्यत्र शक्त्या अपूर्वसाधनीभूतदेवतादिप्रकाशकमन्त्रपदानां विकृतौ तत्स्थानापन्नदेवताद्यन्तरे शक्त्या तत्प्रकाशनार्थं पदान्तरोह इत्युक्तम्। ततश्च यन्मन्त्रपदानां न शक्त्या अपूर्वसाधनीभूतदेवतादिप्रकाशकत्वं अपि तु लक्षणया तत्प्रकाशकत्वं शक्यार्थस्यैव वाऽदृष्टार्थमन्यस्तुत्यर्थं वोपादानं, तत्रासमवेतार्थत्वात् विकृतिष्वपि श्रुतपदैरेव तत्प्रयोजनोपपत्तेर्नोहः।

समवेतार्थत्वं चादृष्टाद्वारकसंबन्धेन स्वशक्यार्थस्यापूर्वसाधनीभूतसम्बन्धित्वम्। अस्ति चेदं 'देवस्य त्वा' इत्यादिमन्त्रे अग्निनिर्वापपदयोः अग्निनिर्वापयोस्तादृशयागगतद्रव्यसम्बन्धित्वात्। जपस्तोत्रशस्त्रादिमन्त्रपदानां च स्वशक्यार्थस्यादृष्टद्वारा तादृशयागसम्बन्धित्वेऽपि न समवेतार्थत्वम्। एवं देवादिपदानामपि न समवेतार्थत्वम्। न हि देवसवितृश्विपूषशब्दानां प्रकृतयागीयदेवताप्रतिपादकत्वं संभवति, उत्पत्तिशिष्टदेवतावरोधेन मान्त्रवर्णिकदेवताकल्पानुपपत्तेः। न चोपांशुयाजे तत्कल्पनं, तथात्वे गम्यमाननिर्वापैकवाक्यताभङ्गापत्तेः। न च 'त्वा जुष्टं निर्वपामि' इत्येतत्पदत्रयानुषङ्गेण[1]

---

अर्थाभिधानसंयोगात्।

अत्र तन्त्ररत्नादौ द्वेधा पूर्वपक्षरचना कृता। देवसवित्रादिशब्दानां प्राकृताग्न्यादिष्वर्थेषु दृष्टार्थत्वानुरोधेन लक्षणामङ्गीकृत्याग्न्यादिरूपसमवेतार्थाभिधायित्वं, अथवा देवस्य त्वेत्यादि प्रतिदेवतं मन्त्रभेदमङ्गीकृत्य अग्निं, अस्य जुष्टं, निर्वपामीत्यनुषङ्गेण 'देवस्य त्वा सवितुः प्रसवे जुष्टं निर्वपामि अश्विनोर्बाहुभ्यां जुष्टं निर्वपामि पूष्णो हस्ताभ्यां जुष्टं निर्वपामि अग्नये जुष्टं निर्वपामी'त्येवं मन्त्रचतुष्टयाङ्गीकारात् निर्वापसम्बन्धानुपपत्त्या त्यागसम्बन्धित्वावगतेः यागाङ्गं भवितुमर्हन्ति; अतो मन्त्रवर्णकल्पिताभिरेताभिर्देवताभिः अग्नेर्विकल्पनात् देवादिपदानां समवेतार्थत्वमिति। एवं पूर्वपक्षरचनां कृत्वा सिद्धान्ते द्वितीयः प्रकारः उत्पत्तिशिष्टाग्न्यादिदेवताविरोधात् विकल्पानुपपत्तेः दूषितः। तदेतद्दूषणं परिहर्तुं पूर्वपक्ष्यभिप्रायं आशङ्काव्याजेन दर्शयति—**न च त्वा जुष्टमिति**। यद्यपि उपांशुयागदेवतासन्निवेशेऽपि निर्वापाभावात् अनुषक्तनिर्वपामिपदैकवाक्य-

---

1. B. पदा नुक्रमेण

**'देवस्य सवितुः प्रसवे त्वा जुष्टं निर्वपामि, अश्विनोर्बाहुभ्यां त्वा जुष्टं निर्वपामि, अग्नये त्वा जुष्टं विर्वपामि' इत्येवं मन्त्रभेदाङ्गीकारेण निर्वपामिपदैकवाक्यतोपपत्तेः, चतुर्थस्य आग्नेये उपयोगेऽपि आद्यानां त्रयाणां मन्त्राणां उपांशुयाजे देवताकल्पकत्वोपपत्तिरिति वाच्यं,** अनुषङ्गेण **वाक्य[1] भेदाङ्गीकारस्यैव दोषत्वात्। षष्ठ्यन्तपदानां प्रसवबाहुहस्त-पदैरन्वितानां देवताप्रतिपादकत्वे प्रमाणाभावाच्च ।**

---

तानुपपत्तिस्तदवस्था, तथापि मन्त्रकल्प्यविधेः विशिष्टरूपेणैव स्वीकारात् तादृशदेवताविशिष्ट-निर्वापस्य उपांशुयाजे निवेशेन तदीयद्रव्याज्यस्यापि निर्वापः कार्य इत्याशङ्काभिप्रायः ।

यद्यपि भाष्ये तन्त्ररत्ने च जुष्टं निर्वपामीत्येतावन्मात्रस्यैवानुषङ्गो दर्शितः तथापि समानन्यायात् त्वापदस्यापि समवेतार्थत्वेनानुषङ्गे न बाधकमित्यभिप्रायेण **शास्त्रदीपिकाप्रकाश-कारैः** त्वापदानुषङ्गोऽप्युपरितनवाक्यत्रये दर्शितः । तदभिप्रायेण स्वयमपि तदनुषङ्ग उक्तः । तत्र त्वा जुष्टं निर्वपामीत्येतत्पदानुषङ्गेणेत्यत्र एतादृशसमभिव्याहारयुक्तं पदं तस्यानुषङ्गेणेति नार्थः । तादृशसमभिव्याहारस्य मन्त्रेऽभावात् । किन्त्वेतेषां पदानामनुषङ्गेणेत्यर्थो द्रष्टव्यः । अतश्च यत्र नास्त्युत्पत्तिशिष्टदेवता उपांशुयाजादौ तत्र एतन्मन्त्रकल्प्यदेवतानिवेशाद्युक्त एवैतत्पदानां समवेतार्थत्वपूर्वपक्ष इत्याशयः ।

एतेन देवादिपदानामानर्थक्यात् अदृष्टार्थपरिहारायौत्पत्तिकोऽप्याग्नेयादितद्धितो न देवता-विधिपरः ; किन्तु पूर्वोक्तरीत्या मन्त्रचतुष्टयकल्पनया निर्वापेऽपि कल्पिता देवता यागायैव सोम-ग्रहणेष्विन्द्रवाय्वाद्या इव कल्प्यन्ते । अतश्च सर्वासामपि यागाङ्गत्वात् तद्वाचकपदानां समवेता-र्थत्वमिति पूर्वपक्षं प्रापय्य, आग्नेयादिवाक्ये तद्धितार्थद्रव्यदेवतान्वयविध्यभावे कल्पकाभावेन यागरूपधात्वर्थविशेषालाभे च अनिरूपितमात्रविध्यपर्यवसानात्, स्वार्थबोधे चापर्यवसितस्य आग्नेयादिवाक्यस्य वाक्यान्तरेण मन्त्रेणान्वयायोगात् तद्धितस्य विधायकतैव वाच्या। अतः सतः सवित्रादेः उत्पन्नशिष्टस्य मान्त्रवर्णिकस्य चाग्निना उत्पत्तिशिष्टेन तद्धितविहितेन चोभयथापि गुणाधिकरणोक्तवैषम्यान्न विकल्प इति यत् **प्रकाशकारैः** सिद्धान्तितं तदपास्तम् ।

आग्नेयवाक्ये यागकल्पनायाः तद्धितविहितद्रव्यदेवतासम्बन्धाधीनत्वे तत्र मान्त्रवर्णि-कैतद्देवतानिवेशासम्भवे प्रत्यक्षयजिचोदनाचोदितोपांशुयाजादावनुत्पत्तिशिष्टदेवताके निवेशे बाधकाभावेन पूर्वपक्षखडनासम्भवात् । अत एव अस्मिन् पूर्वपक्षे आग्नेयवाक्ये तद्धितेन देवताविधिरिष्ट एवेति चतुर्थस्याग्नेये उपयोगसम्भवेऽपि आद्यानां त्रयाणामुपांशुयाजे देवता-कल्पकत्वोपपत्तिरिति विभागकरणात् सूचितम् । समाधत्ते—**अनुषङ्गेणेति** । अत्र

---

1. B. अनुषङ्गे वाक्य

अत एवैतत्कल्प्यदेवतानामन्यत्र निवेशासम्भवेऽपि यागान्तरकल्पकत्वमिति शङ्काऽपि प्रत्युक्ता, तथात्वे तद्यागान्तरस्याग्नेयाद्यङ्गतापत्तेर्विकृतावूहाप्रसक्तेश्च। एतेन या मूले सवित्रादिपदानामग्न्यादिपरत्वं लक्षणया अङ्गीकृत्य समवेतार्थत्वशङ्का कृता, सा येन शक्यसम्बन्धेनाग्न्यादिपरत्वं तेनैव शक्यसम्बन्धेन वैकृतदेवतापरत्वस्याप्युपपत्त्या-वूहाप्रसक्तेरुपेक्षिता। अत एव समवेतार्थत्वलक्षणे शक्यार्थस्येति विशेषणम्। अस्तु वा शक्यपदं वृत्तिप्रतिपाद्यपरं, तथाऽपि समवेतार्थत्वेऽप्युक्तयुक्त्या ऊहरूपफलाप्रसक्ते-रेवेयं शङ्कोपेक्षिता। तस्मात् कथमपि समवेतार्थप्रकाशकत्वाभावात् देवस्य त्वादिपदानां यश्शक्योऽर्थस्तद्विशिष्टनिर्वापप्रकाशनमेव देवस्य त्वादिसकलमन्त्रप्रयोजनम्। तत्र येषां पदार्थानां दृष्टप्रयोजनसम्भवस्तत्प्रकाशनस्य दृष्टमेव प्रयोजनं येषां तु तदसम्भवस्त-त्प्रकाशनस्यादृष्टमेव प्रयोजनं कल्प्यम्। अत एव तादृशपदार्थानां निर्वापोपरि वैशिष्ट्यमप्याहार्यसम्बन्धेनैवेति ध्येयम्।

---

मान्त्रवर्णिकेन देवताविधानेन न शक्यन्तेऽग्न्यादयः उत्पत्तिशिष्टा बाधितुम्। विषमशिष्टत्वात्। तस्मात् सवित्रादिमन्त्रवर्णैः यागान्तराणि सवित्रादिदैवत्यानि कल्प्यन्ते। तेषु मुख्याश्च समवेतवचनाश्च सवित्रादिशब्दा इति केषाञ्चित् पूर्वपक्षवादिनां मतं निरस्यति —**अत एवेति**। देवताप्रतिपादकत्वाभावादेवेत्यर्थः। कल्पितविधिविधेयानां यागान्तराणामङ्गत्वे इष्टापत्तौ तेषां प्रयाजादिवद्विकृतावतिदेशेऽपि तदीयमन्त्राणां प्रधानसम्बन्धिदेवताप्रकाशकत्वस्य प्रकृतावेवाभावे तत्स्थानापन्नवैकृतदेवताप्रकाशकत्वस्यासम्भवात् ऊहाप्रसक्तेः तत्फलकपूर्व-पक्षासम्भवरूपं बाधकमाह—**विकृतावूहाप्रसक्तेश्चेति**। अत्र तन्त्ररत्नादौ यत् सवित्रादिपदैः लक्षणयाऽग्न्यादिरेवोच्यत इत्येवमेकं पूर्वपक्षप्रकारमुक्त्वा मन्त्रवर्णकल्प्यदेवतासम्बन्धानुमित-यागान्तरमेव विधेयमिति **केषाञ्चिन्मतमूहाप्रसक्तेः** पूर्वोत्तरपक्षयोरनुष्ठाने विशेषाभावेन प्रदूष्य तस्मात्स एव पूर्वपक्षो यत्रोहः सिद्ध्यतीत्येवमुपसंहृतम्। तत् सवित्रादिपदानां लक्षणेति पूर्वपक्षेऽपि समानमित्यभिप्रेत्य दूषयति—**एतेनेति**। **तेनैव सम्बन्धेनेति**। अत एवाग्न्यधिष्ठानकत्वसम्बन्धेन अग्नीषोमदेवतालक्षकस्यापि मनोतास्थाग्निपदस्य वायव्ये पशौ तेन सम्बन्धेन लक्षणया वायुदेवताप्रकाशनानर्हस्य निवृत्त्या ऊहो न्यायेन प्राप्नोत्येव, सम्बन्धभेदात्। प्रकृते त्वग्नीवरुणदेवत्ये पशौ तेनैव सम्बन्धेन लक्षणया प्रकाशनसम्भवेन तस्यानूहवत् तेनैव सम्बन्धेन लक्षणया सवित्रादिपदैः वैकृतदेवताप्रकाशनसम्भवेऽनूह एव स्यादित्यर्थः।

यदि समवेतार्थत्वलक्षणे स्वशक्यार्थत्वेनैव निवेशः तर्हि लक्षणया अग्नीषोमप्रकाशकमनोता-मन्त्रस्थकेवलाग्निपदे लक्षणया विकारपरे धान्यमसीतिमन्त्रस्थधान्यपदे वा अव्याप्तिः प्रसज्येतेत्यत आह—**अस्तु वेति**। **तस्मादिति**। अस्मिन्नधिकरणे पूर्वपक्षस्य निर्युक्तिकत्वान्न पार्थक्येन

तदिह निर्वापस्य तावद्दृष्टमेव पृथक्करणं प्रयोजनम्। अग्नये त्वापदार्थस्य च तदुपयोगितया स्वातन्त्र्येण च स्मृतिदार्ढ्यम्। जुष्टपदस्य तु वक्ष्यते। तदन्येषां तु अदृष्टार्थत्वमिति।

केचित्तु देवस्य त्वादिपदैर्निर्वापस्तुतिर्लक्षणया प्रतिपाद्यते। सा चानुष्ठानकालेऽपि निर्वापं प्ररोचयितुमिति दृष्टार्थैव। तथा वाऽस्तु सर्वथा देवस्य त्वापदान्यसमवेतार्थानि नोहितव्यानि।

यत्तु भाष्यकारेण गौण्या अश्विशब्द आधने अश्वदानकरणाद्दम्पतिपरः। पूषशब्दश्च पोषकत्वात् यजमानपरः। अध्वर्युबाहुहस्तयोश्च तदीयत्वं परिक्रीतत्वात्। देवः सविताऽपि लक्षणया यजमानः तस्य प्रसवे अनुज्ञायां इत्यर्थाङ्गीकारेण निर्वापविशेषणत्वमुपपादितं, तत् वेदे आरोपकपुरुषभावादन्यत्रार्थवादादौ आहार्यारोपस्येवेहाप्यारोपाभावमभिप्रेत्य। यदा तु अध्वर्योस्स्वात्मनिष्ठेनाहार्यारोपेण वैशिष्ट्यं सम्पाद्य स्वकर्तृकं निर्वापं प्रकाशयितुं लौकिकवाक्यप्रयोगवत् वैदिकवाक्यप्रयोगेऽपि बाधकाभाव इत्यालोच्यते, तदा अप्रयुक्तलक्षणायां प्रमाणाभावात् अध्वर्युब्रह्मयजमानान्यतमग्रहणे नियामकाभावाच्च पूर्वोक्तपक्षाश्रयणमेव युक्तम्।

---

पूर्वपक्षकोटौ निवेष्टव्यमिति कथमपीति पदेन सूचितम्। तदन्येषान्त्वदृष्टार्थत्वमिति। तदपि स्तोत्रशस्त्रवत् स्तुतिप्रकारद्वारेति प्रागुक्तं आहार्यसम्बन्धेनैवेत्युक्त्या सूचितम्।

वस्तुतस्तु स्तोत्रशस्त्रवन्नेयं स्तुतिरदृष्टार्था किन्तु कर्मसमवेतार्थपदैकवाक्यत्वादर्थवादस्तुतिवत् दृष्टार्था विधिनेव विधेये मन्त्रेण निर्वापे प्रकाश्ये प्रवृत्तिसिद्ध्यर्थमपेक्षिता प्ररोचनाऽनया स्तुत्या जन्यते। तेनैव न्यायेनाग्निर्मूर्धेत्यादियाज्यानुवाक्यादौ अयमग्निरिति देवताप्रकाशने दिवो मूर्धेत्यादेः स्तुत्यर्थतासिद्धिः। अतोऽर्थवादपदैः विधानकाल इव एतैः पदैः अनुष्ठानकाले प्ररोचयितुमियं गुणकीर्तनात्मिका स्तुतिः गुणिप्रकाशनपरैवेति दृष्टार्थेति प्रकाशकाराणामुक्तमनूद्याङ्गीकरोति—केचित्त्विति। अत्र दृष्टार्थैवेत्यस्याग्रे 'इतिवदन्ती'ति पूरणीयम्। तदीयत्वमिति। अध्वर्युणा स्वीयाभ्यां बाहुभ्यां हस्ताभ्याञ्च निर्वापः क्रियते। तौ च कथमश्विपूषपदलक्षितयजमानसंबन्धिनावित्याशङ्कोत्तरम्—परिक्रीतत्त्वादिति। यजमानेन हि स्वकार्यार्थे वरणेन अध्वर्य्वादयः परिक्रीताः कर्मकरा भवन्ति। ततश्च तदीयौ हस्तौ बाहू वा यजमानसम्बन्धिनावेवेत्याशयः। अध्वर्युब्रह्मयजमानेति। देवसवित्रश्विशब्दानां क्वचिदपि यजमाने लक्षणया प्रयोगादर्शनात् कथञ्चित् शक्यसम्बन्धमादाय लक्षणायां "काश्चिन्नैवाप्रयोगत" इति भट्टपादोक्तरीत्या निषिद्धलक्षणात्वापत्तेरयुक्तैव सा। अस्तु वा सा, तथापि यजमाने एव लक्षणा न ब्रह्माग्नीध्रादिष्वित्यर्थे नियामकाभाव इत्यर्थः। अध्वर्युपदञ्चाग्नीध्रपरम्। पूर्वोक्तपक्षेति। देवादिपदार्थानां

किञ्चैवं सत्रे देवसवित्रश्विपूषशब्देषु बहुवचनोहः प्रसज्येत। न च यज्ञपतिवृद्धिवदत्र परार्थत्वमिति भाष्यकारसमाधानं युक्तं, अश्विपूषपदे[1] तथा सम्भवेऽपि यजमानानुज्ञायाः परकीयद्रव्यविषये व्यळीकादिपरिहारार्थत्वेन दृष्टार्थत्वात् 'उदीचीनामस्य पदो निधत्तात्' इत्यादाविव देवसवितृपदयोरूहस्यानिवार्यत्वात्।

न चैवं भवन्मतेऽपि देवस्य सवितुरुदयरूपे प्रसवे इत्यर्थाङ्गीकारेण तस्य समवेतार्थत्वात् 'महारात्रे हवींषि निर्वपेत्' इत्यादिविकृतौ अप्रसवे इत्यूहापत्तिः। अमावास्यायां च प्रागुदयान्निर्वापे लोपापत्तिरिति वाच्यं, प्रसवे जाते जनिष्यमाणे वा इत्यर्थाङ्गीकारेण बाधकाभावात्। सूर्योदयकालीनत्वप्रकाशनस्य दृष्टार्थत्वाभावाच्च। अतो न देवस्य त्वादिपदेषूह इति सिद्धम्॥ १२॥

---

निर्वापोपरि वैशिष्ट्यमाहार्यसम्बन्धेनैवेति पक्षाश्रयणमित्यर्थः। देवसवितृपदयोरिति। यथा पशुगणे उदीचीनानस्येति मन्त्रे अस्येत्येकवचनस्य बहुवचनान्तेनोहः तद्वत् देवस्य सवितुरित्येकवचनयोरपि यजमानगणे ऊहोऽनिवार्य इत्यर्थः। अप्रसवे इति। यद्यपि प्रसव इति पदस्थाने महारात्रे इत्यूहउचितः तथापि देवस्य सवितुरिति पदद्वयाम्नातार्थान्वयाय अप्रसवे इत्यूहो दर्शितः। प्रागुदयादिति। उदिते पौर्णमास्यास्तन्त्रं प्रकामति प्रागुदयादमावस्यायामिति वचनविहिते उदयप्राचीनकाले प्रकृतावेवामावास्यायां निर्वापादितन्त्रारम्भादित्यर्थः। स्पष्टार्थमन्यत्।

---

1. अश्विपूषपदयोः

## (१३)—गुणशब्दस्तथेति चेत् ॥ ३८ ॥ न समवायात् ॥ ३९ ॥

तस्मिन्नेव मन्त्रे 'अग्नये जुष्टं निर्वपामि' इत्यत्राग्निशब्दस्समवेतार्थो न वेति चिन्तायां यद्यप्यग्निर्यागे समवेतस्तथाऽपि सम्प्रदानत्वेन श्रुतस्य तस्य निर्वापे यागाद्यतिरिक्ते ऽनन्वयात्तादर्थ्यचतुर्थीमङ्गीकृत्य जुष्टपदार्थे अन्वयो वाच्यः। तत्र च 'जुषी प्रीतिसेवनयोः' इति स्मृत्या जुष्टशब्दस्य सेवनार्थकत्वप्रतीतेरग्निना सेवितमित्यर्थावगमात्, निर्वापावस्थायां चाग्निना सेवनाभावात् भूतकालवाचिक्तप्रत्ययानुपपत्तेः, 'अग्नये जुष्टं' इत्यस्यासमवेतार्थकत्वम्। अतश्चाग्निसेवितकर्मकत्वस्य निर्वापस्तुत्यर्थमुपादानात् सौर्यादावपि तदुपपत्तेरनूह इति प्राप्ते—

यद्यपीयं तादर्थ्यचतुर्थी, यद्यपि च जुष्टपदेनैवान्वयः, तथाऽप्यग्नये जुष्टं अग्निना सेवितं यथा भवति तथा निर्वपामि इत्यर्थाङ्गीकारेण जुष्टशब्दस्य क्रियाविशेषणत्वमङ्गीकृत्य निर्वापफलप्रकाशनेनेतरदैवत्यहविर्विवेकसम्पत्त्यर्थतया निर्वापे देवतासंयोगस्य समवेतार्थत्वम्। इतरथा हि कस्यै देवतायै निरुप्तमिति निर्णयानापत्तेः।

---

### गुणशब्दस्तथेति चेत्।

अग्नये जुष्टमित्यत्राग्नये इति चतुर्थी सम्प्रदानत्वार्था? उत तादर्थ्यार्था वा? नाद्यः; मुख्यस्य सम्प्रदानत्वस्य प्रतिग्रहीतृत्वांशव्यतिरिक्तगौणस्य वा तस्य ददातियजतिक्रियातिरिक्तोक्तनिर्वापे ऽन्वयायोगेन स्वदेवताविशिष्टनिर्वापप्रकाशनाभावेनाग्निशब्दस्य समवेतार्थत्वासम्भवात्। अत एवास्य न कारकविभक्तिमत्वं किन्तु तादर्थ्यचतुर्थीवत्त्वमिति द्वितीयः पक्षः। सोऽपि नेत्याह—**तादर्थ्यचतुर्थीमिति**। **इत्यर्थावगमादिति**। अग्न्यर्थं अर्थात् यदग्निना सेवितमित्यर्थत अवगमादित्यर्थः। **अग्निसेवितकर्मत्वस्येति**। अग्निना सेवितमिति सिद्धवन्निर्देशे निरुप्यमाणद्रव्यसम्बन्ध्यग्निरूपदेवतापेक्षयाऽन्यस्यैवाग्नेः सेवनकर्मत्वप्रतीतेः तस्य कर्मसमवेत्वाभावेन निर्वापस्तुत्यर्थमेव तस्योपादानम्। यदग्निना पूर्वं सेवितमिदं अतः प्रशस्तं निर्वपामीति स्तुतिसम्भवादित्याशयः। **निर्वापफलेति**। निर्वापानन्तरं जायमानं सेवनरूपं फलं तत्प्रकाशनेनेत्यर्थः। ततश्च दृष्टार्थत्वमपि लभ्यत इत्याह—**इतरदैवत्येति**। कारकरूपविभक्त्यर्थस्य साक्षादेव कारकसमाख्ययाऽन्वयः। उपपदविभक्त्यर्थस्य तु उपपदविभक्तित्वादुपपदार्थ इति सर्वतान्त्रिकमतमनुसृत्योक्तम्। यदा त्वेककार्यकारणभावलाघवानुरोधेन निपातप्रातिपदिकोपसर्गातिरिक्तशब्दगम्यस्य सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तमात्रस्यार्थस्य सर्वस्यापि साक्षात् परंपरया वा भावनायामेवान्वयः तदा सुतरां निर्वापक्रिययैवान्वयात्

वस्तुतस्तु तादर्थ्यचतुर्थ्यपीयं प्रधानान्वयस्याभ्यर्हितत्वात् क्रियान्वयिन्येव। अन्नय-र्थत्वं च निर्वापस्य विध्यनुरोधात् तदुद्देश्यकत्यागसाधनीभूतद्रव्यसंस्कारकत्वसम्बन्धेनेति न देवतार्थत्वापत्तिः। जुष्टपदं तु पूर्ववदेव क्रियाविशेषणं भविष्यदर्थे वा कर्मण्ययो लाक्षणिकः। अग्नेस्तु तेन पार्ष्ठिक एवान्वयः। देवतासम्बन्धकीर्तनप्रयोजनं तु निर्वापे पूर्ववदेवेति समवेतार्थत्वम्।

अस्तु वेयं सम्प्रदानचतुर्थ्यपि देवतात्वरूपसम्प्रदानत्वैकदेशपरा, तथाऽपि देवताया ग्रहण इव निर्वापेऽप्यन्वयो निरुक्तप्रयोजनाय न विरुध्यते। जुष्टपदं पूर्ववत्। सर्वथा अग्निपदे समवेतार्थत्वादूहः॥

एवं वा—दर्शपूर्णमासयोः 'धान्यमसि धिनुहि देवान्' इति मन्त्रश्श्रुतः। स च 'धान्यमसीति दृषदि तण्डुलानधिवपति' इति वचनेन तडुलाधिवापे विनियुक्तः तत्र

---

समवेतार्थत्वमिति स्वमतमाह—वस्तुतस्त्विति। विध्यनुरोधादिति। आग्नेययागोत्पत्ति-विध्यनुरोधादित्यर्थः। ननु जुष्टपदार्थद्वारापि चतुर्थ्यर्थस्यान्वयाभावे कथमुपपदविभक्तित्व-मुपपद्यत इत्याशङ्कां निरस्यति—पार्ष्ठिक एवान्वय इति। पूर्ववदेवेति। इतरदेवत्य-हविर्विवेकसम्पत्त्यर्थतयेत्याद्युक्तपूर्वप्रकारेणेत्यर्थः। ग्रहण इवेति। यथैव ग्रहणे तत्कालीन-देवतावाचिचतुर्थ्यन्तपदोच्चार्यमाणत्वसम्बन्धेनेन्द्रवाय्वादीनामन्वयो देवतात्वे न भवति। एवं निर्वापेप्यन्वयः। तथा चैन्द्रवायवं गृह्णातीति वचनव्यक्तौ ग्रहणेन केवलेनेन्द्रवायुदेवत्यस्य कर्तुमशक्यत्वेऽपि यागसहितेन तु शक्यत एव कर्तुमिति यागनिरूपितमेव तत्। तथाऽत्र मन्त्रेऽपि अग्निदेवतायै निर्वापेण जुष्टं अर्थात् तेनैव सेवितं करोमीति वचनव्यक्तौ यद्यपि केवलस्य निर्वापस्य अग्निदेवत्यत्वमसम्भवि। केवलेन च निर्वापेणाग्निजुष्टं न शक्यं कर्तुं तथापि यागसहितस्याग्नि-देवत्यत्वं सम्भवति। यागसहितेन च निर्वापेण अग्निजुष्टं शक्यत एव कर्तुमित्येवंरूपेण देवतात्वेनान्वयसम्भवात् पूर्वोक्तविधया प्रकाशनस्य दृष्टार्थत्वात् समवेतार्थत्वसिद्धिरित्याशयः। विषयव्याप्त्यर्थमस्यैवाधिकरणसूत्रस्य वर्णकान्तरमाह—एवं वेति।

एवंवा

अत्र तन्त्ररत्ने पूर्वपक्षे धान्यशब्दः असमवेतवचनः, कुतः तण्डुलेष्वयं मन्त्रः प्रयुज्यते 'अधिवपामि धान्यमसी'तिग्रन्थेन अधिवापप्रकाशनरूपमन्त्रलिङ्गबलात्तण्डुलेषु धान्यशब्दप्रयोगो दर्शितः। तत्र सतुषावस्थाधिवापप्रकाशनपरस्य मन्त्रस्य तण्डुलावस्थाधिवापप्रकाशकत्वस्यैवा-सम्भवात् न तद्बलेन धान्यशब्दस्य तण्डुलेषु प्रयोगः सम्भवतीत्यभिप्रेत्य वाचनिकविनियोगबलात्

**धान्यशब्दः** सतुषद्रव्यवचनः **तण्डुलावस्थायां प्रयुज्यमानो** धान्यत्वारोपेण **स्तुत्यर्थः** सवित्रादिपदवदेवा**समवेतार्थ इति मांसेऽपि तदारोपेण प्रयोक्तव्य इति प्राप्ते**—

'शालयो भुज्यन्ते' इति विकार्ये प्रकृतिवाचकपदप्रयोगात् प्रयुक्तलक्षणोपपत्तेः असिपदाक्षिप्ततण्डुलरूपकर्तृसामानाधिकरण्याच्च लक्षणया धान्यशब्दस्तण्डुलपरस्सन् समवेतार्थक एव।

नन्वेवं समवेतार्थकत्वेऽपि मांसेऽपि लक्षणयैव धान्यशब्दप्रयोगोपपत्तेर्नोहप्रसक्तिः। धान्यपदस्यैव प्रकृतौ तण्डुलस्मारकत्वात्, विकृतौ मांसस्मारकस्य प्रोक्षणादिवत् कथंचिदूहलक्षणाक्रान्तत्वेऽपि वा धान्यपदबाधेन मांसपदप्रक्षेपरूपसिद्धान्ता-

---

तण्डुलावस्थापरत्वं दर्शयति—**सचेति। सतुषद्रव्यवचन इति।** "धान्यं व्रीहिस्तम्बकरिः" इति त्रिकाण्डीस्मरणादिति शेषः। ननु यदि वाक्यीय एव विनियोगस्तर्हि तद्बलादैन्द्रीमन्त्रस्य लक्षणया गार्हपत्यपरत्ववत् अत्रापि लक्षणया तत्परत्वं युज्यत एवेति कुतोऽसमवेतवचनत्वं धान्यपदस्य भवेत्। प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणाया युक्तत्वाच्चेत्याशङ्कां निरस्यति—**धान्यत्वारोपेणेति।** अयमर्थः। विनियोगबलात्तावन्न लक्षणया तण्डुलपरत्वम्। 'व्रतं कृणुतेति वाचं विसृजती'ति वाक्ये इतिकरणस्य कालसमर्पकत्ववदिहापि तदुपपत्तेः। 'धान्यमसी'ति मन्त्रोच्चारणकाले दृषदि तण्डुलाधिवापः कार्य इत्यर्थे बाधकाभावेन नियमेन तण्डुलाधिवापप्रकाशने प्रयोजनाभावात् स्तुत्यर्थत्वेनापि दृष्टार्थत्वोपपत्तेः न प्रयाजशेषाभिघारणन्यायप्रवृत्तिरिति। अतो युक्तमेवासमवेतवचनत्वम्। स्तुत्यर्थत्वेन दृष्टार्थत्वेऽपि धान्यपदार्थस्य प्रकृतापूर्वसम्बन्धित्वाभावादित्यभिप्रेत्याह—**सवित्रादिपदवदेवेति।** पूर्वपक्षेऽनूहप्रयोजनं दर्शयति—**मांसेऽपीति।** पूषाश्विसवित्रादिपदानां लक्षणयाऽग्न्यादिपरत्वं क्वचिदपि तथाविधप्रयोगादर्शनादप्रयुक्तलक्षणापत्तेः सिंहो देवदत्त इति वल्लक्षणामूलभूतायाः सामानाधिकरण्यानुपपत्तेरप्यभावात् नाश्रितम्। इहतु नास्ति तदनुपपत्तिद्वयमिति दर्शयति—**शालयो भुज्यन्त इति।** धान्यत्वारोपेण स्तुत्यर्थत्वेऽपि धान्यपदे गौणी स्वीकार्यैव। तस्याश्च सादृश्यघटितत्वेन विलम्बितोपस्थितिकाया अपेक्षया स्वप्रकृतिकत्वसम्बन्धेन तण्डुललक्षणैव युक्ता।

यत्तु विनियोजकेतिकरणस्य कालपरत्वमुक्तं तत्र प्रकरणसहकृतलिङ्गात् अन्यत्र विनियुक्तस्य अन्यत्र विनियोगात् अन्यत्र तस्य कालपरत्वेऽपि प्रकृते 'इषेत्वेतिशाखामाच्छिनत्ती'तिवत् विनियोगपरत्वस्यैव प्राप्तेः तदनुरोधेन शाखापदाध्याहारस्येव लक्षणाया अप्यवश्यस्वीकार्यत्वादिति भावः। **कथञ्चिदूहलक्षणाक्रान्तत्वेऽपीति।** अत्र प्रागुक्तोहलक्षणे श्रुतत्वस्य निवेशात्

नापत्तिः। यथैव हि प्रकृतौ 'अग्निपदेन शक्त्याऽपूर्वसाधनीभूतां देवतां प्रकाशयेदिति लिङ्गकल्पितश्रुत्या मन्त्रविनियोगात्, विकृतावग्निदेवत्यायां शक्त्या अग्निपदेनैवोक्तदेवता-प्रकाशनोपपत्तेर्न पदान्तरप्रक्षेपः। सत्यां गतौ प्राकृतवृत्तितद्वत्पदयोर्बाधे प्रमाणाभावात्। अपि त्वन्यदेवत्यायामेव सः, तत्र शक्त्या अग्निपदेन तत्प्रकाशनानुपपत्तेः। प्रकृतौ वृत्तिविवक्षासत्त्वात् विकृतौ च वृत्तेर्व्यापारत्वेन तन्मुखेनैवाग्निपदरूपपदार्थप्राप्तेर्न लक्षणया विना अग्निपदेन तत्प्रकाशनम्। अतस्तत्र प्राकृतशक्तिनिर्वाहार्थं सूर्यादिपदान्तरप्रक्षेप एव शरणम्। न त्वग्निदेवत्यायां विकृतौ। तथैव धान्यपदेन लक्षणया प्रदेयप्रकृति-भूतं प्रकाशयेदिति गौणसामर्थ्यकल्पितश्रुत्या मन्त्रविनियोगाद्विकृतावपि मांसे उपका-रपृष्ठभावेन वृत्तेस्तत्पृष्ठभावेन च धान्यपदस्यातिदेशात् तदबाधाय धान्यपदेनैव मांसप्रकाशनोपपत्तेर्न पदान्तरप्रक्षेप इति चेत्

सत्यं प्राकृतप्रकाशनरूपोपकारपृष्ठभावेन प्राकृतवृत्तिरूपव्यापारातिदेशः तत्पृष्ठभावेन चाग्न्यादिपदरूपपदार्थातिदेशः। इतरथा वृत्त्यनतिदेशे प्रकाशनपृष्ठभावेनातिदिष्टस्य पदस्य विकृतौ लक्षणयाऽपि प्रकाशकत्वोपपत्तेः पदान्तरप्रक्षेपानापत्तिप्रसङ्गात्। तथाऽपि प्राकृतपदनिष्ठप्राकृतवृत्तिरेव विकृतावतिदिश्यते न तु वृत्तिमात्रं प्रमाणाभावात्। अत एव सौर्ये प्राकृतपदस्यैव प्राकृतवृत्तेरपि बाधसत्त्वेऽपि सूर्यप्रकाशनकार्यानुरोधात् सूर्यपदप्रक्षेपः। अतश्च धान्यप्रकृतिकत्वरूपशक्यसम्बन्धरूपायाः प्राकृतलक्षणावृत्तेः मांसे बाधे सम्बन्धान्तररूपलक्षणावृत्तिकल्पने प्रमाणाभावाद्धान्यपदस्य बाधावश्यंभावे मांसप्रकाशनरूपकार्यानुरोधेन मन्त्रपदान्तरानुरोधादेव मांसपदप्रक्षेपः।

अत एव न प्रकृतिवाचकमृगपदप्रक्षेपोऽपि, शक्तपदप्रक्षेपसम्भवे अप्राकृतलक्षणया

---

तस्यैव तात्पर्यमनपेक्ष्य प्रतीयमानत्वस्यैव विवक्षणात् धान्यमसीति मन्त्रस्य तण्डुलत्वावच्छिन्नवृत्तित्वं प्रकृतौ तात्पर्यमनपेक्ष्यैव प्रतीयमानत्वं वर्तत इति कथमूहलक्षणासम्भव इत्याशङ्काकुलता कथञ्चि-दित्यनेन सूचिता। कथन्तर्हि ऊहलक्षणाक्रान्तत्वमिति चेत्? उच्यते। तण्डुलत्वावच्छिन्न-वृत्तित्वस्य लक्षणया विद्यमानत्वेऽपि धान्यत्वावच्छिन्नवृत्तित्वस्य शक्त्या सम्भवात् धान्यत्वावच्छिन्न-वृत्तित्वेन प्रकृतौ श्रुतस्य धान्यपदस्य विकृतौ तद्धर्मावच्छिन्न[भिन्न]मांसवृत्तित्वात्तदुपपत्तिः। **यद्यपि** स्वार्थतासम्बन्धेन तस्य तण्डुलत्वावच्छिन्नवृत्तित्वमेव न धान्यत्वावच्छिन्नवृत्तित्वं, **तथापि** तदनुपपत्तिप्रतिसन्धानजन्यलक्षणाजन्यद्वितीयबोधे ततः प्राग्जायमानं यथाश्रुतबोध-मादाय धान्यत्वावच्छिन्नवृत्तित्वमपि नासम्भवीति ज्ञेयम्। **प्राकृतशक्तिनिर्वाहार्थमिति।** **यथासम्भवं** प्राकृतपदाभावेऽपि शक्तिरूपव्यापारस्य प्राकृतस्यानुग्रहो लभ्यत इति तदर्थं सूर्यादि-पदान्तरप्रक्षेप इत्यर्थः। समाधत्ते—**सत्यमिति।** अत्र चानुपपत्त्यादिकं फलदेवतयोरित्यत्र

पदान्तरप्रक्षेपस्यान्याय्यत्वात्। अतश्शाक्यानमयने 'तरसमयास्सवनीयाः पुरोडाशा भवन्ति' इत्यत्र मांसे अधिवापे क्रियमाणे 'मांसमसि' इत्यूहितव्यम्।

इदं च कृत्वा चिन्तया। तृतीये सवनीयोद्देशेन हविर्द्व्यैनैव तरसविधानस्य स्थापितत्वात्। सत्यपि वा प्रदेयप्रकृतित्वे अर्थलोपेव तत्राधिवापस्य चराविव बाधित्वाच्च। विस्तरेण चैतन्न्यायसुधाकारमतनिरासपूर्वकमुपपादितं द्वितीये 'धर्ममात्रे तु कर्म स्यात्' इत्यत्र कौस्तुभे ॥ १३ ॥

---

प्रागेवोक्तं नेहपुनरुच्यते। विचारप्रयोजनं दर्शयति—**अतः शाक्यानामिति**। तरसमयाः सवनीयाः पुरोडाशा इत्यत्र सवनीयपदोपादानात् सवनीयहविर्मात्रोद्देशेन तत्स्थाने तरसं विधीयते। पुरोडाशपदन्तु धान्यादिषु लिङ्गसमवायेन गौणमित्युक्तं तृतीयान्त्ये। असम्भवत्तरसमयत्वधानादिसाहचर्याच्च न पुरोडाशे तरसप्रकृतित्वविधिः। एवञ्च पुरोडाशकार्ये तद्विधिना पुरोडाशे निवृत्ते मांसे च प्रयोजनाभावात् चराविव पेषणनिवृत्तौ तदर्थाधिवापस्य तद्द्वारा तदङ्गमन्त्रस्य च सुतरामप्राप्तेः कथमूहप्रयोजनं घटत इत्यत आह—**इदञ्चेति**।

ननु तरसमयपुरोडाशोपावृत्त्या सर्वामृद्धिमाप्नोत् इति न्यायसुधाकृदुदाहृतछान्दोग्यवचने परकृतिसरूपार्थवादकल्प्यविधौ सवनीयपदाश्रवणात् पुरोडाशमात्रप्रकृतित्वेन मांसं विधीयते। शक्यते चान्नमिश्रणेन तस्य प्रकृतित्वं सम्पादयितुम्। तथा च छन्दोगसूत्रम्—"तरसपुरोडाशश्चान्नसंरोधात्" इति। एवं पुरोडाशप्रकृतित्वेन मांसविधौसम्भवति न पुरोडाशबाध उचित इति पुरोडाशप्रकृतिकमांसे पेषणतत्पूर्वकाधिवापमन्त्रप्राप्तेर्न्यायसुधाकृता उपपादितत्वात् किमर्थं कृत्वाचिन्तात्वप्रयासकरणं तन्त्ररत्नकारादीनां इत्यत आह—**सत्यपि वेति**। **अयमर्थः**—अन्नमिश्रणेन हि मांसस्य पुरोडाशजननसामर्थ्यसम्पादनं तादृशसामर्थ्यरूपसंस्कारजनकस्यान्नस्य न तावत्प्रदेयत्वं 'पयसा मैत्रावरुणं श्रीणाती'ति विहितपयस इव प्रामाणाभावात्। तेन तदन्नं लौकिकमेव ग्राह्यं न तत्र प्रदेयधर्मा अतिदेशतः प्रप्नुवन्ति। अतः तस्मिन्नन्ने प्रदेयधर्मपेषणाप्राप्तेः तन्मूलकाधिवापादि नैव प्राप्यते। अथ मांसे प्रकृतिद्रव्यभूते तत्प्राप्तिर्वक्तव्या,सापि प्रयोजनाभावाच्चराविव निवृत्ते पेषणे न सम्भवतीत्युभयथापि कृत्वाचिन्ताविचारत्वमेव पार्थसारथ्युक्तं युक्तम्। अत एव भाष्योदाहृतं सवनीयपदं समर्थितं भवति। भावार्थपादे धर्ममात्रे तु कर्म स्यात् अनिर्वृत्तेः प्रयाजवदित्यधिकरणे विस्तरेणेति। कौस्तुभोपपादितमुक्तप्रायमेव मयेति न तत्रत्यं विस्तरभयादुच्यते।

---

(१४)—चोदिते तु परार्थत्वाद्विधिवदविकारस्स्यात् ॥ ४० ॥ विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

दर्शपूर्णमासयोः इडानिगदे श्रुतम्। 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये यज्ञपतिं वर्धानुपहूते द्यावापृथिवी' इत्यादि। तत्र सत्रे यज्ञपतिशब्दो बहुवचनान्तेनोहितव्यो न वेति चिन्तायां—

न तावदसमवेतार्थकत्वादनूहः यज्ञपतेस्तद्वृद्धेश्च मनुष्यरूपाध्वर्युपदवाच्यऋत्विक्कर्तृकायाः कर्मणि समवेतत्वात्। न चास्येडोपाह्वानवाचकपदैकवाक्यतया तदर्थत्वावगमात् यज्ञपतिवृद्धिप्रकाशनार्थत्वाभावेन सत्यपि समवेतार्थत्वे परार्थत्वादनूहः; लिङ्गेन मन्त्रगतवाक्यस्य 'स्योनं ते' इतिवत् बाधेन यज्ञपतिवृद्ध्यर्थत्वोपपत्तेः। न च 'स यो हैवं विद्वान् इडया प्रचरति' इति विधाय 'अथ प्रतिपद्यते इळोपहूतोपहूतेळोपो अस्मां इळाह्वयतामिळोपहूतेत्याह' इति ब्राह्मणवाक्येन प्रतीकग्रहणेन कृत्स्नस्य निगदस्येडोपाह्वाने विनियोगात् तत्सहकृतेन मन्त्रगतवाक्येन मन्त्रलिङ्गस्यैव बाध इति वाच्यं, ब्राह्मणवाक्येन यावदुपात्तस्यैव विनियोगोपपत्तौ प्रतीकग्रहणे प्रमाणाभावात्। अस्तु वा विनियोगान्तरकल्पनागौरवभिया प्रत्यक्षवाक्येनैव प्रतीकग्रहणेन समस्तविनियोगकल्पनम्। अत एव 'स्योनं ते' इत्यादौ प्रत्यक्षविनियोजकवाक्याभावादपेक्षितविनियोगद्वयकल्पनेऽपि न क्षतिः।

किं च 'ये यज्ञपतिं वर्धान्' इत्यादौ यच्छब्दबलादेव यज्ञपतिवृद्धिकर्तॄणां मनुष्यरूपऋत्विजामुपाह्वानकर्मत्वं प्रतीयते। अतो यच्छब्दसामर्थ्यात्मकलिङ्गादेवास्येडोपाह्वा-

---

चोदिते तु परार्थत्वात्।

पूर्वमधिकरणैस्त्रिभिः समवेतार्थत्वप्रयुक्तोहानूहौ चिन्तितौ। इदानीन्तु समवेतवाचित्वे सत्येव स्वार्थत्वपरार्थत्वप्रयुक्तौ तौ चिन्त्येते। यद्यपि दर्शपूर्णमासयोः इडोपहूत इत्यादिः इडानिगदः श्रुतः। तस्यैव स्वार्थत्वपरार्थत्वं तथापि प्रस्तुतार्थविचारोपयोगिनं तन्मध्यपतितं भागमात्रमेवोदाहरति—दैव्या इति। ऋत्विक्कर्तृकेति। अध्वर्यव इति बहुवचनान्तेन पदेन लिङ्गसमवायालक्षणया प्रकृता ऋत्विज उच्यन्ते। त एव मनुष्यपदेनोक्ताः। तथा च य इमं यज्ञमवान् रक्षन्ति ये च यज्ञपतिं यजमानं वर्धयेयुः ते दैव्या मनुष्याश्च ऋत्विज उपहूताः इत्यर्थेन न यज्ञपतिवृद्धिप्रकाशकत्वेन समवेतार्थत्वमित्यर्थः। प्राचां सिद्धान्तयुक्तिमाशङ्क्य पूर्वपक्षी निराकरोति—न चेत्यादिना। विनियोगान्तरकल्पनेति। प्रतीकं यावदुपात्तं तावन्मात्रस्यैव विनियोगेऽवशिष्टभागस्येडोपाह्वाने विनियोगविध्यन्तरं कल्पनीयं स्यात्। अतः

नशेषता। अत एव स्योनं ते' इत्यत्रापि यदि पूर्वार्धे यच्छब्दस्स्यात् तदा स्यादेव तत्रैकवाक्यता न त्वेतदस्तीत्यतो मन्त्रभेदोऽङ्गीकृतः। प्रकृते तु यच्छब्दसद्भावादिडोपाह्वानशेषतैव। तथाऽपि प्रथनशेषभूतस्यापि 'उरु ते यज्ञपतिः प्रथताम्' इति मन्त्रस्यानुषङ्गिकयज्ञपतिप्रोत्साहनार्थत्ववदस्यापि तथात्वोपपत्तेः सत्रे तद्वदेवोहोपपत्तिः। न हि प्रोत्साहनार्थेषु 'आयुर्दा अग्नेऽस्यायुर्मे धेहि' इत्यादिषु सत्रे नोहः आवृत्तिर्वा। अतश्च यद्यपि नेदं प्रथनफलं, तथाऽपि अनुषङ्गिकप्रोत्साहनमात्रेणोहवदिहापीडोपाह्वानशेषभूतस्याप्यस्य मन्त्रस्यानुषङ्गिकयज्ञपतिप्रोत्साहनार्थत्वादूहोपपत्तिरविकलैव।

वस्तुतस्तु प्रहरणाङ्गभूतस्यापि प्रस्तरप्रतिपादकपदैकवाक्यतापन्नस्यापि 'आयुराशास्ते' इत्यादेः प्रहरणफलप्रतिपादकत्वात् यथा सत्रे ऊह इति प्रत्युदाहरणसूत्रे वक्ष्यते तथेहापीडोपाह्वानाङ्गस्यापीडोपाह्वानपदैकवाक्यतापन्नस्याप्यस्येडोपाह्वानफलप्रतिपादकत्वाद्युक्त एव सत्रे ऊहः। न हि तृतीयानिर्दिष्ट एव मान्त्रवर्णिकं फलं नान्यत्रेति नियमे प्रमाणमस्ति स्थानादिविनियुक्तस्यापि मन्त्रस्य देवताकल्पकत्ववत् फलकल्पकत्वेऽपि बाधकाभावात्।

न चापेक्षितकल्पकत्वेऽपि यत्रेडोपाह्वानादेरिडासंस्कारार्थत्वेन कृतार्थता तत्र विना तृतीयां न फलकल्पकत्वमिति वाच्यं, तृतीयास्थलेऽपि प्रहरणप्रतिपाद्यप्रस्तरप्रतिपादकतया, सूक्तवाकप्रातिपदिकबलेन मान्त्रवर्णिकदेवतामात्रकल्पनेन वा तृतीयावगतकरणत्वनिर्वाहोपपत्तौ 'इदं द्यावा' इति पदानामिवायुरादिपदानामपि स्तावकत्वेनोपपत्तेः फलकल्पकत्वे प्रमाणाभावात्। 'ममाग्ने वर्चः इति पूर्वमग्निं परिगृह्णाति' इति इतिकरणविनियुक्तस्थले फलकल्पकत्ववदिडोपाह्वानेऽपि इतिकरणविनियुक्तत्वात् फलकल्पकत्वोपपत्तेश्च।

न चैवमप्येवमादिस्थले सर्वत्रैव यज्ञपतेरुद्देश्यत्वात् तद्विशेषणस्यैकत्वादेर्वस्तुतोऽविवक्षितत्वेन प्रकाशनानर्हत्वात् सर्वयज्ञपतीनां च 'ग्रहं सम्मार्ष्टि' इतिवत् प्रातिपदिकेनैव प्रतीत्युपपत्तेः प्रकृतौ साधुत्वार्थस्यैकवचनस्य कथं विकृतावूह इति वाच्यं, प्रकृतावविहितस्याप्यधिकार्येकत्वस्योपकारकत्वमात्रेण तावत्सद्भावात् तावतैवैकवचनेन प्रकाशनोपपत्तौ साधुत्वार्थकत्वकल्पने प्रमाणाभावात् अतश्च विकृतौ तद्गतबहुत्वप्रकाशनार्थं सिद्धयत्येवोह इति प्राप्ते—

---

प्रतीकग्रहणेन सर्वस्याप्ययमेव विनियोगविधिरित्येव युक्तमिति भावः। इतः परं प्रायः स्पष्टार्थ एवाधिकरणसमाप्त्यन्तो ग्रन्थः क्वचिदेव व्याख्यायते। **सत्रे नोह इति।** सर्वयजमानाग्नीनामेकत्र करणात् अग्निबहुत्वेनैव बहुवचनान्तता अग्निपदे इव, एकेन यजमानेन पाठे मे इत्येकवचनान्तेप्यूहः। यदा तु सर्वैरपि प्रोत्साहनार्थं पृथक्पाठः तदा आवृत्तिरिति विवेकः। **देवताकल्पकत्ववदिति।** यथा उपांशुयाजादावित्यर्थः। **सूक्तवाकप्रातिपदिकेति।** सुप्रूक्तमग्न्यादि वक्तीति योगार्थप्रतिपादनादित्यर्थः। **उपकारकत्वमात्रेणेति।**

न तावत् यज्ञपतिवृद्धिरुपाह्वानफलं इडाभक्षणाङ्गत्वेन कृतार्थस्य स्वरसतः फलानपेक्षत्वात्। एवं सत्यपि यदि तृतीयया इतिकरणेन वा क्रियां प्रति विनियोगस्स्यात् ततः क्रियाकरणत्वं मन्त्रस्य सकलस्य [1] प्रकाशनद्वारेणैवेति प्रथमतस्तावत् क्रियाप्रकाशकत्वमेव, तदसम्भवे तत्सम्बन्धिप्रस्तरादिप्रकाशकत्वं, तस्याप्यसम्भवे मन्त्रप्रकाश्यस्यानपेक्षितस्यापि क्रियासम्बन्धकल्पनम्ः इतरथा सकलस्य मन्त्रस्य श्रुतकरणत्वानिर्वाहात्। तत्र च विनिगमनाविरहात् यथैव सूक्तवाकप्रतिपाद्यदेवतायाः कल्पनं तथा आयुरादेरपि फलस्य। यत्र तु सर्वथा असम्भवः तत्र 'इदं द्यावा' इत्यादौ अगत्या स्तावकत्वमिष्टमेव। अनयैव च दिशा 'ममाग्ने' इत्यादौ वर्चःप्रभृतीनामपि फलत्वं बोध्यम्। तत्रापीतिकरणविनियुक्तत्वस्य कौस्तुभे स्थापितत्वात्।

अत एव कौस्तुभोक्तरीत्यैव यत्र प्रथनमन्त्रादौ नेतिकरणेन विनियोगः अपितु लिङ्गादेव सः, तत्र 'प्रथस्व' इति भागस्य प्रथनप्रकाशकत्वेन प्रयोजनवत्त्वलाभे अवशिष्टभागस्य प्रोत्साहनस्तावकत्वादिनैव तदेकवाक्यत्वोपपत्तौ न प्रथनफलकल्पकत्वम्, लिङ्गेनैकदेशेऽपि प्रयोजनलाभे सकलस्य प्रयोजनवत्त्वोपपत्तेरिति मीमांसकमर्यादा। तत्रापि तु लिङ्गवशात् फलकल्पकत्वङ्गीकारे नातीव काचिदनुपपत्तिः। परं तु तत्र [2] क्रियाजन्यत्वं फलस्य लिङ्गवशात्प्रतीयते यथा प्रथनमन्त्रादौ। प्रकृते तु प्रथनस्य तावन्नेतिकरणेन क्रियां प्रति विनियोगः 'अथ प्रतिपद्यते इत्याह' इत्यादिना मन्त्रोच्चारणस्यैवेडाभक्षणाङ्गत्वेन विधेयत्वात्। अस्तु वा ब्रूञादेशत्वादाहशब्दस्योक्तविशेषणविशिष्टोपाह्वानप्रकाशनस्यैवेडाभक्षणाङ्गत्वेन विधिः। सर्वथा नोपाह्वानं नाम किञ्चिदस्ति क्रियाङ्गं, यत्फलं यज्ञपतिवृद्धिर्भवेत्। द्यावापृथिव्याद्युपाह्वानप्रकाशनस्येवोक्तविधमनुष्योपाह्वानप्रकाशनस्यैवादृष्टार्थत्वात्।

---

परिच्छेदकत्वेनेति शेषः। **कौस्तुभोक्तरीत्येति।** मन्त्राधिकरणगतेति शेषः। **मन्त्रोच्चारणस्यैवेति।** आहेत्यादेशस्य उच्चारणापरपर्यायस्याङ्गत्वेऽपि न मन्त्रस्याङ्गत्वं; **यदा** तु अर्थाभिधानरूपपरिभाषणार्थकवचिधात्वपरपर्यायस्य ब्रूञ्धातोराहेत्यादेशात् अस्याप्यभिधानार्थत्वादितिशब्दोपात्तमन्त्रस्य करणत्वप्रतीतिः **तदापि** मन्त्रकरणकोपह्वानप्रकाशनस्येडाभक्षणाङ्गत्वेन विधानेऽपि उपहूतस्य क्रियाङ्गत्वेन विध्यभावात् न यज्ञपतिवृद्धेः तत्फलत्वम्।

एतदधिकरणानन्तरञ्च विकारस्तत्प्रधाने स्यादिति सूत्रं पूर्वाधिकरणप्रत्युदाहरणमात्रप्रदर्शकमित्येवमेकदा व्याख्याय भाष्यानुरोधादधिकरणान्तरत्वेन वर्णनया प्रकारान्तरेण व्याख्यातं वार्तिककारादिभिः।

---

1. A. adds. क्रिया

2. A. यत्र

वस्तुतस्तु—सत्यप्युपाह्वानस्य भक्षणाङ्गत्वे न तत्फलत्वं यज्ञपतिवृद्धेरत्र मन्त्रे प्रतीयते, येन मान्त्रवर्णिकफलकल्पना शङ्क्येत। न हीडाभक्षणार्थं यज्ञपतिवृद्धिकर्तृमनुष्योपाह्वानमात्रेण यज्ञपतिवृद्धिर्जायत इति शब्दान्तरस्यात्प्रमाणान्तरमन्तरेण प्रतीयते, ये यज्ञपतिवृद्धिं कर्तुं समर्थास्ते उपहूता इति हि तदर्थः। न च यो यत्कर्तुं समर्थः तदुपाह्वाने तज्जायत इत्यत्र प्रमाणमस्ति अतो न तावदस्य फलप्रतिपादकत्वम्। अत एव न प्रोत्साहनार्थत्वमपि। वृद्धिगतस्वनिष्ठत्वज्ञानमन्तरेण प्रोत्साहानानुपपत्तेः। अतोऽत्र यज्ञपतिवृद्धेरुपाह्वानविशेषणत्वेनोपात्तायाः परार्थत्वाददृष्टार्थप्रकाशनविषयत्वेनादृष्टार्थत्वाच्च सत्रे प्रकृताप्रकृतसाधारणैकयज्ञपतिप्रकाशनमात्रेण च तद्[1] दृष्टोपपत्तेरनूहः।

यत्रापि यजमानः न स्वरूपेणोपयुज्यते परं तु गुणभूतः यथा औदुम्बरीसम्मानादिषु, तत्राप्याग्नेयीन्यायात् प्रकृतग्रहणेऽप्येकस्यैव ग्रहणं न सर्वेषां, यजमानसंस्कारकत्वाभावात्। तत्र का कथा अदृष्टार्थप्रकाशनविषयभूते यज्ञपताविति। अत एव यत्र यजमानस्य मान्त्रवर्णिकायुरादिफलभोक्तृत्वेन प्राधान्यं यथा सूक्तवाकादौ 'आशास्तेऽयं यजमानः' इत्यादौ, यत्र वा प्रोत्साहनार्थत्वेन यजमाननिष्ठश्रद्धाजननात् तस्य प्राधान्यं यथा 'आयुर्दा अग्ने, उरु ते यज्ञपतिः प्रथताम्' इत्यादौ, तत्रोभयत्रापि सत्र ऊहः तदिदमुक्तं विकारस्तत्प्रधाने स्यात्' इति प्रत्युदाहरणसूत्रेण॥ १४॥

---

तथाहि—यजमान आयुराशास्ते इत्यत्रायुषः फलत्वं नावगतं प्रमाणान्तरेण। तस्मात् यजमानस्याशिषा सम्बन्धो वाच्यो दृष्टार्थत्वाय तत्र यजमानसम्बद्धाशीर्वक्तव्येति विवक्षितम्। सा चैकेनापि यजमानेन भवत्येवोक्ता: तस्मादनूह इति पूर्वपक्षं प्रापय्य सर्वाण्येतान्यायुरादीनि श्रुतिविनियुक्तसकलसूक्तवाककरणत्वान्यथानुपपत्त्या प्रहरणस्य फलानि कल्प्यन्ते। क्रियातत्सम्बन्धि वा प्रकाशयतो मन्त्रस्य करणताऽवकल्पते। तस्मात् प्रहरणसाध्यायुरादियजमानफलप्रकाशनमस्य कार्यम्। तच्च सत्रे सकलयजमानफलत्वस्य तृतीये एव साधितत्वात् विशेषाशङ्काभावेन पुनर्विचारे प्रयोजनाभावात् प्रत्युदाहरणसूत्रत्वमुक्तम्। तदेव युक्तमित्यभिप्रेत्य प्रत्युदाहरणतां दर्शयति—**अत एव यत्रेति।** **प्राधान्यमिति।** क्रियाफलस्य कर्तृगामित्वात् प्राधान्यमित्यर्थः। **सत्रे ऊह इति।** अयमर्थः। सर्वैस्तावद्यजमानैः प्रस्तरः सूक्तवाकेन प्रहर्तव्यः कर्तृफलप्रकाशनद्वारेण च तस्य करणता। तत्र यदि कस्यचिदेव फलं प्रकाश्येत न सर्वेषां, ततः तेनैव

---

1. B. तददृष्टोत्पत्ते

(१५)—असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥ कर्ममात्रादेवमिति चेत् ॥ न परार्थत्वात् ॥ ४४ ॥

ज्योतिष्टोमे अस्ति सुब्रह्मण्यानिगदः 'इन्द्र आगच्छ हरिव आगच्छ' इत्यादिरिन्द्रप्रकाशकः। इन्द्रदेवत्यश्च यागाभ्यासो दशभिश्चमसैस्सह शुक्रामन्थिग्रहाभ्यां क्रियमाणस्सवनमुखीयसंज्ञकः। तन्मात्राङ्गमेव तु सुब्रह्मण्यानिगदः लिङ्गात्। न त्वन्यदेवत्याभ्यासाङ्गं 'व्रीहीणां मेध' इतिवत्। अग्निष्टुद्यागे च 'आग्नेया ग्रहा भवन्ति' इति वचनात्प्राकृतग्रहीयदेवताबाधेनाग्निदेवताविधानात् सवनमुखीयेऽप्यग्निर्देवता। ततश्च तदङ्गभूता सुब्रह्मण्या[1] इन्द्रपदस्थाने अग्निपदप्रक्षेपेणोह्यत एव।

न चैवं न्यायादेवोहसिद्धौ 'आग्नेयी सुब्रह्मण्या' इति वचनवैयर्थ्यापत्तिः। प्रकृतौ सवनमुखीयवत् सवनीयहविषामपीन्द्रदेवत्यत्वात् वेदिर्बर्हिर्न्यायेन सुब्रह्मण्यानिगदस्योभयार्थत्वप्रसक्तौ विकृतावपि तदर्थं भेदेनाभेदेन वाऽनूहितसुब्रह्मण्यानिगदपाठप्रसक्तेः 'आग्नेय्येव सुब्रह्मण्या कार्या' इत्येतत्फलकत्वाङ्गीकारेण वचनसार्थक्यात्। अतएवं

---

प्रहरणं कृतं स्यात् न सर्वैः। तस्मात् सर्वे फलभागित्वेन प्रधानभूताः प्रकाशयितव्या इत्यूह इति।

अत्र 'आयुर्दा अग्ने' इति मन्त्रस्य प्रत्येकमेव सर्वैर्यजमानैः पाठान्नोहप्रसक्तिरिति पूर्वमेवावेदितम्। 'उरुते' इत्यस्यत्वध्वर्युणा पाठात् यज्ञपतयः प्रथन्तामिति भवत्येवोह इति विशेषोऽनुसन्धेयः। यद्यपि नैतन्मन्त्रद्वयस्य सत्रे दर्शपूर्णमासाविकारे प्रसक्तिः तथापि तदङ्गभूतदीक्षणीयादिषु प्राप्तस्य तस्य सर्वयजमानप्रोत्साहनकार्यानुरोधेन भवत्येवोह इति न बाधकम्।

---

असंयोगात्तदर्थेषु।

**भेदेनाभेदेनेति**— सवनीयहविषामर्थे पृथगैन्द्रीसुब्रह्मण्यापाठः अथवा सकृदेव 'इन्द्राग्नी आगच्छत'मिति वा पाठः प्राप्तः तन्निवृत्तिः क्रियते 'आग्नेय्येव सुब्रह्मण्याऽग्निष्टुति कार्या नैन्द्री'ति। तथा च यत्राग्निदेवत्यत्वं तत्र तत्पाठस्य विधाने सिद्धे येषु सवनीयहविष्षु नाग्निदेवत्यत्वं तत्र विकृता तु सुब्रह्मण्या नैव भवति। प्राकृता तु परिसङ्ख्यातेति तेषु न सुब्रह्मण्यापाठ इति भावः। यतो विकृतौ इन्द्रदेवताप्रकाशकत्वानुरोधेन सवनीयहविषामर्थे नेन्द्रपदघटितसुब्रह्मण्यापाठः, तत एव यत्र यद्बाधेनाग्नेयीत्वं विहितं तदिन्द्रदैवत्यशुक्रामन्थिप्रचारार्थत्वमेव न तु तस्याः सवनीयहविरर्थत्वं प्रकृतावपीत्याह—अतएवेति।

---

1. तदङ्गभूतसुब्रह्मण्याया

तद्वचनरूपतात्पर्यग्राहकानुरोधेन प्रकृतावपि न सवनीयहविरर्थत्वं, अपि तु सवनमुखीयशुक्रामन्थिप्रचारार्थत्वमेव सुब्रह्मण्यानिगदस्येत्यपि परं ध्येयम्।

केचित्तु "सवनमुखीये चमसैरेव होमः इन्द्रदेवताकः। न तत्राग्निष्टुत्यग्निदेवताकत्वं ग्रहेष्वेव तद्विधानात्। अतश्च न्यायेनाप्राप्त एव सुब्रह्मण्योहः। वचनेन त्वग्निदेवत्यग्रहयागाभ्यासाङ्गतया आग्नेयी सुब्रह्मण्या सवनमुखीयादाच्छिद्य विधीयते"

---

वस्तुतस्तु सुब्रह्मण्यायाः प्राकृतसवनीयहविरर्थत्वाभावपर्यन्तताप्तर्यकल्पने मानाभाव एव। किञ्च प्राकृतसवनीयहविरर्थत्वाभावः एतद्वचनप्रवृत्तेः पूर्वमुत्तरं वा ? नाद्यः। तथात्वे समुच्चितप्राप्त्यभावेन आग्नेय्येवेति परिसङ्ख्यानुपपत्तेः। नान्त्यः, यत्र विकृतावुभयोः प्राप्तिः तद्विषयपरिसङ्ख्यापरत्वकल्पनस्यैव न्यायसिद्धत्वात्। अतो न प्राकृतसवनीयहविरर्थत्वाभावः सुब्रह्मण्यानिगदस्य सिद्ध्यति, अतो वक्ष्यमाणप्रकाशकारोक्तरीत्या प्रकृतौ चमससवनीयहविस्संबन्धीन्द्रदेवताप्रकाशनार्थत्वमेवोचितमङ्गीकर्तुम् ।

अथवा सामान्यसंबन्धबोधकज्योतिष्टोममहाप्रकरणात् 'वाग्वै सुब्रह्मण्या सोमो वत्स' इति बह्वृचब्राह्मणगतार्थवादात् चतुरहे सुत्यामागच्छेत्यादि सुत्याविषयकमन्त्रलिङ्गाच्च इन्द्रदेवत्यसोमयागाभ्यासाङ्गमेवेति न सवनीयहविरर्थत्वमित्येव वक्तुं युक्तम्। अत्र प्रकृतौ सवनमुखीये चमसा ऐन्द्रा एव। सवनीयहवींषि चेन्द्रदैवत्यानि। तथैव विकृतावपि ते; तानि चेन्द्रदेवत्यान्येव। अग्निष्टुति आग्नेया ग्रहा भवन्तीति वचनेन ग्रहेष्वेव प्राकृतदेवताबाधेनाग्नेयत्वविधानेन तयोरग्निदेवत्यत्वाप्राप्तेः। अतस्तत्रातिदेशप्राप्तः सुब्रह्मण्यानिगदः अग्निपदप्रक्षेपरूपोहघटितः न न्यायतः प्राप्नोति। किन्त्विन्द्रपदघटित एव यथाश्रुतः। तत्रैवाग्निष्टुति ऐन्द्रवायवादिग्रहा अतिदेशतः प्राप्ताः प्राकृतदेवतापदस्थाने निक्षिप्ताग्निपदघटितमन्त्रा एव न्यायेन लभ्यन्ते। एतादृशे विषये सति आग्नेयी सुब्रह्मण्येति वचनं ऐन्द्रेभ्यः सवनीयहविर्भ्यश्चाच्छिद्य यत्राग्निदेवतातत्प्रकाशकत्वेन विनियोगपरम्; सा च देवता ग्रहेष्वेवास्तीति तत्र सर्वग्रहेषु प्राकृतमन्त्रबाधेन अग्निपदघटितस्सुब्रह्मण्यानिगदः पठनीयः; सवनमुखीये सवनीयहविष्षु च नैव सुब्रह्मण्यानिगदपाठ इत्यनुष्ठानं लभ्यत इति शास्त्रदीपिकाप्रकाशकाराणां मतमुपपादयति—**केचित्त्विति**। न केवलं सवनमुखीयसंज्ञको यागाभ्यासः दशचमसमात्रसाध्य एव। अपि तु तैस्सह शुक्रामन्थिग्रहसाध्योऽपि तथैव याज्ञिकानुष्ठानात्। ततश्च भवदुक्तन्यायेनैव ग्रहत्वाविशेषात् शुक्रा-

त्वयाहुः। तन्न—**सवनमुखीयहोमस्यापि शुक्रामन्थिग्रहकरणकत्वेन सकलयाज्ञिकप्रसिद्धत्वात्। वचनेनाग्निदेवत्यग्रहयागाभ्यासे औपदेशिकसुब्रह्मण्याविधानेऽपि सवनमुखीये आतिदेशिकैन्द्रसुब्रह्मण्याबाधे प्रमाणाभावाच्च। सुब्रह्मण्यायास्तत्रौपदेशिकत्वे ऊहानूहविचारस्यासङ्गतत्वापत्तेश्च। अतो**ऽस्मदुक्तप्रकार एव **श्रेयान्।**

---

मन्थिग्रहयोरप्यग्निदेवत्यत्वप्राप्तेः इतरग्रहाङ्गत्वेनेव एतदङ्गत्वेनाप्याग्नेयी सुब्रह्मण्येति वचनेन अग्निपदघटितसुब्रह्मण्यानिगदप्राप्तेरनिवार्यत्वेन सवनमुखीयादाच्छिद्य विधानानुपपत्तेरिति तन्मतं दूषयति-**तन्नेति**। किञ्च सर्वग्रहयागाभ्यासेषु अग्निदैवत्येषु सुब्रह्मण्याऽनिदेशतः [प्राप्ता आग्नेयीति नियम्यते उत अग्निदेवत्यग्रहयागाभ्यासे अपूर्वतया सुब्रह्मण्या विनियुज्यते ?] आद्ये तत्र न्यायत एवोहसिद्धेर्वचनवैयर्थ्यानुपपत्तिस्तदवस्थैव। द्वितीये दूषणमाह—**वचनेति**। अग्निदेवत्यग्रहयागाभ्यासाङ्गदेवताप्रकाशनार्थत्वेनापूर्वतयैव सुब्रह्मण्याविनियोगाङ्गीकारेऽपीत्यर्थः। **अस्मदुक्तप्रकार एवेति**। ततश्चाग्निष्टुति सवनमुखीये सुब्रह्मण्यानिगदः शुक्रामन्थिग्रहयोरग्निदेवत्यत्वात् इन्द्रपदस्थाने अग्निपदप्रक्षेपेणोहितः पठनीयः। सवनीयहविरर्थे तु प्रकृताविव नैव तत्पाठः। अन्यग्रहेषु तु सुब्रह्मण्याप्रापकाभावात् अतिदेशप्राप्तास्तन्मन्त्रा एव अग्निदेवत्यत्वानुरोधेन इन्द्रवाय्वादिपदस्थाने अग्निपदनिक्षेपेण भवन्त्येवेत्येवानुष्ठानं युक्तमिति भावः।

**ममतु प्रतिभाति**। प्रकृतौ हि चमसानां शुक्रामन्थिग्रहयोश्च सम्प्रतिपन्नदेवताकत्वात् सहानुष्ठानेन आह्वानार्थं प्रत्यहमेकदैव सुब्रह्मण्यानिगदपाठ आसीत्। अग्निष्टुति च शुक्रामन्थिग्रहयोः अग्निदेवत्यत्वेन भिन्नदेवत्यत्वात् तदनुरोधेन ऊहितसुब्रह्मण्यानिगदपाठेऽपि चमसानामैन्द्रत्वात् तदनुरोधेनाविकृतसुब्रह्मण्याप्राप्तौ तामेव सुब्रह्मण्याप्राप्तिमुपजीव्य तत आच्छिद्य तस्या अग्निदेवत्यग्रहयागाभ्यासाङ्गत्वेन विनियोगः क्रियते। आतिथ्यार्थबर्हिषः उपसदादावतिदेशतः अप्राप्तावपि आच्छिद्यविधानार्थत्वपूर्वपक्ष इव 'याऽग्निष्टुति सुब्रह्मण्या सा आग्नेयी'ति वचनव्यक्तौ बाधकाभावात्।

अथ वा यावदतिदेशेन सुब्रह्मण्याऽग्निष्टुति विनियोक्तव्या, ततः पूर्वमेव प्रवृत्तेनानेन वचनेन अग्निपदघटिता विधीयते। तत्फलञ्च सर्वथा चमसेष्विति प्राकृतसुब्रह्मण्यानिवृत्तिः। ततश्च शुक्रामन्थिग्रहयोर्याज्ञिकाचारात् सवनमुखीययागार्थत्वेऽपि तयोरास्तामग्निपदप्रक्षेपेण सुब्रह्मण्या। चमसानुरोधात् सवनीयहविरनुरोधाद्वा प्राकृतसुब्रह्मण्यापाठो न कार्यः; किन्तु केवलेन्द्रदेवत्यचमससाध्यत्वात् तज्जन्ययागाभ्यासोऽपि इन्द्रदेवत्योऽस्तु न तु तदर्थं सुब्रह्मण्यापाठोऽपीत्येव प्रकाशकाराणां ग्रन्थात् प्रतीयते। न तु शुक्रामन्थिग्रहयोः अग्निदेवत्या सुब्रह्मण्या

इदं तु चिन्त्यते—किं इन्द्रपद इव हरिवदादिपदेऽप्यूहो भवति उत नेति। तत्र देवताविग्रहादिमत्त्व इव मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् हरिवदादिगुणानामपीन्द्रसमवेतत्वात् अग्निष्टुत्यग्निगुणप्रकाशनार्थं रोहिताश्वादिपदानामूह इति प्राप्ते—

---

नास्तीति। अत एव प्रकृतौ चमससाध्ययागाभ्यासानां शुक्रामन्थिग्रहाभ्यासेन एकदेवताकत्वात् सान्नाय्यवत् सहानुष्ठानेऽपि अग्निष्टुति विभिन्नदेवताकत्वान्न तत्। अपि तु विनैव सुब्रह्मण्यानिगदपाठं भेदेनैव चमसाभ्यासानुष्ठानं भवति। तथा च तेषां ग्रन्थः "सवनमुखीयाश्चमसा ऐन्द्राः सवनीयहवींषि चेति तद्देवताप्रकाशनार्था प्रकृतौ सुब्रह्मण्या अग्निष्टुत्यपि। यद्यपि ते चमसाः प्रकृतिवदैन्द्रा एव सवनीयहवींषि च, तथापि तत आच्छिद्य सा आग्नेया ग्रहा- भवन्तीति सर्वग्रहेषु इन्द्रवाय्वादिप्राकृतदेवताबाधेनाग्निदेवत्यत्वे विहिते तद्देवताप्रकाशनार्थत्वेन विनियुज्यते आग्नेयी सुब्रह्मण्येति वचनादित्यर्थ" इति।

अस्मिंश्च ग्रन्थे ऐन्द्राणां चमसानां सवनीयहविषामेव चाच्छेदने अपादा[नत्वप्र]नीतेः प्रत्युताग्नेयत्वविधानप्रदर्शने सर्वपदोपादानात् शुक्रामन्थिग्रहयोरग्निपदघटितसुब्रह्मण्या नास्तीति नैव प्रतीयते। वस्तुतस्तु उभयमतेऽपि चमसानुरोधादैन्द्रसुब्रह्मण्यापाठः अथवा शुक्रामन्थिग्रहानुरोधात् अग्निपदघटितपाठो वेति सन्देहे, अथवा उभयानुरोधेन पाठप्राप्तौ तन्निवृत्त्यर्थत्वेन, अथवा ऊहेनाग्नेयीत्वप्राप्तावपि मन्त्रत्वसिध्यर्थं, अथवा ग्रहेषु न्यायेनोहितसुब्रह्मण्याप्राप्तावपि यत्र चमसेषु सवनीयहविष्षु च ऐन्द्री सुब्रह्मण्या प्राप्ता तत्रैवाग्नेयीत्वसिद्ध्यर्थं अपूर्वतया विधानेनैवाग्नेयीसुब्रह्मण्येति वचनसार्थक्योपपत्तौ सवनीयहविरर्थत्वनिवृत्तितात्पर्यकल्पनस्य सर्वग्रहेषु प्राकृतमन्त्रबाधफलकाच्छिद्यविधानतात्पर्यकल्पनस्य सोमनाथीयटिप्पणदर्शितन्यायसिद्धार्थानुवादत्वकल्पनस्य चान्याय्यत्वमेवेति सुधिय एव विदाङ्कुर्वन्त्विति दिक्।

**हरिवदादिगुणानामिति।** अत्र निगदे मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन् अहल्यायैजार, कौशिकब्राह्मण गौतमब्रुवाणेति षडन्या इन्द्रसम्बुद्धयः। तदन्तपदप्रतिपाद्या गुणाः हरिवदादीत्यादिपदेन ग्राह्याः। अत्र हरणसमर्थौ पूर्वोत्तरपक्षौ हरितावस्यास्तीत्यर्थे जातस्य मतुपो यत्तकारः तस्य "मतुवसोरुसम्बुद्धौ छन्दसी"ति (पा.सू ८–३–१) सूत्रेण रुत्वे कृते "भोभगो" (पा.सू–८–३–१७) इति सूत्रेण ऋकारस्थाने प्राप्तस्य यादेशस्य "लोपः शाकल्यस्ये"ति सूत्रेण (पा. सू. ८–३–१९) लोपे सति, हरिवच्छब्दस्य सम्बोधनप्रथमारूपं हरिवेति सूचयितुं हरिवदादिपदानामित्यत्र हरिवपदे तकारः प्रक्षिप्तः। **इन्द्रसमवेतत्वादिति।**

देवताधिकरणन्यायेनैव मन्त्रादीनां तत्परत्वे प्रमाणाभावात् हरिवदादिपदानामसम- वेतार्थकत्वेनाहार्यारोपेणेन्द्रस्तुतिवत् अग्निस्तुतेरप्युपपत्तेर्नोहः। तदेतद्देवताधिकरणस्य प्रयोजनमात्रकथनार्थम्। प्रयोजनमपि चेदमूहस्मृत्यभावं कृत्वाचिन्तया। यदा तु छन्दोगसूत्रे अग्निष्टुति 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षण' इत्यूहितस्यैव पाठस्समाम्नातः तदाऽस्यास्स्मृतेर्न्यायोपन्यासपूर्वकत्वाभावेनाष्टकादिस्मृ- तिवत् श्रुतिमूलकत्वावश्यंभावात्, तया चैतदधिकरणन्यायस्याभासीकरणादूहितपाठ एव युक्तः। तदा च मन्त्रान्तरस्थदेवताविशेषणविषयमिदमधिकरणं द्रष्टव्यम्।

---

इन्द्रसमवेतानां गुणानां प्रकाशने तद्द्वारेण इन्द्रस्यैव प्रकाशनात् दृष्टार्थत्वं लभ्यते। अन्यथा अदृष्टार्थत्वापत्तेः। ते च गुणाः केन योगेनेत्यपेक्षायां "हरिव आगच्छेति—पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां ह्येष सर्वं हरतीति। मेधातिथेर्मेषेति—मेधातिथिं हि काण्वायनं इन्द्रो मेषो भूत्वा जहार। वृषणश्वस्य मेन इति—वृषणश्वस्य मेनका नाम दुहिता बभूव तामिन्द्रश्चकमे। गौरावस्कन्दिन्निति—गौरमृगो भूत्वा अरण्याद्राजानं सोमं पिबतीति। अहल्यायैजारेति—अहल्याया जार आसेति। कौशिकब्राह्मणेति—कौशिकः कश्चिद्ब्राह्मणो भूत्वा अहल्यां स्वीकृतवानिति। युयुत्सुदेवासुरमध्ये गौतमं श्रान्तमुपविष्टं इन्द्र आह—वरो नो भवेति, स नेत्याह। पुनरिन्द्रः त्वद्रूपेणाहमेव वरः स्यामित्याह, अन्यस्तु भवेत्याह। तत इन्द्रो गौतमोऽहमिति ब्रुवाणो वरो बभूवे"ति सुब्रह्मण्याविधिवाक्यशेषरूपश्रुत्यैव दर्शितः। अत्र अहल्यायैजारेत्यत्र षष्ठ्यर्थे चतुर्थी वक्तव्येति वार्तिकात् तस्यै घृतमितिवत् अहल्यायै इति षष्ठ्यर्थे चतुर्थी द्रष्टव्या। **मन्त्रान्तरस्थेति**। यथाऽग्निष्टुद्याग एवं 'आग्नेया ग्रहा भवन्ती'ति सर्वग्रहेऽ- विशिष्टोऽग्निर्देवता विहितः स प्राकृतपात्नीवतग्रहदेवतायाः पत्नीवतोऽग्नेर्विशिष्टस्य स्थानापत्तिं लभते। तत्र प्राकृतः पात्नीवतग्रहहोमे मन्त्रः "अग्ना ३ इ पत्नीवन् सजूर्देवेन त्वष्ट्रा सोमं पिबस्वाहेति" (तै. सं १—४)। तत्र अग्ना ३ इ सजूरित्येव प्रयुज्यते पत्नीवच्छब्दस्तु लुप्यते। सजूरित्यादिगुणप्रकाशकपदानां दृष्टार्थत्वेऽपि तत्राप्यग्निगतत्वान्नैव लोपः। एवं बृहस्पतिसवेऽपि 'बार्हस्पत्या ग्रहा भवन्ती'ति वचनात् सर्वग्रहेष्वविशिष्टो बृहस्पतिर्देवता। स प्राकृतपात्नीवत- ग्रहदेवतायाः पत्नीवतोऽग्नेर्विशिष्टस्य स्थानापत्तिं लभते। तत्र प्राकृते तस्मिन्नेव ग्रहहोममन्त्रे अग्नाइपत्नीवन्नित्यस्य स्थाने बृहस्पते इत्यूहितेऽपि सजूरित्यादेः स्थाने बृहस्पत्याश्रितगुण- वाचकपदानामप्यूहो यथा पूर्वः पक्षः यथा तर्हि सिद्धान्तः तथा तान्येव पदानि प्रयोक्तव्यानि अदृष्टार्थमित्येवं मन्त्रान्तरस्थदेवताविशेषणविषयत्वमित्याशयः।

अत एव यत्रैव न्यायोपन्यासपूर्विका स्मृतिस्तत्रैव श्रुतिमूलत्वे न्यायोपन्यासनैरर्थक्यापत्तेः मीमांसास्थसन्न्यायविरोधे आभासत्वं स्मृतेरित्युक्तं कल्पसूत्राधिकरणे ।

देवताधिकरणगतार्थत्वादिनैव वा वर्णकान्तरम् । साद्यस्के 'त्रिवत्सस्साण्डस्सोमक्रयणः' इति सोमक्रयसाधनतया विहिते त्रिवत्से अतिदेशप्राप्ते "इयं गौस्तया ते क्रीणामि तस्यै शृतं तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्" इत्येकहायनीमन्त्रे स्त्रीलिङ्गांशे पुल्लिङ्गोहस्त्वविवाद एव । शृतादिपदेष्वपि किं 'तस्य शुक्रं तस्य बलं तस्य युद्धं तस्य जयः तस्य हुंभारवः तस्य पलायनं तस्य लीला तस्य भारोद्वहनम्' इत्येवमूहितव्यो न वेति सन्देहे—

'शृतम्' इत्यादौ 'छिनद्मि' इत्यादिवत् अवश्याध्याहार्ये क्रियापदे यद्यप्यस्ति इति नाध्याहर्तुं शक्यते एकहायन्यवस्थायां शृतादेरभावात्, तथाऽपि 'भविष्यति' इत्यध्याहर्तव्यम् । ततश्च भविष्यत्तायास्समवेतत्वाद्विक्रेतानमनार्थत्वेन च दृष्टार्थत्वात्, त्रिवत्सेऽपि विक्रेतानतिहेतुत्रिवत्सगुणप्रकाशनार्थं कर्तव्य एवोह इति प्राप्ते—

भविष्यत्ताया अपि मरणवन्ध्यात्वादिना नियतत्वाभावात् 'सम्भवि' इत्येव पदं प्रकृतावध्याहार्यं तच्च गोःस्तावकं विक्रेतानमनार्थं वेत्यन्यदेतत् । उभयथाऽपि त्रिवत्से अविकृतस्यैव प्रयोगादनूहः । शक्यते हि साण्डाद्या गौर्जनिष्यते तस्या जायमानं शृतादि साण्डीयम् इति व्यपदेष्टुम् । तस्मात् सम्भावनाया विकृतावपि सम्भवादनूह एव ॥१७॥

---

अत्र तदेतन्न रोचयन्ते याज्ञिकाः ऊहन्तु कुर्वन्ति इति भाष्यम् । तस्यार्थः तन्त्ररत्ने 'न्यायेनानूहे साधितेऽपि तथैवानुष्ठानं माभूदित्येतदर्थमिदम् । अग्निष्टुत्येव हि निगदान्तरं अग्न आगच्छेत्यादिकमूहितमेव याज्ञिकाः स्मरन्ति तस्यैव प्रयोगो नान्यस्ये'ति कृतः सोऽयुक्तः । मीमांसास्थसन्न्यायविरोधे स्मृतेराभासत्वकल्पनस्य कल्पसूत्राधिकरणे साधितत्वेन तद्विरोधादिति शास्त्रदीपिकाप्रकाशकारैरुक्तं दूषयितुमाह—अत एवेति । अतश्चास्याः स्मृतेः न्यायोपन्यासपूर्वकत्वाभावात् श्रुतिमूलकत्वेन मीमांसान्यायस्यैवाभासत्वं पूर्वोक्तं युक्तमिति भावः । देवताधिकरणेति । स्पष्टमेतद्वर्णकान्तरम् ।

---

(१६)—लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥ विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥ पशुत्वं चैकशब्द्यात् ॥ ४८ ॥ यथोक्तं वा सन्निधानात् ॥ ४९ ॥

ज्योतिष्टोमे क्रतुपशवस्समाम्नाताः। "आग्नेयमजमग्निष्टोमे आलभते, ऐन्द्राग्नमुक्थ्ये द्वितीयं, ऐन्द्रं वृष्णिं षोडशिनि तृतीयं, सारस्वतीं मेषीमतिरात्रे चतुर्थीम्" इति। अत्र तत्तत्संस्थाकत्वे निमित्ते प्रकरणात् क्रतुपशुसमाख्याबलाच्च ज्योतिष्टोमाङ्गत्वेन पशुयागा विधीयन्ते। न तु तत्तत्संस्थोद्देशेनैव। तेषां चाग्नीषोमीयाद्धर्मातिदेशः न तु तेन समानविधानत्वमित्युक्तं तृतीये। अग्नीषोमीयाङ्गं चाध्रिगुप्रैषः 'प्रास्मा अग्निं भरत' इत्यादिः। स क्रतुपशुष्वतिदेशेन प्राप्तोऽतिरात्रे चतुर्णामर्थे तन्त्रेण पठनीयः 'प्रैभ्यो अग्निं भरत' इत्यूहितव्यः, एवं मेष्यामपीत्यविवादम्। यदा तु पशूनां समानविधानत्वं तदा मेष्यर्थत्वमस्यास्ति न वेति चिन्त्यते।

तत्र पुंलिङ्गस्य मेष्यामसमर्थत्वेऽपि 'अस्मै' इति प्रातिपदिकार्थचतुर्थ्यर्थयोः प्रधानभूतयोर्मेष्यां समवेतत्वात् पुंलिङ्गस्य च गुणभूतस्य पाशाधिकरणन्यायेन निर्देशमात्रार्थत्वात् समस्तस्य मन्त्रस्य प्रकरणात् मेष्यर्थत्वमप्यविरुद्धम्।

---

लिङ्गविशेषनिर्देशात्।

**तृतीये इति।** तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् (पू.मी—३—६—) इति सूत्रे तृतीयषष्ठपादाधिकरणे निरूपितमित्यर्थः। **चतुर्णामिति।** तत्तत्संस्थानिमित्तेन क्रतुपशुविधायकेषु वाक्येषु द्वितीयतृतीयचतुर्थपदानामुत्तरोत्तरैसंस्थायां पूर्वपश्वनुष्ठानप्रतीतेः, अतिरात्रे चतुर्णामनुष्ठानात् तेषामर्थे तन्त्रेणाध्रिगु प्रैषः। तत्र पुंपश्वनुरोधेन प्रैभ्यः, मेष्यनुरोधेनास्यै इति क्रमेणोहितव्यः। यद्यपि विरूपैकशेषाङ्गीकारेण प्रैभ्यइत्येतावतैवोहेन चरितार्थता तथापि स्वाधीने शब्दप्रयोगे सन्दिग्धप्रयोगो नोचित इत्यभिप्रेत्य अस्यै इत्यप्यूहो भेदेन दर्शितः। **पशूनां समानविधानत्वमिति।** एतच्च संस्थासामानविध्यस्याप्युपलक्षणम्। इतरथा अग्निष्टोमसंस्थाकज्योतिष्टोमप्रकरणेन तावन्मात्राङ्गत्वापत्तौ सत्यां तन्निर्वाहार्थं प्रवृत्तेन आनर्थक्यतदङ्गन्यायेनापि सामानविध्यसाधकेन तदङ्गपशुत्रयसामानविध्यसिद्धावपि इतरसंस्थज्योतिष्टोमाङ्गपशुसामानविध्ये हेतोरसिद्ध्यापत्तेः। अतः तासामपि तदपेक्षितमित्यर्थः।

न च पुँल्लिङ्गस्य क्वचिद्विभक्त्यर्थत्वेऽपि क्वचित्प्रातिपदिकाद्यर्थत्वस्यापि सत्त्वात् कथं प्रातिपदिकार्थं प्रति लिङ्गस्य गुणत्वमिति वाच्यम्। विभक्त्यर्थत्वेऽपि[1] सङ्ख्यायामिवानुभवस्य सत्त्वसमाख्याया वा लिङ्गेऽपि गुणत्वनियामकत्वात्। न हि सङ्ख्यायामपि विभक्त्यर्थत्वं गुणत्वनियामकं विरुद्धत्वात्। अतो लिङ्गस्य यत्किञ्चिदर्थत्वेऽप्यनुभवबलेन प्रातिपदिकार्थं प्रति कारकं प्रति च गुणत्वात् पाशाधिकरणप्रवृत्त्युपपत्तेः मन्त्रस्य मेष्यामपि प्रवृत्तिः। न च पुंलिङ्गस्य पुंपशुषु प्रकृतेष्वर्थवत्त्वे तदनुरोधेन 'व्रीहीणां मेध' इत्यत्र गुणभूतव्रीहिपदानुरोधेनेवेतरमन्त्रस्य सङ्कोचोपपत्तिः, 'पत्नीं सन्नह्य' इत्यस्य एकवचनानुरोधेनैकपत्नीकप्रयोगमात्रविषयत्वाकल्पनवदस्यापि पुंपशुमात्रविषयत्वाकल्पनात्। अत एव प्रकृतमन्त्रेऽप्येकवचनानुरोधेन न दैक्षमात्रविषयत्वं गुणानुरोधेन प्रधानसङ्कोचस्यान्याय्यत्ववत् सर्वपुंपशुविषयत्वस्याप्यनापत्तेः। अत एवंविधेषु सर्वेषु वचनस्य लिङ्गस्य वा साधुत्वमात्रार्थं प्रयोगः।

न च 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति स्मृत्या जातिमात्राभिधाने विवक्षिते तस्या एकत्वेऽपि बहुवचनं भवति इत्यर्थिकया बहुष्वप्यर्थेषु जात्यभिप्रायेणैकवचनस्यानुशासितत्वादेकवचनप्रयोगसम्भवेऽपि लिङ्गस्य कथं विलिङ्गे साधुत्वार्थं प्रयोग इति वाच्यम्। लिङ्गस्यापि 'सुप्तिङुपग्रहलिङ्गनराणाम्' इत्यनेन छन्दस्यनुशासितत्वात्। 'प्रास्मा' इति सर्वनाम्न उपस्थितव्यक्तिवाचित्वेन जात्यभिप्रायकत्वानुपपत्तेश्च।

---

अत्र सिद्धान्ते वार्तिकतन्त्ररत्नयोः लिङ्गस्यान्यत्र विभक्त्यर्थत्वेऽपि प्रकृते प्रातिपदिकार्थत्वेनैव स्वीकारात् प्रातिपदिकार्थस्यैव मेष्यामसम्भावान्न प्रवृत्तिरिति युक्तिरुक्ता तामनूद्य दूषयति— **न च पुंलिङ्गस्येति**। लिङ्गं विभक्त्यर्थो वा प्रातिपदिकार्थो वा, उभयथापि प्रातिपदिकार्थं द्रव्यं प्रति गुणत्वमेवेत्येतदुपपादयति--**विभक्त्यर्थत्वेऽपीति**। **सत्त्वसमाख्येति**। लिङ्गसङ्ख्यान्वितद्रव्य एवाभियुक्तानां सत्त्वसमाख्या। सा च तस्मिन् लिङ्गाद्यनन्वयेऽनुपपन्ना भवेदित्यर्थः। **विरुद्धत्वादिति**। विभक्त्यर्थत्वे हि तस्य प्रत्ययार्थत्वेन प्रातिपदिकार्थं प्रति प्राधान्यस्यैवापत्तेः न गुणत्वमित्याशयः। **कारकं प्रति चेति**। चकारो वार्थे। विभक्त्यर्थत्वे समानाभिधानश्रुत्या कारकं प्रति गुणत्वं; प्रातिपदिकार्थत्वे तु तस्यैव प्रत्ययार्थे कारक एवान्वयात् गुणत्वम्। उभयथापि सामानाधिकरण्यघटिता प्रत्यासत्तिरिति मतान्तराभिप्रायकत्वात्।

ननु गुणभूतलिङ्गानुरोधेन प्रातिपदिकार्थसङ्कोचो न कार्यः। यदि पुंलिङ्गानुग्रहेण प्रातिपदिकमर्थवन्न भवेत्, तत्तु पुंपशुष्वपि सन्निहितेष्वर्थवदेव। पुंलिङ्गन्तु मेष्यामत्यन्तानर्थक्येन पुंविषयमेव युक्तमिति न मेष्यां समवेतमिति तन्त्ररत्नोक्तां सिद्धान्तयुक्तिमाशङ्क्य दूषयति—**न च पुंलिङ्गस्येति**।

---

1. A. अविनक्त्यर्थत्वेऽपि

अस्य सूत्रस्य भाष्यकारेण प्रत्याख्यातत्वाच्च। अतो वचनवत् लिङ्गस्यापि प्रातिपदिकार्थगत-लिङ्गमात्रोपलक्षणतया साधुत्वार्थमुपादानात् तदनुरोधेन प्रधानभूतसर्वमन्त्रसङ्कोचानुपपत्तेर्युक्तो मेष्यामप्यध्रिगुः। व्रीहीणां मेध' इत्यत्र तु यवप्रयोगे साधुत्वार्थं प्रयोग इत्यस्य वक्तुमशक्यत्वात् पदद्वयरहितमन्त्रप्रयोगस्य च यावन्ति वाक्ये पदानि श्रुतानि तावतां सम्भूयार्थप्रतीतिकारित्वनियमेन वक्तुमशक्यत्वात् युक्त एव व्रीहिप्रयोगमात्रे सङ्कोचः। एतादृशनियमानङ्गीकारे च इष्ट एव पदद्वयरहितमन्त्रप्रयोगः केषांचिद्याज्ञिकानाम्।

वस्तुतस्तु—पुँल्लिङ्गमपि मेष्यां प्रातिपदिकस्य चोदनागतपशुशब्दाभिप्रायत्वात् पशुशब्दस्य नित्यं पुँल्लिङ्गत्वात् 'प्रास्मै पशवे' इत्युपपत्तेस्समवेतमेवेति प्राप्ते—

मन्त्रे पशुशब्दाश्रवणात् 'प्रास्मा' इति शब्देन प्रयोगकाले यदपरोक्षतया स्थितं तत्परामर्ष्टव्यम्। तदा च व्यक्तिरेव न पशुशब्दः अतः पुँल्लिङ्गनिर्देशात् पुंव्यक्तिरेवाभिधीयते न स्त्रीद्रव्यं मेषी। अतो न तावत् समवेतं मेष्यां लिङ्गम्। नाप्यसमवेतत्वेऽप्येकवचनवत् साधुत्वार्थं मेष्यां प्रयोगः, स्त्रियां पुल्लिङ्गस्यानुशासनाभावेन साधुत्वे प्रमाणाभावात्। प्रकृते पुंपशूनामपि सत्त्वेन व्यत्ययानुशासनस्याप्रवृत्तेः। अत एव यत्र स्त्रीमात्रविषयं पुँल्लिङ्गं तत्रैव व्यत्ययानुशासनप्रवृत्तिः। न हि 'दृष्टानुविधिश्छन्दसि'

---

अस्य सूत्रस्येति। अनेकव्यक्त्यभिप्रायेण बहुवचनप्रयोगस्य एकजात्यभिप्रायेणैकवचनप्रयोगस्य च निर्वाहे जात्याख्यायामिति सूत्रं व्यर्थमित्येव भाष्यकृता प्रत्याख्यातम्। ततश्च प्रकृते व्यक्तिमात्रपरादिदमः परतः प्रयुज्यमानस्यैकवचनस्य जात्यभिप्रायेणानिर्वाहात् सकलव्यक्तिपरामर्शानुरोधेन एकवचने व्यत्ययानुशासनप्रवृत्तेरवश्याश्रयणे सति तथैव पुंस्त्वांशेऽपि तत्प्रवृत्त्युपपत्तेः मेष्यामपि भवत्येवाध्रिगुप्रैष इति भावः। तदेवोपसंहारव्याजेन दर्शयति—अतो वचनवदिति। पदद्वयरहितेति। यवप्रयोगे प्रकृतौ यवानामित्येवमूहाभावात् व्रीहीणामिति पदसम्बद्धस्य मेधपदस्यापि निवृत्तिमभिप्रेत्य पदद्वयेत्युक्तम्। अत एव साधुत्वार्थं प्रयोग इत्यत्रापि व्रीहीमेधेति प्रातिपदिकद्वयस्येत्यर्थः। तूष्णीं यवमयमित्यापस्तम्बवचनात् तादृशनियमानङ्गीकारेण मन्त्रप्राप्तिरिष्टेत्यनुमीयते। अन्यथा वचनानर्थक्यापत्तेरित्याशयः इष्टपदेन सूचितः। केषाञ्चिद्याज्ञिकानामिति। स्पष्टमेव बौधायनयवप्रयोगे भवस्वामिना पदद्वयरहितो मन्त्रप्रयोगो लिखितः। चोदनागतेति। उत्पत्तिचोदनागतेत्यर्थः। यद्यपि शास्त्रदीपिकानुसारेण स्वयं लिखितेषूत्पत्तिवाक्येषु पशुशब्दो नोपलभ्यते तथापि आग्नेयः पशुरग्निष्टोम आलब्धव्य; ऐन्द्राग्नः पशुरुक्थ्ये इत्यादि पशुपदघटितानि वाक्यानि भाष्यकारेण लिखितानि तदभिप्रायेण चोदनागतेत्युक्तम्। वस्तुतस्तु चोदनागतत्वाभावेऽपि अस्मै इति सर्वनाम्नो विशेष्यविशेषाकाङ्क्षाशामकार्थविशेषवाचकपदकल्पनाया आवश्यकत्वे बहुविषयत्वलाभार्थं पशुत्वाश्रयवाचकपुंलिङ्गपशुशब्दस्यैव चतुर्थ्यन्तस्य कल्पनं युक्तमित्यभिप्रायेणापि

इति विधानं दर्शनाभावे प्राप्नोति। नापि पुंलिङ्गस्य प्रातिपदिकार्थगतलिङ्गमात्रोपलक्षणत्वं लक्षणायां प्रमाणाभावात्। इतरथा बहुतरपदसङ्कोचानुरोधेनैकस्य 'व्रीहीणाम्' इत्यस्यैव पदस्य प्रकृतपुरोडाशीयप्रकृतिद्रव्योपलक्षणत्वापत्तेः। अतो मन्त्रपदानामसति वचने मुख्य एवार्थे विनियोगात् तदनुरोधेन सङ्कोचोऽपि नायुक्तः।

[1] वचने तु पत्नीं सन्नह्य, प्रास्मा अग्निं भरत' इत्यादौ पत्न्यादेस्संस्कार्यत्वात् प्रातिपदिकस्यानेकव्यक्तिपरत्वेऽपि प्रत्येकव्यक्तिवृत्त्येकत्वविवक्षया एकवचनस्यापि लक्षणां विनैवोपपत्तेर्न सकलस्य मन्त्रस्य सङ्कोचः। सम्भवति ह्यनेकास्वपि व्यक्तिषु शुक्लगुणस्य प्रत्येकवृत्तितया 'शुक्ला घटाः' इत्यादौ विशेषणत्ववदेकत्वस्य प्रत्येकवृत्तितया सर्वप्रातिपदिकार्थविशेषणत्वम्। न ह्यत्र लिङ्गस्य मेषीरूपप्रातिपदिकार्थेऽवृत्तित्ववत् एकत्वस्य कस्यामपि पत्न्यां पशौ वाऽवृत्तित्वमस्ति। न चैवं प्रातिपदिकार्थबहुत्वेऽपि बहुवचनानापत्तौ 'बहुषु बहुवचनम्' इत्यस्य निर्विषयत्वापत्तिः, बहुत्वस्य शाब्दप्रतीतिविषयत्वविवक्षायां तदुपपत्तेः। न चैवं 'पशुना यजेत' इत्यादावप्येकवचनस्य प्रत्येकवृत्तित्वेनाप्युपपत्तेरनेकद्रव्योपादानेऽपि बाधकानापत्तिः। तत्र गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात्, प्रथमातिक्रमे कारणाभावाच्च, अनेकद्रव्योपादाने प्रमाणाभावेनैकवचनेनैच्छिकद्रव्यान्तरव्यावृत्त्युपपत्तेः। अतश्च 'पत्नीं सन्नह्य, प्रास्मै' इत्यादावेकवचनस्यानेकेषु

---

'पश्वभिधानाद्वे'ति (९–१–४६) सूत्रप्रतिपादितपूर्वपक्षाभिप्रायकल्पने न किञ्चिद्बाधकमिति। **दर्शनाभावे इति।** वेदे यादृशप्रयोगदर्शनं तदनुरोधेन 'दृष्टानुविधिश्छन्दसीति' सूत्रविषयत्वकल्पनं अगत्या स्वीक्रियते। यत्र तु न तादृशप्रयोगदर्शनं तत्र तदभावे न तदनुशासनप्रवृत्तिः; पुंपशुमादायापि प्रयोगदर्शननिर्वाहादित्यर्थः। **बहुतरपदेति।** स्योनन्ते सदनमित्यादिमात्रान्तर्गतबहुतरपदसङ्कोचापत्त्यनुरोधेनेत्यर्थः। **संस्कार्यत्वादिति।** यद्यपि न पशूनां संस्कार्यत्वं तथाप्यग्निभरणस्य नीयमानस्य पशोरग्रतो विहितस्य पश्ववयवहृदयाद्यङ्गपाकादावुपयोगेन तद्द्वारा तस्य तादर्थ्यावगमात् तादर्थ्यचतुर्थ्या तेषां प्राधान्यावगतेः संस्कार्यत्व इव तद्गतमेकत्वं विवक्षितं प्रत्येकव्यक्त्यभिप्रायेणैव द्रष्टव्यमित्याशयः। **सकलस्य मन्त्रस्येति।** द्विबहुपशुपत्नीप्रयोगसाधारणस्येति शेषः। **बाधानापत्तिरिति।** एकत्वबाधानापत्तिरित्यर्थः। **गुणानुरोधेनेति।** यद्यपि बहुपशूपादाने यागभेदः अथवा एक एव यागः तथापि सम्प्रतिपन्नदेवताकत्वेन तन्त्रेणानुष्ठानात् न गुणभूतानेकद्रव्यानुरोधेन प्रधानावृत्तिःप्रसज्यते तथापि पशुप्रातिपदिकार्थानुरोधेन प्रधानभूतकरणत्वस्य आवृत्तिरन्याय्येत्याशयेनेदं द्रष्टव्यम्। **प्रथमातिक्रम इति।** यथैव वसन्ताय कपिञ्जलानित्यत्र त्रीननुपादाय चतुः प्रभृतीनामुपादानासम्भवात् त्रयाणामेवोपादानेन शास्त्रार्थसम्पत्तेः तदधिकपक्षा-

---

1. A. reads एकवचने

लक्षणां विनैवोपपत्तेर्न मन्त्रसङ्कोचकृत्वम्। न चैवं गुणभूतेऽपि लक्षणापरिहारार्थं प्रधानस्य सङ्कोचाभ्युपगमे 'अदितिः पाशान्' इत्यादौ बहुवचने लक्षणापरिहारार्थं प्रधानभूतस्य प्रातिपदिकादेरुत्कर्षोऽपि किं न स्यात्, न ह्येकस्मिन् बहुवचनं लक्षणां विनोपपद्यते, इति वाच्यम्। गुणभूतानुरोधेन प्रधानभूतस्य सङ्कोचेऽपि प्रकरणबाधप्रसङ्गेनोत्कर्षे प्रमाणाभावात्। सङ्कोचे तु अवर्जनीयत्वान्नान्तरीयकसन्निधिबाधेऽपि उत्कर्षे नान्तरीयकत्वाभावेन तद्बाधस्यान्याय्यत्वात्। सामान्यसम्बन्धबोधकप्रमाणाभावेनोत्कर्षानुपपत्तेश्च। अतस्सिद्धं मेष्यामध्रिगुप्रैषोऽलङ्गमिति। प्रयोजनं—'स्थूलपृषतीं' इत्यादौ अध्रिगुप्रैषे 'प्रास्मै' इत्यूहः। लिङ्गस्य प्रकृतौ समवेतत्वात्। पूर्वपक्षे त्वनूहः साधुत्वार्थत्वात्। अत एवोहोपयोगोऽपि। स्त्रीद्रव्यकत्वसाद्दश्यान्मेषीयागमात्रप्रकृतिकत्वाङ्गीकारे तु अध्रिगुप्रैषस्याप्रवृत्तिरेव सिद्धान्ते। क्त्वाचिन्तोद्घाटने तु मेष्यामप्यूहः प्रागेव दर्शितः। वस्तुतस्तु—आश्वलायनेन 'पुंवन्मिथुने' इत्यनेन स्त्रीपुंससमवाये पुंलिङ्गस्यैव विधानात् क्त्वाचिन्तोद्घाटनेऽप्यनूहः, लक्षणयैव तूभयलिङ्गप्रकाशनं वाचनिकम्॥ १६॥

---

लम्भे भवत्येव हिंसादिदोषः तथा इहाप्येकेन तत्सिद्धौ तदधिकोपादाने स दोषः समान एव प्रसज्येतेत्यभिप्रायः। **न चैवं गुणभूतेति।** मेष्यां प्रवृत्त्यर्थं स्त्रीलिङ्गरूपार्थे पुंलिङ्गस्य लक्षणाऽऽपद्येत अतो—**गुणभूतेति।** लिङ्गे लक्षणापरिहारार्थं प्रैषमन्त्रस्य प्रधानस्य सङ्कोचाभ्युपगमे इत्यर्थः। **सङ्कोचेऽवर्जनीयत्वादिति।** पुंपशुमात्रविषयत्वेनाध्रिगुप्रैषसङ्कोचे सति मेष्या नान्तरीयकसन्निधिबाधो नायुक्तः पुंपश्वर्थे तत्पाठस्यावश्यकत्वे मेषीयागसन्निधेरवर्जनीयत्वात् बहुवचनमात्रोत्कर्षे सति प्रकरणबाधोऽन्याय्य एव नान्तरीयकत्वाभावादित्यर्थः। **सामान्यसम्बन्धबोधकेति।** पूषानुमन्त्रणमित्यादिसमाख्यावदिति पूर्वं शेषः।

**अत्र भाष्यकारेण** सामानविध्यासामानविध्यविचारपरतार्तीयाधिकरणस्य एतदेव प्रयोजनमिति प्रयोजनस्य प्रयोजनान्तराभावात् न क्त्वाचिन्ताविचारस्य प्रयोजनं वक्तव्यमित्युक्तम्। तत् क्त्वाचिन्ताविचारेणाप्यधिकरणारम्भेण पूर्वोत्तरपक्षयोः प्रवृत्तौ प्रयोजनकथनाभावे पञ्चमभागेन न्यूनतापत्तेरयुक्तम्। अन्यथा अध्यायपादानन्तरसङ्गत्यभावेन असङ्गतत्वापत्तेरित्यभिप्रेत्य, सामानविध्ये सति पूर्वोत्तरपक्षयोः प्रकृतौ पुंपश्वनुरोधेन प्रास्मै इत्यविकृतस्यैव तन्त्रेण प्रयोगात् प्रयोजनविशेषाला[भे?]पि विकृतौ प्रयोजनमनुसन्धत्ते—**प्रयोजनमिति।** परमं निष्कृष्टं स्वसिद्धान्तमाह—**वस्तुतस्त्विति।** स्वायत्ते शब्दप्रयोगे निस्सन्दिग्धप्रयोगकरणौचित्यस्य पूर्वंसूचितस्य निरासार्थं वाचनिकमित्युक्तम्। ततश्च प्राकृतवृत्तिरूपद्वारस्याभावेन मांसे धान्यपदस्येव पुंलिङ्गशब्दस्य निवृत्तौ तद्वदूहोऽस्यै इत्येवं प्राप्तोऽपि वचनबलान्न कार्यः। किन्तु बहुवचनमात्रान्तेनैव प्रास्मै इत्यनोहः। मेषीप्रकाशनन्तु लक्षणयैवेति पूर्वोत्तरपक्षप्रयोजनभेद इत्यर्थः।

---

(१७)—आम्नातादन्यदधिकारे वचनाद्विकारस्स्यात् ॥ ५० ॥ द्वैधं वा तुल्यहेतुत्वात्सामान्याद्विकल्पस्स्यात् ॥ ५१ ॥ उपदेशाच्च साम्नः ॥ ५२ ॥ नियमो वा श्रुतिविशेषादितरत्साप्तदश्यवत् ॥ ५३ ॥

मन्त्रोहप्रसङ्गात् साममन्त्रोहं विचारयितुमुपोद्घात आरभ्यते। ज्योतिष्टोमे अग्निष्टोमस्तोत्रावान्तरप्रकरणे श्रुतं 'न गिरागिरेति ब्रूयात्। ऐरं कृत्वोद्गेयम्' इति। तत्र गिरापदगीतेरिरापदे ऊह इति वक्ष्यते। स च इरापदस्य गिरापदस्थानापत्तिं विना नेति साऽपि वक्ष्यते। तत्रेह सा किं नियता स्थानापत्तिः उतानियतेति चिन्त्यते।

तत्र यद्यपि तावत् न 'ऐरं कृत्वोद्गेयम्' इत्यनेरापदविशिष्टोद्गानान्तरस्य स्तोत्राङ्ग-

---

आम्नातादन्यदधिकारे।

अत्र प्रकाशकारैः "प्रदेशे विकारस्तदपेक्षः स्यात् शास्त्रकृतत्वादि"त्यधिकरणमारभ्य सामोहो विचारयिष्यते तदुपोद्घातोऽयं तावत्पर्यन्तः। तत्रापि कर्मभेदे उपोद्घातभूतभावार्थाधिकरणोपोद्घातप्रतिपदाधिकरणवत् सामोहोपोद्घातभूतोत्तराधिकरणोपोद्घातोऽयमित्युक्तम्। तदयुक्तम्। उत्तराधिकरणे गिरापदगीतेरिरापदवृत्तित्वस्य साधने तस्यैव सामोहत्वेन तद्विचारस्य सामोहोपोद्घातत्वानुपपत्तेः। अयमेव हि सामोहो नाम यदन्यवृत्तिनः साम्नः अन्यवृत्तित्वं स एव चाग्रे निरूपयिष्यते इत्युत्तराधिकरणवक्ष्यमाणसामोहोपोद्घात एवायमित्यभिप्रायेणाह—साममन्त्रोहमिति। ततश्च यः साममन्त्रोहः तस्यायमुपोद्घातः। तथाचोत्तराधिकरणे वक्ष्यमाणस्य सामोहस्यायमुपोद्घातः। तदुत्तराधिकरणेषु तु करिष्यमाण उपोद्घातः सामप्रदेशे इत्येतावत्पर्यन्तं विचार्यमाणः सामप्रदेशे इत्यारभ्य करिष्यमाणसामोहोपोद्घात एवेत्येवमेव युक्तमित्येकेनोपोद्घातपदेन, तथा गिरापदगीतेरिरापदे उह इति वक्ष्यत इति ग्रन्थेन सूचितम्। अग्निष्टोमस्तोत्राङ्गभूतयज्ञायज्ञीयसाम्नो योनिभूतेयमृक्–'यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे, प्रप्रवयममृतं जातवेदसं प्रियं मित्रं न शंसिषमि'ति। तस्यां पठितस्य गिरापदद्वयस्य स्थाने निषेधपूर्वकं इरापदस्य विधायकं वाक्यं विषयवाक्यत्वेनोदाहरति—ज्योतिष्टोमे इति। सा किं नियतेति। इरापदगिरापदयो विकल्पेऽनियता, गिरापदबाधेनैवेरापदस्य विधाने तु गिरापदबाधान्नियता स्थानापत्तिरित्यर्थः। यदि च गिरापदघटितऋगक्षरसंस्कारकयज्ञायज्ञीयगानापेक्षया इदं गानान्तरमेवेरापदवृत्तित्वेन विधिना विधीयेत तदा गिरापदस्थानकत्वस्यैवेरापदे अप्राप्तेः तद्गतनियतानियतत्वविचारोऽनुपपन्न एव स्यात् अतो गानान्तरत्वमशङ्क्य निरस्यति—तत्र यद्यपीति। यद्यपि गानान्तरमप्येतदिरापदसंस्कारद्वारा दृष्टार्थमेव तथापि एकद्व्यक्षरवृत्तिनः साम्नो ऋगक्षरद्वारा स्तोत्रसाधनत्वं न

तया आरादुपकारकत्वादिना विधिः। अग्निष्टोमस्तोत्राङ्गभूतयज्ञायज्ञीयगानापेक्षया गानान्तरत्वे प्रमाणाभावात् 'न गिरा गिरा' इति निषेधानुवादानुपपत्तेश्च। अत एव न गानोद्देशेनैरापदविधिः; तथात्वे इरापदस्य स्तोभाक्षरविधया गानाङ्गत्वेऽपि तत्संस्कार्यस्य गिरापदस्य बाधे प्रमाणाभावेन निषेधानुवादानुपपत्तेः। अतो निषेधानुवादबलेनैरापदमात्रं गुणाभिधानात्मकस्तोत्ररूपे गिरापदकार्ये विधीयते। उद्देयमिति तु तत्संस्कारकतया प्राप्तगानानुवादः। सम्भवति चैरापदस्य गिरापदकार्यकारित्वं तदर्थाभिधानात्। यथैव हि इष्कर्तारमिति पदं महाभाष्यकारेण नकारलोपेन निष्कर्तारमित्यस्यार्थे व्याख्यातं तथैव गकारलोपेन इरापदस्यापि गिरापदार्थे व्याख्यानं नानुपपन्नम्।

---

दृष्टद्वारा सम्भवति। अक्षरद्वयेन प्रगीतेनापि गुणप्रकाशनायोगात् अतः स्तोत्राङ्गत्वमदृष्टद्वारेणेति सूचनाय **आरादुपकारकत्वादिनेत्युक्तम्**। यथैव हि पूतीकाभिषवफलचमसभक्षयोः न सोमाभिषवभक्षापेक्षया कर्मान्तरत्वं 'यदि सोमं न विन्देत्'' ''न सोम''मित्यनुवादानुपपत्तेः तथेहापीत्याह **–निषेधानुवादानुपपत्तेश्चेति**। अत्र तन्त्ररत्ने पूर्वपक्षरचनैवं कृता–ऐरं कृत्वोद्गेयमित्यनेनैरापदस्योत्पत्तिमात्रं क्रियते। उत्पत्त्युत्तरकालं प्रयोजनं प्रति साकाङ्क्षस्य प्रकरणादग्निष्टोमस्तोत्राङ्गत्वम्। यज्ञायज्ञीयस्य च 'यज्ञायज्ञीयेन स्तुवीते'त्यनेन स्तोत्राङ्गत्वेन विहितस्य स्तोत्राङ्गऋगक्षरसंस्कारद्वारैव तदङ्गत्वात्, तदङ्गैरापदसंस्कारकत्वमपि लभ्यते। नह्यसति गाने स्तोत्राङ्गता भवति यज्ञायज्ञीयात्मकगानसाध्यत्वात् स्तुतेः; तेन प्राप्तं गानमुद्गेयमित्यनेनानूद्यते। न तु श्रुत्या गानविधानं, स्तोत्राङ्गत्वं वा; गिरापदस्यापि यज्ञायज्ञीयप्रयोगवचनेन स्तोत्राङ्गता, तेन हि यज्ञायज्ञीयं यथासिद्धसामर्थ्यं स्तोत्राङ्गत्वेन तृतीयाश्रुत्या विधीयते। तस्य च स्तुतिसाधनत्वसामर्थ्यं ऋगक्षरसंस्कारद्वारमेव, नान्यथा। तेन यज्ञायज्ञीयेन स्तुवीतेत्यस्यायमर्थः, यज्ञायज्ञीयेन संस्कृतेन प्रगाथेन स्तुवीतेति। तस्मिंश्च प्रगाथे गिरापदमपि विद्यत इति सामान्येन प्रगाथमुपदिशताऽनेनैव विधिना गिरापदमप्युपदिष्टं भवति। तस्मादुभयोस्तुल्यबलत्वाद्विकल्प इति।

अस्मिंश्च पूर्वपक्षे न गिरागिरेति निषेधानुवादानुपपत्तिः स्फुटैवेत्यतो निषेधानुवादोपपत्तिकमेव पूर्वपक्षमारचयति–**अतो निषेधानुवादेति**। ननु यदि गिरापदकार्ये इरापदविधानं प्रत्यक्षविधिना तर्हि नियतैव तत्स्थानापत्तिरिरापदस्येति न विकल्पपूर्वपक्षसिद्धिरित्याशङ्क्य परि-

ततश्च यद्यपि **प्रत्यक्षविधिना इरापदस्योत्पत्तिः स्तोत्राङ्गत्वं च ; गिरापदस्य तु पाठादुत्पत्तिः** क्रमाच्च **स्तोत्राङ्गत्वं, 'यज्ञायज्ञीयेन स्तुवीत' इति सामविध्यन्यथानुपपत्त्या वा आक्षिप्तं, साम्नो हि ऋगक्षराभिव्यक्तिद्वारैव स्तोत्राङ्गतेति ऋगक्षराणामपि तदङ्गत्वसिद्धिः। उभयथाऽपि गिरापदस्य तदन्यपदान्तरसाधारणमङ्गत्वमित्यपि दुर्लभमेव। तथाऽपि गिरापदकार्ये इरापदं विधीयमानं तत्कार्यस्य गिरापदीयत्वप्रसिद्धिमुपजीवतीति उपजीव्यविरोधापत्तेर्न गिरापदस्य नित्यं बाधः, अपि तु 'न तौ पशौ करोति' इतिवत् विकल्प एवेति प्राप्ते—**

**न तावदत्र गिरापदकार्यस्योद्देश्यत्वं श्रुतं, अपि तु निषेधानुवादबलेन गिरापदबाधकत्वमात्रं, तेन च यथैव तत्कार्यस्य साधनसाकांक्षत्वात् तत्कार्यजनकत्वं कल्प्यते,** तथा तद्बलेनैव **गिरापदपाठस्यापि अग्निष्टोमस्तोत्रापूर्वसाधनत्वकल्पनाप्रतिबन्धोऽपि। अत एव कार्यस्याप्युद्देश्यता न गिरापदीयत्वेन। अपि तु अग्निष्टोमस्तोत्रापूर्वसाधनीभूतविजातीयगुणाभिधानत्वेनैव। तत्कार्यापन्नत्वव्यवहारस्तु निषेधानुवादाभावे तत्कार्यव्यक्तेर्गिरापदीयत्वप्रसक्तिमात्रेण।** अत एव पाठोऽपि **गिरापदस्य यत्र 'यज्ञायज्ञीयं पुच्छे गायति' इति चयने यज्ञायज्ञीयं साम विहितं तत्र तस्य दृष्टविधया** पुच्छाभिधानजनक-

---

हरति—**ततश्च यद्यपीति। क्रमाच्चेति।** स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पठ्यमानासु ऋक्षु यज्ञायज्ञीयप्रगाथः अग्निष्टोमस्तोत्रक्रमे पठ्यते इति तदेकदेशस्य गिरापदस्यापि क्रमात् स्तोत्राङ्गत्वमित्यर्थः। **तथा तद्बलेनैवेति।** यदि गिरापदस्याप्यग्निष्टोमस्तोत्रापूर्वजनकत्वं तदा न गिरिति निषेधस्य नित्यवच्छ्रुतस्य पाक्षिकत्वापत्तिः अतस्तद्बलेनैवेत्यर्थः। अत्र इरापदे गिरापदस्थानापत्तिर्नियतेति सिद्धान्ते गिरापदपाठस्य तर्हि को वा विषय इत्याशङ्कोत्तरत्वेन 'नियमो वा श्रुतिविशेषादितरत् सात्तदश्यवदि'ति सिद्धान्तसूत्रस्य, इतरत् सात्तदश्यवदित्येकदेशं व्याचक्षाणेन भाष्यकारेण, यथा साप्तदश्यमनारभ्याधीतं प्रकरणपठितपाञ्चदश्येन बाधितं विकृतौ निविशते, एवमिरापदविधिना बाधितं प्रकृतौ गिरापदमनिविशमानं विकृतौ निविशत इति न बाधकमित्युक्तम्। तत्र विकृतावपि गिरापदप्रापकप्रत्यक्षविध्यभावे क्लृप्तोपकारकत्वेनातिदेशप्राप्तेरापदस्यैव प्राप्तेः गिरापदनिवेशायोगः। अत एव मित्रविन्दादिषु प्राकरणिकसाप्तदश्यप्रत्यक्षविधिबलात् बाधितं पाञ्चदश्यम्। तत एव साप्तदश्यं तासु निविशते न तु सर्वविकृषु। प्रकृते च क्वचिदपि ज्योतिष्टोमविकृतावग्निष्टोमाङ्गत्वेन गिरापदप्रत्यक्षविधेरदर्शनात् तद्विकृतिषु गिरापदनिवेशाभिधानमयुक्तमित्यभिप्रेत्य तस्य निवेशस्थलं दर्शयति—**अत एव पाठोऽपीति। पुच्छाभिधानजनकेति।** अत्र यदि पुच्छाभिधानजनकत्वेनैन्द्रीवत् ऋचो विनियोगः स्यात् तदा गौण्या वृत्त्या तदभिधानासम्भवे योनिमात्रस्यादृष्टार्थे पाठेन तदक्षराभिव्यक्तेरार्थिकत्वेऽपि

ऋगक्षराभिव्यक्तिजनकत्वेनैवोपयोगात्; तत्र चेरापदविध्यभावेन गिरापदस्यैवाम्नानसिद्धस्य विनियोगात् सार्थकः। अतस्सिद्धं निषेधानुवादबलेन गिरापदपाठादेरग्निष्टोमस्तोत्राङ्गतया गिरापदविनियोजकत्वाभावादिरापदस्य 'ऐरं कृत्वोद्गेयम्' इति प्रत्यक्षविधिना विशिष्य विहितस्य नियतमेव तद्बाधकत्वं तत्कार्यापत्तिश्चेति।

यत्त्वत्र तन्त्ररत्नशास्त्रदीपिकयोः उद्गानमुद्दिश्य इरापदविधिरित्युक्तं, तत् स्तोभविधया गानाङ्गत्वे गानसंस्कार्यगुणाभिधानजनकगिरापदबाधकत्वानुपपत्तेरुत्तरयोरपि च गानातिदेशे तदङ्गस्तोभातिदेशवदतिदेशापत्तेरुपेक्षितम्।

---

....गौण्याश्रयणे तु पुच्छाभिधानजनकत्वे मानाभवात्। अत एव श्येनाद्याकारचित्यवयवभूतस्य पुच्छस्यैव यज्ञायज्ञीयेन स्तुतिः तैत्तिरीयब्राह्मणे 'सुपर्णोसि गरुत्मानि'त्यादिना कृतेति ध्येयम्।

यद्यप्यत्र यज्ञायज्ञीयस्य 'वसन्त इन्दुरत्यं' इत्याद्या ऋक् योनित्वेनाम्नाता तत्र न गिरापदस्य पाठोऽस्ति, तथापि संवत्सा यज्ञायज्ञावो इति तृचे तस्य विधानान्न विरोधः। यत्र हि अग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञीयं प्रयुज्यते तत्रैव प्रकृताभिधानात् तादृशाग्निष्टोमस्तोत्रसाधनत्वेन पठितगिरापदस्थानकत्वलाभेन तत्साधनत्वेनैव विकृतौ प्राप्तमिरापदं शक्नोति गिरापदं बाधितुम्। यत्र तु न तत्साधनत्वं गिरापदस्यैव तत्र सुतरामिरापदविधेरप्रवृत्तेः यथाम्नातं गिरापदमेव प्रयोक्तव्यमित्यभिप्रायेणाह-तत्र चेरापदविध्यभावेनेति। निषेधानुवादबलेनेति। पाठप्रतिबन्धकनिषेधानुवादबलेनेत्यर्थः। गानमुद्दिश्य इरापदस्य विधाने स्तोभविधया गानाङ्गत्वापत्तौ इष्टापत्तिस्वीकारे दोषान्तरमाह—उत्तरयोरपि चेति। यदि च गिरापदस्थानीयमिरापदं गिरापदनिष्ठगीतिसंस्कार्यं भवेत् तदा साम प्रति प्राधान्यात् गुणभूतसामातिदेशे प्रधानभूतऋगक्षरानतिदेशो युक्तः। स्तोभविधया गानाङ्गत्वे तु उत्तरयोः प्रधानभूतसामातिदेशे अन्यस्तोभवद्गुणभूतेरापदस्तोभातिदेशो दुर्निवार एवेति भावः। उपेक्षितमिति। वस्तुतस्तु 'न गिरा गिरे'ति निषेधस्य न तावदनुवादकत्वं सम्भवति। निषेधप्रवृत्तेः प्राक् इरापदस्य भवदुक्तरीत्या स्तोभविधयैवाङ्गत्वापत्त्या गिरापदस्थानकत्वानवगतेः गिरापदबाधफलीभूतनिषेधाप्राप्तेः। तथा च सति निषेधे तत्स्थानकत्वप्राप्त्या गिरापदबाधकत्वं, सति च गिरापदबाधकत्वे अर्थादेव गिरापदनिषेधानुवादकत्वमित्यन्योन्याश्रयापत्तिः; अतो न गिरेति स्वतंत्रो निषेध एव। अत एव भाष्यकारेण एतन्निषेधस्याग्रे 'यद्गिरा गिरेति ब्रूयात्आत्मानं तदुद्गातोद्गिरेत्' इति तदर्थवादः पठितः। तेन चाग्निष्टोमस्तोत्राङ्गयज्ञायज्ञीयसाम्नो योनिभूतायामृचि विद्यमानस्य गिरापदस्य निषेधे कृते तदक्षरवृत्तिसाम्नः स्तोत्राङ्गत्वासमाधाय आश्रयभूताक्षरापेक्षायां तत्सामदेशेन इरापद-

विधिराकाङ्क्षितविधिर्भवति। इरापदस्यापि स्तोत्रप्रकरणपठितस्य स्तोत्राङ्गत्वं विना सामसंस्कार्यता न सम्भवतीति संस्कारसामापेक्षयोरुभयोः सम्बन्ध इत्यग्रिमाधिकरणे वक्ष्यते। यद्यपि च गिरापदे बाधिते तत्कार्यस्य विजातीयगुणाभिधानरूपस्य साधनाकाङ्क्षया इरापदविधानेऽपि भवदुपपादित-रीत्या अस्त्येवाकाङ्क्षितविधित्वं तथापि साधने निषिद्धे तज्जन्यगुणाभिधारूपकार्यलोपस्यैव प्राप्तेः, कार्यस्य स्वरूपेणाभावे कस्याकाङ्क्षया इरापदविधानं भविष्यतीति न विद्मः। नहि 'न तौ पशौ करोती'ति आज्यभाग निषे(षो)धे तज्जन्योपकारजनकाकाङ्क्षस्य कस्यचिद्विधानं दृष्टम्। किन्तु निषेधेन प्रधानापूर्वस्य एतज्जन्योपकारव्यतिरेकेण इतराङ्गजन्यत्वमात्रमेव कल्प्यते। एवमिहापि गिरापदजन्यगुणाभिधानव्यतिरेकेणैव इतरपदजन्यगुणाभिधानमात्रेणैवाग्निष्टोमस्तोत्रापूर्व-सिद्धिरित्येव युक्तं कल्पयितुमिति नाकाङ्क्षितविधित्वं युज्यते। न तराञ्च तदनुरोधेन गुणाभि-धानस्येरापदविधानं प्रत्युद्देश्यत्वकल्पनं प्रमाणवत्। अतः पूर्वोक्तरीत्या गिरापदवृत्तिसाम्नः आश्रयापेक्षया विधीयमानेरापदं प्रत्युद्देश्यत्वेन योग्यत्वात् तदेव 'उद्देश्यमि'ति पदेन समर्प्यते। तत्र गिरापदवृत्तिसाम्नो गुणत्वेन क्लृप्तस्य इह वाक्यार्थे प्राधान्येऽपि गुणत्वनिर्वाहार्थमिरापदस्य यद्विधानं तदपि संस्कार्यतयैव न तु स्तोभवत् करणत्वेन, तथात्वे पूर्वावगतगुणत्वबाधापत्तेः। ततश्च गिरापदवृत्तिसामसंस्कार्यं इरापदं न तु गिरापदम्; गिरापदस्य सर्वथाऽग्निष्टोमस्तोत्राङ्गत्वस्य निषिद्धत्वादित्यर्थस्य लाभात् तत्संस्कार्यगिरापदबाधकत्वमुपपद्यत एवेति क्व स्तोभविधया गानाङ्गत्व-प्रसक्तिदूषणापत्तिः। अतः तन्त्ररत्नदर्शितोद्देश्यविधेयभावेऽपि न किञ्चिद्बाधकमिति मम प्रतिभाति।

यथाश्रुततन्त्ररत्नादिग्रन्थात्प्रतीयमानमुद्देश्यविधेयभावं पूर्वोक्तदूषणापत्त्या निरस्य वाक्यार्थ-वर्णनं कृतं--यथा फलचमसे पूतीकेषु च न भक्षणान्तरं अभिषवान्तरञ्च प्रकृतप्रत्यभिज्ञानादिति प्रकृतयोरेव भक्षाभिषवयोः यागीयद्रव्यसंस्कारकयोः फलचमसपूतीकोद्देशेन विहितयोरर्थापत्त्या फलचमसपूतीकयोर्यागसाधनताविधिः आर्थापत्तिक आक्षिप्यते। एवमिहापि कृत्यप्रत्ययेन श्रुत्या धात्वर्थविधिलाभाय अग्निष्टोमस्तोत्रसाधनाक्षरसंस्कारकप्रकृतयज्ञायज्ञीयसाम्न्येव इरापदो-द्देशेन विहिते इरापदस्याग्निष्टोमस्तोत्रसाधनताविधिः आर्थापत्तिक आक्षिप्यते। गानसंस्कृतेन इरापदेन स्तुवीतेति। सम्भवति चेरापदस्यापि इष्कर्तारमित्यस्य निष्कर्तारमित्येतत्समानार्थत्वमिव गकारलोपेन गिरापदसमानार्थत्वमिति तद्वदेव स्तुतिसाधनत्वम्।

यद्यपीरापदे सम्भवत्प्रातिकमपि ततः पूर्वमेव शीघ्रप्रवृत्तया श्रुत्या गिरापदस्य प्रगाथै-कवाक्यतया प्रगानसम्बन्धं बाधितुं इरापदे तद्विधीयते। यथाऽश्वाभिधान्यां प्रकरणात् प्राप्य-

यदपि **कैश्चित् गानसंस्कार्येरापदस्य स्तोत्राङ्गतया विधिरभिषवसंस्कृतपूतीकानामिव यागसाधनतया। तद्वदेव सम्भवत्प्राप्तिकस्यापि गानस्य शीघ्रप्रवृत्त्या पुनर्विधानं गिरापदस्य गानसम्बन्धवारणार्थमित्युक्तं**; तदपि **गानवारणेऽपि गिरापदवारणानापत्तेरस्य प्रकृतगानसम्बन्धेऽपि गिरापदमात्रगानवारणे तन्निषेधानुवादस्यैव शरणीकरणीयतया तत एवोभयवारणे गानविधिवैयर्थ्यादुपेक्षितम्। तस्मादस्येरापदमात्रविधायकत्वं उद्देश्यमिति तु स्थानापत्तिप्राप्तानुवाद इत्येव तत्त्वम्** ॥ १७ ॥

---

माणो मन्त्रः पुनः श्रुत्या विधीयते गर्दभाभिधान्यां बाधायेति तदिदमुपपादयति—**यदपीति**। दूषयति—**तदपीति**। तव मते हि प्रत्यक्षेरापदोद्देशेन गानविधिः, आर्थापत्तिकस्तु गानसंस्कृतेरापदस्य स्तोत्राङ्गत्वविधिः उभयथापि गिरापदे गानसम्बन्धवारणाय प्रवृत्तेन प्रत्यक्षविधिना तदीयगानव्यावृत्तावपि अप्रगीतगिरापदपाठप्रतिबन्धे प्रमाणाभाव एव। कथञ्चिदिरापदस्य यज्ञायज्ञीयगानसम्बन्धविधानेऽपि गिरापदमात्रवृत्तिगानस्यैव निवृत्तिः नेतरपदवृत्तिनस्तस्येत्यत्र निषेधानुवादस्यैव प्रमाणत्वे वक्तव्ये तत एव गिरापदतद्वृत्तिगानोभयनिवारणसिद्धेः इरापदोद्देशेन गानविधिस्वीकारो व्यर्थ एवेत्याशयः।

---

**(१८)—अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशस्स्यात् ॥ ५४ ॥ यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात् ॥ ५५ ॥ गानसंयोगाच्च ॥ ५६ ॥ वचनमिति चेत् ॥ ५७ ॥ न तत्प्रधानत्वात् ॥ ५८ ॥**

तदिरापदमप्रगीतं प्रयोक्तव्यं प्रगीतं वेति सन्देहे ऐरमित्यप्रगीतश्रवणादप्रगीतम्। यदि ह्ययं स्वार्थे तद्धितस्तदा इरां कृत्वेत्यर्थावगमादिरापदमात्रविधिःस्पष्ट एव। न हि प्रगीतेरापदादयं तद्धितः तथात्वे इकारस्य तालव्यत्वात् गीतिदशायां च वृद्धत्वापत्तेः 'तालव्यमायी[1] यद्वृद्धम्' इति छन्दोगसूत्रेण गीतिदशायां यत् त्रिमात्रात्मकतया वृद्धं तालव्यं तत् आयी भवतीत्यर्थकेणायीभावविधानादाकारादित्वेन 'वृद्धाच्छः' इति पाणिनिसूत्रेण छप्रत्ययोत्पत्तौ आयीरीयं इति रूपापत्तेः।

अथ स्वार्थतद्धिते वैयर्थ्यापत्तेर्विकारार्थ एवायं तद्धितः, विकारश्चेरापदस्य प्रगाणरूपो धर्म एवेति चेत्—तथात्वेऽपि प्रगाणरूपधर्माङ्गीकारे विशिष्टविधिगौरवापत्तेरप्रगाणरूपस्य

---

अप्रगाणाच्छब्दान्यत्वे।

तथात्व इति। अत्र चाईभावविधायकमौच्छिकवचनम्। एवं हि छन्दोगानां परिभाषा—यत् गीतिदशायां त्रिमात्रेणोच्चार्यते तत्त्रिमात्रं प्लुतवृद्धपदाभ्यामुच्यते; तथा पुष्पसूत्रे "ए इ ऐ ई इत्येतानि तालव्योक्तानि" तानि तालव्यपदेनोच्यन्ते। तथा

'............अङ्गुष्ठे प्रथमः स्वरः।
प्रदेशिन्यान्तु गान्धार ऋषभस्तदनन्तरं।
अनामिकानां षड्जस्तु कनिष्ठायान्तु धैवतः।
तस्याधस्तात्तु यो न्यस्तो निषादं तं विनिर्दिशेत्'॥

इति नारदशिक्षोक्तेः प्रथमः स्वरसंज्ञःक्रुष्ट इति च पञ्चमस्वर उच्यते। एवञ्चेरापदस्थेकारस्य वृद्धतालव्यत्वे हि अङ्गुष्ठस्वरोऽन्वाचयेन प्रथमस्वरत्वाभावात् तन्निमित्ताईभावापत्त्या आकारस्य वृद्धत्वेन छप्रत्ययोऽनिवार्य इत्यर्थः। अत्र च तालव्यवृद्धत्वस्य समुच्चितस्यैव आईभावप्रयोजकत्वात् प्रथमस्वरस्यापि अपूर्वप्रयोजकाभावे तदप्रयोजकत्वात् काचित्कतया आईभावे सत्वं तस्याप्यस्तीत्यभिप्रायेण प्रथमस्वरश्चेति पठितमप्यन्वाचयहेतुत्वेन ज्ञेयमिति सूचयितुं

---

1. B & C तालव्यमायि यद्वृद्धम्

**गिरापद**[1] **बाधकत्वरूपस्य वा धर्मस्य तद्धितार्थत्वमङ्गीकृत्य तद्धितस्यानुवादोपपत्तेः। न चाप्रगीतेरापदमात्रविधाने 'उद्गेयम्' इत्यनुवादानुपपत्तिः। तथेरं** [2] **कृत्वा** अक्षरान्तरेषु **उद्गेयमित्येवमर्थाङ्गीकारेणानुवादोपपत्तेः।** न च प्रकारान्तरेण **गीतेरप्राप्तावपि गिरापद-कार्यापत्त्या तत्प्राप्तिः। गिरापदस्याग्निष्टोमस्तोत्रसाधनत्वाभावेनेरापदस्य** तत्कार्यापत्तौ **प्रमाणाभावात्।** तद्गीतेस्तद्द्वारा **तदपूर्वसाधनत्वाभावेनेरापदे प्रसक्त्यभावाच्च।**

**अत एवोह्यग्रन्थे 'आ ई रा आ ई रा चा दा क्षा सा' इति गानाम्नानमप्यप्रमाणमेव। न चैतस्य श्रुतिमूलकत्वात् न्यायस्यैवाप्रामाण्यम्। ऊह्यग्रन्थ**[3] **समाख्ययाऽस्य तर्कमूलत्वेन श्रुतिमूलत्वाभावात्। अत एव सन्नयायविरोधे अस्याप्रामाण्यमेव।**

**यत्तु** तन्त्ररत्नादिग्रन्थवशादस्य **गीत्याम्नानस्य वेदत्वकथनं तत् वैदिकानामूह्यग्रन्थे पाठादनादरणीयमिति** प्राप्ते—

---

[सूचितम्।] पुष्पसूत्रेऽनुपलंभाच्च तत्पदं पूज्यपादैरुपेक्षितम्। अत एव 'आपावसानोर्षसी'ति इकारस्य तर्जन्यां स्वरेऽपि आइभावः छन्दोगानां प्रचुर एव। अथवा इराविकारा वा इत्यर्थे शेषाधिकारपठितछप्रत्ययाप्राप्तेः आई रा प्रातिपदिकादेव छप्रत्ययकरणे तस्यैव गानापत्त्या इरापदं प्रगीतमेव आयीरीयमिति छप्रत्ययान्तेनोच्यत इत्यर्थश्चिन्त्यः। **अक्षरान्तरेष्विति।** गिरापदस्थाने इरां कृत्वा गिरापदोत्तराणि यानि 'चदक्षसे' इत्याद्यक्षराणि तेषु 'च दाक्षासा' इत्येवमादिरूपेणोद्गेयं न त्विरापदमुद्गेयमित्यर्थ इत्याशयः। गिरापदकार्यापत्त्या गीतिप्राप्तिरिति सिद्धान्तमाशङ्क्य दूषयति—**न च प्रकारान्तरेणेति। तत्कार्यापत्ताविति।** निषेधेनाग्निष्टोमस्तोत्राङ्गत्वेन प्रसक्तगिरापदनिषेधः। तदङ्गत्वेन च स्वातन्त्र्येणेरापदविधानं; नैतावता अप्रसिद्धे गिरापदकार्ये अग्निष्टोमस्तोत्रजननरूपे इरापदविधानमित्यर्थः सिद्ध्यति प्रमाणाभावादित्यर्थः। **गीतेस्तद्द्वारेति।** नहि गिरापदसंस्कारिका गीतिः इरापदद्वारा अग्निष्टोमस्तोत्रापूर्वसाधनं भवति। अतः संस्कार्य-गिरापदाभावे तद्वृत्तिगीतेर्लोप एव युक्तो न तु इरापदवृत्तित्वेन तत्प्राप्तिरिति भावः। **तन्त्ररत्नादिग्रन्थवशादिति।** अयं ह्येतदधिकरणारम्भे तन्त्ररत्नग्रन्थः—गिरापदवर्णानाञ्च या संस्कारिका गीतिः सा तानेव वर्णान् संस्करोति। तैरेव च प्रयुज्यते, इरापदवर्णैर्न प्रयुज्यते। कथम्?, गिरापदवर्णस्वरूपप्रयुक्तत्वाद्गीतेः इरापदे च तदभावात्। नहि गीतिर्वर्णोद्देशेन विधीयते, येनापूर्वप्रयुक्तता स्यात्। समाम्नानमात्रन्त्वस्याः इति मध्ये समाम्नान-शब्दबलात् गीत्याम्नानस्य वेदत्वकथनमित्याशयः। **अनादरणीयमिति।** नहि वेदे वर्णेषु

---

1. B. पदवाचकत्व
2. B & C. इरां कृत्वा
3. B & C ऊह्यग्रन्थत्व

**सत्यं इरापदस्वरूपस्यैव विधिः न तु प्रगाणस्य। तथाऽपि प्रगाणाभावस्याप्यविधेयत्वात् कार्यापत्त्या गीतेरपि प्राप्तिर्न विरुद्ध्यते। तथा हि—यद्यपि न गिरापदस्थस्तोत्रापूर्वे उपयोगः तथाऽपि गुणाभिधानरूपस्य कार्यस्य गिरापदेरापदयोरेकत्वात् युक्तस्तया धर्मलाभः।** यद्यपि च न गुणाभिधानस्वरूपार्था धर्माः तथाऽपि गुणाभिधानजन्यस्यापूर्वस्यैकस्यैवाग्निष्टोमस्तोत्रे चयनादौ चोपयोगाद्धर्माणां च गीत्यादीनां गिरापदकार्यगुणाभिधानजन्यावान्तरापूर्वप्रयुक्तत्वस्यैव दीक्षणीयावाङ्नियमन्यायेनाङ्गीकाराच्चयनापूर्वसाधनीभूतगिरापदावान्तरकार्यापन्ने अग्निष्टोमस्तोत्रापूर्वसाधनीभूततादृशकार्यजनके इरापदे युक्तैव तद्धर्मप्राप्तिः।

---

गीत्याम्नानं; किन्तु वेदपठितक्रमपठितर्वर्णेषु गीतिः कार्या। तदाकारः परमूहग्रन्थे दर्शितः। सा च ऋक् गिरापदात्मिकेति तदीयगीतिदर्शनमस्तु ऊहग्रन्थे इरापदीयत्वेन तत्र तत्प्रदर्शनन्तु मीमांसान्यायसिद्धस्थानापत्तिमूलकमेव। अनेन च न्यायेन स्थानापत्त्यभावे सिद्धे तन्मूलकं तत्प्रदर्शनमप्यप्रमाणकमेव। तन्त्ररत्ने च गिरापदवृत्तित्वेन यदर्थतः सिद्धं समाम्नानमूहग्रन्थस्थं तदेव समाम्नानपदेनोक्तं; न तु वैदिकत्वेन समाम्नानमित्यर्थः।

ननु गुणाभिधानरूपकार्यार्थत्वेऽपि तत्स्वरूपे आनर्थक्ये प्राप्ते अग्निष्टोमस्तोत्रापूर्वसाधनत्वेन रूपेण लक्षणया गुणाभिधानस्योद्देश्यत्वं वक्तव्यम्। नहि तत्कार्यं गिरापदस्य प्रसिद्धमस्ति। निषेधेनाग्निष्टोमस्तोत्रापूर्वसाधनीभूतगुणाभिधानजनकत्वस्यैव निवेशात्। अतः कथं तादृशकार्येऽपीरापदस्य विधानं येन तत्कार्यजनकत्वरूपस्थानापत्त्या गीतेः प्राप्तिः स्यादित्यभिप्रायेणाशङ्कते —**यद्यपि च न गुणेति**। निरस्यति—**तथापीति**।

अयमभिप्रायः। यद्यप्यग्निष्टोमस्तोत्रापूर्वसाधनगुणाभिधानकार्यं गिरापदस्याप्रसिद्धं तथापि गिरापदजन्यगुणाभिधानजन्यापूर्वस्यैकस्यैव यथाऽग्निष्टोमस्तोत्रापूर्वे उपयोगः तथैव चयनेऽपि उपयोगात् तदपूर्वेऽप्युपयोगः कल्प्यते। तथा च चयनापूर्वजनकत्वेन यत्प्रसिद्धगुणाभिधानापूर्वजनकगिरापदं तत्स्थानापन्नत्वेन विहितमग्निष्टोमस्तोत्रापूर्वजनकगुणाभिधानजन्यापूर्वजनकेरापदमिति युक्तैव गिरापदवृत्तिगीतिधर्माणां प्राप्तिः। गीतिरूपधर्माणां दीक्षणीयावाङ्नियमन्यायेन गुणाभिधानजन्यावान्तरापूर्वार्थत्वस्यैव स्वीकारात्। अतो नानुपपत्तिरिति।

ननु नैव 'न गिरागिरे'ति निषेधः चयनापूर्वसाधनीभूतगुणाभिधानजनकगिरापदविषयः अग्निष्टोमस्तोत्राङ्गत्वेन शक्यते वक्तुं; तस्य तत्र पुच्छनिष्ठगुणाभिधानजनकस्याग्निष्टोमस्तोत्राङ्गत्वेन अप्रसक्तेः; तथाचाग्निष्टोमस्तोत्रापूर्वसाधनगुणाभिधानरूपभिन्नकार्यजनकत्वेन विहितेरापदं कथमिव चयनापूर्वसाधनपुच्छनिष्ठगुणाभिधानजनकगिरापदस्थानापन्नं भवेत्। यस्य त्वग्निष्टोमस्तोत्रापूर्व-

माऽस्तु वा **अवान्तरकार्यभेदमङ्गीकृत्य कार्यापत्तिः।** तथाऽपि **गिरापदबाधकतया तत्स्थानापत्तिस्तावदस्त्येवेरापदस्य। अतश्चेरापदस्य** प्रकरणात् स्तोत्राङ्गत्वे**ऽवगते गीतिरूपधर्माकांक्षायां बाधकत्वरूपस्थानापत्त्योपस्थितस्य गिरापदस्य धर्मातिदेशे न किञ्चिद्बाधकमस्ति।** आवश्यकं च **गीतेश्चयनापूर्वसाधनीभूतगिरापदाङ्गत्वम्।**

वस्तुतस्तु—**यथैव 'यज्ञायज्ञीयं पुच्छे गायति' इति वचनेन यज्ञायज्ञीयस्य चयने उपयोगस्तथैव 'यज्ञायज्ञीयेन स्तुवीत' इति वचनेनाग्निष्टोमस्तोत्रेऽपि। अतश्च तद्गत-**

———

जनकत्वेन पाठतः प्रसक्तस्य गिरापदस्य कार्यमग्निष्टोमस्तोत्रापूर्वजनकगुणाभिधानरूपं तत्तु निषिद्धत्वादेवाप्रसिद्धमिति न तज्जनकत्वमिरापदस्येति कथं गीत्यादिधर्माणां गुणाभिधानजन्यावान्तरापूर्वार्थत्वेऽपि तत्र प्राप्तिरित्याशङ्कामङ्गीकृत्य प्रकारान्तरेण स्थानापत्तिमुपपादयति—**मास्तु वेति।** अग्निष्टोमस्तोत्रापूर्वसाधनगुणाभिधानजनकत्वेन गिरापदं न कार्यमिति निषेधे तदपूर्वसाधनगुणाभिधानं केन तर्हि कार्यमित्याकाङ्क्षया विधीयमानेरापदविधाना [त् ?] आकाङ्क्षितविधित्वलाभाय गिरापदकार्यं यद्गुणाभिधानं तज्जनकमिरापदमिति बोधिते सति तज्जन्यकार्यजनकत्वरूपबाधकत्वमर्थादिरापदस्य बोधितं भवति। ततश्च गिरापदकार्यगुणाभिधानजननद्वारा यदिरापदस्य स्तोत्राङ्गत्वं तत् गीतिं विनाऽनुपपद्यमानं सत् गीतिलाभेनैव भवतीति तदाकाङ्क्षायामुपस्थितगिरापदवृत्तिगीतेः इरापदवृत्तित्वकल्पने बाधकाभावात् नष्टाश्वदग्धरथन्यायेन गिरापदवृत्तिगीतिलाभो नासुलभ इत्येवं प्रकारान्तरमाह—**तथापीति। प्रकरणात् स्तोत्राङ्गत्वे इति।** इरापदस्य स्तोत्राङ्गत्वं प्रकरणादेव। गिरापदजन्यगुणाभिधानद्वारा तदिति तु गिरापदबाधकतालभ्यमित्यर्थः। ननु न गिरेति निषेधेन यज्ञायज्ञीयसामान्तर्वर्तिगिरापदसम्बन्धिगीतेः गिरापदाङ्गत्वमेव निषिध्यत इति गिरापदाङ्गत्वेनाप्रसिद्धैव गीतिरिति कथमुपस्थितगिरापदाङ्गगीतेरिरापदाङ्गत्वकल्पनं युक्तमित्याशङ्कानिरासायाह—**आवश्यकञ्चेति।** पूर्वमिरापदस्य प्रकरणावगतस्तोत्राङ्गतानिर्वाहानुरोधेन गिरापदवृत्तिगीतेरतिदेशपूर्वकोहः इरापदे इति प्राचामनुरोधेन सिद्धान्तितम्। अधुना यज्ञायज्ञीयसाम्नः स्तोत्राङ्गतानुरोधेन गिरापदवृत्तिगीतेः इरापदवृत्तित्वकल्पने तु नातिदेशः ऊहो वा किन्तूपदेशेनैव तत्प्राप्तिरित्याह—**वस्तुतस्त्विति। चयनोपयोगकल्पनमिति।** यज्ञायज्ञीयस्य तावत् स्पष्टविधिनैव चयनोपयोगः क्लृप्त एवेति न तत्रोपयोगकल्पनम्। अग्निष्टोमस्तोत्राङ्गत्वेन यज्ञायज्ञीयसामगाने परं गिरापदनिषेधात् तद्गतगिरापदवृत्तिगीत्यंशस्य चयन एवोपयोगो नात्रेति यावत् कल्पनं ततः पूर्वमेव प्रत्यक्षविहितेरापदवृत्तित्वकल्पनया स्तोत्राङ्गत्वायोगव्यावृत्तिः फलं कल्प्यते। न त्वेतावता गीतेश्चयनाङ्गत्वप्रतिबन्धः,

गीत्यंशस्य यावच्चयने स्वाश्रयगिरापदोपयोगकल्पनाद्वारा चयनोपयोगकल्पनं तावत् तत्पूर्वमेव अग्निष्टोमस्तोत्राङ्गभूतेरापदद्वारकत्वकल्पनया स्तोत्रोपयोगोऽपीति उपदेशेनैव तत्प्राप्तेर्न गिरापदगीतेरिरापदेऽतिदेशः ।

यद्यपि चाग्निष्टोमस्तोत्रेऽप्यार्चिके पुरस्तादुपरिष्टाच्च गिरापदस्याप्युपयोगात् तत्स्थानापत्तिरिरापदस्याग्निष्टोमस्तोत्रसाधनत्वस्य समानत्वादित्याशङ्क्येत—तथाऽप्यार्चिकोद्गीथयोरवान्तरकार्यभेदात् अभेदेऽपि वा अप्रगीतस्यैव गिरापदस्यार्चिके पाठाद्गिरापदगीतेर्गिरापदद्वारा चयनादावेवोपयोगेनाग्निष्टोमस्तोत्रे उपयोगाभावान्न तत्कार्यापत्त्याऽतिदेशेन तद्गीतेरिरापदेऽतिदेशः ऊहो वा, अपितूक्तरीत्योपदेशेनैव ।

---

विध्यन्तरेण तदङ्गत्वबोधनात् । तथा च यज्ञायज्ञीयसाम्नः स्तोत्राङ्गत्वनिर्वाहाय इरापदवृत्तित्वकल्पनमिति भावः । चयनोपयोगकल्पनमित्यत्र चयन एवोपयोगकल्पनमित्यर्थो द्रष्टव्यः ।

ननु उद्गातारो यदा गायन्ति तदा पूर्वमार्चिकं पठ्यते अन्ते च तत्पठ्यते मध्ये गानं क्रियते तथा च आर्चिकपाठस्याप्यग्निष्टोमस्तोत्रापूर्वसाधनत्वात् तन्मध्यपतितगिरापदस्यापि तत्रोपयोगात् अग्निष्टोमस्तोत्राङ्गभूतगिरापदस्थानापत्तिः इरापदेऽस्त्येवेत्यतिदेशेन गीतेरूहः सिध्यत्येवेत्याशङ्कते—यद्यपीति । अस्त्वार्चिके गिरापदपाठात् गिरापदस्योपयोगः तावताप्यप्रगीतगिरापदस्यैव पाठात् कथञ्चिदप्रगीतगिरापदस्थानापत्तिः इरापदे सम्भाव्यतां नाम । गानवेलायान्तु गिरापदनिषेधात् तद्वृत्तिगीतेः तद्द्वारैवोपयोगात् न तत्स्थानापत्त्या गिरापदगीतिरिरापदे प्राप्यते । अतो नार्चिकपाठोपयोगेन गिरापदगीतिरिरापदे प्राप्यते । अतो नार्चिकपाठोपयोगेन गिरापदस्थानापत्तिः इरापदे गीतिप्रापिकेत्येवं समाधत्ते—तथापीति ।

अत्र भाष्यकारेण 'किं भवति प्रयोजनं चिन्तायाः? नात्र कश्चिद्विशेषः अन्यस्मिन्नेतत्सदृशे प्रयोजनमस्ति 'न प्रप्रेति ब्रूयात् प्रप्रीति ब्रूयात्' यदि पूर्वः पक्षः प्रप्रपदं वा प्रयोक्तव्यं प्रप्रीपदं वा; यदि सिद्धान्तः प्रप्रापदमेव वक्तव्य'मित्युक्तम् । तत्र नात्रोदाहरणे कश्चिद्विशेष इत्यंशस्याभिप्रायः तन्त्ररत्नकृता दर्शितः—पूर्वमुद्देयं आइ राचादाक्षासा इति गानसम्योगश्चेति सूत्रेणोक्तम् । तदुपरि वचनमिति चेन्न । तत्प्रधानत्वादित्याशङ्कोत्तरत्वेन सूत्रद्वयम् । तदस्य सूत्रद्वयस्य प्रयोजनं नात्र कश्चिद्विशेष इत्यंशेनोच्यते । तथाहि—इरापदे यदि वचनात् प्रगाणं यदि वा स्थानापत्त्या सर्वथा इरापदं प्रगीतं प्रयोक्तव्यमिति न विशेषः । प्रप्रीपदादीनान्तु न वाचनिकं प्रगाणमस्ति । किन्तर्हि न्यायादेव । तत्र यदीरापदे वचनेन प्रगाणं प्राप्यते ततः प्रप्रीपदादीनां वचनाऽभावात् अप्रगीतता स्यादिति तद्व्यावृत्त्यर्थं लिङ्ग

तत्त्वं तु 'एरं कृत्वोद्गेयम्'इत्यत्र नैरापदाक्षराणि विधीयन्ते गिरापदयुक्तपाठेऽपि तत्सत्त्वात् अपि तु निषेधानुवादबलाद्गकारपरिसङ्ख्यामात्रं विधिफलं, अतश्च गीतेः गा इरा गा इरा चा दा क्षा सा इत्येवंविधाया गिरापदवृत्तित्वेन सम्मतायां वस्तुतः इराक्षरधर्मत्वात् गकारसत्त्व इव तदसत्त्वेऽपि स्वाश्रयवृत्तित्वाक्षतेर्न गिरापदगीतेरिरापदे स्वतन्त्र उपदेशो न वाऽतिदेशः ऊहो वा। यत्र तु 'न प्रप्रेति ब्रूयात् प्रप्रीति ब्रूयात्' इत्यादावकारबाधेनेकारविधिस्तत्र पूर्वोक्तविधया स्वतन्त्रोपदेशो गीतेः। सर्वथा प्रगीततिमेवेरापदम् ॥ १८ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
नवमस्याध्यायस्य प्रथमः पादः

---

समर्थ्यते—न तत्प्रधानत्वादिति सूत्रेण। इरापदप्रधानं हि ऐरं कृत्वोद्गेयमिति वचनं न गानप्रधानं, अतः स्थानापत्तिलब्धगानानुवादकमुद्गेयमिति लिङ्गमेव वचनम्। लिङ्गं ह्येकत्रापि स्थितं समानन्यायं सर्वमभिद्योतयतीति। तदेवं भाष्यव्याख्यानं स्पष्टमेवायुक्तम्। किं भवति प्रयोजनं चिन्ताया इति प्रश्न[प्रश्ने ?] स्पष्टमेव पूर्वपक्षसिद्धान्तपक्षप्रयोजनपरत्वदर्शनेन तत्रैवाग्रे विशेषाभावप्रदर्शनपरत्वेन तदंशस्य वर्णयितुमुचितत्वात्। नहि पूर्वपक्षसिद्धान्तपक्षयोरिरापदं प्रगीतमप्रगीतं वा प्रयोक्तव्यमिति विशेषे विद्यमाने नात्र कश्चिद्विशेष इति भाष्यकृता वक्तुं शक्यते। अनेनात्र कश्चिद्विशेष इत्यंशस्य पूर्वोत्तरपक्षयोर्विशेषाभावपरतयेव भाष्यकृतोऽभिप्रेतमर्थं परमरहस्यत्वेनोपपादयति—तत्त्वन्त्विति। उद्गीतपाठवेलायां गकारलोपमात्रविधाने सति अवशिष्टेरापदवृत्तित्वेन पाठसिद्धैव गीतिः। तथा च पूर्वोत्तरपक्षयोरपि प्रगीतपाठ एवेति न कश्चिद्विशेष इति भावः। अन्यस्मिन्नेतत्सदृशे प्रयोजनमस्तीति भाष्यकारेण पूर्वोत्तरपक्षयोर्विशेषफलप्रयोजनं सूचितम्। तद्दर्शयति—यत्र तु न प्रप्रेति। यत्तु भाष्यकारेण अन्यस्मिन्नेतत्सदृशे प्रयोजनमस्तीत्युत्तरं—न प्रप्रेति ब्रूयात् यदि पूर्वपक्षः इत्यादिपूर्वलिखितग्रन्थेन प्रयोजनं पदविकल्परूपं दर्शितम्। तत्र तन्त्ररत्नदर्शितरीत्या पूर्वाधिकरणस्थं प्रमादाल्लेखकेन भाष्यपुस्तकेऽस्मिन्नधिकरणे प्रक्षिप्तमित्येव युक्तम्। पूर्वाधिकरणेन नियतस्थानापत्तौ सिद्धायामस्मिन्नधिकरणे नियतमिरापदादि गिरापदधर्मान् गीत्यादीन् लभते वा न वेति सन्देहपूर्वकप्रवृत्तयोः पूर्वोत्तरपक्षयोः पदविकल्पाविकल्पप्रयोजनकथनस्यायुक्तत्वेन प्रगीताप्रगीतेरापदपाठरूपप्रयोजनस्यैव वक्तुमुचितत्वात् इत्यभिप्रायेण सिद्धान्तप्रयोजनमनुसन्धत्ते—सर्वथा प्रगीतमेवेरापदमिति।

इति श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीण-श्रीखण्डदेवान्तेवासिकविमण्डनबालकृष्णात्मजशम्भुभट्टकृतायां
भाट्टदीपिकाप्रभावल्यां नवमस्य प्रथमः पादः

---

# अथ नवमस्याध्यायस्य द्वितीयः पादः

## (१)—सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ तदुक्तदोषम् ॥ २ ॥

रथन्तरादिशब्दानां सामादिशब्दानां च गीतिमात्रवाचित्वं गीतिविशेषत्वादिधर्ममात्रवाचित्वं वा सिद्धमेवोत्तरविवक्षया स्मार्यते। अथ वा योऽयमूहो नाम ग्रन्थविशेषस्सामगैः पठ्यते स किं पौरुषेयः उतापौरुषेय इति चिन्तायां—

कर्तृस्मरणाभावरूपवेदापौरुषेयत्वहेतोरत्रापि तुल्यत्वात् इतरथा तस्यानैकान्तिकत्वेन वेदस्याप्यपौरुषेयत्वानापत्तेः स्वाध्यायानध्यायपरिपालनस्य च तुल्यत्वादूह इति समाख्यायाश्च रूढत्वेनापि नेतुं शक्यत्वात्। इतरथा कर्तृस्मरणाभावेऽपि समाख्याबलेन पौरुषेयत्वाङ्गीकरणे काठकादिसमाख्यया वेदस्यापि पौरुषेयत्वापत्तेरपौरुषेय ऊहग्रन्थ इति प्राप्ते—

ऊह वितर्क इति स्मृत्या तर्कप्रभवत्वरूपयोगेनैव समाख्योपपत्तौ रूढत्वे प्रमाणाभावात्; ऊहग्रन्थे च योनिग्रन्थे योन्युत्पन्नस्यैव साम्नो 'यद्योन्यां गायति तदुत्तरयोर्गायति' इत्यादिनाऽतिदिष्टस्य न्यायेनोत्तरादौ[1] पठनीयस्य सौकर्यार्थं पाठात्; अस्यापि वेदत्वे सर्वासामाम्नानसिद्धतया योनित्वप्रसङ्गेन योन्युत्तरादिविभागस्य अति-

---

सामानि मन्त्रमेके।

**सिद्धमेवेति**। सामशब्दानां गीतिवाचित्वं गीतिषु सामाख्येति द्वैतीयकसूत्रेण (२–१–३६) सिद्धम्। रथन्तरादिशब्दानां गीतिविशेषवाचित्वं साप्तमिकेन "साम्नोऽभिधानशब्देन प्रवृत्तिः स्यादि"ति द्वितीयपादाद्याधिकरणसूत्रेण सिद्धमेव। किं साम्नो ऋचं प्रति प्राधान्यमुत ऋचस्साम प्रति तदिति करिष्यमाणविचारविवक्षया स्मार्यते। प्रगीतमन्त्रवाक्यपरत्वे हि तद्विचारानुपपत्तिरित्यर्थः।

अथवा

**तस्यानैकान्तिकत्वेनेति**। यदि कर्तृस्मरणाभावे विद्यमानेऽपि पौरुषेयत्वं तदा कर्तृस्मरणाभावहेतोरपौरुषेयत्वसाधने धूमादिसाध्ये वह्न्यादेरिव व्यभिचारित्वान्न पौरुषेयत्वं वेदेऽपि सिद्ध्येदिति भावः। **स्वाध्यायेति**। अनिषिद्धतिथावध्ययनं **स्वाध्यायः** निषिद्धतिथावनध्ययनमनध्यायः। **रूढत्वेनापीति**। ऊह इति नाम अनादिसिद्धं रूढं, न तु ऊह वितर्के इति

---

1. B. & C. न्यायेन यादृशस्यो

देशशास्त्रस्य च वैयर्थ्यापत्तेः पौरुषेयत्वमेव। अत एव बलवत्पौरुषेयत्वसाधकप्रमाणान्तराभावविशिष्टकर्तृस्मरणाभाव एव पौरुषेयत्वाभावसाधक इति नानैकान्तिकता।

यद्यपि च तत्रत्या ऋचः सामानि च स्वरूपेणापौरुषेयाण्येव तथाऽप्युत्तरादिषु न्यायसिद्धातिदिष्टसामरचनाप्रकारः पौरुषेयः। अत एव स्वाध्यायानध्यायादिपरिपालनं ऋगादिविषयत्वादन्यथासिद्धम्। कर्तृस्मरणाभावस्तु मूलश्रुतिकल्पनाभावादप्युपपद्यते। मन्वादिस्मृतिषु हि मन्वादिवैशिष्ट्येन श्रुतिकल्पनार्थं कर्तृस्मरणमावश्यकम्। प्रकृते तु न्यायमूलकत्वात् तदभावेऽपि न काचित् क्षतिः। अत एव सन्न्यायविरोधे अस्याप्रामाण्यं न त्वन्यस्मृतिवत् मूलभूतश्रुतिकल्पनया न्यायस्यैवाभासीकरणम्। अत एवाग्रे सामोहन्यायविचारोऽपि सङ्गच्छते ॥ १ ॥

---

वितर्कार्थोहधातुनिष्पन्नत्वेन यौगिकं, येन तर्कप्रभवत्वसमाख्यया पौरुषेयत्वं स्यादिति भावः। अत एव बलवदिति। तथाचोहग्रन्थे विशेषणाभावप्रयुक्तविशिष्टाभावसत्वात् न तादृशविशेषणविशिष्टो हेतुरपौरुषेयत्वसाधक इत्यर्थः। यथैव दर्शपूर्णमासादिषु कर्माणि मन्त्राः क्रमश्च श्रुतिसिद्धोऽपि पद्धतिरूपेण पुरुषनिबद्ध इति दर्शपूर्णमासप्रयोगपद्धतेः पौरुषेयत्वं एवमिहापीत्याह— सामरचनाप्रकार इति। अन्यथासिद्धमिति। ऊहग्रन्थे हि ऋक्सामयोः संसर्गित्वेन पाठः तद्विषयकमेव स्वाध्यायानध्यायादिपरिपालनमूहग्रन्थविषयमिव फलतीत्यतोऽन्यथासिद्धत्वमित्यर्थः।

(२)—कर्म वा विधिलक्षणम् ॥ ३ ॥ तद्दृग्द्रव्यं वचनात्पाकयज्ञवत् ॥४॥ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशाश्च ॥ ५ ॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ परार्थत्वाच्च शब्दानाम् ॥ ७ ॥ असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥ संस्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् ॥ ९ ॥ अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥ आश्रितत्वाच्च ॥ ११ ॥ प्रयुज्यत इति चेत् ॥ १२ ॥ ग्रहणार्थं प्रयुज्येत ॥ १३ ॥

साम्नां किं ऋचं प्रति प्राधान्यं उत गुणत्वमिति सन्देहे

---

**कर्मवा विधिलक्षणम् ।**

**साम्नामिति ।** यद्यपि साम्नामित्यविशेषेणोक्तं तथापि यत्र गुणप्रधानत्वविचारस्संभवति तादृशविषयमेव साम्नामिति पदं द्रष्टव्यम् । यद्यप्ययं गुणप्रधानभावविचारस्सप्तम एव सिद्ध इति पुनरुक्त इव दृश्यते, तथापि तत्रत्यातिदेशविचारस्योभयथापि सम्भवात्तत्र तद्विचारस्यानावश्यकत्वात् अत्रत्यस्यैव प्रसङ्गात्तत्र करणं द्रष्टव्यम् । उक्तञ्च तन्त्ररत्ने—अन्यत्रोत्पन्नस्य अन्यत्र गमनमतिदेशः । स चोभयथापि सिद्ध्यतीति न तत्रैतत्प्रतिपादितम् । इहत्यमेव तु प्रसङ्गान्नीतम् । इह तु गुणप्रधानता अवश्यं विचारणीया । तथाहि—यदि गीतिः प्रधानं ततो गीत्यनुरोधेन वर्णा भवन्ति प्रधानानुवर्तित्वाद्गुणानाम् । अतश्च प्रधानभूतगीत्यन्यथाभावपरिहाराय योनिवर्णवशेन गातव्यं भवति । अथ गुणभूता गीतिः ततो विपरीतं वर्णानुरोधेन गीतिः । अतश्चोत्तरावर्णवशेन गातव्यं भवति। अन्यथाऽक्षरसंस्कारायोगात् । यत्र चाल्पान्यक्षराणि महती गीतिः, यत्र वा बहून्यक्षराणि अल्पीयसी गीतिः तत्राप्यस्ति गुणप्राधान्याभ्यां विशेषः । तस्मादूहोपोद्घाततयेहैव चिन्त्यत इत्यपुनरुक्तमिति ।

अत्र प्राचीनैः पूर्वपक्षे युक्तिरुक्ता **यदि** ऋगक्षराभिव्यक्तिरूपसंस्कारकर्म साम ततस्तस्याः कर्मकाल एवोपयोगात्, अकर्मकाले हस्तेनोपाकृत्य स्वाध्यायमधीयीतेति वचनाददृष्टार्थः **तदा** बहिरसंस्कृतानां कर्मकाले पुनस्संस्कारोऽनर्थकः । यदि तूच्येत अकर्मकाले दृष्टार्थः प्रयोगः कर्मकाले तु संस्कारकत्वं तदाऽर्धवैशसम् । तस्मात् प्रधानकर्म साम, बहिः प्रयोगः फलार्थः क्रतुमध्ये तु क्रतोः आरादुपकारक इति । अस्याश्च युक्तेः इतरमन्त्रेष्वपि साधारण्यात् तेषामपि

सत्यपि क्रमप्रकरणाभ्यां ऋचां स्तोत्राङ्गत्वेन विनियोगे साम्नामपि तत एव स्तोत्राङ्गत्वोपपत्तेर्न तावत्परस्परं गुणप्रधानभावः। यदि तु योग्यतारूपं लिङ्गं पुरस्क्रियते ततस्स्तोभाक्षरवदृगक्षराणामपि गीतिकालपरिच्छेदकत्वयोग्यत्वात् सामाङ्गत्वम्। न च साम्नामपि ऋगक्षराभिव्यञ्जकत्वलिङ्गेन ऋगङ्गता, उभयथोपपत्तौ 'ऋच्यध्यूढं साम गायति, यद्योन्यां गायति तदुत्तरयोर्गायति, कवतीषु रथन्तरं गायति, इत्यादौ सप्तमीश्रुत्या ऋचां सामाङ्गत्वप्रतीतेः। संयुक्ताक्षरस्यैव गुणाभिधानरूपस्तोत्रजनकत्वेन विश्लिष्टाक्षराभिव्यञ्जकसाम्नः प्रयोजनविरोधितयाऽभिव्यञ्जकत्वानुपपत्तेश्च। अत एव प्रयाजशेषन्यायेन सप्तम्याः प्राधान्यलक्षणेत्यप्यपास्तम्। निषादस्थपत्यधिकरणन्यायविरोधेन[1] प्राचीनप्रयाजशेषन्यायस्यापभ्रंशितत्वात्[2]। एवं च स्तोत्राङ्गतया ऋचां पृथगुच्चारणं कृत्वा सामाधारतया पुनः कार्यम्॥

---

क्रतुप्रयोगमन्तः स्मारकत्वानुपपत्त्या अधिकरणविषयत्वापत्तेः नासाधारण्येन एतत्पूर्वपक्षसाधकत्वमिति तामुपेक्ष्य पूर्वपक्षयुक्तिं दर्शयति—सत्यपीति। सप्तमीश्रुत्येति। भाष्याद्युपपादितं रथन्तरं गायतीत्यादिविधिषु रथन्तरादिपदोत्तरद्वितीयाविभक्त्या साम्नां प्राधान्यं यज्ञायज्ञीयेन स्तुवीतेत्यादौ तृतीयानिर्देशान्न सम्भवतीति तदुपेक्ष्य ऋचामेवाङ्गत्वं कथयितुं सप्तमीश्रुत्येत्युक्तम्। तथा च यत्र 'प्रयाजशेषेण हवींष्यभिघारयती'त्यादौ सत्यपि द्वितीयाश्रवणे सप्तम्यर्थलक्षणापूर्वकं तृतीयाया अपि लक्षणा द्वितीयार्था स्वीकृता, तर्हि सुतरां श्रूयमाणसप्तम्यनुरोधेन ऋचां गुणत्वे सिद्धे क्वचित् सामवाचकपदे तृतीया लक्षणया द्वितीयार्थपरेति शक्यत एव वक्तुमिति भावः। ननु प्रयाजशेषवाक्ये दृष्टार्थत्वानुरोधेन लक्षणाद्वयाङ्गीकारवत् इहापि प्रकृतऋचां सामाङ्गत्वेऽदृष्टार्थत्वापत्तेः दृष्टार्थतालाभाय सप्तम्या एव द्वितीयार्थलक्षणाङ्गीकारो युक्त इत्याशङ्कां निरसितुं दृष्टप्रयोजनासम्भवमुपपादयति—संयुक्ताक्षरस्यैवेति। प्रयोजनं गुणाभिधानं तद्विरोधितयेत्यर्थः। अस्तु वा कथञ्चित् दृष्टार्थत्वं, तथापि तदनुरोधेन लक्षणाङ्गीकरणं प्राचां प्रयाजशेषवाक्य एवायुक्तमिति चतुर्थाध्यायोक्तं स्मारयति— निषादस्थपतीति। पूर्वपक्षे फलभेदं दर्शयति —एवञ्चेति। . वस्तुतस्तु पूर्वपक्षेऽपि साम्नामाधारभूतर्गपेक्षायां क्रमप्रकरणपठितर्चामेवाधारत्वस्य सिद्धान्तेऽपि वक्तुं शक्यत्वात्, ऋचामपि स्तोत्राङ्गत्वं सामाधारद्वारैव शक्यत एव वक्तुम्। अत एव ऋचां प्रगीतमन्त्रसाध्यगुणाभिधानरूपस्तोत्राङ्गतापि पूर्वपक्षे समाहिता भवति। तथा च सामाधारत्वेनैव सकृत्पठितानामृचामानुषङ्गिकस्तोत्राङ्गत्वनिर्वाहे न पुनः पाठप्राप्तिः। इयांस्तु

---

1. B. न्यायेन

2 B. & C. अपहस्तितत्वाच्च

**किञ्चैवं क्रमप्रकरणसहकृतलिङ्गेनैव साम्नः ऋगक्षराभिव्यक्तिद्वारा स्तोत्रोपयोगे 'यज्ञायज्ञीयेन स्तुवीत, बृहत् पृष्ठं भवति, रथन्तरं पृष्ठं भवति' इत्यादिस्तोत्रे विनियोगवैयर्थ्यम्। अतश्च वैयर्थ्यपरिहारार्थमप्यारादुपकारकतया साम्नां स्तोत्राङ्गत्वम्। न चैवं करणत्वनिर्देशानुपपत्तिः; आरादुपकारकस्यापि बृहस्पतिसववदपूर्वद्वारा स्तोत्रोपकारं प्रति करणत्वोपपत्तेः। ऋचां तु सामाङ्गभूतानामपि पृथगुच्चारणाभावेऽप्यानुषङ्गिकस्तोत्रोपकारकत्वमित्यपि[1] सुवचमिति प्राप्ते—**

**स्तोत्रशब्दस्य याज्ञिकवृद्धव्यवहारेण प्रगीतमन्त्रसाध्यगुणाभिधानवाचित्वावगतेः इतरथा शास्त्रापेक्षया स्तोत्रस्य भेदानुपपत्तेरवश्यं गानविश्लिष्टाक्षरवृत्तिसंश्लेषज्ञानजन्यगुणाभिधानस्यैव स्तोत्रत्वावसायात्, तादृशस्तोत्रस्य च गानाभिव्यक्ताक्षरसाध्यत्वेन गानं विनाऽनुपपत्तेः युक्तमेव साम्नो ऋगक्षराभिव्यक्तिद्वारा स्तोत्रसाधनत्वमिति, क्रमप्रकरणसहकृतलिङ्गेनैव ऋचां स्तोत्राङ्गत्वमिव साम्नामपि ऋगक्षराभिव्यक्त्यर्थत्वम्।**

---

विशेषस्तत्र, यत् सामाधारताद्वारा स्तोत्राङ्गभूतानामप्यृचां पूर्वपक्षे न प्राधान्यं; किन्तु गुणत्वमेव। तत्फलन्तु पूर्वलिखिततन्त्ररत्नग्रन्थात् स्पष्टमेवेति पूर्वपक्षान्ते पूज्यपादैरेव व्यक्तीकरिष्यते। गुणाभिधानरूपप्रयोजनविरोधितायाः पूर्वोक्तायाः परिहारस्तु सिद्धान्त इवोपपादनीयः। ननु साम्नो दृष्टार्थत्वाभावे किमनुरोधेन यज्ञायज्ञीयेन स्तुवीतेत्यादिविधिगततृतीयायाः प्राधान्यलक्षकत्वम्?। तदभावे वा कथं करणत्वनिर्देशोपपत्तिरित्याशङ्क्य परिहरति—**न चेति**। यथा बृहस्पतिसवेन यजेतेति तृतीया बृहस्पतिसवेन स्वापूर्वद्वारा वाजपेयोपकारं प्रति करणत्वादुपपन्नः, एवमृगधिरूढेन साम्ना स्वापूर्वद्वारा स्तोत्रोपकारं भावयेदिति वाक्यार्थवर्णने स्वापूर्वद्वारा स्तोत्रोपकारं प्रति करणत्वादुपपन्नैव तृतीयेति भावः। **संश्लेषज्ञानेति**। एतेन संश्लिष्टाक्षराणामेव गुणाभिधानरूपस्तोत्रजनकत्वेन विश्लिष्टाक्षराभिव्यञ्जकसाम्नः प्रयोजनविरोधितया अभिव्यञ्जकत्वानुपपत्तेरिति पूर्वपक्ष्युक्तं निरस्तं वेदितव्यम्। संश्लिष्टाक्षराणामेव गुणाभिधानजनकत्वेऽपि गानजन्यविश्लेषयुक्ताक्षरजन्यगुणाभिधानस्यैव स्तोत्रत्वेन गानजन्यविश्लेषस्य स्मारकविधयोपयोगसम्भवेन प्रयोजनविरोधित्वाभावादिति भावः। संश्लेषज्ञानमितिमूले ज्ञानपदेन स्मरणात्मकं तद्गृह्यते।

**यत्तु** प्रकाशकारैः प्रत्यक्षविधिनैवोत्तरार्थत्वात् लिङ्गकल्प्यविधिकल्पनाप्रतिबन्धेन योन्यर्थत्वं बाध्येत, तत्प्रतिप्रसवार्थमृच्यध्यूढमित्यर्थवान् विधिरित्युक्तम्; तत् तदा सिध्येत्, यद्युत्तराधिकरणत्वस्य योन्यधिकरणसामोद्देशेन विधौ योन्यधिकरणत्वबाधः प्राप्नुयात्, नत्वेतदस्ति

---

1. C. adds वा.

अत एव ऋगक्षराभिव्यक्त्यर्थस्यैव साम्न आनुषङ्गिकतया ऋगाधारत्वस्यापि प्राप्तेः 'ऋच्यध्यूढं साम गायति' इत्यनुवादः। आवश्यकं चास्यानुवादकत्वं तत्तत्साम्नां तत्तदृगाधारत्वस्य पाठादिनैव प्राप्तेः[1] ऋचस्सामाङ्गत्ववादिनोऽपि। 'यद्योन्यां गायति तदुत्तरयोः' इत्यादौ तु सप्तम्या प्राधान्यलक्षणा, अन्यथा अतिदेशानुपपत्तेः। न ह्यत्रोत्तरयोस्सामाधारत्वविधिस्सम्भवति। गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात्। 'एकं साम तृचे क्रियते' इत्यनेन तृचाधात्वस्य भवन्मते विधानेन ऋक्त्रयस्य विकल्पानुपपत्तेश्च। 'एकं साम' इत्यनेन तृचाधारत्वसिद्धेः पाठादिना च विवक्षितऋक्प्राप्त्युपपत्तेः 'यद्योन्यां' इत्यस्य वैयर्थ्यापत्तेश्च। अतोऽतिदेश एवानेनोत्तरयोर्विधेय इति तयोः प्राधान्यसिद्ध्यर्थं लक्षणाऽऽवश्यकी।

एतेन ऋचामुक्तवचनैस्सामाङ्गत्वेऽप्यानुषङ्गिकया अक्षराभिव्यक्तेरपि जायमानत्वात् सामाद्ययैव स्तोत्रपदार्थनिर्वाहोपपत्तेर्न साम्नां ऋचं प्रत्यङ्गत्वमिति परास्तम्। ऋगङ्गत्वाभावे साम्न ऋगन्तरेऽतिदेशानुपपत्तेः। अत ऋचां प्राधान्यादुत्तरावर्णवशेन साम्नोऽन्यथाभावात्मकः ऊहोऽपि वक्ष्यमाणो नानुपपन्नः ॥ २ ॥

---

इत्यभिप्रायेण दूषयितुं यद्योन्यामिति वाक्यतात्पर्यं दर्शयति—**यद्योन्यां गायतीति**। अन्याय्यत्वादिति। यद्यप्युत्तरयोः सामाधारत्वविधौ तद्बलादेव....गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वन्यायाबाधेनापि 'अगारे गावो वास्यन्ता'मित्यत्रेव प्राधान्येऽपि सप्तम्युपपत्तेः न तद्बाधफलोऽधिकरणत्वार्थादरो युक्त इति भावः। ननु क्रमप्रकरणसहकृतलिङ्गेन साम्नामृगर्थत्वेन विनियोगेऽपि ऋचां तिसृणामेकार्थत्वेन प्राप्तविकल्पपरिहारायोत्तराधारत्वविधिः आवश्यक इत्यत आह—**एकं सामेति**। **अतोऽतिदेश एवेति**। ततश्च योनिसंस्कारकत्वेन सतस्साम्नः अनेन वाक्येनोत्तरासंस्कारत्वेन अतिदेशे सति उत्तरासंस्कारार्थत्वेन योनिसंस्कारकत्वस्य बाधाप्रसक्तौ प्रतिप्रसवानपेक्षणात् न तदर्थं ऋच्यध्यूढमित्यस्य विधित्वमावश्यकमित्याशयः। **अतिदेशानुपपत्तेरिति**। अत्र चातिदेशानुपपत्तिः साम्नां न प्राधान्यबाधिका इष्टापत्त्या तत्परिहारात्। अपि तु अदृष्टार्थत्वापत्तिरेव। ततश्च दृष्टविधया साम्नामृगङ्गत्वोपपत्तौ न प्राधान्यं युक्तमित्येव न्यायशरीरमिति ध्येयम्। अस्य प्राधान्यसाधनस्योहोपोद्घाततां दर्शयति—**अतो ऋचामिति**। अत्र च पूर्वपक्षे उपपादितसामविनियोजकविधिवैयर्थ्यन्तु स्तोभातिदेशाधिकरणे परिहरिष्यते।

---

1. B ऋचः सामगतत्वलोपेऽपि

(३)—तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥ शब्दार्थत्वाद्विकारस्य ॥ १५ ॥ दर्शयति च ॥ १६ ॥ वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिस्स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥ तथा चान्यार्थदर्शनम् ॥ १८ ॥ अनवानोपदेशश्च तद्वत् ॥ १९ ॥ अभ्यासेनेतरश्रुतिः ॥ २० ॥

तच्च साम योन्यामुत्पन्नमप्युत्तरयोरतिदिष्टत्वात् तृचे गेयमित्यविवादमेव। तत्रापि च यद्यपि ऋचां प्रधानत्वात् प्रतिप्रधानं गुणवृत्तेन्र्याय्यत्वात् प्रत्यृचं परिसमापनीयमित्यपि सिद्धमेव। तथाऽपि तदेवाक्षिप्य समाधीयते। 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनेन हि न तावदृगुद्देशेन सामविधिः, तस्य लिङ्गादेव प्राप्तेः। नापि त्रित्वविशिष्टर्गुद्देशेन, विशिष्टोद्देशे वाक्यभेदात्। नापि स्तोत्रीयर्गुद्देशेन त्रित्वविधिः, एकप्रसरताभङ्गापत्तेः। तत्तत्स्तोत्रेषु स्तोमान्तरविधानेन त्रित्वविध्यनुपपत्तेश्च।

अत एव स्तोत्रोद्देशेनापि न त्रित्वस्य ऋक्परिच्छेदद्वारा साक्षाद्वा विधिः; अस्य ज्योतिष्टोमप्रकरणे समाम्नानेऽपि स्तोत्रविशेषप्रकरणाभावात् प्रकरणेन स्तोत्रस्योद्देश्यत्वानुपपत्तेश्च। स्तोत्रस्य सामविशेषणत्वेनोपादानात् स्तोत्रीयपदेनापि तत्प्रतिपादनानुपपत्तेश्च। त्रित्वस्य ऋग्विशेषणत्वेनोपात्तस्य स्तोत्रोद्देशेन विध्यनुपपत्तेश्च। स्तोत्रोद्देशेन त्रित्वविशिष्टर्ग्विधानं तु ऋचां प्रकरणादेव स्तोत्रे प्राप्तत्वात्पूर्वोक्तदूषणगणापत्तेश्चानुपपन्नम्। अतस्सप्तमीबलात् त्रित्वविशिष्टर्चामेव सामोद्देशेन विधिः। उद्देश्यसमर्पकं च स्तोत्रीयपदम्। स्तोत्रीयं च योग्यताबलात् सामैवेति सामेत्यनुवादः। सामपदमेव वा तथाऽस्तु। अवभृथाद्यङ्गसामस्वपि च तृचाधारत्वविधिरस्तु। स्तोत्रीयपदं चोपलक्षणम्। सर्वथा त्रित्वविशिष्टानां ऋचां साम प्रति गुणत्वात् गुणानु-

---

तृचेस्याच्छ्रुतिनिर्देशात्।

तस्य लिङ्गादेवेति। साम्नो ऋगक्षराभिव्यञ्जकत्वरूपसामर्थ्यादेव ऋक्संस्कारकत्वप्राप्तेरित्यर्थः। सर्वथा त्रित्वविशिष्टानामिति। वस्तुतस्तु पूर्वाधिकरणे ऋचां प्राधान्य साम्नः संस्कारकत्वादङ्गत्वमिति सिद्धस्य अर्थस्याऽऽक्षेपकारणं किं तृचे इति सप्तम्यनुपपत्तिः; उत तृचस्योद्देश्यत्वे वाक्यभेदापत्तिर्वा? नोभयथापि युक्तमेतत्: सप्तम्याः प्राधान्यलक्षकत्वेऽपि अर्थप्राप्तकरणत्वानुवादत्वोपपत्तौ अनुपपन्नत्वाभावात्। त्रित्वविशिष्टर्चां विधौ विशिष्टस्य व्युत्पन्नत्वेन विधेयानेकत्वनिमित्त-वाक्यभेदस्य तव मते परिहार्यत्वस्येव विशिष्टोद्देशकृतवाक्यभेदस्यापि परिहार्यत्वस्य ममापि वक्तुं शक्यत्वात्। अतो ऋचां गुणत्वात् साम्नश्च प्राधान्यात् गुणानुरोधेन प्रधानाऽऽ-

**रोधेन प्रधानावृत्तेरन्याय्यत्वात् व्यासज्य[1] गेयम्।** एवं च 'यद्योन्यां' **इति वाक्यं नाति-देशविधायकं अपि तु सामसाधारण्यानुवादस्त्रित्वापेक्षितऋग्विशेषसमर्पकमिति प्राप्ते—**

---

वृत्तेरन्याय्यत्वेन न प्रत्येकं तिसृषु ऋक्षु गानम्, अपि तु व्यासज्यैव गानमिति पूर्वपक्षोपपादन-मयुक्तमेव। आक्षेपकहेतोरधिकस्याभावात्। किन्तु प्रतिप्रधानगुणावृत्तिन्यायसिद्धं प्रत्येकमेव गानं वचनेन न्यायबाधं मन्वान आक्षिपतीति भाष्यतन्त्ररत्नाद्युपपादितदिशा पूर्वपक्षो—पपादनं युक्तम्। एवञ्च 'तृचे स्याच्छ्रुतिनिर्देशादि'ति सूत्रे श्रुतिपदमपि समर्थितं भवति। नहि पूर्वमुपपादिते सप्तम्याः प्राधान्यलक्षकत्वे सति सप्तमीनिर्देशादृचां गुणत्वेन तृचे व्यासज्य गानमिति पूर्वपक्ष्याशङ्का युज्यते। अतः साम क्रियते इत्युपात्तसामनिर्वृत्तिं प्रत्यङ्गत्वेव त्रित्वं सामसाधनऋक्परिच्छेदद्वारा विधीयते। ऋग्गतत्रित्वसङ्ख्यया सामनिर्वृत्तिं भावयेदिति हि वाक्यार्थः यदा च प्रत्यृचं गानसमाप्तिः तदा सा न ऋग्गतत्रित्वसङ्ख्यया सम्पादिता भवति। किन्तु ऋग्गतैकत्वसङ्ख्यया सम्पादिता, सा च नाङ्गीभूता; तथा चाङ्गभूतत्रित्वसङ्ख्यासम्पादना-र्थमेकैकस्यामृचि अंशेनांशेन साम गेयमिति व्यासज्य गानम्। यद्यपि ऋचां प्राधान्येन सामसाधनत्वाभावात् तद्वृत्तिसङ्ख्यायाः सामाङ्गत्वमनुपपन्नं तथापि प्रधानभूतानामप्यृचां आर्थिकं सामसाधनत्वमस्त्येवेति तद्गतस्य युक्तमेव सामाङ्गत्वम्। प्रत्यृचं गानपक्षे तु करोतेरभ्यासे लक्षणापत्तिः अतो लक्षणापरिहाराय क्रियत इति निर्वृत्त्यर्थककरोतिश्रुत्या प्रधानानुरोधेन गुणाऽऽवृत्तिन्यायस्य बाधात् व्यासज्य गानमित्येव पूर्वपक्षः पूर्वाक्षेपेण युक्तः। **एतेन** तृचे इति तृचगताधारताप्रतिपादकसप्तमीश्रुतिबलात् तृचे व्यासज्य गानमिति सप्तमीश्रुतिप्रदर्शनं 'तदुत्तरयोर्गायती'ति तन्त्ररत्नकारीयमप्ययुक्तमेव। पूर्वोक्तरीत्या पूर्वाक्षेपकत्वाभावादिति ध्येयम्।

प्रकृतमनुसरामः। ननु यद्योन्यां तदुत्तरयोर्गायतीति योनौ कृत्स्नगानानुवादावगतेः तद्विरोधे कथं व्यासज्य गानशङ्केत्यत आह—**एवञ्च यद्योन्यामिति। अयमर्थः**—नेदमतिदेशकं वचनं योनौ कृत्स्नस्य प्रापकाभावात्। अतो यदातिथ्यायां बर्हिरित्यत्र यथा एकबर्हिः आति-थ्योपसदग्नीषोमीयेष्विति वाक्यार्थः, तथाऽत्रापि योन्यादितिसृष्वेकं सामेति। इयांस्तु विशेषः। यत्तत्र विधिः, इह तु सामाङ्गतृचापेक्षितोत्तरानियममात्रम्। एवं रथन्तरमुत्तरयोर्गायतीत्यत्रापि एकं सामेत्यनेन व्यासज्य गीतिसाधकेन तात्पर्यग्रहादुत्तरयोरपीत्यपिशब्दाध्याहारो ज्ञेय इति।

---

1. B. adds अवयवशः

सामाधारतया तृचविधौ पाठादेव योनिक्रमप्राप्तेरुत्तरयोरपि उत्तराग्रन्थपठितयोः क्रमप्रकरणादिना तत्तत्सामाधारत्वेन प्राप्तिसम्भवात् इतरथा तत्तत्सामाधारत्वेन तत्तदुत्तराप्राप्तेस्तवाप्यसम्भवापत्तेः 'यद्योन्यां गायति तदुत्तरयोर्गायति' इत्यस्य वैयर्थ्यापत्तिः। अतोऽवश्यं क्रमप्रकरणादिना तत्तत्स्तोत्राङ्गतया प्राप्तानां योन्युत्तरादिरूपाणां ऋचां स्तोमविधिवशेन समुच्चयावगतावुत्तरयोरपि स्तोत्राङ्गत्वनिर्वाहार्थं यत्किञ्चित्सामप्राप्तौ 'यद्योन्यां' इत्यतिदेशेन योनिसाम नियम्यते। यथाप्राप्तस्यैव च नियम इति साम्नो ऋगक्षराभिव्यक्त्यर्थत्वेनैव प्राप्तत्वात् ऋचां प्राधान्यावगतेः प्रतिप्रधानं गुणावृत्तिन्यायेन प्रत्येकमेव गेयम्।

एवं च—'एकं साम तृचे क्रियते' इत्यनेन तृचोद्देशेन स्तोत्रीयविधानादवभृथाद्यङ्गभूतसाम्नां चयनाद्यङ्गभूतषाडहिकसाम्नां च नोत्तरासु गानम्। अत्र हि त्रित्वस्य ऋच्यन्वयव्युत्पत्तेर्न विशिष्टोद्देशे वाक्यभेदः। 'यद्योन्यां' इत्यनेनोपसंहाराच्च स्तोत्रीयस्य सामरूपतासिद्धेः सामेत्यनुवादः।

वस्तुतस्तु—उत्तराणामवान्तरप्रकरणात् तत्तत्स्तोत्राङ्गत्वेनैव प्राप्तेरवभृथाद्यङ्गत्वे प्रमाणाभावात् तत्र तृचगानाप्रसक्तेः 'एकं साम' इत्यादेर्नोक्तप्रयोजनलाभः। अत एव तत्र सामविध्यन्यथानुपपत्त्या तदाश्रययोनिमात्रस्यैव विनियोगात् तज्जन्यगुणाभिधानस्यैवावभृथादावुपयोगः। किन्तु तृचोद्देशेन सामैकत्वविधिः, सामेति विशिष्टकारकविधानेऽपि सामैकत्वे विधेस्तात्पर्यात्। एकपदं स्तोत्रीयपदं चानुवाद एव।

---

अत्र प्राचीनैः सिद्धान्तोपपादनव्याजेन अत्र वाक्यार्थ उपवर्णितः। न केवलमत्र साम्नस्तृचसम्बन्धो निर्दिश्यते अपि तु स्तोत्रीयमिति पदात् स्तोत्रसम्बन्धिन एव। 'साम्ना स्तुवीत' 'यज्ञायज्ञीयेन स्तुवीत' इत्यादिवचोबोधितापि स्तोत्राङ्गता स्वतः स्तोत्रकरणे सामर्थ्याभावादयोग्या स्तोत्रसाधनऋक्संस्कारद्वारैव निर्वहणीया। स्तोत्रसाधनता च ऋचां यत्र वाक्यपरिसमाप्तिस्तावतामेव, न तु वाक्यसमुदायरूपतृचानाम्। ततश्च स्तोत्रसाधनऋक्संस्कारसामोद्देशेन त्रित्वं स्तोत्रसाधनऋक्परिछेदद्वारैव विधेयमित्यर्थात् स्तोत्राङ्गत्वेनैव स्तोत्राङ्गऋक्परिच्छेदद्वारा त्रित्वविधानं फलतीति तिसृणां ऋचां स्तोत्राङ्गत्वेन विधाने सिद्धे तत्र प्रधानानुरोधेन गुणावृत्तिन्यायलभ्यं यत् तिसृषु प्राप्तं साम तदेव तृचे साम क्रियते इत्यनेनानूद्यते। अत एवानुवादत्वात् करोतावभ्यासलक्षणायामपि न दोष इति। तदिदं प्राचां वाक्यार्थवर्णनं पूर्वपक्षारम्भोपपादितैकप्रसरताभङ्गवाक्यभेदादिदोषग्रस्तत्वात्, पाठादिनैव स्तोत्रसाधनऋग्गतत्रित्वप्राप्तेरुपपादितत्वात्, अनुवादमात्रत्वे चैतद्वाक्यवैयर्थ्यापत्तेः अयुक्तमित्यभिप्रेत्य एकं सामेति वाक्यप्रयोजनं दर्शयन् वाक्यार्थमुपवर्णयति—**एवञ्चैकं सामेति। नोत्तरासु गानमिति।** यतः स्तोत्राङ्गसाम्न एव तृचसंस्कारकत्वनियमः अत एव स्तोत्राङ्गभिन्नसाम्नां नोत्तरासु गाननियम इति भावः। **विशिष्टकारकेति।** एकत्वविशिष्टसामरूप-

सामैकत्वविधिप्रयोजनं च यत्र विकृताग्निष्टुदादौ 'आग्नेयीषु स्तुवते' इति प्राकृतयोऽप्युत्तराबाधेन ऋगन्तरविधानं तासां च न विकृतिप्रकरणे पाठः अपि तु दाशतयीभ्यः आनयनं तत्र तु स्तोमसङ्ख्यानुरोधेनानीतासु ऋक्षु प्राकृतसामपाठे अनियमेन द्वित्रितावत्सङ्ख्याकसाम्नां त्रिणवादिसङ्ख्याकऋक्षु पाठप्रसक्तौ तृच एवैकैकसाम्नां पाठः, ऋगन्तरेषु माध्यंदिनादिपवमाने सामान्तरागम इति ॥ ३ ॥

---

## (४)—तदभ्यासस्समासु स्यात् ॥ २१ ॥ लिङ्गदर्शनाच्च ॥ २२ ॥

तिसृषु प्रत्येकं गीयमानमेकं साम समास्वेव गेयं न विषमासु, न्यूनासु गाने सामैकदेशस्य लोपाख्यसंशरापत्तेः। अधिकपरिमाणासु गाने ऋक्शेषे सामादर्शनरूपविलेशापत्तौ तत्र सामैकदेशस्याऽऽवृत्त्यापत्तेः। तस्मात् समासु गानम्। इदं चाग्निष्टुदादिविषयमेव। तत्रागम्यमानानां ऋचां सामपरिमितछन्दस्कानामेवानयनात्। न त्वन्यत्र, समयोर्विषमयोर्वा उत्तराग्रन्थपठितोत्तरयोः योनेश्च क्रमप्रकरणादिविनियुक्त[1] त्वेन त्यागायोगात् तत्र साम्यवैषम्यचिन्तानुपपत्तेः ॥ ४ ॥

---

कारकविधानेऽपीत्यर्थः। **समान्तरागम इति**। यथाच विवृद्धस्तोमके क्रतौ बहिष्पवमानादिस्तोत्रेषु साम्नामभ्यासो ऋचामागमः, उत्तरपवमानद्वये साम्नामागमः ऋचामभ्यासः तथोपपादयिष्यते।

---

**तदभ्यासः समासु स्यात्।**

पूर्वं तृचे गानं न व्यासज्य अपि तु तृचप्राधान्यात् प्रतिप्रधानावृत्तिन्यायेन प्रत्येकमिति सिद्धम्। तच्च सम्पादनं क्वचित् पाठात्, क्वचिदभ्यासात् क्वचिदागमात् क्वचित्पाठेऽपि प्रग्रथनेनाभ्यासादिति तत्र तत्र वक्ष्यते। तत्र संशरविलेशपरिहाराय समास्वेव गानमेकस्य साम्न इति प्राचीनैर्दर्शिते सिद्धान्ते विशेषं दर्शयति—**इदञ्चेत्यादिना**। **तत्रागम्यमानानामिति** अग्निष्टुति 'तस्य वायव्यास्वेकविंश'मिति वाक्येन वायव्यर्चां विहितानां दाशतयीभ्यः आनयनं अपूर्वे च यागे एतस्यैव रेवतीष्विति वाक्येन रेवतीनां ऋचां विहितानां तत एवानयनमित्यर्थः। **साम्यवैषम्यचिन्तेति**। अत एव तादृशस्थले संशरविलेशौ सोढ्वापि विषमास्वेव गानमनुपदमेव साधयिष्यते।

---

1. B. विनियुक्तत्वे

(५)—नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥ ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

'यद्योन्यां गायति तदुत्तरयोः' इत्यत्रोत्तराशब्देन योन्युत्तरयोरुत्तराग्रन्थपठितयोश्चोत्तरयोर्ग्रहणं उत उत्तराग्रन्थपठितयोरेवेति सन्देहे उत्तराशब्दस्य 'प्रस्तरमुत्तरं बर्हिषस्सादयति, तूष्णीमुत्तरा दोहयति' इत्यादौ सम्बन्धिशब्दत्वदर्शनात् यैव योनेः परतः पठिता सैवोत्तरा। ततश्च योनिग्रन्थे रथन्तरयोनेः परतो बृहद्योनेः पाठात् तस्यां रथन्तरस्य गानं उत्तराग्रन्थे च रथन्तरयोनेः परतो 'न त्वा वामन्यो दिव्यो न पार्थिवः' इत्यस्याः पाठात् तस्यामपि विकल्पेनेति प्राप्ते—

बृहद्योनेः रथन्तरयोन्युत्तरत्वेऽपि तस्यामुत्तराशब्दस्य वैदिकैरप्रयुज्यमानत्वात् उत्तराशब्दोऽयमुत्तराग्रन्थपठितोत्तरासु वैदिकप्रयोगादसम्बन्धिकतयैव रूढः। ततश्च सम्बन्धिशब्दस्य प्रतिसम्बन्धिप्रतिसन्धानसापेक्षत्वेन विलम्बेनार्थोपस्थापकत्वादन्यत्र सम्बन्धिशब्दत्वेऽपि प्रकृते असम्बन्धिशब्द एवायम्। ततश्चोत्तराग्रन्थपठितोत्तराणामेव झडित्युपस्थापक इति तासामेव ग्रहणम्। प्रकरणक्रमाभ्यां [1] चोत्तराग्रन्थपठितानामुत्तराणां तत्तत्स्तोत्राङ्गत्वप्रतीतेरिदमेव युक्तम्॥

---

नैमित्तिकन्तूत्तरात्वम्।

विकल्पेनेति। यद्यपि 'यद्योन्यामि'ति वाक्ये उत्तरापदेन योन्यपेक्षया द्वितीयतृतीयर्चौ पठिते। तयोरेव ग्रहणं वाक्यादायाति। उत्तराग्रन्थपठितयोस्तु तयोः प्रकरणाद्ग्रहणम्; वाक्याच्च प्रकरणं दुर्बलमिति नोत्तराग्रन्थाधीतयोर्ग्रहणमायाति, तथापि सामगानां रथन्तरादिसामयोनीनामेव पाठात्मक एको ग्रन्थः छन्दोनामकः। तथा एकस्य साम्नो योनिपाठानन्तरमयोनिभूतऋग्द्वयपाठः, क्वचिदेकऋक्पाठोऽपि ततः सामान्तरयोनिपाठः इत्येवं योनितदुत्तरपाठात्मक एको ग्रन्थः। स एवोत्तराग्रन्थ इत्युच्यते। तत्र यथैव वेदे योन्युत्तरद्वितीयतृतीयर्चोः ग्रहणे यद्योन्यामिति वाक्यप्रवृत्तिः, तथैवोत्तराग्रन्थेऽपि साम्नां योनिं पठित्वैव विभागेनोत्तराणां पाठात्, तदुत्तरपठितर्चामपि योन्युत्तरत्वाविशेषात् तद्ग्रहणेऽपि तद्वाक्यप्रवृत्तिरस्त्येवेत्युभयत्रापि वाक्यादेव ग्रहणात् रथन्तरसाम्ना उत्तरयोर्गाने क्रियमाणे यद्योन्यामिति वाक्ये द्विविधोत्तरयोरपि ग्रहणेनोत्तरद्वये—[ विकल्पेन पाठापत्तिः ] रथन्तरयोन्युत्तरे चाग्रे लिखिष्येते।

---

1. B भ्यां चोत्तर

एवं वा

अत्र चाग्रेऽतिजगत्यादिछन्दस्कर्चां समानछन्दस्कत्वादिविचारस्य करिष्यमाणत्वात् तेषां छन्दसामक्षरसङ्ख्याज्ञानं विना विचारायोगात् तदुपोद्घातत्वेन प्रकृतोपयुक्तानि छन्दांसि सौकर्यार्थमुच्यन्ते। अत्र गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यष्टि—अत्यष्टिधृत्यतिधृति-कृतिप्रकृतिकृतिविकृतिसङ्कृति अभिकृत्युत्कृतिसंज्ञानि विंशतिछन्दांसि। तत्र प्रथमं गायत्रीछन्दः, तदपेक्षया उत्तराण्युष्णिगादीनि उत्कृतिपर्यन्तानि तानि तान्युत्तरोत्तरछन्दांसि पूर्वपूर्वापेक्षया चतुरक्षराधिकानि ज्ञेयानि।

तथा च त्रिपदा गायत्री चतुर्विंशत्यक्षरा; तदपेक्षया उष्णिक् चतुरक्षराधिका सती अष्टाविंशत्यक्षरा भवति। उष्णिगपेक्षया चतुरक्षराधिकाऽनुष्टुप् द्वात्रिंशदक्षरा भवति। तदपेक्षया चतुरक्षराधिका बृहती षट्त्रिंशदक्षरा भवति। एवमग्रेप्यूह्यम्। पूर्वोक्तानाञ्चैतेषां गायत्र्यादीनामुत्कृति-पर्यन्तानां छन्दसामेकेनाक्षरेण न्यूनेन निचृदिति संज्ञान्तरम्। एकेनाधिकेनाक्षरेण भुरिगिति च संज्ञान्तरं भवति। यथा—चतुर्विंशत्यक्षरा गायत्री सा एकेनाक्षरेणोना सती त्रयोविंशाक्षरा भवति। तदा निचृद्गायत्रीति व्यपदिश्यते। सैव एकाक्षराधिका सती पञ्चविंशत्यक्षरा भुरिग्गायत्रीछन्द इति व्यपदिश्यते। एवं द्वाभ्यामक्षराभ्यां न्यूना सती द्वाविंशत्यक्षरा तदा विराड्गायत्री भवति। एवं द्वाभ्यामक्षराभ्यामधिका सती षड्विंशत्यक्षरा भवति तदा स्वराड्गायत्रीति व्यपदिश्यते। एवमुष्णिगादिष्वपि छन्दस्सु निचृदुष्णिगादिसंज्ञा द्रष्टव्याः। ततश्चैतादृशस्थले संज्ञान्तरे विद्यमानेऽपि न गायत्रीत्वादिरूपव्यापकधर्मावच्छिन्नत्वस्य हानिः। एताश्च निचृदादिसंज्ञा यत्र न्यूनाक्षरासु तत्तच्छन्दस्सु आसुत्क्षु वक्ष्यमाणव्यूहप्रकारेण पादपूरणं भवति तत्र यथावस्थित-गायत्रीत्वादीनां संभवान्न प्रवर्तन्ते, किन्तु [यत्र] व्यूहेनापि न पादपूरणं तत्रैव ता द्रष्टव्याः। एवं यत्र त्रिभिरक्षरैरप्यूनत्वं तत्र गायत्री—विराड्गायत्रीत्यादि व्यपदेशः। एवञ्च यत्र छन्दस्सु न्यूनाक्षरता तत्र पादपूरणार्थं 'क्षैप्रसंयोगैकाक्षरीभावाद्व्यूहेदि' ति वचनात् व्यूहेन पादपूरणम्। क्षिप्रे संहितायां भवः क्षैप्रः, संयोगो यकारसंयोगो येष्वक्षरेषु भवति तद्विश्लिष्य कृत्वा पठनीयम्। तथा द्वयोरक्षरयोर्यत्रैकमक्षरं 'एकः पूर्वपरयो'रित्यधिकृत्य गुणवृद्धिविधानेन द्वयोरचोरेकादेशेन कृतं तत्राप्यक्षरद्वयं कृत्वा पठनीयम्। यथा त्र्यंबकं वरेण्यमित्यादौ यकारसमानस्थानेन इकारेण व्यवायं कृत्वा त्रियंबकं वरेणियमिति पठित्वाऽक्षरद्वयपूरणम्। तथाऽन्यत्रापि द्रष्टव्यम्। एवं स्वर्विद इत्यादौ वकारसमानस्थानेनोकारेण व्यवायः कार्यः। तथा च सुवर्विद इति पठित्वा पादपूरणं ज्ञेयम्।

केचित्तु रेफलकारयोरपि सन्धौ व्यवायः कार्य इत्याहुः। प्रातिशाख्यभाष्ये तु यकारसंयोग एव व्यवायः नतु रेफलकारसंयोगेऽपीत्युक्तम्। अयञ्च यकारवकारसंयोगेषु समानस्थानैः इकारोकारस्वरैर्व्यवायस्तत्रैव भवति, यत्र स्वाभाविक एव संयोगः, यथा उदाहृतस्थले। यत्र अस्वन्तरमित्यत्र यथावामं प्रयत्यध्वरे इत्यत्र यकारसंयोगस्संहितायां यणादेशकृतः तत्र न असुवन्तरं, प्रयतियध्वरे इतिव्यूहः किन्तु यणादेशस्थानिभूतप्रकृत्यैव व्यूहः। ततश्च असु अन्तरं प्रयति अध्वरे इत्येवो [व्यू] हः कार्यः। तथा यत्रैकाक्षरीभावः तत्रप्यूहो यथा—प्रेताजयता नरइत्यत्र प्रइता इति स्थाने आद्गुण इति कृतगुणे प्रइता इति विश्लिष्य पादपूरणम्। तथा प्रैतु ब्रह्मणस्पतिरित्यत्र एत्येधत्यूठ्सु इति वृद्धेरेकादेशस्य प्रएतु ब्रह्मणस्पतिरिति व्यूहः। तथा पाहिमाऽग्ने दुश्चरितादिति 'अकस्सवर्णे दीर्घ' इत्यनेन कृतस्य दीर्घस्यैकादेशस्य मा अग्ने इति व्यूहः। एवमन्यत्राप्यूह्यम्। एवं न्यूनाक्षरेषु पादपूरणप्रकार उक्तः।

यत्र त्वधिकान्यक्षराणि तानि यस्मिन्नेव पादे भवन्ति तत्तत्पादगताक्षराधिक्यप्रयुक्तानि तत्तच्छन्दसां संज्ञान्तराणि। तानि पादगताक्षरन्यूनताप्रयुक्तानि तत्तच्छन्दसां संज्ञान्तराणि। तानि च ग्रन्थान्तरेभ्योऽवगन्तव्यानि। विस्तरभयात् प्रकृतानुपयोगाच्च नोच्यन्ते। पूर्वोक्तेन च व्यूहप्रकारेण योनिगतसाम्नः संशरविलेशपरिहारार्थं उत्तरासु न्यूनाक्षरासु अधिकाक्षरासु च समच्छन्दस्कत्वं पादपूरणञ्च तत्र तत्र स्फुटीकरिष्यते। यत्र तु द्वित्र्या [द्वित्राणि] व्यूहस्थानानि भवन्ति तत्र तु पूर्वव्यूहेनैव पादपूरणे सिद्धे वचनात् द्वितीयादौ न व्यूहेत्। यत्र तु सन्देहो जायते यथा क्वचिदष्टत्रिंशदक्षराणि भवन्ति तत्र, किमियं बृहती द्व्यधिका, अथवा पङ्क्तिर्द्व्यूनेति तत्र विकल्पः बृहती पङ्क्तिर्वेत्यादिविशेषा अन्यतोऽवगन्तव्याः। ककुभश्चोष्णिहो भेदः। उष्णिक् च त्रिपदा अष्टाविंशत्यक्षरा। तस्याः प्रथमद्वितीयपादा वष्टाक्षरौ; तृतीयस्तु द्वादशाक्षरः। यदा तु प्रथमोऽष्टाक्षरः द्वितीयो द्वादशाक्षरः तृतीयोऽष्टाक्षरः तदा सैवोष्णिक् ककुबिति संज्ञां लभते। यदापि प्रथम एकादशाक्षरः पादः द्वितीयो द्वादशाक्षरः तृतीयश्चतुरक्षरश्चेद्भवति तदा सैवोष्णिक् सप्तविंशत्यक्षरा ककुप् न्यङ्कुशिरेति संज्ञां लभते। एवं सतो बृहतीति बृहत्या भेदः बृहती च चतुष्पदा, अष्टाक्षरास्त्रयः पादाः, तृतीयो द्वादशाक्षरः यथा 'अभित्वा शूरे'त्यृचि। अस्या एव यदा त्रय एव पादाः द्वादशाक्षरास्तदेयं महाबृहती सतोबृहतीति संज्ञा भवति। अन्यत्र तु अष्टाक्षरपादपञ्चकवत्याः पङ्क्तेः यदा प्रथमतृतीयौ पादौ द्वादशाक्षरौ द्वितीयचतुर्थौ तु अष्टाक्षरौ तदा सा पङ्क्तिः सतो बृहतीत्युक्तम्। यथा नत्वावामन्येत्यृक्। पिङ्गलेन तु अस्याः सतः पङ्क्तिरिति संज्ञा

एवं वा—द्वादशाहे 'षडहगतं चतुर्थमहरेकविंशः षोडशी वैराजसामा' इत्याम्नातम्। अत्र प्रकृतिप्राप्तसर्वस्तोत्रेष्वेकविंशस्तोमष्षोडशिसंस्था पृष्ठस्तोत्रे च वैराजं साम इत्यनेक-

---

उक्ता। अस्याश्च पङ्क्तेर्यदा द्वितीयतृतीयपादौ द्वादशाक्षरौ प्रथमचतुर्थावष्टाक्षरौ तदास्य विष्टारपङ्क्तिरिति संज्ञा भवति।

तदेवं संक्षेपतः उपयुक्तमात्रनिरूपणं कृतम्। तत्र छन्दोगताश्च विशेषाः सर्वानुक्रमणीयछन्दोध्यायभाष्यादौ देवयाज्ञिकादिनिबन्धनेषु च द्रष्टव्याः। प्रस्तुतमनुसरामः।

विषयव्याप्त्यर्थं वर्णकान्तरम्—एवंवा। 'विश्वाः पृतना अभिभूतरं नरम्' इत्यस्यामृच्युत्पन्नस्य त्रैशोकसाम्नः न तदुत्तरपठितयोः बृहतीच्छन्दस्कयोः 'नेमिं नयन्ति चक्षसामेष'मित्याद्योरुत्तरयोर्गानं, संशरापत्तेः। अपि तु दाशतयीभ्योऽतिजगत्यौ द्वे आनीय तयोरेव समच्छन्दस्कयोर्गानमिति पूर्वपक्षे उपन्यस्तस्य 'अतिजगतीषु स्तुवत' इति बहुवचनलिङ्गस्य सिद्धान्ते परिहारार्थं सूत्रम्—ऐकार्थ्याच्च तदभ्यासः स्यात् इति। तद्व्याख्यापरे च एकविंशतिकृत्वः षोडशिन्यभ्यस्यमाने त्रैशोकस्य सप्तकृत्वोऽभ्यासः। तत्र अतिजगत्यामभ्यस्यमानायां 'अतिजगतीषु स्तुवन्ती'ति बहुवचनमुपपत्स्यत इति भाष्ये 'यदि षोडशिशब्दो यागपरस्तदा न तस्य द्वादशाहे एकविंशतिकृत्वोऽभ्यासः संभवति, यदि वा षोडशिस्तोत्रपरः तदा न तत्र त्रैशोकं साम येन तदभ्यासः प्रसज्येत, तस्य ब्रह्मसाम्न्याम्नानात्। अतः षोडशिशब्दार्थाऽनिश्चयादयुक्तमिव भाष्यं दृश्यते। तदर्थमेकविंशः षोडशी वैराजसामेत्युत्पत्तिवाक्यगतषोडश्येकविंशतिशब्दयोरर्थनिश्चयाय वाक्यार्थं वर्णयति—अत्र प्रकृतिप्राप्तेति। सर्वस्तोत्रेष्विति। यथैव चतुर्थाहर्व्यतिरिक्तेषु पञ्चसु अहस्सु प्रथमाहःक्रमेण त्रिवृत्पञ्चदशसप्तदशत्रिणवत्रयस्त्रिंशस्तोमकता सर्वस्तोत्रे विहिता। तथैव चतुर्थेऽहन्येकविंशस्तोमकता सर्वस्तोत्रेषु विधीयते वैराजं साम तु माहेन्द्रस्तोत्राख्ये होतुः पृष्ठ एव विधीयते। वैरूपसाम त्रिवृदेकसामा स्यादिति दशमिकषष्ठपादाधिकरणन्यायात्। तत्र हि 'उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामा' इत्येतदेवोदाहृत्य विचारितम्। वैरूपवैराजादीनामन्यपदार्थेन क्रतुना सम्बन्धावगमेऽपि साक्षात्क्रतोः सामसाध्यत्वायोगात् अवश्यं स्तोत्रद्वारकत्वावगतेः विनिगमनाविरहात् प्रतिप्रधानं गुणावृत्तेर्योग्यत्वात् एकविंशस्तोमकतावत् सर्वस्तोत्र एव निवेश इति पूर्वपक्षं प्रापय्य प्रकृतौ यदि रथन्तरसामा यदि बृहत्सामेत्यादौ बृहद्रथन्तरयोरेव बहुव्रीह्यन्तत्वनिर्देशात् अत्रापि वैरूपादीनां बृहद्रथन्तरकार्यमाहेन्द्रस्तोत्रसाधनत्वमेवेति सिद्धान्तितम्। तदभिप्रायेणोक्तं

गुणविशिष्टं कर्म विहितम्। तत्र च "त्रैशोकं नाम ब्रह्मसाम अतिजगतीषु स्तुवीत" इति ब्राह्मणाच्छंसिस्तोत्रे त्रैशोकं साम विहितं, तच्चातिजगत्यामुत्पन्नं; उत्तराग्रन्थे चोत्तरे द्वे बृहत्यौ, तत्र संशरपरिहारार्थं उत्तराग्रन्थपठितयोरप्युत्तरयोर्बाधः स्तोत्रादौ सार्थक्यमङ्गीकृत्य अतिजगत्यावेव द्वे दाशतयीभ्यः समानीय समास्वेव गानम्।

न चानीतानामङ्गत्वे प्रमाणाभावः। न्यायसहकृततृचगानविधेरेव नियामकत्वात्। न च प्रकरणेन न्यायबाधः 'अतिजगतीषु स्तुवीत' इति अतिजगतीबहुत्वविधिना न्यायस्योज्जीवनात्। न च प्राप्तस्तोत्रानुवादेन त्रैशोकातिजगतीबहुत्वयोर्विधाने वाक्यभेदः। अतिदेशप्रवृत्तेः पूर्वमस्य प्रवृत्त्या विशिष्टस्तोत्रविध्युपपत्तेः। अत एव 'यद्योन्यां' इति सामान्यवचनं सामान्तरविषयमिति प्राप्ते—

बहिष्पवमानातिरिक्तस्तोत्रे **एकविंशस्तोमानुरोधेन ऋगभ्यासस्यावश्यकत्वात् एकस्या अप्यतिजगत्यास्सप्तकृत्वः आवृत्तेर्बहुत्वस्य प्राप्ततयाऽनुवादोपपत्तेरस्य साममात्रविधिपरत्वादुत्तराग्रन्थपठितबृहतीप्रकरणानुरोधेन न्यायस्यैव बाधात् संशरमपि स्वीकृत्य बृहत्योरेव गेयम् ॥ ५ ॥**

---

**पृष्ठस्तोत्रे च वैराजं सामेति।** अनेनैव न्यायेन चतुर्थाहर्व्यतिरिक्तषडहान्तर्गतपञ्चस्वहस्सु क्रमेणाम्नातानां बृहद्रथन्तरवैरूपशाक्वररैवतानां माहेन्द्रस्तोत्राख्यपृष्ठस्तोत्र एव निवेशो द्रष्टव्यः। यतश्चात्र षोडशिसंस्थाया विधानं अत एव षोडशिन्यभ्यस्यमाने इति भाष्ये षोडशिन्यभ्यस्यमाने इति न सामानाधिकरण्येनान्वयः। किन्तु षोडशिनि क्रतौ एकविंशतिकृत्वः स्तोत्रे ऽभ्यस्यमाने इत्यन्वयो द्रष्टव्य इति भावः।

**तत्र संशरेति।** अतिजगत्यामुत्पन्नस्य बृहतीच्छन्दस्कोत्तरयोर्गाने साम्नो हिंसारूपः संशर एवापद्यते। तदर्थमतिजगत्यौ द्वे दाशतयीभ्य आनेये इत्यर्थे प्राचां ग्रन्थेषु संशरविश्लेशपरिहारायान्ये उत्पत्तिजगत्यावानेये इति वचनम्। तत्र विश्लेशशब्दो व्यर्थ इति ध्वनयितुं विश्लेशपदमुत्सृज्य केवलं संशरपदमेव प्रयुक्तं द्रष्टव्यम्। **दाशतयीभ्य इति।** दशमण्डलरूपा अवयवा अस्येत्यर्थे 'सङ्ख्याया अवयवे तयप्'इत्यनेन तयप्प्रत्ययान्तात् दशतयशब्दात् भवार्थकं अणं कृत्वा, दशतये ऋग्वेदे भवा ऋचो दाशतय्यः ताभ्यः समानीयेत्यर्थः। ननु अतिजगतीछन्दस्कोत्तरयोः दाशतयीभ्य आनयने तयोर्योन्यपेक्षया उत्तराग्रन्थीनत्वेनाप्युत्तरात्वाभावात् यद्योन्यामिति वाक्याप्रवृत्तेः न योनिगतसामैकत्वसिद्धिरित्याशङ्कां परिहरति— **अत एव यद्योन्यामिति।** प्रकृते योनिगतसामैकत्वनियमः 'एकं साम तृचे क्रियते' इति तृचसंस्कारकत्वबलात् अथवा अतिजगतीष्विति बहुवचनबलात् सिध्यत्येवेति न बाधकमिति भावः। **बहिष्पवमानातिरिक्तेति।** तथा च वदिष्यते दशमे।

---

(६)—प्रागाथिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥
लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

ज्योतिष्टोमे बृहद्रथन्तरे सामनी बृहत्योरुत्पन्ने. तयोरुत्तराग्रन्थे एकैकस्यैकैका पङ्क्तिच्छन्दस्कोत्तरा। तत्रेदं वचनं 'न वै बृहद्रथन्तरमेकच्छन्दः यत्तयोः पूर्वा बृहती ककुभावुत्तरे' इति। तत्र किं पङ्क्तिच्छन्दस्कामुत्तरां परित्यज्य द्वे द्वे ककुभौ दाशतयीभ्यः समानेतव्ये उत बृहतीयोनिं उत्तरां च पङ्क्तिं प्रग्रथ्य ककुभावुत्तरे सम्पादनीये इति चिन्तायां—

प्रग्रथनेन मुख्यककुप्सम्पत्त्यभावादक्षरसाम्यमात्रेण मुख्यककुप्छब्दस्य गौणत्वापत्तेर्जघन्योत्तराशब्दस्यैव असम्बन्धिशब्दत्वं परित्यज्य कार्यलक्षणां योन्युत्तरकाललक्षणां वाऽङ्गीकृत्य ककुब्विध्यङ्गीकारात्स्वाभाविककुभोरेवानायनम्, एवं च मुख्यतृचगानसम्पत्तिरपीति प्राप्ते—

---

प्रागाथिकन्तु।

ज्योतिष्टोमे यद्यपि बृहद्रथन्तरवामदेव्यनौधसकालेयश्यैताख्यानि षट्सामानि पठितानि; तैश्च साध्यानि षट्स्तोत्राण्यपेक्षितानि। अनुष्ठीयन्ते तु रथन्तरवामदेव्यनौधसकालेयैः चतुर्भिः सामभिः साध्यानि चत्वारि; तथापि बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनेन माहेन्द्रसंज्ञके पृष्ठस्तोत्रे बृहद्रथन्तरयोर्विकल्पात् नौधसश्यैतयोश्च बृहत्पक्षे श्यैतं, रथन्तरपक्षे नौधसमिति व्यवस्थितविकल्पस्यापि वचनान्तरसिद्धत्वात् अवशिष्टैः चतुर्भिः सामभिः साध्यानि चत्वार्येवानुष्ठीयन्ते पृष्ठानीति न बाधकम्।

अत्र च चतुर्ष्वपि पृष्ठशब्दो मुख्यो गौणो वेति तु चित्राधिकरणे कौस्तुभे द्रष्टव्यम्। प्रकृते च माहेन्द्रस्तोत्राख्ये होतुः पृष्ठे बृहद्रथन्तरयोर्विकल्पेन विहितयोर्मध्ये 'अभित्वा शूर नो नुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष' इति रथन्तरयोनिर्बृहतीछन्दस्का, तस्यैवोत्तरा पङ्क्तिछन्दस्का, —'नत्वा वा मन्यो दिवो न पार्थिवो न जातो न जनिष्यते अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे' इति। बृहतो योनिर्बृहत्येव। 'त्वामिद्धि हवामहे सातौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः' इति। अस्योत्तरा पङ्क्तिरेव। 'सत्वन्नश्चित्रवज्रहस्त धृष्णुयामह स्तवानो अद्रिवः। गामश्वं रथ्यमिन्द्र संकिर सत्रावाजन्न जिग्युषे' इति। तत्रोत्तराद्वित्वलाभाय समच्छन्दस्कत्वाय च बृहतीच्छन्दस्कोत्तराद्वयं दाशतयीभ्य आनेयमेव न्यायेन प्राप्तं तथापि पठिताया उत्तरापङ्क्तेः वैयर्थ्यापत्त्या पङ्क्तिछन्दस्कोत्तराया एव प्रग्रथनेन बृहतीत्वं सपाद्य समासु गानं कर्तव्यमित्यर्थे प्राप्ते आह—तत्रेदं वचनमिति। मुख्यत्वञ्चेति। प्रग्रथनेन

तथात्वे पादं पुनरारभते' इत्यस्य वैयर्थ्यापत्तेः ककुप्पदमेव गौण[1] मङ्गीकृत्योत्तरोद्देशेन ककुप्त्वविधानात् तयोरेव प्रग्रथनेन ककुप्त्वसम्पादनम्। एवं वैदिकानां प्रग्रथनस्मरणं बार्हतप्रगाथसमाख्या उत्तराग्रन्थे पङ्क्तेः पाठश्चोपपन्नो भवति। तृचत्वोपपत्तिस्सामत्र्यविधित्वात्तथाऽनुपपन्नापि न दुष्यति।

प्रग्रथनं च आद्यां बृहतीं सकृत्पठित्वा तस्या अन्त्यपादेन सह द्वितीयाया अर्धर्चं पठित्वा तदन्त्यपादेन सह द्वितीयान्त्यार्धर्चपठनरूपं बोध्यम्। तेन द्वितीया ककुप् अष्टाविंत्यक्षरैव। आद्यायास्सप्तविंशत्यक्षरत्वेऽपि अल्पान्तरत्वान्न दोषः।

---

कल्पिततृचत्वेऽपि मुख्यतृचसंपत्तेः सिद्धान्ते असंभवादित्यर्थः। तथात्वे पादमिति, "एषा वै प्रतिष्ठिता बृहती या पुनः पादा तद्यत्पादं पुनरारभते तस्माद्वत्सो मातरमभिहिङ्करोति" इत्यस्य वैयर्थ्यापत्तिरित्यर्थः। यद्यस्मात् पादं पुनरारभते तत्तस्मादियं बृहती पुनः पदानामिका प्रतिष्ठिता भवति। सेयं बृहती ऋक् माता पादो वत्सः अतो वत्सो मातरं दृष्ट्वा हिङ्कारं करोति अतः पुनरारब्धे पादे उद्गाता हिङ्कारं कृत्वा गानं कर्तव्यमिति वचनस्यार्थः। बार्हतप्रगाथसमाख्येति। अनेनैतत्सूचितं भवति—अत्र भाष्यकारेण सिद्धान्ते "एवं हि स्मरन्ति काकुभः प्रगाथ" इत्युक्त्वा "ननु ककुभि अनाद्यायां काकुभ इति न प्राप्नोती"ति परिचोद्य परिहृतम्। नात्र सोऽस्यादिरिति अणन्तः प्रगाथेष्वित्येवं तद्धितः। किन्तु तस्येदमिति वा तत्रभव इति वा तस्माददोष इत्युक्तम्। तावेतौ शङ्कापरिहारावयुक्तौ छन्दोगानां बार्हतः प्रगाथ इत्येव स्मरणेन काकुभः प्रगाथ इति स्मरणस्यैवाभावात्। प्रकृष्टं गानं यस्मिन् स प्रगाथः, प्रकर्षश्च पादं पुनरादाय गानेनैव द्रष्टव्यः इति। प्रग्रथनञ्चेति। तच्चेत्थम्—रथन्तरयोनेः बृहत्या अष्टाक्षरं ईशानमिन्द्रतस्थुष इति पादं पुनरावर्त्य न जनिष्यते इत्येतत्पर्यन्तं [अष्टा] विंशत्यक्षरा एका ककुप्। एतस्याश्च ककुभो न जातो न जनिष्यते इत्यष्टाक्षरं पादं पुनरावर्त्य हवामहे इत्यन्तं द्वितीया अष्टाविंशत्यक्षरा ककुबिति बोध्यम्। एवं बृहद्योन्युत्तरयोरपि ज्ञेयमिति भावः। अल्पान्तरत्वादिति। अल्पान्तरत्वेऽपि दिव्यो इत्यत्र वकारयकारयोर्विश्लेषेण गानवेलायां पाठेनाष्टाविंशत्यक्षरात्मकत्वोपपत्तेः न दोष इत्यर्थः। अस्मिंश्च पृष्ठस्तोत्रे 'सप्तदशपृष्ठानी'ति इतरपृष्ठसाधारण्येन विहिता सप्तदशस्तोमकता पूर्वन्यायेन बहिष्पवमानातिरिक्तस्तोत्रेषु अभ्याससंपाद्येति "पञ्चभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया स एकया; पञ्चभ्यो हिङ्करोति स एकया स तिसृभिः स एकया; सप्तभ्यो हिङ्करोति स एकया स तिसृभिः स तिसृभिः" इति

---

1. अक्षरसाम्येन गौणता

**एवं वा—ज्योतिष्टोम एव माध्यन्दिनपवमाने 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा' इति श्रुतम्। तदर्थविवरणानि च 'गायत्रामहीयवे गायत्रे तृचे भवतः, रौरवयौधाजये बार्हते तृचे भवतः, औशानसमन्त्यं त्रिष्टुप्सु इति।** तत्र **रौरवयौधाजययोः पूर्वा बृहती उत्तरा** विष्टारपङ्क्तिस्समाम्नाता। **तदिह विशिष्यैव बार्हते तृच इति बार्हततृचत्वाम्नानात्[1] उत्तरे द्वे बृहतीछन्दस्के एव समानेतव्ये इति प्राप्ते—**

---

विष्टुतिब्राह्मणोक्ताभ्यासप्रकारेण द्रष्टव्या। ततश्च पर्यायत्रयेण गाने क्रियमाणे प्रथमपर्याये आद्यां त्रिः पठित्वा इतरे यथास्थिते पठनीये। द्वितीये पर्याये आद्यां सकृत्पठित्वा द्वितीयां सकृत् पठेत्। तृतीये पर्याये आद्यां सकृत्पठित्वा द्वितीयां च त्रिः पठित्वा तृतीयामपि त्रिः पठेदिति। एतादृशविष्टुतिप्रकारेण होतुः पृष्ठे पञ्च बृहत्यो द्वादशककुभः सिद्धा भवन्ति।

**एवं वा**

वर्णकान्तरकरणे बीजन्तु तन्त्ररत्न एव दर्शितम्, इह तु 'बार्हते तृचे भवत' इत्यत्रैव विशेषेण तृचशब्दश्रवणात् अवश्यमृगन्तरागमः कर्तव्य इति विशेषाशङ्कानिवृत्त्यर्थमिदमधिकरणं उदाहरणान्तरे पुनर्व्याख्यायते। अथवा लिङ्गदर्शनसूत्रमन्यथा व्याख्यातुं पुनः प्रस्तावं कुर्वन् इदमप्युदाहरणं शुद्धं भविष्यतीत्युदाहृतवानिति वेदितव्यमिति। **तत्र रौरवेति।** माध्यन्दिनपवमाने हि 'उच्चाते' इत्यादि 'गोना' मित्यन्तं अष्टौ ऋचो गायत्रीबृहतीत्रिष्टुप्छन्दस्काः पठिताः। तासु गायत्रामहीयवरौरवयौधाजयौशनसेति पञ्च सामानि पठितानि। पूर्ववाक्यत्रये सविभागकरणात् विभागेन गेयानि। तत्र गायत्रीछन्दस्के तृचे विहितयोर्गायत्रामहीयवयोः त्रिष्टुप्छन्दस्के तृचे विधीयमानौशनसे च न कोऽपि सन्देहः। रौरवयौधाजययोस्तु योनिवैलक्षण्यस्योत्तरासु सत्वात् तमेव विचारविषयं दर्शयति—**पूर्वा बृहतीति।** यद्यपि 'पुनाने'ति रौरवसाम्नो योनिभूता ऋक् चतुस्त्रिंशदक्षरा पठ्यत इति न तस्याः षट्त्रिंशदक्षरात्मकं बृहतीत्वं, तथापि पूर्वं द्व्यक्षरैकाक्षरन्यूनत्वेऽपि छन्दसोऽहानेरुक्तत्वात् संयुक्ताक्षरे अक्षरद्वयस्य विश्लेषेण पाठस्य विहितत्वाच्च पुनानेत्यस्यामृचि रेफयुक्ते षकारे सकारे, सकारयुक्ते च युकारे चाक्षरद्वयसत्ताभिप्रायेण योनिसाम्नस्तावदक्षरपर्याप्तेः सम्भवेन षट्त्रिंशदक्षरत्वेनोपपत्तेर्न बाधकम्। **विष्टारपङ्क्तिरिति।** 'दुहान ऊधर्दिव्य' मित्युत्तरा चत्वारिंशदक्षरा विष्टारपङ्क्तिः। साप्येकैव पठिता। ततश्च समच्छन्दस्कतालाभाय उत्तराद्वित्वाय च तृचगतबृहतीछन्दस्कत्वाय च बृहतीद्वयं दाशतयीभ्य

---

1. B तृचाम्नानात्

नात्र रौरवयौधाजयोद्देशेन बार्हतविधिः, योनेस्तादृश्याः प्राप्तत्वात्। नापि तृचाधिकरणत्वविधिः, प्राप्तत्वादेव। नापि बार्हततृचाधिकरणत्वविधिः, विशिष्टस्याव्युत्पन्नत्वात्। अत एव न विशिष्टोद्देशेन सामद्वयविधिः। तत्र तृचोद्देशेन बृहतीछन्दस्कत्वविधिः परं भवेत्, सोऽप्यवच्छेदकावच्छेदेन वा सामानाधिकरण्येन वा, उभयथाऽप्यसम्भवः। अवच्छेदकावच्छेदेनाश्रीयमाणे प्रगाथस्मरणसमाख्योत्तरापाठादिबाधप्रसङ्गापत्तेस्तदनुरोधेन सामानाधिकरण्येनैवाश्रीयते। एवं च वस्तुतस्तस्य प्राप्तत्वादेतानि वाक्यानि पूर्ववाक्यार्थविवरणार्थान्यनुवादकानीत्येव ध्येयम्। न ह्येतान्युत्तरासु

---

आनेयमिति पूर्वपक्ष्यभिप्रायः। **तृचोद्देशेनेति**। **यद्यपि** तृचमात्रस्योद्देश्यत्वेऽतिप्रसङ्गापत्तौ रौरवयौधाजयाधारतृचस्योद्देश्यत्वे विशिष्टोद्देशप्रयुक्तवाक्यभेदः स्फुट एव। **तथापि** हविरार्त्यधिकरणन्यायेन तृचमात्रस्योद्देश्यत्वसम्भवे लक्षणाया आवश्यकत्वात् संभवत्येव तथाभूततृचोद्देशेन बृहतीछन्दस्कत्वविधिरिति द्योतयितु सम्भवाभिप्रायकः **पर**शब्दः प्रयुक्तः। **अवच्छेदकेति**। तृचत्वावच्छेदकावच्छेदेन बृहतीछन्दस्कत्वविधौ संपूर्णतृचः तच्छन्दस्क अपेक्षितः। तन्निर्वाहस्तु पठितोत्तरया न सम्भवतीति नूतनतच्छन्दस्कानयनं पूर्वपक्षरीत्या प्राप्तं तद्दूषयति—**प्रगाथस्मरणेति**। तृचत्वावच्छेदेन तच्छन्दस्कत्वविधौ योनेर्बृहत्या एव सत्वात् तत्र तद्विधिवैयर्थ्यापत्तेः अगत्या तृचैकदेशभूतोत्तरायामेव बृहतीच्छन्दस्कत्वविधिरर्थवान् भवति। तस्याश्चोत्तराया बृहतीत्वं समच्छन्दस्कासु गाननियमन्यायसहकृतप्रगाथसमाख्ययैव प्रग्रथनेन सिद्धम्। योनेस्तु स्वाभाविकमेव तदिति सर्वस्याप्यर्थस्य प्राप्तत्वादनुवादकान्येवैतानि वाक्यानीत्यर्थः। **पूर्ववाक्यार्थविवरणार्थानिति**। 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा' इति वाक्ये त्रिच्छन्दस्कत्वादिगुणानामाम्नानात् के ते त्रिच्छन्दस्कत्वादयो गुणा इत्यपेक्षया प्रवृत्तोऽयमनुवादः। अन्यथा उत्तरागतविष्टारपङ्क्तिछन्दस उपादानेनापि त्रिच्छन्दस्कत्वापत्तेः। अथवा चतुश्छन्दस्कत्वस्यैव वा आपत्तेः त्रिछन्दस्कत्वानुवादानुपपत्तेः। अतो विष्टारपङ्क्त्युत्तरायां बृहतीत्वं संपाद्य बृहतीच्छन्दस्क इव त्रिच्छन्दस्कत्वम्। तेषाञ्च साम्नां विभागेनावस्थानञ्च बोध्यते एतैर्वाक्यैरनुवादरूपैरिति भावः

यत्तु प्रकाशकारैः एकं सामेतिवाक्येन तृचसंस्कार्यतायाः प्राप्तत्वात् तृचपदस्यानुवादत्वमङ्गीकृत्य बृहतीऋचः उद्दिश्य उत्तराग्रन्थे पठितत्वात् उत्तरास्वप्राप्ते रौरवयौधाजये सामनी विधीयेते। ततश्चायं सामविधिः प्रकरणात् दृष्टार्थत्वाच्च संस्कार्याणां बृहतीनां स्तोत्रे विनियोगेन पर्यवस्यतीत्युक्तम्। तन्निराकरोति—**नह्येतानीति**।

सामप्रापयथनीति केषांचिदुक्तं युक्तं 'यद्योन्यां' इत्यनेनैव तत्प्राप्तेः। सर्वथा सिद्ध-मत्रापि प्रग्रथनम्। न चैवं बार्हत इति वचनस्य योनिबृहतीमत्त्वेनैवोपपत्तेः प्रग्रथने प्रमाणाभावः। तृचसम्पत्तिप्रग्रथनस्मरणादिनैव तत्सिद्धेः। एवं च प्रग्रथितबृहतीवत्त्वस्या-वच्छेदकावच्छेदेन विशेषणत्वोपपत्तावपि लक्षणापत्तेस्तथा नाश्रितमिति ध्येयम्।

तत्र आद्यां बृहतीं षट्त्रिंशदक्षरां पठित्वा तदन्त्यपादस्य द्विरावृत्त्या उत्तरायाः विष्टारपङ्क्तेश्चत्वारिंशदक्षरायाः आद्यार्धेनैका बृहती, तदन्त्यपादस्य द्विरावृत्त्या द्वितीयार्धेनापरा इत्येवंरूपं प्रग्रथनं बोध्यम्। अत्र सर्वत्राल्पान्तरत्वात् किञ्चिदक्षर-न्यूनत्वेऽपि न तच्छन्दस्कत्वविघातः।

[1] यत्तु भाष्यकारेण 'षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनम्' इति लिङ्गमपि प्रग्रथन एवोपपद्यते। तथाहि—माध्यन्दिने सवने पञ्चस्तोत्राणि, एको माध्यन्दिनः पवमानः पञ्चदशस्तोमः, सप्तदशानि चत्वारि पृष्ठानि, तत्र पवमाने गायत्रामहीयवसाम्नोष्षड्गाय-त्र्यः रौरवयौधाजययोः षड्बृहत्य औशनससाम्नस्तिस्त्रस्त्रिष्टुभः। होतुः पृष्ठे पञ्च बृहत्यो द्वादश ककुभः विष्टुतिप्रकारे तथैवाम्नानेन तृचस्य तावद्वारमभ्यासात्। मैत्रा-वरुणपृष्ठे सप्तदश गायत्र्यः, ब्राह्मणाच्छंस्यच्छावाकपृष्ठयोरपि सप्तदश सप्तदश बृहत्यः एकैकतृचाभ्यासेनैव। एवं पञ्चचत्वारिंशद्बृहत्यो मुख्याष्षण्णां गायत्रीणां चतुर्विंशत्य-क्षराणां त्रिपादानां मध्ये चतसृणां गायत्रीणां द्वादशभिरष्टाक्षरैः पादैः सहिता द्वादश पूर्वोक्ता अष्टाविंशत्यक्षराः ककुभो द्वादश षट्त्रिंशदक्षरात्मिका बृहत्यो भवन्ति। तदेवं सप्तपञ्चाशद्बृहत्यः। ता एताः षण्णां गायत्रीणां मध्ये अवशिष्टाभ्यां द्वाभ्यां गायत्रीभ्यां सह सप्तदशभिर्गायत्रीभिरेकैकेन पादेन मिलिताः सप्तपञ्चाशद्बृहत्यः चतुश्चत्वारिंश-दक्षरात्मिकास्सप्तपञ्चाशत्त्रिष्टुभो भवन्ति। एवमाद्याभिस्त्रिभिस्त्रिष्टुब्भिः षष्टि-स्त्रिष्टुभः। तदेतल्लिङ्गं प्रग्रथन एवोपपद्यते। अन्यथा पवमाने अन्यासां बृहतीनां होतुः पृष्ठे चान्यासां ककुभां दाशतयीभ्यस्समानयने षष्टिसङ्ख्यानुपपत्तेः। अत्र हि न 'षष्टिः त्रिष्टुभो माध्यंदिनं सवनम्' इति यथाश्रुतं सामानाधिकरण्यमुपपद्यते बाधात्। अतो जघन्ये माध्यंदिनसवनपद एव लक्षणामङ्गीकृत्य माध्यंदिनसवनाङ्गभूता यास्सामवेदे समाम्नताः ताः षष्टिरित्यर्थाश्रितेर्दाशतयीभ्यस्समानयने लिङ्गानुपपत्तिरित्युक्तम्।

तल्लक्षणाया आवश्यकत्वे लाघवान्माध्यन्दिनसवनस्तोत्रीयाणामेव लक्षणादानी-तानामपि तत्त्वोपपत्तेरुपेक्षितम्।

---

तृचसंपत्तीति। तृचगतबृहतीछन्दस्कत्वं शक्यत एव वक्तुं तथापि प्रग्रथितयोस्तयोः मुख्य-बृहतीत्वाभावेन बार्हतपदे गौणीलक्षणापत्तेः न तदादाय बार्हतत्वं अपि तु तृचैकदेशे यदस्ति बार्हतत्वं तदनूद्यत इति भावः। तत्राद्यामिति। अत्र च पुनान इत्यारभ्य हिरण्यय इत्यन्तं

1. A तत्र

संयुक्ताक्षरीयाक्षरद्वयमेलनेन एका बृहती तावत्स्पष्टा। एतस्याश्च बृहत्याः 'उत्सो देवो हिरण्यय' इति पादं पुनर्द्विरावृत्य 'मासददि'त्यन्तं द्वितीया। एतस्याश्च'प्रत्नं सधस्थमासददि'ति पादं पुनर्द्विः पठित्वा 'विचक्षण' इत्यन्तं तृतीयेति युक्तमेव तृचे बार्हते समच्छन्दस्कासु च गानमिति भावः। अत्र च प्रग्रथितबृहतीद्वयसम्पादनेन माध्यन्दिनपवमाने पठिता अष्टौ ऋचो नव सम्पन्नाः। तासाञ्च मध्ये पञ्चदशस्तोमकत्वस्य माध्यन्दिनपवमाने विधानात् पञ्चदशस्तोमकत्वसिद्धये गायत्रतृचबार्हततृचयोरभ्यासः कार्यः। तत्रैव प्रत्येकं सामद्वयाम्नानस्याभ्यासं विनानुपपत्तेः। अत एव पवमानद्वयेऽपि नावापो ऋचामिति तत्र दर्शितम्। अत एवैतादृशाभ्यासस्य स्पष्टत्वात् स्तोमयोगः सायणाचार्यवृत्त्यादौ न लिख्यते। प्रतितृचं हिङ्कारस्य 'यदुत्तरयोः पवमानयोः तृचाय तृचाय हिङ्करोति अथ कस्मात् बहिष्पवमाने सकृदेव हिङ्करोति 'इति वचनादेव सिद्धत्वात्। एवञ्च माध्यन्दिनपवमाने षड् गायत्र्यः, षड्बृहत्यः तिस्रः त्रिष्टुभ इति सिद्धम्।

तथाहीत्यादि तदेतल्लिङ्गमित्यन्तं प्रतीकमर्थतो व्याख्यायते:—माध्यंदिनसवने माध्यन्दिनपवमानस्तोत्रं चत्वारि पृष्ठानीत्येवं पञ्च स्तोत्राणि। तत्र माध्यन्दिनपवमानस्तोत्रं पृष्ठानां मध्ये माहेन्द्रस्तोत्रं होतुः पृष्ठञ्च विशेषतः प्राङ्निरूपितम्। द्वितीयञ्च वामदेव्यसामकं गायत्रीच्छन्दस्कं ऋक्त्रयात्मकं मैत्रावरुणपृष्ठम्। तत्र 'कया नश्चित्र'त्येका ऋक्। 'कस्त्वा सत्यो मदानामि'ति द्वितीया। 'अभीषुण'–इति तृतीया। तत्राद्यायामुत्तरायामेकमक्षरं न्यूनं, द्वितीयायां पुनरक्षरद्वयं न्यूनमित्युत्तरयोर्नयोनिसमच्छन्दस्कत्वं तथापि एकाक्षरद्व्यक्षरन्यूनत्वेन छन्दसः प्रहाणाभावस्य छन्दोग्रन्थेऽभिधानात् योनिसाम्नश्चोत्तरयोर्गाने संशरपरिहारार्थं संयुक्ताक्षरेष्वक्षरद्वयाश्रयमात्रेण पर्याप्तेर्न बाधकम्। एवञ्च प्रकृते 'शतं भवास्यूतय' इत्यन्तिमोत्तरापादोऽष्टाक्षरो न, किन्तु सप्ताक्षरः तथापि स्यू इति संयुक्ताक्षरे सि ऊ इति अक्षरद्वयं कृत्वा साम गीयते। अत एव संयुक्ताक्षरभेदो गानवेलायमेव नत्वार्चिकपाठवेलायामपि पठयते याज्ञिकैः। तथापि उत्तरयोर्न्यूने अक्षरत्रये 'पुरुष इति त्रीण्यक्षराणि गानकाले यथासङ्ख्यं मनसा प्रक्षिपेदिति सायणवृत्तिग्रन्थे स्पष्टम्। अत्रापि सप्तदशस्तोमकता अभ्याससंपाद्या होतुः पृष्ठीयविष्टुतिप्रकारेणैव ज्ञेया। ततश्चास्मिन् पृष्ठे सप्तदश गायत्र्यः सिद्धाः।

तथा ब्राह्मणाच्छंसिपृष्ठं नौधससामकम्। तस्य 'तं वोदस्म मृती'ति योनिः बृहती। 'द्युक्षङ्सुदानुते'त्युत्तरा पङ्क्तिच्छन्दस्काप्येका। तत्रोत्तराद्वित्वलाभाय योनिसमच्छन्दस्कत्वाय च माध्यन्दिनपवमानवदेव प्रग्रथनं कार्यम्। तच्चेत्थम्—

'तंवो' इत्यत आरभ्य 'हवामहे' इत्यन्तमेकां मुख्यां बृहतीं सकृत्पठित्वा तदन्त्यं 'इन्द्रं गीर्भिर्हवामहे' इत्यष्टाक्षरं पादं पुनर्द्विः पठित्वा, ओजसं इत्यन्तं द्वितीया बृहती; एतदन्त्यं 'गिरिर्नपुरुभोजस'मित्यष्टाक्षरं पुनर्द्विः पठित्वा 'गोमन्तमीमहे' इत्यन्तं तृतीया बृहतीति। अत्रापि सप्तदशस्तोमयोगो होतुः पृष्ठवदेव ज्ञेयः। अस्मिंश्च पृष्ठे सप्तदश बृहत्यः सिद्धाः।

एवमच्छावाकपृष्ठं कालेयसामकम्। अस्यापि च 'तरोभिर्वो' इति योनिर्बृहती। 'न यन्दुध्रे' इत्युत्तरा पङ्क्तिरेका। तत्रापि पूर्ववत् प्रग्रथनम्। तत्र 'हुवे भरन्तकारिण'मिति मुख्या बृहती। अष्टाक्षरं पुनर्द्विः पठित्वा 'प्रमन्वस' इत्यन्तं द्वितीया बृहती। एतदीयञ्च 'मदेषु शिप्रमन्वस' इत्यष्टाक्षरं पुनर्द्विः पठित्वा 'जरित्र उक्थ'मित्यन्तं तृतीयेति। अत्रापि सप्तदशस्तोमकता होतुः पृष्ठवदेव ज्ञेया। अस्मिंश्च पृष्ठे सप्तदश बृहत्यः। तथाचानयोः पृष्ठयोः चतुस्त्रिंशद्बृहत्यो जाताः। तासां होतुः पृष्ठीयबृहतीपञ्चकेन मेलने एकोनचत्वारिंशद्बृहत्यः। तासाञ्च माध्यन्दिनपवमानीयषड्भिर्बृहतीभिर्मेलने पञ्चचत्वारिंशद्बृहत्यः सिद्धाः। तथा माध्यन्दिनपवमानीयषड्भिर्गायत्रीभिः मैत्रावरुणपृष्ठीयसप्तदशगायत्रीणां मेलने त्रयोविंशतिगायत्र्यः। एतासां सर्वासां बृहतीनां गायत्रीणाञ्च माध्यन्दिनपवमानीयाभिः तिसृभिः त्रिष्टुब्भिः मेलने, तथा होतुः पृष्ठीयद्वादशककुब्भिश्च मेलने, पादप्रग्रथनाभ्यासलब्धाः त्र्यशीतिऋचः संपन्नाः। एवञ्च त्र्यशीतिसङ्ख्याकऋग्भिः साध्यैः पञ्चभिः स्तोत्रैः साध्यं माध्यन्दिनसवनम्। तत्र त्र्यशीतिऋचां परस्परमेलने षष्टिस्त्रिष्टुभो भवन्ति।

तथाहि—त्रयोविंशतिसङ्ख्याकानां गायत्रीणां त्रिपादानां विभागेन द्वादशपादा भवन्ति एतैश्च द्वादशपादैः अष्टाविंशत्यक्षरहोतुः पृष्ठीयद्वादशककुभां मेलनेन निष्पन्नानां षट्त्रिंशदक्षराणां द्वादशबृहतीनां पूर्वोक्ताभिः पञ्चचत्वारिंशद्बृहतीभिर्मेलने सप्तपञ्चाशद्बृहत्यो जाताः। अवशिष्टानाञ्चैकोनविंशतिगायत्रीणां त्रिपादानां सप्तपञ्चाशत्पादैः सह सप्तपञ्चाशद्बृहतीनां मेलने चतुश्चत्वारिंशदक्षराः सप्तपञ्चाशत्त्रिष्टुभो भवन्ति। एतासाञ्च माध्यन्दिनपवमानीयाभिः तिसृभिः त्रिष्टुब्भिः सह मेलने षष्टिस्त्रिष्टुभो भवन्तीति भावः। अन्यथा पवमाने'त्यादि अधिकरणसमाप्तिपर्यन्तं स्पष्टार्थम्।

**प्रभा**

अस्याधिकरणग्रन्थस्य स्पष्टत्वेऽपि किञ्चिदर्थोपपादनसापेक्षत्वात् अर्थतो व्याख्यानं क्रियते—आर्भवपवमानस्तोत्रं हि सप्तदशस्तोमकं पञ्चछन्दस्कं सप्तसामकम्। यद्यपि तत्र 'स्वादिष्ठये'

त्यारभ्य अनूपताधि त्रिपृष्ठ उषसो विराजसी'त्यन्तं एकादशर्चः पठ्यन्त इति षण्णामृचां न्यायप्राप्तः आगम उचितः तथापि वक्ष्यमाणाभ्यां गायत्रानुष्टुभतृचयोः द्विर्द्विःसाम्नो विधानात् तस्य च अभ्यासं विनानुपपत्तेः स्वादिष्ठयेति ऋक्त्रयं पुरोजितीवोऋक्त्रयं च द्विरावृत्त्य सप्तदशत्वोपपत्तिः। तथाहि—'स्वादिष्ठये'ति तृचे गायत्रीच्छन्दः 'पवस्व मधुमत्तम' इत्येकर्चे उष्णिक् छन्दः। 'इन्द्रमच्छसुता इमे' इत्येकर्चे ककुम्। 'पुरोजितीवो अन्धस' इति तृचे अनुष्टुम्। 'अभिप्रियाणि पवते' इति तृचे जगती। एतादृशतत्तच्छन्दस्कासु ऋक्षु 'गायत्रे तृचे भवतः,' 'उष्णिहि सफं पौष्कलं ककुभि श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः कावमन्त्यं जगतीष्वि'ति पञ्चभिः वाक्यैः सप्तसामानि विहितानि। अत एव सफपौष्कलयोः 'एकं साम तृचे क्रियते' इति सामान्यविधिप्राप्तमपि तृचे गानं बाधित्वा वचनादेकर्चेऽनुष्ठानम्। अत्र च सर्वासु ऋक्षु क्वचिदेकाक्षरद्व्यक्षरन्यूनत्वेन छन्दोहानेरभावेऽपि साम्नः पूर्त्यर्थं संयुक्ताक्षरे अक्षरद्वयभेदेन गानप्रकारः सामगानां पाठसमय एव द्रष्टव्यः; विस्तरभयान्न लिख्यते। एवञ्च श्यावाश्वान्धीगवयोः साम्नोर्यद्यपि पूर्वाऽनुष्टुप् उत्तराद्वयं गायत्रं पठितमिति नानुष्टुभतृचाधिकरणत्वसम्भवः। तथापि प्रगाथसमाख्यया प्रग्रथनेनानुष्टुभत्वं तयोः सम्पाद्यम्। ततश्च पूर्वामनुष्टुभं सकृत्पठित्वा तदन्त्यं 'सखायोदीर्घजिह्वयं' इति पादं पुनरावृत्त्य तदग्रे प्रथमोत्तरा गायत्रीछन्दस्का चतुष्पदा द्वात्रिंशदक्षरा अनुष्टुप्। अस्याश्च 'इन्दुरश्वो न कृत्व्यः' इत्यन्त्यं पादं पुनरावृत्त्य तदग्रे द्वितीयोत्तरा गायत्रीछन्दस्का चतुष्पदा द्वात्रिंशदक्षराऽनुष्टुच् इत्येवं ज्ञेयम्। एवञ्चास्मिन्नार्भवपवमानस्तोत्रे आद्यसाम्नः षड्गायत्र्यः चतुर्विंशत्यक्षराः। तत्र गायत्रीद्वयमेलनेन एका जगतीति क्रमेण तिस्रो जगत्यो भवन्ति। श्यावाश्वान्धीगवयोश्च साम्नोः षडनुष्टुभः। षण्णाञ्चानुष्टुभां सार्धानुष्टुभमेलनेन एका जगतीति क्रमेण चतस्रो जगत्यो भवन्ति।

सफपौष्कलसाम्नोरुष्णिक्ककुभे द्वे तृचे अष्टाविंशत्यक्षरे; तयोर्मिलितयोरष्टावक्षराणि विहाय एका जगती। अष्टावक्षराण्यवशिष्यन्ते। कावे तु जगतीछन्दस्कतृचस्यैव आम्नानात् तिस्रो जगत्यः। एवमस्मिन् तृतीयसवनीयप्रथमस्तोत्रे एकादश जगत्यः अष्टावक्षराण्यधिकानीति सिद्धम्। तृतीयसवनीयं द्वितीयञ्चैकविंशतिस्तोमकं द्विच्छन्दस्कं यज्ञायज्ञीयसामकं अग्निष्टोमस्तोत्रमन्तिमम्। एतत्संज्ञकस्तोत्रेणैवाग्निष्टोमस्य नाम अग्निष्टोमसंस्थेति भवति।

यद्यप्यत्र 'यज्ञायज्ञावो अग्न' इति बृहतीछन्दस्का योनिः, 'ऊर्जो न पाते'त्यक्षरद्वयन्यूनपङ्क्तिछन्दस्काप्येकैवोत्तरा तथापि यावद्रथन्तरवत् प्रग्रथनेन बृहतीद्वयसम्पादनमायाति तावत् 'ककुबुत्तरे' इति वचनप्रवृत्तेः प्रग्रथनेन योन्यत्यन्तविषमछन्दस्कककुप्त्वमुत्तरायाः कार्यम्।

एव वा—'पञ्चच्छन्दा आद्यापः आर्भवः पवमानः सप्तसामः' इत्येतद्विवरणार्थेषु गायत्रसंहिते गायत्रे तृचे भवतः श्यावाश्वाग्धीगवे आनुष्टुभे तृचे भवतः उष्णिहि सफं ककुभि पौष्कलं कावमन्त्यं जगतीषु' इत्येतेषु श्यावाश्वान्धीगवयोः पूर्वाऽनुष्टुप् उत्तरे गायत्र्यौ श्रुते। तत्र किं तास्वेव प्रग्रथनं विनैव तृचगानं[1] उत प्रग्रथनेनेति चिन्तायां—

पूर्वत्र लक्षणां विनैव तृचत्वसामानाधिकरण्येन बृहतीछन्दस्कत्वोपपत्तावपि एकस्या एवोत्तरायाः पाठेन तृचगानानुपपत्तेः युक्तं प्रग्रथनम्। प्रकृते तु उत्तराद्वयस्यापि पाठात् तृचगानोपपत्तेः प्रग्रथने प्रमाणाभाव इति प्राप्ते—

प्रमाणान्तराभावेऽपि प्रगाथस्मरणसमाख्ययोरेव प्रमाणत्वात् प्रग्रथनम्। तच्च न पूर्ववत् द्विरावृत्त्या, अपि तु अन्त्यान्त्यपादस्य सकृदावृत्त्यैव। तावतैव तृचस्यानुष्टुभतोपपत्तेः। अष्टाक्षरेण हि पादेनान्विता गायत्री द्वात्रिंशदक्षराऽनुष्टुप् भवति। स्मरणवशादपि चैवं प्रग्रथनम्। लिङ्गं च 'चतुर्विंशतिजगत्यस्तृतीयसवने, एका च ककुप्, इति प्रग्रथन एवोपपद्यते।

तथा हि तृतीयसवने स्तोत्रद्वयम्। सप्तदश आर्भवः पवमान एकविंशं चाग्निष्टोमस्तोत्रम्। [2]आर्भवे आद्यसाम्नोः षड्गायत्र्यः तास्तिस्रो जगत्योऽष्टचत्वारिंशदक्षरात्मिकाः ततस्तृतीयचतुर्थसाम्नोष्षडनुष्टुभः ताश्चतस्रो जगत्यः, पञ्चमषष्ठसाम्नोरुष्णिक्ककुभौ द्वे ऋचौ अष्टाविंशत्यक्षरे सैका जगती अष्टौ अक्षराण्यवशिष्यन्ते। सप्तमे साम्नि तिस्रो जगत्यः, अग्निष्टोमस्तोत्रे च प्रग्रथनपूर्वाभ्यासे सप्त बृहत्यः चतुर्दश ककुभः तत्र सप्त बृहत्यः पञ्च जगत्यः द्वादशाक्षराण्यवशिष्यन्ते। चतुर्दशानां च ककुभां अष्टौ जगत्यः। अष्टौ अक्षराण्यवशिष्यन्ते। तदेवं चतुर्विंशतिजगत्योऽव-

---

ततश्चाद्यायाः योनिबृहत्याः 'प्रियंमित्रं नशंसिष'मिति पादं पुनरावृत्त्य 'हव्यदातये' इत्यन्तमेका ककुप्। अस्याश्च 'दाशेम हव्यदातये' इति पादं पुनः पठित्वा 'त्राता तनूनाम्' इत्यन्तं द्वितीया ककुप्। तत्र चैकविंशस्तोमकता अभ्याससंपाद्या। तस्य च विष्टुतिरेवमाम्नायते—सप्तभ्यो हिङ्करोति स तिसृभिः स तिसृभिः स एकया; सप्तभ्यो हिङ्करोति स एकया स तिसृभिस्स तिसृभिः; सप्तभ्यो हिङ्करोति स तिसृभिः स एकया स तिसृभिरिति। अत्र पर्यायत्रयेण गाने प्रथमपर्याये आद्या ऋक् त्रिः, द्वितीयापि त्रिः, तृतीया सकृत्पठनीया। द्वितीये आद्या सकृत्, द्वितीया त्रिः, तृतीया त्रिः, पठनीया। तृतीयपर्याये आद्या त्रिः द्वितीया

---

1. A. तृचे गानं

2. B. आद्ये

**शिष्टाक्षरैश्च मिळितैरेका ककुप्। तदिदं प्रग्रथन एवोपपद्यते।** न तु यथाश्रुतगायत्रीपाठे, **अल्पाक्षरत्वापत्तेः। तस्मादपि प्रग्रथनम्।**

**यत्तु भाष्यकारेण पूर्ववदन्ययोर्वाऽनुष्टुभोस्समानयनं प्रग्रथनं वेति चिन्तितं तत् पौनरुक्त्यापत्तेरुपेक्षितम्।**

**यदपि तन्त्ररत्नादौ लिङ्गान्तरप्रदर्शनार्थं वर्णकान्तरमित्युक्तं तदपि भाष्योक्तविचारे लिङ्गानुपपत्तेः पूर्ववर्णक एव प्रदर्शितत्वादयुक्तम्॥**

**एवं वा—गवामयने** एकषष्ट्यधिकशतत्रय**स्तुत्यात्मके अशीतिशतं पूर्वे पक्षः तथोत्तरं मध्ये विषुवान्। तत्र पूर्वस्मिन् पक्षसि प्रायणीयं प्रथममहः; चतुर्विंशं द्वितीयं**

---

सकृत्, तृतीया त्रिरिति प्रकारेण एकविंशतिवारं पाठे सप्त बृहत्यः, चतुर्दशककुभो भवन्ति। तत्र पञ्चानां बृहतीनां द्वासप्तत्यक्षरात्मकावशिष्टबृहतीद्वयस्य अन्त्यानि द्वादशाक्षराणि विहायावशिष्टानि षष्ट्यक्षराणि द्वादशात्मना पञ्चधा विभागेन मेलनीयानीति पञ्च जगत्यो भवन्ति; बृहत्याः द्वादशाक्षरपादोऽवशिष्यते। अवशिष्टानां चतुर्दशककुभां मध्ये ककुप्द्वयं पृथक्स्थापनीयम्। अवशिष्टाः षट् ककुभः। स्थापितानां षण्णां ककुभां प्रत्येकं अष्टावष्टावक्षराणि पृथक् कर्तव्यानीति मिलित्वा अष्टाचत्वारिंशदक्षराणि पृथक्स्थाप्यानि। उर्वरितानि च प्रत्येकं षण्णां ककुभां विंशतिर्विंशतिसङ्ख्यान्यक्षराणि तेषाञ्च विंशत्यक्षराणां एकैकककुभो मेलने षड्जगत्यो भवन्ति। स्थापितानाञ्चाष्टाचत्वारिंशदक्षराणां मध्ये अष्टावक्षराणि पृथक् संस्थाप्यावशिष्टानि चत्वारिंशदक्षराणि यथासङ्ख्यं ककुब्द्वये निवेशयेत् तेन द्वे जगती अष्टावक्षराण्यवशिष्यन्ते। एवं पूर्वोक्ताभिः पञ्चभिर्जगतीभिः अष्टानां मेलने त्रयोदश जगत्योऽस्मिन् स्तोत्रे भवन्ति। त्रयोदशानां जगतीनां एकादशजगतीभिर्मेलने चतुर्विंशतिजगत्यो भवन्ति। पूर्वोक्तार्भवपवमानीयोष्णिक्ककुब्गतावशिष्टानामक्षराणां अग्निष्टोमस्तोत्रीयस्थापितषट्ककुभसम्बन्ध्यष्टाक्षराणाञ्च परस्परमेलने सम्पन्नानां षोडशाक्षराणां पूर्वोक्तावशिष्टद्वादशाक्षरबार्हतपादमेलने सति अष्टाविंशत्यक्षरा ककुबेका भवति। एतदभिप्रायेणैव चतुर्विंशति जगत्यः तृतीयसवनमिति लिङ्गं प्रग्रथन एवोपपद्यत इति भावः। **न तु यथाश्रुतगायत्रीपाठ इति।** श्यावाश्वान्धीगवयोः ये गायत्रीच्छन्दस्के द्वे उत्तरे पठिते तयोः प्रग्रथनेनानुष्टुभत्वमसंपाद्यैव न यथाश्रुतपाठे लिङ्गदर्शनोपपत्तिरित्यर्थः।

**एवं वा।**

विशेषाशङ्कया चेदमधिकरणम्। ताञ्च'नचैकं तृच'मि त्यादिना स्पष्टीकरिष्यते। **एकषष्ट्यधिकशतत्रयेनि।** तत्क्लृप्तिः ताण्डिकशाखिनः प्रायणीयचतुर्विंशेऽहनी ततश्चत्वारोऽभि

चत्वारोऽभिप्लवाष्षडहाः, एकः पृष्ठयष्षडहः, स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः त्रयोऽभिप्लवाष्षडहाः अभिजिन्नामैकाहः त्रयस्स्वरसामानः इत्यष्टाविंशतिरहानि आद्याभ्यामहोभ्यां सह षण्मासाः। गवामयनप्रकरणे ब्रह्मसामस्तोत्रावान्तरप्रकरणे च 'चतुश्शतमैन्द्राबार्हताः प्रगाथाः' इति श्रुतम्। तत्र किं तिसृषु ऋक्षु गान उत द्वयोः प्रग्रथनेनेति चिन्तायां—

प्रगाथस्मरणात् प्रग्रथनेनैवेति सिद्धान्तः। प्रग्रथनं च रौरवादिवत् द्विरावृत्त्या बोध्यम्। एवं च 'पञ्चसु मास्सु बार्हताः प्रगाथा आप्यन्ते'[1] इति लिङ्गमप्युपपद्यते। तथा हि—सत्यपि ब्रह्मसामस्तोत्रावान्तरप्रकरणे 'त्रयः प्रगाथाः न ब्राह्मणाच्छंसि-

---

प्लवाः षडहाः, एवं चतुर्विंशत्यहानि; एकः पृष्ठ्यः षडहः। एवं त्रिंशद्दिवसात्मक एको मासः तादृशाः पञ्च मासाः ततः त्रयोऽभिप्लवाः षडहाः। एवमष्टादशाहानि, एकः पृष्ठ्यः षडहः। एवं चतुर्विंशतिरहानि। अभिजिन्नामैकाहः, त्रयस्स्वरसामानः इत्यष्टाविंशतिरहानि। आद्याभ्यां द्वाभ्यामहोभ्यां सह षण्मासः तदिदं पूर्वं पक्षः ततो विषुवान्। अथोत्तरं पक्षः त्रयः स्वरसामानः विश्वजिन्नामैकाहः। पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः एकः। त्रयोऽभिप्लवाः षडहाः इत्यष्टाविंशतिरहानि। पुनः पृष्ठ्यषडहः त्रयस्त्रिंशारम्भणः। चत्वारोऽभिप्लवाः षडहाः, स मासः। तादृशाश्चत्वारो मासाः। ततस्त्रयोऽभिप्लवाः। आयुर्गौरिति द्वे अहनी। द्वादशाहस्य द्वादशाहानि, महाव्रतमतिरात्रश्चेति द्वात्रिंशदहानि। आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः तदिदमुत्तरं पक्षः। एवं विषुवता सह एकषष्ट्यधिकशतत्रयसुत्यात्मके गवामयने सत्यपि प्रकृतविचारे पूर्वपक्ष एवोपयोगात् तावन्मात्रमेव सप्रकारं निर्दिशति —**अशीतिशतमिति**। अशीत्युत्तरं शतमहानि यस्मिन्नित्यर्थः। **तत्र किं निसृष्ट्विति**। अत्र च भाष्यादिदर्शितरीत्या प्रायः अष्टोत्तराधिकशतद्वयसङ्ख्याका ऋचः प्रथमदिने इन्द्रक्रतुभ्यां सह पञ्चसु मास्सु पठिताः। ततश्चतुरुत्तरशतं बृहत्यः, तावत्य एव पङ्क्तयः अथवा लिखिष्यमाणछन्दोगसूत्रस्वारस्याच्चतुर्थषष्ठौ पादौ बार्हते प्रगाथे पुनरभ्यस्य उत्तरयोरवस्येत्। बृहती....पञ्चमाध्यायगताश्वलायनसूत्रे च बृहतीसतोबृहत्योर्योगेनैव बार्हतप्रगाथप्रतीतेः पूर्वलक्षणलक्षिताः तावत्योऽपराः सतोबृहत्य एवात्र ऋचो द्रष्टव्याः। तासाञ्च मध्ये पञ्चसु मास्सु येष्वहस्सु सतोबृहतीविधानं नास्ति तेष्वहस्सु अष्टनवत्यधिकशतसङ्ख्याकर्चां विनियोगः।

---

1 A समाप्यन्ते

**स्तोत्रस्थाः, अपि तु 'बृहद्रथन्तरकालेयस्तोत्रीया** इन्द्रक्रतुश्चान्यत्र **स्थानाः' इति वाक्याद्वान्तरप्रकरणं बाधित्वा** ज्योतिष्टोमात्मकप्रथम**दिनस्थस्तोत्रान्तरेष्वेव निविशन्ते भाष्यलेखनात्**[1] ।

---

अवशिष्टानां दशानां मध्ये अष्टौ ऋचः प्रथमदिने ऋग्द्वयञ्चेन्द्रक्रतुप्रगाथे उत्तरपक्षस्थे विनियुज्यते । एवं क्रमेण पठितासु यथाक्रमं अप्रग्रथितमेव यथापठितमृक्त्रयमादाय सम्पादितेन तृचेन गानं उत रौरवसामवत् आद्यबृहत्या अन्त्यं पदं द्विरावृत्य पङ्क्त्यर्धर्चेन सह द्वितीया बृहती । अस्याश्च बृहत्या अन्त्यं पादं द्विरावृत्त्य द्वितीयेन पङ्क्त्यर्धर्चेन सह तृतीया बृहतीत्येवं द्वयोः ऋचोः पादप्रग्रथनेन तृचकर्मकृत्वा गानमिति सन्देह इत्यर्थः ।

तथाचाष्टोत्तरशतद्व्यर्चां मध्ये दशर्चौ विहाय पञ्चसु मास्सु अष्टनवत्यधिकशतर्चां षट्षष्टिस्तृचा भवन्ति तेषु गानं कर्तव्यमिति पूर्वपक्ष्यभिप्रायस्सिध्यति। **इन्द्रक्रतुश्चेति वाक्यादिति** । छन्दोगसूत्रस्थवाक्यादित्यर्थः । **ज्योतिष्टोमात्मकेति** । अनेन च तत्र बृहद्रथन्तरयोर्ज्योतिष्टोमे प्रगाथद्वयमिति भाष्यस्थं ज्योतिष्टोमे इति पदं व्याख्यातम् । गावामयनिकप्रथमाहरुत्पत्तिर्येन वचनेन क्रियते तस्मिन् वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति इति वाक्ये ज्योतिष्टोमनाम्ना तस्य संकीर्तनात् युक्तमेव तस्य ज्योतिष्टोमत्वमिति भावः ।

अत्र वेदभाष्यकारैः एतद्ब्राह्मणव्याख्याने उद्धार्यप्रगाथविषये चतुर्विंशेऽहनि बृहत्स्तोत्रीयः, तथाऽभिप्लवेषु युग्मेष्वहस्सु बृहतो युग्मेषु रथन्तरः, कालेयस्य तु अन्वहं प्रयुज्यमानत्वात् अन्वहं प्रगाथ इति लिखनात् एतेष्वेव बृहद्रथन्तरकालेयप्रगाथप्रतीतेः प्रायणीयेऽहन्यभावं तेषामभिप्रेत्य सप्रमाणत्वोपन्यासार्थं भाष्यकारलिखनादित्युक्तम् । यत्तु छन्दोगसूत्रानुसारित्वित्यग्रिमलिखनं पूज्यपादानां तत् तत्सूत्रे तथानुपलब्धेः प्रत्युत शतस्यैकमित्येवोक्तेः वेदभाष्यकारलिखनविरोधाच्च चिन्त्यमेव ।

तथाच छन्दोगानां लाट्यायनसूत्रे दशमप्रपाठके षष्ठकण्डिकामारभ्य—पञ्चसुमास्सु बार्हताः प्रगाथा आप्यन्ते इत्यभीवर्तस्तोत्रीयाः ब्रह्मसामभूतस्य तस्य हि प्रकरणे श्रूयन्ते । अन्योन्यः प्रगाथ इति च नानाप्रगाथतां दर्शयति । चतुरशतमैन्द्राबार्हताः प्रगाथा दाशतयीषु । तेषां बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुश्चान्यत्रस्थानाः । शतस्यैकं चतुर्विंशे कुर्यात् इतरा-

---

1 B & C भाष्यकारलिखनात् ।

नभिप्लवेषु । एकोनत्रिंशत् सतोबार्हतास्तृचाः तेषामेकैकं तृतीयेऽहनि कुर्यात् । कृता ह्ये-तस्मिन् स्थाने आर्षेयकल्पेन । पञ्चममासस्योत्तमे अभिप्लवे पञ्चमेऽहनि सतोबृहतीः कुर्यात् प्रगाथाप्रभवात् । तेष्वातेषु छन्दसीसंयुज्यैतव्यमिति । षष्ठे मासि गायत्रीपादमेकैकं उष्णि-हामुपरिष्टात् कुर्यात् विष्ठावानुपपत्तिर्ह्यन्यथा । सतोबार्हतशेषेऽष्टौ तान् कृत्वा संयोग इति गौतमः । बृहतीक्षयादेवमामनन्ति । चतुरुत्तरैरेव छन्दोभिरेतव्यमिति गायत्रीं चतुर्विंशे कुर्यात्, उष्णिहं प्रथमे आभिप्लविके, ऽनुष्टुभं द्वितीये, बृहतीरितरेष्वित्यादि विस्तरेण पठितम् ।

अस्यार्थः स्फुटतया आपाततः प्रतीयत एव । क्वचिदग्निस्वामिकृततदीयभाष्ये कृतः । कठिनार्थो विशदीक्रियते—तत्र दाशतयीष्वित्यन्तं स्फुटार्थम् । अन्यत्रस्थाना इति । ब्रह्म-सामातिरिक्तस्तोत्रस्थाना इत्यर्थः । बृहद्रथन्तरस्तोत्रीयौ द्वौ कालेयस्तोत्रीय एकस्तृतीयः इन्द्रक्रतुरौत्तरपक्षिकश्चतुर्थः । शतस्य चैकं चतुर्विंशे कुर्यात् इतरानभिप्लवेषु एवञ्चान्यत्रस्थानान् चतुर उद्धृत्य शतं प्रगाथाः शिष्यंते तस्य शतस्यैकं प्रगाथं प्रायणीयेऽहनि, द्वितीये चतुर्विंशे कुर्यात् । तैत्तिरीयशाखायां चतुर्विंशः प्रायणीयो भवतीत्येवं गावामयनिकद्वितीयाहः प्रायणीयना-मकत्वेन चतुर्विंशत्वविधानात् इतरान् एकोनशतमभिप्लवेषु कुर्यात्; पञ्चसु मासेषु विंशति-रभिप्लवाः । तेष्वेकैकस्मिन्नभिप्लवे तृतीयेऽहनि सतोबृहतीविधानस्य वक्ष्यमाणत्वात् । विंशती-नामभिप्लवानामवशिष्टेषु पञ्चसु पञ्चस्वहस्सु पञ्चपञ्च प्रगाथा भवन्ति । तेषामेकस्मिन् अन्तिमाभि-प्लवे तदीयतृतीयदिन इव तदीयपञ्चमेऽहन्यपि सतोबृहतीनां विधानस्य वक्ष्यमाणत्वात् चत्वार एव प्रगाथा इत्येकोनशतप्रगाथा इति—एकोनशतप्रगाथपूर्तिरित्यर्थः । एकोनत्रिंशत् सतोबार्हतास्तृचाः । तास्वेव दाशयीष्वेकोनत्रिंशत् सतोबार्हतास्तृचा आहर्तव्याः तेषामेकैकं तृतीयेऽहनि कुर्यात् । कृता ह्येकस्मिन् स्थाने आर्षेयकल्पेन । तेषां सतोबार्हतानां तृचानामेकैकमभिप्लवानां तृतीयेऽहनि कुर्यात् । अभिप्लवेषु प्रथमद्वितीयचतुर्थपञ्चमषष्ठेषु प्रगाथाः कृता इति कृत्वा तृतीयेऽहन्येतस्मिन् प्रगाथस्थाने आर्षेयकल्पेन सतोबृहत्यः 'आत्वा सहस्रमाशत' इत्येताः कार्या इत्यर्थः । पञ्चमस्य मासस्य उत्तमे अभिप्लवेऽहनि सतोबृहतीः कुर्यात् । प्रगाथाप्रभवात् पञ्चमस्य मासस्य यः उत्तमः अभिप्लवः तस्मिन्नेकः प्रगाथो न संपूर्यते तस्मिन् प्रगाथे कृते एकोनशतसङ्ख्या प्रगाथगता न पूर्णा भवति, अतस्तत्र सतोबृहतीः कुर्यात् । तथाचोत्तमेऽभिप्लवे पञ्चमतृतीययोरह्नोः द्वौ सतो-बार्हतौ तृचौ । अवशिष्टचतुरहस्सम्बन्धिनः चत्वारः प्रगाथाः इत्येकोनशतसङ्ख्यापूर्तिर्भवतीत्यर्थः । एवञ्चैकविंशतिः सतोबृहत्यः प्रयुक्ताः प्रगाथाश्च सर्वे प्रयुक्ताः, अतः परमवशिष्यन्तेऽष्टौ बार्हतास्तृचाः । तेष्वातेषु छन्दसी संयुज्य ऐतव्यमिति षष्ठे मासि गायत्रीपादमेकं उष्णिहमुप-

रिष्यात् कुर्यात्। विष्ठावानुपपत्तिर्ह्यन्यथा। उक्तं पञ्चसु मास्सु प्रगाथा आप्यन्त इति। तत्र पूर्वोक्त-प्रकारेण पञ्चमासपर्यन्तं तेषु प्रगाथेष्वाप्तेषु प्राप्तेषु षष्ठमासे दाशतयीषु पञ्चमासार्थसंपादितपूर्वोक्त-बृहतीव्यतिरिक्तबृहतीनामभावात् तत आनयनासम्भवे छन्दसी संयुज्य गातव्यम्। द्वयोश्छन्दसोः संयोगं कृत्वा बृहतीसम्पादनं कार्यमित्यर्थः। कयोर्द्वयोश्छन्दसोः संयोग इत्यपेक्षायां दाशत-यीभ्यस्तिस्र उष्णिहः एका च गायत्री आनेया। तत्र त्रिपदामुष्णिहां त्रिपदाया गायत्र्याः एकैकपादसंयोगे कृते तिस्रो बृहत्यो भवन्तीति भावः। अत्र च तेष्वाप्तेषु छन्दसी संयुज्य रैवत्यमिति ब्राह्मणम्। षष्ठे मासीत्येतत् तद्विवरणसूत्रमिति द्रष्टव्यम्। एवं षष्ठे मासि बार्हततृचसम्पादने सति विष्ठावो विष्टुतिप्रकार उपपद्यते नान्यथेति। सतोबार्हतशेषेऽष्टौ तान् कृत्वा संयोग इति गौतम इति। गौतम आचार्यः षष्ठे पूर्वोक्तछन्दःसंयोगः कर्तव्यः। परन्तु षष्ठे मासि यत्र प्रथमाभिप्लवस्य षडहानि द्वितीयाभिप्लवस्य प्रथमद्वितीये चाहनी। एवं मिळितेष्वष्टस्वहस्सु ये सतोबार्हतास्तृचा अष्टौ अवशिष्टाः तानेकैकस्मिन्नहनि कृत्वा नवममा-रभ्य बार्हततृचसम्पादनाय पूर्वोक्तछन्दस्संयोगः कर्तव्य इत्याहेति भावः। एवञ्चैकोनविंशत् सतो बार्हतास्तृचा निष्पन्नाः। किमर्थमेवं छन्दस्संयोगः क्रियत इत्यत आह—**बृहतीक्षयादेवमा-मनन्तीति**। यस्माद्बृहतीक्षयो दाशतयीषु अत एवं छन्दःसंयोगमामनन्तीति व्याख्यात-प्रायमेतत्। चतुरुत्तरैः छन्दोभिरेतव्यमिति ब्राह्मणम्। महाब्राह्मणे बार्हततृचसम्पादनाय पूर्वपक्षनिन्दया उत्तरोत्तरमनेके पक्षा उक्ताः। तानपेक्ष्यायं तृतीयः पक्षः तद्व्याख्यानसूत्रे गायत्रीं चतुर्विंशे कुर्यादित्यादि स्पष्टार्थम्। तदिदमुपयुक्तमग्निस्वामिकृतभाष्यव्याख्यानसहितं छन्दोगानां सूत्रं सङ्क्षेपेण लिखितम्।

अत्र चैकोनत्रिंशत् सतो बार्हतास्तृचा इति स्पष्टमेव सोपपत्तिकं सूत्रं दर्शितम्। तेन च षष्ठे मासि त्रयस्स्वरसामानः त्रयोऽभिप्लवाः षडहाः तेषां यान्येकविंशतिदिनानि तेषु ब्रह्म-सामनि अभीवर्ते छन्दस्संयोगेन बार्हततृचसम्पत्तिरुक्ता भवति। गौतममते परं प्रथमेष्वष्टसु षष्ठमासीयेष्वेवाहस्सु अष्टौ सतोबार्हतास्तृचाः। तदनन्तरभाविषु त्रयोदशस्वहस्सु छन्दस्संयोग इति विशेषः। वेदभाष्यकारैरेतद्ब्राह्मणभाष्येऽयमेव पक्ष आदृतः। मीमांसाभाष्ये तु त्रयस्त्रिंशतं सतोबार्हतास्तृचा इति लिखितम्। तदनुसारेण तस्योपपत्तिः। अत एव तान्येकविंशति-र्दिनानि इति षष्ठमासस्य चाद्यानि द्वादशेत्येवं त्रयस्त्रिंशतं सतोबार्हतास्तृचा इति वाक्येन तेषु सतोबृहतीनां विधानमिति ग्रन्थेन पूज्यपादैः करिष्यते। सापि प्रमाणान्तरमूलिकै-वेत्यवधेयम्।

**छन्दोगसूत्रानुसारात्तु चतुर्विंशस्तोमकद्वितीयदिनस्थस्तोत्रान्तरेष्वेव।** तत्रापि **पवमाने रथन्तरस्य प्रगाथः, होतुः पृष्ठे बृहतः, अच्छावाकस्य पृष्ठे कालेयस्येत्येवं बोध्यम्।**

**एवमुक्त**वचनादेवेन्द्रक्रतुप्र**गाथोऽपि उत्तरस्मिन् सर्वस्मिन् पक्षसि।** एतस्य च **ब्रह्मसामस्तोत्रस्थत्वेऽपि** तत्राभीव**र्तसामाभावात् 'अभीवर्तादन्यत्र[1] स्थानाः' इति वचनार्थो न विरुध्यते। अवशिष्टाः शतं प्रगाथा**स्तत्र शतस्यैको **भाष्यकारलेखनात् प्रथमदिनीय-ब्रह्मसामस्तोत्रे। परं तु भाष्यकारीयं नौधसग्रहणं नौधस[2] स्थानकब्राह्मणाच्छंसि-स्तोत्रोपलक्षणार्थम्। वस्तुतस्तस्य** बृहत्सामकपृष्ठवत्त्वेन **श्यैतस्यैव प्रसक्तौ नौधसप्रसक्त्य-**

---

प्रस्तुतमनुसरामः। **तत्रापीति।** प्रथमदिनेऽपीत्यर्थः। **उक्तवचनादेवेति।** इन्द्रक्रतुश्चान्यत्रस्थाना इति पूर्वलिखितवचनादेवेत्यर्थः। ननु इन्द्रक्रतुप्रगाथस्य ब्रह्मसाम-स्तोत्र एव सत्वात् बृहद्रथन्तरकालेयस्तोत्रीयाणां प्रगाथानां ब्रह्मसामस्तोत्रातिरिक्तस्तो-त्रान्तरस्थानकत्वेऽपि कथमिन्द्रक्रतुश्चान्यत्र स्थाना इतीन्द्रक्रतुप्रगाथस्यापि ब्रह्मस्तोत्रातिरिक्तस्तो त्रान्तरस्थानकत्वोक्तिर्युज्यत इत्याशङ्कां परिहरति—**एतस्य चेति। तत्राभीवर्तेति।** अन्यत्र स्थाना इत्यन्यशब्दार्थे भेदे न ब्रह्मसामस्तोत्रमात्रस्य प्रतियोगित्वेनान्वयः। अपि तु पञ्चसु मास्तु बार्हताः प्रगाथा आप्यन्ते इत्यभीवर्तस्तोत्रीयाः ब्रह्मसामभूतस्य तस्य हि प्रकरणे श्रूयन्त इति पूर्वलिखितछन्दोगसूत्रोपक्रमे ब्रह्मसामभूतस्याभीवर्तस्यैव प्रगाथप्रतिसम्बन्धित्वेनैव करणत्वप्रतीतेः, तस्यैव तत्वेनान्वयो युक्तः; तथाचाभीवर्तादन्यत्रस्थाना इति तदर्थः सम्पद्यते। प्रकृते च पूर्वस्मिन् पक्षसि ब्राह्मणाच्छंसिस्तोत्रसाधनत्वेनाभीवर्तस्य 'अभीवर्तो ब्रह्मसाम भवति' इति विशेषविधिना विधानात् उत्तरस्मिंश्च पक्षसि परस्तात् समासः प्रगाथो भवति, अन्यदन्यत् सामेति महाब्राह्मणे इन्द्रक्रतुप्रगाथस्यैकत्वेऽपि भिन्नानामेव साम्नां प्रत्यहं विधानेन पूर्वपक्षोऽपेक्ष-या साम्नां विपर्यासात् अभीवर्तसामाभावात् अभीवर्तादन्यत्र स्थानकत्वमिन्द्रक्रतुप्रगाथस्य युज्यत एवेति न तद्वचनार्थानुपपत्तिरिति। **तत्र शतस्यैक इति।** एवमत्र भाष्यग्रन्थः—चतुरुत्तरं हि शतं प्रगाथाः तत्र बृहद्रथन्तरयोः ज्योतिष्टोमे प्रगाथद्वयं, नौधसकालेययोरपि तत्रै-व प्रगाथद्वयं, इन्द्रक्रतुः प्रगाथः उत्तरस्मिन् पक्षसि भवतीति। तथाच नौधसप्रगाथोऽपि प्रथम-दिने, भाष्यलिखनादित्यर्थः। **बृहत्सामकपृष्ठवत्त्वेनेति।** अत्र यद्यपि गावामयनिके प्रायणीयेऽहनि न द्वादशाहिकप्रायणीयधर्मातिदेशः। किन्तु गणत्वसामान्यात् द्वादशाहधर्मा इत्युक्तं सप्तमे। तत्रापि पृष्ठ्यषडह-छन्दोमत्रय-अविवाक्यात्मकदशरात्रस्यैव द्वादशाहान्तर्गतस्य प्रथमोत्तमौ वर्जयित्वा

---

1. B. —दन्यस्थानाः

2. A. नौधसस्मारक

भावात्, गवामयने अभीवर्तस्यैव ब्रह्मसामत्वेन विशिष्य विहितत्वाच्च ।

छन्दोगसूत्रानुसारात्तु द्वितीयदिनीयब्रह्मसामस्तोत्रे शतस्यैकः प्रगाथो बोध्यः। अवशिष्टा नवनवतिप्रगाथास्ते पञ्चसु मासेषु यावन्तोऽभिप्लवास्तेषां प्रतिषडहं तृतीयदिनवर्जं प्रतिमासं विंशत्यहानि पञ्चसु मासेषु शतम्। तेषु उत्तमवर्जं नवनवतिप्रगाथा इन्द्रदेवत्या बृहतीछन्दस्काश्च समाप्यन्ते। षडहतृतीयेषु उत्तमे च

---

प्रवृत्तिरिति साधितमष्टमे। तत्रापि न गवामयनं द्वादशाहवत्कुर्यादित्येवमेकोऽतिदेशः। किन्तु गावामयनिकं प्रथमदिनं द्वादशाहप्रथमदिनवत् कुर्यात् इत्याकारक एवातिदेश इत्यपि साधयिष्यते दशमे गवामयनसम्बन्धित्र्यनीकाविचारे पूज्यपादैः। एवञ्च द्वादशाहिके पृष्ठ्यषडहे षण्णामन्हां क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि षट्पृष्ठसामानि विहितानीति तदन्तर्गते प्रथमेऽहनि रथन्तरस्यैव पृष्ठसामत्वात् तदतिदेशेन गावामयनिके प्रायणीयेऽहनि रथन्तरस्यैव प्राप्तिः तथापि................**एवं पञ्चमासेति**। अत्र भाष्यकारेण पञ्चसु मास्सु पृष्ठ्यषडहेऽभीवर्तनिवेशमभिसन्धाय तत्साध्यबार्हतप्रगाथानामेकोनशतानां सन्निवेशः पृष्ठ्यषडहमादायापि कदाचित्प्रसज्येतेत्येतदर्थं तस्मिन् सतोबार्हततृचकल्पना कृता।

वस्तुतस्तु तत्र क्रमेण नौधसश्यैतमहावैष्टम्भत्रैशोकबार्हद्गिररैवतानामेव साम्नां छन्दोगग्रन्थेषु ब्रह्मसामत्वेन विधानात् सतो बार्हततृचकल्पना व्यर्थैवेति भाष्यकारलिखनादिना अतिरात्रसंस्थज्योतिष्टोमे बृहतः तत्समनियतस्य श्यैतस्यैव विधानात् तयोरेव प्रबलेन ज्योतिष्टोमनामातिदेशेन प्राप्तेर्नानुपपत्तिः। पवमाने परं रथन्तरस्य साधनत्वेन प्रापकं वचनमन्वेषणीयमिति। **अभीवर्तस्यैवेति**। अत्र च महाब्राह्मणीयश्चैतल्लिङ्गम्। तत्र च चतुर्विंशाहरारभ्य आभिप्लविकेष्वहस्सु स्वरसामाहस्स्विव अभीवर्ताम्नानात् प्रायणीयेऽहनि तन्निवेशाभिधानं तैत्तिरीयेऽ'भीवर्तो ब्रह्मसाम भवती'ति सामान्यविध्यभिप्रायेण ज्ञेयम्।

वस्तुतस्तु सामान्यविधेः चतुर्विंशादिविधिभिरुपसंहारस्यैव युक्तत्वादयुक्तमेव तदभिधानम्। अन्यथा सामान्यविधिना प्रथमेऽहनीव चतुर्विंशेऽहन्यपि तत्र तत्प्राप्तेरनिवारणात् एकोनशतप्रगाथानामाभिप्लविकेष्वेव निवेशापत्त्या अष्टनवतिप्रगाथानामेव तेषु निवेशादगत्या पूर्वोत्तरग्रन्थस्य सर्वस्यासमञ्जसत्वापत्तेः। अत एव वेदभाष्ये आभिप्लविकानि पञ्चमासीयानि विंशत्युत्तरशतमहानि षष्ठमासीयान्याभिप्लविकानि अष्टादशाहानि स्वरसाम्नां त्रीण्यहानीत्येकचत्वारिंशदुत्तरशताहस्सु अभीवर्तनिवेशमभिसन्धायैकोनशते प्रगाथानामाभिप्लविकेषु निवेशमुक्त्वा षष्ठमासीयेष्वहस्सु तेषु प्रगाथाभावे सति प्रथमेषु सतोबार्हततृचनिवेशेन उत्तरेषु त्रयोदशे बार्हततृचार्थं

सतोबृहतीनां तृचानामाम्नानात्। अत एव 'तान्येकविंशतिर्दिनानि षष्ठमासस्याद्यानि द्वादशेत्येवं त्रयस्त्रिंशतं[1] सतोबार्हतास्तृचाः' इति वाक्येन तेषां सतोबृहतीनां विधानम्।

एवं पञ्चमासपर्यन्तं पृष्ठ्यषडहेष्वपि सतोबृहतीनां विधानं भाष्यकारलेखनादवगन्तव्यम्। शेषेषु त्वहस्सु विशेषवचनाभावे तिसृणामुष्णिहां त्रिभिर्गायत्रीपादैस्संयोगेन बृहतीत्रयसम्पादनम्। न तु क्वापि ब्रह्मसामस्तोत्रे प्रगाथः। तदेतत् पञ्चसु मासेषु बार्हताः प्रगाथा आप्यन्त इति लिङ्गं द्वयोः प्रग्रथने उपपद्यते, न तु तृचगाने क्रियमाणे भाष्यलेखनात्।

अष्टोत्तरशतद्वयसङ्ख्याकानामृचां पञ्चप्रगाथसम्पादकदशाङ्कन्यूनत्वादष्टनवत्यधिकशतावशिष्टानां षट्षष्टिस्तृचा भवन्ति। ते च सप्ताधिकेषु त्रिषु मासेषु समाप्येरन्। तथाहि—पूर्वोक्तरीत्या प्रतिमासं दशदिनानां सतोबृहतीछन्दस्कत्वात् विंशतिदिनान्यव-

---

छन्दस्संयोगविधायकं ब्राह्मणेषु व्याख्यातम्। गौतममतभेदः सूत्रे उक्तः। अतो नेदं युक्तमिति ध्येयम्। तानि तदपेक्षया यान्यवशिष्टानि तेष्वित्यर्थः। न तु क्वापीति। षष्ठमाससम्बन्धिषु शिष्टेष्वहस्सु ब्रह्मसामस्तोत्रे पूर्वोक्तरीत्या बृहतीत्रयं सम्पाद्य तृचे गानं कार्यम्। अत एव तेषु नैव तत्स्तोत्रे बार्हतः प्रगाथः, अपितु पूर्वोपपादितरीत्या बृहद्रथन्तरकालेयेन्द्रक्रतुप्रगाथचतुष्कातिरिक्ताः शतं प्रगाथा बार्हता अभीवर्तसामसाध्याः पञ्चसु मासेषु नवनवतिसङ्ख्याकाः, एकश्च प्रथमदिनीयब्रह्मसामस्तोत्रसाधनाभीवर्तसाध्य इति तत्रैव बार्हताः प्रगाथा न त्वन्यत्रेति भावः।

वस्तुतस्तु पूर्वोक्तरीत्या पृष्ठ्यषडहे अभीवर्तसाम्नो विधानाभावादेव अभीवर्तसामसाध्यो नैव बार्हतः प्रगाथः पञ्चसु मासेष्वपि। एवं षष्ठमासेऽपि केषुचिद्दिवसेष्वित्यवधेयम्। दशाङ्कन्यूनत्वादिति। पूर्वोक्ताः पञ्चमेन्द्रक्रतुप्रगाथसहिताः प्रथमदिनस्थानीयाश्चत्वारो न पञ्चमासान्तर्गताः। किन्तूर्वरिता नवनवतिरेव ते तदन्तर्गताः। तेषामेव पञ्चमासाधिकरणपूर्वं विवक्षितत्वात् पञ्चप्रगाथसम्पादकदशाङ्कन्यूनत्वमुक्तं युक्तमेवेति भावः। दशदिनानामिति। प्रतिमासमेकैकाभिप्लवे तृतीयदिने सतोबृहतीनां विधाने सति चतुर्ष्वभिप्लवेषु चत्वारि दिनानि भवन्ति। पृष्ठ्यषडहेष्वपि सतोबृहतीनां विधानात् तदीयानि षड्दिनानीति दशदिनानामित्यर्थः। विंशतिदिनानीति। तथा च प्रतिमासमवशिष्टानि यानि विंशतिरहानि तेषु प्रत्येकमेकैकबार्हततृचगणनया विंशतिस्तृचा भवन्तीत्येवं क्रमेण मासत्रयेण षष्टि–

---

1. B. त्रयस्त्रिंशत्

शिष्टानि तानि मासत्रयेण षष्टिस्सम्पद्यन्ते। अवशिष्टानि षट् चतुर्थमासस्याभिप्लव-तृतीयवर्जमुपादेयानीति सप्ताधिकेषु त्रिषु मासेषु समाप्तिस्स्यात्। यदा तु तुल्यन्यायत्वात् पञ्चस्वपि प्रगाथेषु मुख्यतृचे[1] गानं तदा पञ्चदशानां ऋचां न्यूनत्वादवशिष्टास्त्रिणवतिशतं ऋचः: तासां तृचाश्चतुष्षष्टिरेका च ऋगिति पञ्चाधिकैस्त्रिभिर्मासैस्तृचसमाप्तावपि एका ऋगवशिष्यत इति तद्वैयर्थ्यं च। सर्वथा लिङ्गानुपपत्तिः। प्रगाथशब्दानुपपत्तिश्च।

---

स्तृचास्सम्पद्यन्त इत्यर्थः। **सप्ताधिकेष्विति**। वर्ज्यतृतीयेन दिनेन सह सप्तदिनाधिके ष्वित्यर्थः। **पञ्चस्वपीति**। इन्द्रक्रतुप्रगाथसहितप्रथमदिनीयचतुःप्रगाथेष्वित्यर्थः। अत्र भाष्यवार्तिकतन्त्ररत्नकारादिभिः 'अथवा सान्तप्रथमतृचे गानं कृत्वा, ततः तस्मात्तृचात् एकामृचमुपादायान्ये ऋचौ गृहीत्वा तृचे गानं क्रियते। तदाहि तृचगानप्रापिचोदकोऽनुगृहीतो भवति। लिङ्गञ्चोपपत्स्यते। प्रगाथवचनमपि ऋक्प्रग्रथनादेवोपपन्नमिति विशेषाशङ्का-प्रदर्शनावसरे लिङ्गोपपत्तिःचोदकानुग्रहश्चोपपादितः। तदेतद्वयमप्ययुक्तम्।

तथाहि—प्रथमं यथाक्रमं यथा पाठं प्रथमतृचे गानं कृत्वा तदन्त्यामृचं पुनरभ्यस्य अग्रिममृग्द्वयं पठनीयमिति द्वितीयोऽयं तृचो भवति। एतदीयामन्तिमामृचं पुनरभ्यस्या-ग्रिममृग्द्वयं पठनीयमित्ययं तृतीयस्तृचस्सम्पद्यते। एवं ऋक्प्रग्रथनेन तृचसम्पत्ता-वाश्रीयमाणायां नवभिः ऋग्भिः चत्वारस्तृचा भवन्ति, सप्तदशभिरष्टौ, पञ्चविंशतिभिर्द्वादश पञ्चचत्वारिंशद्भिः सप्तचत्वारिंशत नवनवतिऋग्भिः एकोनपञ्चाशत्। एवमेकोत्तरशतऋग्भिः पञ्चाशत् अवशिष्टाभिः सप्तनवतिऋग्भिः अष्टाचत्वरिंशत्तृचाः एतेषां पञ्चाशद्भिर्मेलने अष्ट-नवतितृचाः प्रगाथाः सम्पद्यन्ते। एका च ऋक् अवशिष्यते। एवञ्चाष्टनवत्यधिकशत-र्चामष्टनवतिप्रगाथसम्भवेऽपि एकस्य प्रगाथस्य न्यूनत्वात् पञ्चसु मास्सु न नवनवति-प्रगाथसमाप्तिरिति कथं न लिङ्गदर्शनानुपपत्तिः अवशिष्टैकऋग्वैयर्थ्यञ्च। यदि तु प्रथम-स्तृचोऽप्रग्रथित एव पठित इति न वार्हतप्रगाथेषु अष्टनवतिसङ्ख्यापि सम्भाव्यते इति विभाव्यते तदा तु सप्तनवतिप्रगाथा एवेति सुतरां प्रगाथद्वयन्यूनता। कथञ्चित् प्रगाथद्वयन्यूनत्वेऽपि अवशिष्टानामेव पञ्चमासाधिकरणत्वसम्भावनया लिङ्गदर्शनोपपत्तावप्यनाञ्जस्यं स्पष्टमेव। एकऋग्वैयर्थ्यन्तु तथापि तदवस्थमेव द्वयोरप्यृचोः प्रग्रथनमिति सिद्धान्तेऽपि तुल्यः। नहि सिद्धान्ते द्वयोरेव ऋचोर्गानम् अपितु द्वयोः ऋचोः तत्तत्पादद्विरावृत्त्या तृचकर्म कृत्वैव। अत एव सिद्धान्ते तन्त्ररत्नकृता—तस्माद्द्वयोर्ऋचोः पादप्रग्रथनेन तृचकर्म कृत्वा गातव्यमित्यन्ते

1. A. प्रगाथेषु च गानं

न चैकं तृचं पठित्वा अन्त्यां ऋचं पुनरुपादायाग्रिमऋग्द्वयपाठ इत्येवं ऋक्प्रग्रथनमेव किं न स्यादिति वाच्यं 'अन्या अन्या ऋचो भवन्ति' इति वचनेन तन्निरासात्। अतः पादप्रग्रथनमेवेति सिद्धम्।

इयं च लिङ्गानुपपत्तिर्भाष्यकारलेखनानुसारात् प्रकरण एव तावत्सङ्ख्याकऋक्पाठमङ्गीकृत्य। यदा तु 'चतुश्शतमैन्द्राबार्हताः प्रगाथाः दाशतयीषु' इति कल्पसूत्रकारवचनात् दाशतयीभ्यस्समानयनं तदा पूर्वपक्षिणोऽपि चतुश्शतं तृचानामेव समानयनोपपत्तेर्लिङ्गोपपत्तिरविकलैवेति प्रगाथपदादेव प्रग्रथनम्॥ ६॥

---

उपसंहनम्। वस्तुतस्तु प्रकृतावपि पवमानयोः पृष्ठेषु च द्वयोः ऋचोः पादप्रग्रथनेनैव तृचकर्मसंपत्तेस्सत्वात् तथैव विकृतावपि युक्त इत्यसत्पक्ष एव चोदकानुग्रहो न भवत्पक्षे। अतो लिङ्गदर्शनोपपत्तिचोदकानुग्रहावनुक्त्वैव पूर्वोक्तां प्रगाथशब्दानुपपत्तिं केवलां परिहर्तुकामो वर्णकान्तरारम्भे हेतुभूतां विशेषाशङ्कां दर्शयति—नचैकमिति। तन्निरासादिति। यद्यपि पूर्वलिखिते छन्दोगसूत्रे ब्राह्मणे वा अन्योन्यःप्रगाथ इति पठितम्, तथापि अन्या ऋच इति तैत्तिरीयशाखान्तरस्थमेव भाष्योदाहृतमत्र धृतं द्रष्टव्यम्। पादप्रग्रथने हि पादमात्र एव द्विर्गानं, न तु कृत्स्नायामृचीति पादप्रग्रथनप्रयुक्तमृगन्यत्वमुपपद्यते। पूर्वस्या एव ऋचः प्रग्रथने तु न तदिति भावः। कल्पसूत्रकारवचनादिति। पूर्वोक्तछन्दोगसूत्रकारस्यैव स्पष्टतया वचनस्योपलब्धेरिति भावः।

वस्तुतस्तु तावत्सङ्ख्याकर्चां प्रकरणपाठाभावेऽपि भाष्यकारमते दाशतयीभ्यः समानयनपक्षेऽपि अष्टोत्तराधिकशतद्वयर्चामेवानयनं किं प्रमाणकमित्येव वक्तुमुचितम्।

प्रगाथपदादेवेति। यद्यपि ऋक्प्रग्रथनपक्षे दाशतयीभ्यः समानयनपक्षे दाशतयीभ्यः समानयने पञ्चमासपर्याप्तसमाप्त्यनुरोधेन नवनवत्युत्तरशतर्चामेवानयनसम्भवात् सप्तनवत्युत्तरशतर्भिः अष्टनवतिप्रगाथेषु लब्धेष्ववशिष्टऋग्द्वयेन नवनवतिप्रगाथानां सम्भवोप्यस्ति, तथापि प्रथमतृचस्याप्रग्रथितत्वात् न तमादाय नवतिसङ्ख्या शक्यते उपपादयितुमिति प्रगाथपदादेव पादप्रग्रथनं सर्वप्रगाथेषु द्रष्टव्यम्। यदा तु तदनुरोधेनाष्टनवत्यधिकर्गपेक्षया प्रथमतृचोऽपि बार्हतोऽन्यः प्रग्रथित एवानीयते। तस्य च केवलमग्रे प्रग्रथनार्थमदृष्टार्थमेव पाठः। तथाच तं तृचं पठित्वा तदन्त्यामृचं पुनरस्यस्याग्रे अष्टनवत्यधिकशतान्तर्गतप्रथमपठितऋग्द्वयपाठ इत्येवं क्रमेण नवनवतिप्रगाथानां संभव इत्यालोच्यते तदा दृष्टार्थप्रथम तृच-

(७)—अर्थैकत्वाद्विकल्पस्स्यात् ॥ २९ ॥ अर्थैकत्वाद्विकल्पस्स्यादृक्सामयोस्तदर्थत्वात् ॥ ३१ ॥ वचनाद्विनियोगस्स्यात् ॥ ३१ ॥

सामवेदे शाखाभेदेनैकस्यैव स्वरसमूहात्मकस्य साम्नः आरोहावरोहादिभेदेन प्रकारभेदा आम्नाताः—एकस्यैव रागस्य देशभेदेन प्रकारभेदवत्। तेषां च प्रकाराणामेकगीत्यर्थत्वात् व्रीहियवादिवदेव विकल्पः सिद्ध एव प्रसङ्गात् स्मार्यते।

एवं वा—विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि। तेषु च यूपावटास्तरणबर्हिर्न्यायेन न प्राकृतानां रथन्तरादिसाम्नामृचां वा प्राप्तिः, प्राकृतस्तोत्रविशेषे-

---

पाठे प्रमाणाभावात् सत्यपि वा तस्मिन् 'अन्यान्या ऋचो भवन्ति तदेव सामे'ति लिङ्गदर्शनानुपपत्तिरेव शरणम्।

वस्तुतस्तु पूर्वलिखिते छन्दोगसूत्रे बृहतीक्षयाद्धचेवमामनन्तीत्याम्नानात् दाशतयीषु चतुरुत्तरशताधिकबृहत्यभाव एव प्रतीयत इति न पूर्वपक्षिणोऽपि चतुश्शतं तृचानामेव समानयनोपपत्तेरिति पूज्यपादवचनं युक्तमिति दिक्।

---

अर्थैकत्वाद्विकल्पः स्यात्।

स्वरसमूहात्मकस्येति। यद्यपि 'गीतिषु सामाख्ये'ति सूत्रात् गीतयः साम, न स्वरसमूहः; तथापि भाष्योक्तरीत्या गीतिर्नाम क्रिया सा आभ्यन्तरप्रयत्नजनिता, स्वरविशेषाणामभिव्यञ्जिका सामशब्दाभिलप्या। सा नियतपरिमाणायामृचि च गीयते। तत्सम्पादनार्था ऋक्षु अक्षरविश्लेषो, विकर्षणं अभ्यासो, विरामः, स्तोभ इत्येवमाद्याः प्रकारभेदाः, ते एकस्यामपि सामशाखायामुपात्ता अपि विकल्पसमुच्चयविषयतां प्रतिपद्यन्ते, तथापि भाष्यानुक्तावपि शाखाभेदेन भिन्नाः प्रकारभेदा अपि विचारविषयत्वेन पूज्यपादैः प्रदर्शिताः। ते शास्त्रदीपिकानुरोधादधिकानामपि सङ्ग्रहो भवत्वित्येतदर्थं आरोहावरोहपदाभ्यामपि विश्लेषविकर्षणाद्या एव प्रकारा उच्यन्ते। स्वराभिव्यञ्जकत्वेनैव स्वरसमूहात्मकस्य साम्न इत्युक्तम्। एकगीत्यर्थत्वादिति। एकगीत्यर्थत्वेनैव च युगपत्प्रयोगासम्भवः। तदनुरोधेन सामावृत्तौ च गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वमित्येतत् एकपदेन सूचितम्।

एवं वा। यूयावटास्तरणबर्हिर्न्यायेनेति। तृतीयेऽष्टमपादे 'द्रव्यसंस्काराः प्रकरणाविशेषात् सर्वकर्मणां' 'निर्देशात्तु विकृतावपूर्वस्यानधिकार' इति पूर्वोत्तरपक्ष-

एवेव तेषां निबद्धत्वात्। तत्प्रकरणे चेदं श्रुतम्—'यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा नान्ववायन् तस्मात् य एवं विद्वान् साम्ना स्तुवीत' इति। तत्र ऋक्छब्दोऽप्रगीतऋक्परः। प्रगीतायास्सामविधिनैव प्राप्तेः। न हि ऋगाश्रयत्वं विना साम्नस्स्तोत्रसाधनता सम्भवति। स्तोभानामर्थशून्यत्वेन तदाश्रितानृक्सा‌म्नां गुणाभिधानरूपस्तोत्रसाधनत्वासम्भवात्। अतस्तत्र प्रगीताप्रगीतऋचोर्विकल्पेन साधनता उत प्रगीताया एवेति चिन्तायां—

अन्तिमस्याख्यातस्य यच्छब्दोपबद्धत्वेन सामविधायकत्वाभावात्, आद्ययोरेवाप्राप्तार्थत्वादिना लेट्त्वनिश्चयात् ऋक्सामयोरुभयोरपि विधिः। अर्थाच्च तुल्यकार्यत्वसिद्धौ विकल्पः। न चासुरागमनेन ऋचो निन्दितत्वात् कथं तद्विधिः, निषेधैकवाक्यतां विना

---

सूत्राभ्यां विचारितम्। प्रकृतौ दर्शपूर्णमासयोः समन्त्रकलवनादिबर्हिर्धर्माणां अङ्गप्रधानसाधारणबर्हिरर्थत्वात् दैक्षे पशावपि बर्हिषा यूपावटमवस्तृणातीति विहिते यूपावटास्तरणबर्हिष्यपि तेषां धर्माणामनुष्ठानमिति पूर्वपक्षं प्रापय्य, प्रकृतौ यद्बर्हिः कार्यं तत्प्रयुक्ता बर्हिर्धर्माः कार्यद्वारेण विकृतिं गच्छन्ति, न स्वरूपतः, प्रकृतौ च धर्मवतः कृत्स्नस्य बर्हिषो यथाल्लूनस्य सन्नद्धस्य आसादितस्य वचनेनाङ्गप्रधानसाधारणहविरास्तरणमेव कार्यं दृष्टमित्यत एवासंस्कृताद्बर्हिषः पवित्रविधृत्यादिकरणं। तथा च प्राकृततादृशकार्याभावे न यूपावटास्तरणबर्हिषां ते धर्माः; अपि त्वसंस्कृतेन लौकिकेनैव बर्हिषा तदास्तरणमिति सिद्धान्तितम्। तेनैव न्यायेनाप्राकृतस्तोत्रे प्राकृतकार्याभावे प्राकृतस्तोत्रसाधनानां साम्नां ऋचां वा न प्राप्तिः सम्भवति। विकृतिष्वपि यान्यतिदेशतः प्राप्तानि पृष्ठादिस्तोत्राणि तत्रैव तदुपनिबद्धानां साम्नामृचां च प्राप्तिरित्यर्थः। **तत्प्रकरणे चेति।** एवञ्च तान्यप्राकृतानि स्तोत्राणि साधनाकाङ्क्षाणि तत्पूरणार्थत्वेनेदं श्रुतमित्यर्थः। येषाञ्च न ऋगाश्रितत्वं तेषां स्तोत्रसाधनत्वमपि नास्तीति व्यतिरेकमाह— **स्तोभानामिति।** अत्र मूलग्रन्थेषु किमृचा वा स्तोतव्यं, साम्ना वा, उत साम्नैवेति संशये निर्दिष्टायाः पूर्वपक्षकोटेः फलितार्थमाह —**प्रगीताप्रगीतर्चोरिति। अन्तिमस्येति।** य एवं विद्वान् साम्ना स्तुवीतेति वाक्ये विधित्वेन श्रुतस्येत्यर्थः। अत्र तन्त्ररत्ने ऋचा स्तुवते, साम्ना स्तुवते इत्युभयत्रापि स्तुत्यैव विधिः कल्पनीय इत्युक्तम्। तत्र स्तुत्या विधिकल्पनस्यान्योन्याश्रयग्रस्तत्वात् अयुक्ततां मन्यमान आह—**अप्राप्तार्थत्वादिनेति।** यद्यपि तयोरप्यस्ति यच्छब्दः तथापि स न कर्तृसमानाधिकरणः कर्तृसमानाधिकरणस्यैव प्रवृत्त्युन्मुखपरत्वेन तत्प्रतिबन्धकत्वादिति भावः। **अर्थाच्चेति।** साधनाकाङ्क्षायां प्राकृतैकस्तोत्रसाधनत्वेन विहितयोः ऋक्सामयोः तुल्यकार्यत्वसिद्धावर्थादेव विकल्प इत्यर्थः। **निषेधैकवाक्यतां विनेति।**

निन्दात्वस्यैवाप्रतीतेः। अतोऽत्यन्तदुराराध्यानामपि ऋचा वशीकरणात् विध्येकवाक्यतयाऽस्य स्तुतित्वमेवेति प्राप्ते—

वाक्यभेदविषमशिष्टविकल्पादिदोषभिया यच्छब्दोपबद्धस्यापि लिङ एव सामविधायकत्वं न तु लट्त्वेन सन्दिग्धयोः। एवं च साम्न एवेयं सर्वा स्तुतिः। ऋङ्निन्दाऽपि न हि निन्दान्यायेन विधेयसामस्तुत्यर्थैवेति तस्याः प्रगीताया एव साधनत्वम्। इदं चाधिकरणं यत्र स्तोत्रावान्तरप्रकरणे[1] साम, तद्योनिरुत्तराश्च न पठिताः तद्विषयम्। इतरत्र साम्नः ऋचां च प्रकरणादिनैवाङ्गत्वोपपत्तेः सामविधिवैयर्थ्यात्। अत एव प्रकृतोदाहरणे साम्ना इत्येकवचनोपादानात् एकमेव साम सामवेदादानेयम्। ऋक्च तत्र योनिरूपैव। 'एकं साम तृचे क्रियते' 'यद्योन्यां गायति' इत्यादेर्दीक्षणीयावाङ्नियमन्यायेन प्राकृततत्तत्स्तोत्रीयर्चामेवोद्देशेनाप्राकृते अप्रवृत्तेः। क्रतुगतप्राकृतचतुरस्तोमत्वादिगुणानुरोधात्तु एकस्या एव प्रगीताया ऋचस्तावद्वारमभ्यासः।

---

'बर्हिषि रजतं न देय'मिति निषेधैकवाक्यतयैव 'सोरोदी'दित्येवमादीनां निन्दार्थवादत्वस्य दृष्टत्वादिति भावः। वशीकरणादिति। न चासुरागमनस्य स्तुतिपर्यवसायित्वे सामविध्यर्थवादे असुरागमनाभावस्य निन्दापर्यवसायित्वापत्तिरिति वाच्यम्। एकत्रागतैरप्यसुरैरुपद्रवो न क्रियते तेषां वशीकारादित्येवं रूपेण इतरत्र च असुरा दुष्टा नायान्त्येवेति कुतस्तत्कृतोपद्रव इत्येवंरूपेणोभयथाप्युपद्रवप्रागभावपरिपालनरूपगुणयोगेनैव स्तुतेः विवक्षितत्वेनानुपपत्त्यभावात्। विषमेति। असुरागमनं सर्वथा निन्द्यमित्यृचो निन्दितत्वमेव प्रतीयमानं कथञ्चित् प्रशंसायै कल्प्यम्। तया च प्रशंसया विधिकल्पनेन अप्रगीतायाः साधनत्वम्। साम्नस्तु नैवमिति न सामतुल्या ऋगिति विषमशिष्टो विकल्प इत्यर्थः। पर्यवसितेऽधिकरणसिद्धान्ते प्राचीनैरनुक्तं विशेषमधिकरणसिद्धान्ताक्षेपोपोद्धातत्वेनानुवदति—इदञ्चेति। यत्र स्तोत्रावान्तरेति। स्तोत्रपदात्प्राक् अप्राकृतेति योज्यम्। अत एवाप्राकृतसाधनाकाङ्क्षिस्तोत्रसाधनत्वेनैवापेक्षितः साम्ना स्तुवीतेति विधिः इत्युक्तं प्राक्। दीक्षणीयेति। यथैव दीक्षणीयायां विहितस्वरो ज्योतिष्टोममहाप्रकरणपठितोऽपि वचनात् दीक्षणीयापूर्वप्रयुक्त एवेति साधितमधस्तात्। तेनैव न्यायेन 'तदभ्यासः समासु स्यात्' 'नैमित्तिकन्तूत्तरार्थमानन्तर्यात्' इति सूत्रयोः प्राक् भाष्यकारेण 'एकं साम तृचे क्रियते' 'यद्योन्यां तदुत्तरयोर्गायती'त्यादिवाक्यानां ज्योतिष्टोमप्रकरणे समाम्नानस्य दर्शितत्वात् तद्विहितसाम्नां ज्योतिष्टोमाङ्गभूतप्राकृतस्तोत्रसाधनऋग्द्वारेण प्राकृतस्तोत्रार्थत्वात् तदपूर्वप्रयुक्तत्वमेवेति तेषां प्राकृतस्तोत्रावान्तरापूर्वप्रयुक्तत्वमेव। अतो नोत्तराद्वयसम्पादनेन

---

1. B. साम्नां

**नन्वेवं यत्राप्राकृतस्तोत्रावान्तरप्रकरणे योनिरुत्तरा चाम्नाता,** तत्रोत्तरयोस्साम्नि **प्रमाणाभावः। यत्र च संज्ञादिभिर्भिन्नं स्तोत्रान्तरमुपात्तं; न च प्रकरणे ऋचः पठिताः, न वा प्रकृतोदाहरणवत् सामविधिस्तत्र स्तोत्रविध्यन्यथानुपपत्त्या ऋचामानयनेऽपि सामानयने प्रमाणाभावः। अथ तत्र प्रगीतमन्त्रसाध्यगुणाभिधानस्यैव स्तोत्रतया स्तोत्रविध्यन्यथानुपपत्त्यैव सामानयनम्, ततोऽत्रापि तत एव सामप्राप्तेः 'साम्ना स्तुवीत' इति विधिवैयर्थ्यापत्तिरिति चेत्, 'साम्ना स्तुवीत' इत्यस्यानारभ्याधीतत्वेन प्रकृतावानर्थक्येनानिवेशे सर्वत्रैव विकृतावप्राकृतस्तोत्रविषये सामविधायकत्वोपपत्तेः,।** भाष्यकारादि- **लेखनस्वारस्यादस्य विकृतिविशेषप्रकरणपठितत्वाङ्गीकारे तु नायं वस्तुतस्सामविधिः, अपि तु स्तोत्रपदशक्तिग्राहकयाज्ञिकप्रसिद्ध्युपोद्बलकस्सन्ननुवाद एव अप्राकृतस्तोत्रविधिस्तुत्यर्थः,** एकत्वविधानार्थोवेति **ध्येयम्॥**

---

अप्राकृतस्तोत्रे तृचसम्पादनावश्यकता। अतो यस्यां योनिऋचि साम पठितं तदृग्विशिष्टमात्रं एकमेव साम आनेयमिति भावः। एतेन यद्चेत्यस्य क्रत्वाचिन्तया विधित्वमाश्रित्यातिदेशप्राप्तस्तुतिसाधनसामाधारतृचबाधेन एकर्गाधारत्वविधानेन पूर्वपक्षं कृत्वा अप्रगीतगैकत्वविधानेन सिद्धान्तकरणे, पूर्वपक्षे योन्युत्पन्नसाम्न उत्तरयोर्गानाभावात् अनूहः, इतरत्र तु तृचाश्रितत्वाभावादूह इति प्रयोजनभेदेनोहानूहविचारात् सङ्गत्युपपत्तिरित्यौदुंबराधिकरणे अर्थवादपादे भट्टसोमेश्वरोक्तमपास्तम्। अप्राकृतस्तोत्रसाधनतया योनिसाम्नि विद्यमानेऽपि प्राकृतस्तुतिसाधनयोः ऋक्सामयोः प्राकृतस्तोत्रकार्याभावेन अतिदेशतोऽप्यप्राप्तौ तृचगानस्य सुतरामप्राप्तेः, तद्बाधेन पूर्वपक्षस्य तदबाधेन सिद्धान्तकरणस्य चायुक्तत्वात्।

अत्र च ज्योतिष्टोमप्रकरणे सामाधारत्वेन याः ऋचः पठिताः तदुद्देशेनैव सामैकत्वविधिः स्यात्, तदा यत्राग्निष्टुद्यागादौ प्राकृतयोन्युत्तराबाधेन सामाधारतया 'आग्नेयीषु स्तुवत' इति वचनविहिता दाशतयीभ्य आग्नेय्यो ऋचः समानेया भवन्ति। तासां प्राकृतस्तोत्रसाधनत्वे सत्यपि प्राकृतऋचामभावात् न सामैकत्वं प्राप्नुयात्। प्राकृतस्तोत्रसाधनत्वेन ऋचामुद्देश्यत्वे तु तासां प्राकृतस्तोत्रीयाऋक्स्थानापन्नत्वात् भवति तत् इति द्योतयितुं तत्तत्स्तोत्रीयर्चामेवोद्देशेनेत्युक्तम्। **तत्रोत्तरयोस्साम[म्नि] इति।** यद्योन्यामित्यस्य अप्राकृतेऽप्रवृत्तेः उपपादितत्वादिति शेषः। **भाष्यकारादीति।** भाष्यकारेण अत्राधिकरणारम्भे 'क्वचित् कर्मविशेषे श्रूयते' इति लिखितम्; तत्स्वारस्यादित्यर्थः। **एकत्वविधानार्थो वेति।** अत्र च यद्यपि सिद्धवदनुवादवत् सामैकत्वविधिः कल्प्यते, तथापि यस्मिन् विकृतिविशेषप्रकरणे यान्यप्राकृतानि स्तोत्राणि यैर्विधिभिर्विहितानि तत्सन्निधिपठितानुवादकल्प्यो विधिः सामैकत्वविषयकः तद्विकृतिविशेषाङ्गभूताप्राकृतस्तोत्रसाधनसामपर्यवसाय्येवापद्येत, न विकृत्यन्तराङ्गभूताप्राकृतस्तोत्रसाधनसाम-

एतदस्वरसादेव वर्णकान्तरं—क्वचित्कर्मविशेषे 'अयं सहस्रमानवः' इतीयं ऋक् प्रगीता अप्रगीता च पठिता। पुनश्च 'अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठते' इत्यनेन विनियुक्ता। सा द्विविधाया अपि पठितत्वात् द्विविधाऽपि विकल्पेन विनियुज्यत इति प्राप्ते—

अप्रगीतायाः प्रगाणार्थ एव पाठः। न ह्यनवधारितस्वरूपायां सुखं गानमर्थावबोधो वा सम्भवति। प्रगीता त्वनन्यार्था प्रयोजनमपेक्षमाणोपस्थाने विनियुज्यत इति सैव

---

पर्यवसायीति, तत्र सामैकत्वोपपादनं दुर्घटमेव। अथ प्रमाणान्तरेण तत्र सामैकत्वप्राप्त्युपपादने प्रकृतेऽपि तेनैव तदुपपादनसम्भवे तदेकत्वविधिरपि निष्फल एवेति विवेचनीयम्।

[1] आग्नीयीन्यायेनेति। ज्योतिष्टोमे आग्नेय्यो ऋचः पठिताः वचनात् स्तोत्रादौ विनियुक्ताः। तत्रैव 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति वचनविहितः आग्नीध्रमण्टपोपस्थानाङ्गत्वेन आग्नेय्या विनियोगः श्रुतः। तत्राविशेषात् प्रकृतानामप्रकृतानाञ्च आग्नेयीनां ग्रहणं, अथवा कार्याकाङ्क्षिणीनां प्रकृतानामेवाग्नेयीनां ग्रहणमिति संशये, अपूर्वसाधनीभूतोपस्थानार्थत्वान्यथानुपपत्त्या अप्रकृतानामपूर्वार्थत्वस्य पुरोडाशार्थत्वानुपपत्त्या व्रीह्यादीनामिव कल्पनीयत्वापत्तेः, प्रकरणपाठादिना क्लृप्तज्योतिष्टोमापूर्वसम्बन्धानामाग्नेयीनामपूर्वसम्बन्धकल्पनानपेक्षणात्, लाघवोपजीविविधिना तासामेव ग्रहणमनुमन्यत इति प्रकृतानामेव ग्रहणमिति सिद्धान्तितं तृतीय[द्वितीय]पादे 'अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वादि'ति सूत्रे, (पू. मी. ३–२–२०) तथा इहाप्यक्लृप्तापूर्वसम्बन्धसामान्तरानयनापेक्षया उत्तराणां स्तोत्राङ्गत्वनिर्वाहाय क्लृप्तापूर्वसम्बन्धयोनिसाम्न एव ग्रहणं युक्तमिति भावः।

अत्रेदं वक्तव्यम्। यदि ह्याग्नेय्या वाचनिको विनियोगोऽस्ति तदा तत्र प्रकृताप्रकृतग्रहणविचारे प्रकृतग्रहणं युज्यते, नह्येवमिह योनिसाम्न उत्तरासु विनियोजकं वचनमस्ति। यद्योन्यां तदुत्तरयोरिति वचनस्याप्राकृतस्तोत्रीयऋक्षु प्रवृत्त्यभावस्योपपादितत्वात्। असति विनियोजके वचने सन्निधानाविशेषात् आग्नेयीनामिव अन्यर्चामपि प्रकरणपठितानां प्राप्त्यापत्तिवदिहापि स्तोत्रान्तरीययोनिसाम्नः प्राप्त्यापत्तिः। सति च विनियोजके 'यद्योन्यां' इत्येवंरूपे वचने यथैवोत्तराग्रन्थपठिते एवोत्तरे ग्राह्ये तथैव तत्पूर्वं योनित्वेन पठितोत्तराग्रन्थाधीतैव ऋक् ग्राह्या योनिपदेनेति तद्गतसाम्न एव वाचनिकोऽतिदेशो भवेदेवेति किमाग्नेयीन्यायोपन्यासेन।

---

1. प्रतीकमिदं मूलपुस्तकेषु कुत्रापि नोपलभ्यते

**ग्राह्या। योऽप्यप्रगीताया एव शाखान्तरे पाठः सोऽपि तत्पुरुषान् प्रति ऋक्स्वरूपज्ञानार्थ एवेति न शाखान्तरीय**प्रगाणाख्यसंस्कारविरोधः ॥

---

इतरथा प्रकृतौ ज्योतिष्टोमेऽपि तृचे स्याच्छ्रुतिनिर्देशादित्यधिकरण (९–२–३) दर्शितरीत्या उत्तरयोर्योनिसामनियमविधानपरस्य यद्योन्यां तदुत्तरयोरित्यतिदेशवचनस्य वैयर्थ्यापत्तिर्दुर्वारैव। अतो यद्योन्यां तदुत्तरयोर्गायतीति ज्योतिष्टोमप्रकरणपठितमपि वचनं प्रकृतौ व्यर्थं सत् विकृतौ एतादृशविषये उत्तरासु योनिसामप्रापकमित्यवश्यं वक्तव्यम्। नहि प्रकृताविदं सार्थकम्। 'एकं साम तृचे क्रियत' इत्यनेनैवास्यार्थस्य प्राप्तत्वात्।

तथाहि—तृचे स्याच्छ्रुतिनिर्देशादित्यधिकरणदर्शितरीत्या स्तोत्रीयस्य साम्नोऽथवा सामैकत्वस्य वा विधानमित्युभयथापि यद्योन्यामित्यस्य उत्तरयोरतिदेशविधया योनिसामनियमार्थत्वमुक्तमयुक्तं योन्युत्तरादिरूपाणामृचां क्रमप्रकरणादिना तत्तत्स्तोत्राङ्गत्वं सामसंस्कारं विना यथानुपपन्नं सत् सामापेक्षं तथैव 'रथन्तरं पृष्ठं भवति' इत्यादिवचनैः रथन्तरादिसाम्नामपि तत्तत्स्तोत्राङ्गत्वं ऋगाश्रयत्वं विनाऽनुपपन्नं सत् ऋगपेक्षं; तत्र यावद्यस्यामुत्पन्नं रथन्तरादिसाम तद्योन्यक्षरसंस्कारद्वारा स्तोत्राङ्गत्वेन निराकाङ्क्षतामापद्यते, तावत् 'एकं साम तृचे क्रियते' इत्यनेन न केवलं स्वयोनिमात्रसंस्कारकं स्तोत्रीयं साम कार्यं, अपि तु तृचसंस्कारकं कार्यमिति बोध्यते। स च तृचः कथं सम्पादनीय इत्यपेक्षायां प्रकरणपठितसामाकाङ्क्षेण तत्तद्योन्युत्तरत्वेन उत्तराग्रन्थाधीतोत्तराद्वयेनेत्येवं अर्थाल्लब्धे परस्पराकाङ्क्षया सम्बन्धे कथं नाम न भवेदुत्तरासु योनिसामनियमः। एतदभिप्रायेणैव 'सामोहप्रदेशे' इत्यग्रिमसामोहविचारसूत्रे शास्त्रदीपिकायां—"एकं साम तृचे क्रियत' इत्यस्यैव योनिसामातिदेशकत्वम्। यद्यपि च सामस्वरूपस्य अतिदेशः, तथापि स्तोत्रसाधनतयाऽतिदिश्यते 'एकं साम तृचे क्रियते स्तोत्रीयमि'ति वचनादि"ति ग्रन्थेनोक्तम् अतः प्रकृतौ व्यर्थमेवेदं वचनं, विकृतावेतादृशे विषये सार्थकमित्यलं विस्तरेण।

वर्णक्रान्तरे

**प्रगाणाख्यसंस्कारविरोध इति।** न च प्रगाणाख्यसंस्काराविरोधेऽपि एतयेत्येतच्छब्देन सन्निधिं बाधित्वा वाक्यात् शाखान्तरस्थैवाप्रगीता कुतो न गृह्यत इति वाच्यम्। प्रगीतायाः प्रकरणपाठेन प्रकरणिसम्बन्धस्य क्लृप्तत्वात् आग्नेयीन्यायेन सन्निहितवाचकैतच्छब्दबलाच्च प्रकृतप्रगीताग्रहणस्यैव युक्तत्वात्। तथा च यस्मिन् प्रकरणे प्रगीताप्रगीतयोः उभयोरपि पाठेन सन्निधानं तत्र सन्निधानाविशेषेऽपि अनन्यार्थत्वादेव प्रगीताग्रहणम्। या तु शाखान्तरगता अप्रगीता अनन्यार्था सा तु न सन्निहिता प्रकृता चेति न एतयेति पदेन ग्रहणार्हेति भावः।

एवं वा—साममन्त्रप्रसङ्गात् ऋग्यजुर्मन्त्रयोस्स्वरश्चिन्त्यते—ते हि क्वचित् उदात्तानुदात्तस्वरितप्रचयरूपचातुस्स्वर्येणाधीताः। क्वचित्त एव शाखान्तरे प्रचयवर्जं त्रैस्वर्येण। तत्रोभयोरपि गीतिप्रकारवद्विकल्प एव। न च 'तानो यज्ञकर्मण्यजपन्यूङ्ख-सामसु' इति स्मृत्या तानस्वरस्य विहितत्वादुभयबाध इति वाच्यं, श्रौतानामध्ययन-विध्यध्यापितानां स्वराणां पाठादिना तत्तत्क्रत्वपूर्वसाधनीभूतमन्त्रवृत्तित्वस्य प्रबलप्रमाण-प्रमितत्वेन स्मृत्या बाधायोगात्। अन्यथा 'अग्निर्मूर्धा' इत्यादीनां स्मृत्या नवग्रहाङ्ग-भौमार्चने विनियोगात् क्रमादिना आग्नेयाद्यङ्गत्वानापत्तेः। न चैवं नवग्रहहोमाङ्गत्वाना-पत्तिः, सौर्याकांक्षयेव नवग्रहहोमाकांक्षयैव वाक्येन विनियोगोपपत्तेः। प्रकृते तु श्रौतस्वरविरोधात् तानस्मृतेरप्रामाण्यमेवेति प्राप्ते—

श्रौतस्य स्वरस्याध्ययनविधिनाऽध्यापितस्य प्रयोजनापेक्षायां 'यद्यच्छक्नुयात् तत्तत्कुर्यात्' इत्युपबन्धेन प्रकरणादिसहकृतमन्त्रवृत्तिपाठेन च प्रयोजनद्वयमवगम्यते। एकं तावत् प्रयोगकालात्पूर्वमेवार्थविशेषनिर्णायकत्वम्। न च मन्त्राणां प्रयोगकाल एवार्थस्मारकत्वात् पूर्वमर्थविशेषावधारणाभावेऽपि बाधकाभावः, विध्यवगतस्याप्यर्थ-विशेषस्य प्रयोगकाले मन्त्रप्रतिपाद्यत्वसन्देहे प्रयोगप्राशुभावभङ्गापत्तेः। अतस्तदर्थं प्रयोगाद्बहिरेव मन्त्रार्थनिर्णयार्थं, 'बहुव्रीहौ प्रकृत्या पूर्वपदं' इत्यादिस्वरोपयोगः। अपरश्च पूर्वमवधारितस्याप्यर्थस्य प्रयोगमध्ये विस्मरणे पुनर्निर्णायकता। तस्य च कादाचित्कत्वेऽपि मन्त्रनैयत्यवदेव स्वरनैयत्योपपत्तिः। मन्त्रोच्चारणवदेव च स्वरोच्चारण-सिद्धेर्न स्वरानुसन्धानमात्रेण निर्णायकता [1]।

तदेवं द्विविधः स्वरस्य क्रतूपयोगः प्रकरणादिना सिद्ध्येत्। तत्र च विशेषरूपेण स्मृत्या यज्ञप्रयोगे तानस्वरविधायिकया बाधात् सामान्यरूपस्य प्रकरणादेः प्रयोगबहि-र्भूतार्थनिर्णयोपयोगित्वविषयतैव कल्प्यते। प्रयोगमध्ये विस्मरणादौ तु स्वरानु-

---

**एवं वा**

गीतिप्रकारवदिति। यथैव शाखाभेदेनाम्नातानां गीत्युपायानां एकगीत्यर्थत्वाद्विकल्पो न तु समुच्चयः, एवमिहापि त्रैस्वर्यचातुःस्वर्ययोः विकल्प एव सिद्ध इति नात्र भाष्यकारीय-समुच्चयपूर्वपक्षे अभिनिवेष्टव्यमित्यनेन सूचितम्। अतस्तन्न्यायेन प्राप्तो विकल्प एवेत्येव पूर्वपक्ष इत्यभिप्रायः। तस्य कादाचित्कत्वेऽपीति। प्रयोगमध्ये अर्थविस्मरणस्य कादाचि-त्कत्वेऽपि अभ्युदयशिरस्कत्वार्थमन्त्रोच्चारणनैयत्यवत् स्वरोच्चारणनैयत्योपपत्तिः। अत एव यद्यपि स्वरोच्चारणाभावेऽपि अध्ययनकालीनस्वरानुसन्धानमात्रेणैवार्थविशेषस्मरणोपपत्तेः, न नियमेन स्वरोच्चारणं कर्तव्यमित्यपि निरस्तम्। अभ्युदयशिरस्कत्वार्थमन्त्रोच्चारणस्येव स्वरोच्चारणस्याप्याव-

---

1. B. निर्णायकाशङ्का

सन्धानेनैवार्थविशेषस्मरणम्। अत्र च तानस्यार्थविशेषोपयोगाभावेनादृष्टार्थत्वेऽपि एकमन्त्रवृत्तित्वादेव त्रैस्वर्यादिबाधकता। इतरथा गुणानुरोधेन मन्त्रावृत्त्यापत्तेः। अजपेत्यादिना पर्युदासाच्च जपादौ त्रैस्वर्यादिप्रतिप्रसवः। जपाः जपतिचोदनाचोदिता मन्त्राः। न्यूङ्खाः शास्त्रेषु मन्त्रविशेषाः ॥ ७ ॥

---

## (८)—सामप्रदेशे विकारस्तदपेक्षस्स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥ वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥

एवं सामोहोपोद्घातं सप्रसङ्गं निरूप्याधुना सामोहो निरूप्यते। 'कवतीषु रथन्तरं गायति, यद्योन्यां गायति' इत्यादौ यत्र सामातिदेशः तत्र साम्नो ऋगक्षराभिव्यक्त्यर्थत्वात् यत्र स्थाने योनौ एकाराद्यक्षरसंस्कारिका आईभावादिरूपा गीतिश्श्रुता तत्र स्थानान्तरे यत्रैवैकारपाठ उत्तरादौ तत्रैव आईभावरूपा गीतिरूहितव्या, न तु प्राकृतस्थानपठिताक्षरान्तरे कर्तव्या, तत्र गीतेस्तदक्षराभिव्यञ्जकत्वासम्भवेनाराादुपकारकत्वप्रसङ्गात्। आईभावो हि प्रकृतौ अवर्णेवर्णात्मकस्य सन्ध्यक्षरस्यैकारस्य विश्लेषरूपसंस्कारार्थः। नहि एकारो नाम वर्णान्तरं, प्रमाणाभावात्; अपि तु स्मृतिसहकृतप्रत्यक्षेणावर्णेवर्णात्मक एव। अतश्च तद्विश्लेषकस्य आईभावस्य तत्स्थानपठिताक्षरान्तरविश्लेषकत्वासम्भवात् यत्रैवोत्तरादावेकारस्तत्रैवाईभावः कार्यः।

यद्यपि चायं विश्लेषादिरूपः संस्कारो नार्थाभिधानोपयोगितया दृष्टार्थः, तद्व्यतिरेकेणैव सन्ध्यक्षरेणार्थाभिधानस्य जायमानत्वात्। तथाऽपि गानसंस्कृतमन्त्रजन्यगुणाभिधानव्यक्तेरेव स्तोत्रतया स्तोत्रत्वसिद्ध्यर्थतयैवोपयुज्यते। न चैवं न विश्लेषादिरूप एव संस्कारः प्रमाणाभावादननुगमाच्च; न हि विश्लेष एव सर्वत्र संस्कारः 'ए इ ऐ ई इत्येतानि तालव्यम्' इति स्मृत्या ईईकारयोरपि तालव्यत्वात्। 'तालव्यमाईयदृद्धम्' इति स्मृत्या च तत्रापि आईभावविधानेन तत्र सन्ध्यक्षरत्वाभावेन विश्लेषासम्भवात् अतस्सर्वानुगतो वर्णान्तरागमने पूर्वाक्षरपरिलोप एव संस्कारस्स्तोत्रत्वघटकः तस्य चैकारस्थानस्थितवर्णान्तरेऽपि सम्भवान्नोहसिद्धिरिति वाच्यम्। तथात्वेऽपि संस्कार्यतावच्छेदकस्यैकारत्वस्याक्षरान्तरेष्वभावेनोहोपपत्तेः।

---

स्यकत्वादित्यर्थः। ननु त्रैस्वर्यस्य अर्थविशेषनिर्णायकत्वेन दृष्टार्थत्वात् भिन्नकार्यार्थत्वेन विरोधाभावे कथं तानस्य त्रैस्वर्यबाधकत्वमित्याशङ्कां परिहरति—अत्र चेति। तानशब्देनैकस्वर्यमुच्यते। एकमन्त्रेति। प्रयोगकाले एकस्मिन् मन्त्रे एककालं द्वयोः स्वरयोर्विरोधस्तावत् स्फुट एवेति। (अत्र पातः)

---

वस्तुतस्तु—परिलोपाख्यसंस्काराङ्गीकारे श्रुतस्य वर्णस्य स्तोत्रसाधनत्वानापत्तेर्लोपस्य क्वापि संस्कारत्वादर्शनाच्च विश्लेषादिरेव सामगप्रसिद्धोऽननुगतोऽपि संस्कार इति सिद्ध ऊहः। एवं च प्रधानभूतोत्तरादिऋगक्षरानुरोधेन यत्र ऋगक्षराल्पत्वं तत्रावशिष्टगीतेर्लोपः। यत्र वा ऋगक्षराधिक्यं तत्र गीतिविशेषस्यावृत्तिः इत्याद्यापद्यमानमपि न दुष्यति ॥ ८ ॥

---

(९)—स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥ सर्वातिदेशस्तु सामान्याल्लोकवद्विकारस्स्यात् ॥ ३५ ॥ अन्वयं चापि दर्शयति ॥ ३६ ॥ निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥ अन्वयो वा अर्थवादस्स्यात् ॥ ३८ ॥

साम्नः कश्चिदंशो ऋगक्षराधिरूढः कश्चिच्च स्तोभाक्षराधिरूढः। प्रजापतिहृदयादौ स्तोभाक्षराधिरूढ एव। तत्र सामातिदेशे स्तोभानामप्यतिदेशो भवेन्न वेति चिन्तायां—

साम्न ऋगक्षराभिव्यक्त्यर्थत्ववत् स्तोभाक्षराभिव्यक्त्यर्थत्वस्य तुल्यत्वात् गुणानुरोधेन प्रधानभूतानामृचामिव स्तोभानामपि नातिदेशः। न च स्तोभानां प्रायशोऽनर्थकत्वात् स्तोत्रसाधनत्वासम्भवेन निष्प्रयोजनानां प्राधान्यानुपपत्तेर्गीतिकालपरिच्छेदकत्वेन गीत्यङ्गत्वात् तदतिदेशे अतिदेशोपपत्तिरिति वाच्यम्। अग्निष्टपतीत्यादिभाष्यकारोक्तस्तोभाक्षराणां ऋगेकवाक्यत्वासम्भवेऽपि स्वातन्त्र्येणैव गुणाभिधानरूपस्तोत्रकरणत्वसंभवेन ऋग्वदेव प्राधान्योपपत्तेः। येषामपि हुंफडादिस्तोभाक्षराणामर्थशून्यत्वं तत्रापि तदुच्चारणस्यादृष्टद्वाराऽनुष्ठानसादेश्यात् प्रधानऋगङ्गत्वं प्रकरणादिना स्तोत्राङ्गत्वमेव वेति न सामाङ्गत्वकल्पनावसरः। न च साम्नो वाऽदृष्टार्थत्वं स्तोभानां वेत्यत्र नियामकाभावः। साम्नोंऽशे दृष्टार्थत्वमंशे चादृष्टार्थत्वमित्येवंविधवैरूप्यापत्तेरेव नियामकत्वादिति प्राप्ते—

---

स्तोभस्यैके द्रव्यान्तरे।

................घन्ते तत्रैकस्य साम्नोंऽशभेदविषयं दर्शयति—साम्नः कश्चिदिति। भाष्यकारोक्तेति। ऐन्द्यामवभृथं गायतीति विहितस्य साम्नः ऐन्द्यामृचि विहितस्य मध्ये अग्निष्टपति प्रतिदहतीत्येवं रूपाः स्तोभाः पठ्यन्ते। नहि तत्र स्तोभानामेवंरूपाणां इन्द्रप्रकाशकऋगेकवाक्यता संभवति। ऐन्द्रीऋक्प्रकाश्यस्येन्द्रस्य शीतकर्मकारित्वेन तपनकर्तृत्वासम्भवात्, अतः स्तोत्रसाधनत्वासम्भवेऽपीत्यर्थः। स्वातन्त्र्येणेति। यद्यपि मन्त्रप्रकाश्याग्न्यादीनां तपनकर्तृत्वसम्भवेऽपि तेषां [प्रकरणे] पाठस्तावत् सिद्ध एव। तेन च स्तोत्राङ्गत्वं सामान्यतोऽवगम्यत

'यज्ञायज्ञीयेन स्तुवीत' इत्यादौ तत्र तत्र साम्नां सामान्यतो विशेषतश्च विनियोगस्यैव नियामकत्वेन सामोच्चारणस्यैव तदंशे अदृष्टार्थत्वं, स्तोभानां त्वर्थशून्यानां गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वमेव। अन्यथा हि साम्नः प्रकरणादिनैव सर्वस्यापि विवक्षितार्थस्य लाभे विनियोगविधिवैयर्थ्यापत्तिः। अतो विनियोगवशेन झटिति प्रयोजनलाभे द्वारभूतादृष्टस्यापि तत्रैव झटिति कल्पना, न तु स्तोभेषु, स्तोत्रादिरूपद्वारिसम्बन्धकल्पनासापेक्षत्वात्। अतस्स्तोभादीनां गीत्यङ्गत्वात् तदतिदेशेनातिदेशोपपत्तेर्न तदंशस्य लोपाख्योऽन्यथाभाव.। अर्थवत्स्तोभाक्षरेषु तु ऋगक्षरवदेव स्तोत्राद्युपयोगोपपत्तेः गीतेरेव तदङ्गत्वमिति तु प्रतिभाति। अत एवानर्थकस्तोभेषु ऋक्सत्त्वे साम्नः आश्रयिकर्मत्वं तदभावे शुद्धादृष्टार्थत्वमेव ॥ ९ ॥

---

एव। नहि प्रगीतमन्त्रसाध्ये स्तोत्रे केवलयोः ऋक्सामयोः साधनत्वं सम्भवतीति स्तोत्रपदशक्तिमहिम्ना ऋचां सामाधारतया साम्नश्च ऋगक्षराभिव्यक्तिद्वारेति परस्पराकाङ्क्षया सम्बन्धेन स्तोत्राङ्गत्वसिद्धौ सामविनियोजकसामान्यविशेषविधिवैयर्थ्यमापद्यमानं स्तोभांश एवादृष्टविधया सामविधायकतया परिहरणीयमिति भावः। **अतो विनियोगेति**। यद्विनियोगवशेन स्तोभाक्षराधिरूढसाम्नः प्रयोजनं स्तोत्रसम्बन्धरूपं कल्प्यते तेन स्तोत्रविनियोगेन अपेक्षया कल्प्यमानं द्वारभूतमदृष्टं तदीयविनियोगवशात् झटित्युपस्थितं साम्न्येव कल्पयितुमुचितमित्यर्थः। **न तु स्तोभेष्विति**। स्तोभेषु यदि स्तोत्ररूपद्वारिसम्बन्धः केनचित् क्लृप्तः स्यात् तदा द्वारिणमपेक्ष्य द्वारापेक्षा स्यात् ततश्च तदुपस्थितिविलम्बसापेक्षा स्तोभेष्वदृष्टरूपद्वारकल्पना न युक्तेति भावः। **न तदंशस्येति**। स्तोभवृत्तिसामांशस्येत्यर्थः। ननु स्तोभातिदेशानतिदेशविचारस्य सप्तमादावुचितत्वेन इह तत्करणे असङ्गतिरित्याशङ्कायाः, साम्नोऽतिदिष्टस्य ऊहानूहे विचारिते तत्प्रसङ्गात् स्तोभानामतिदेशोऽस्ति नास्तीति चिन्तितमिति तन्त्ररत्नोक्तप्रसङ्गसङ्गत्या परिहर्तव्यत्वेऽपि ऊहरूपेणापि सङ्गतिं दर्शयति—**लोपाख्य इति**। योनौ क्लृप्तस्य साम्नो दृष्टार्थत्वात् यत्रास्योत्तरयोर्विधानं तत्र योनिसाम्नो लोपसम्भवेऽपि इह स्तोभनिष्पाद्यसाम्नः योनावेवादृष्टार्थस्य तथैवोत्तरयोरतिदेशान्न लोपः कार्य इति भावः। यद्यप्येतादृशे विषये नोक्तलक्षणाक्रान्तः ऊहः सम्भवति, तथापि लोपेऽप्यन्यथाभावत्वमस्त्येवेति अन्यथाभावत्वसामान्यात् गौणमूहत्वमङ्गीकृत्य कथञ्चित् सङ्गतिरित्यर्थः। अत्र प्राचां ग्रन्थेषु स्तोभसामान्येनातिदेश इति सिद्धान्तितम्। तत्र स्वसम्मतं विशेषं दर्शयति—**अर्थवत्स्तोभेति**।

---

## (१०)—अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥

प्रसङ्गात् स्तोभलक्षणमुच्यते। ये अक्षरेभ्यो ऋगर्थाभिधानोपयोगिभ्योऽधिका ऋगक्षरविलक्षणा वर्णास्ते स्तोभाः। अत्र ऋगक्षरेभ्योऽधिकत्वेऽपि श्वाद्भिःश्वाद्भिरित्यभ्यासे ऋगक्षरविलक्षणत्वाभावात् अन्त्यं विशेषणम्। ओ ग्ना ई इत्यादिविकारे ऋगक्षरविलक्षणत्वेऽपि आधिक्याभावादाद्यम्।

वस्तुतस्तु—विलक्षणत्वस्यार्थानभिधायकत्वरूपत्वे अर्थाभिधायकेषु अग्निष्टपतीत्यादिस्तोभेष्वव्याप्तेरन्यस्य च विलक्षणत्वस्य निर्वक्तुमशक्यत्वात् यत्राभियुक्तानां स्तोभ इति प्रसिद्धिः ते स्तोभाः। स्तोभत्वं च मन्त्रत्वादिवदेवाखण्डोपाधिरिति न शक्यतावच्छेदकाप्रसिद्धिः। अत्र च ये अर्थवन्तस्स्तोभाः तेषां ऋङ्मन्त्रवदेव गुणिनिष्ठगुणाभिधानजनकत्वादेव प्रामाण्यम्। गुणाभिधानस्य चादृष्टार्थत्वेऽपि ज्ञानस्य स्वतः प्रमाणत्वात् दोषाभावेन चाप्रामाण्यायोगात् विषयसिद्धेः प्रमाणत्वाविघातो ऋग्वदेव नानुपपन्नः॥

यदि तु देवताविग्रहादिप्रसङ्गभिया तात्पर्यविषयीभूतस्यैवार्थस्य सिद्धेः; प्रकृते तु सदृष्टान्तं गुणाभिधानस्यादृष्टार्थत्वान्न तात्पर्यकल्पना, अपि त्वाहार्यज्ञानजनकत्वमेव, तदाऽस्तु पदार्थविषया प्रामाण्यं अनर्थकस्तोभाक्षरवत्। अथ वा सर्वत्रैवमादिस्थले प्रामाण्या-

---

### अधिकञ्च विवर्णञ्च जैमिनिः।

**प्रसङ्गादिति।** ऋगन्तर्गतत्वाभावादेव स्तोभानामसंस्कार्यत्वात अतिदेशसाधनेनैव यत्सूचितं स्तोभानामृगपेक्षयाऽऽधिक्यं तदेव लक्षणव्याजेन प्रसङ्गादुच्यत इत्यर्थः। **दोषाभावेनेति।** वेदरूपान्निर्दोषाच्छब्दात् उत्पद्यमानं गुणविषयकं ज्ञानं गुणाभावेऽनुपपद्यमानं गुणसत्तामपि साधयतीति तादृशगुणसद्भावे विषयाबाधात् प्रमाणत्वमुपपद्यत एवेति भावः। **यदि त्विति।** यदि गुणविषयकवेदोत्थज्ञानस्य निर्दोषत्वमात्रेण गुणसत्तासिद्धिः तदा देवताविषयकविग्रहज्ञानात् विग्रहोऽपि सिध्येदित्यतः तात्पर्यविषयीभूतार्थ एव वेदस्य प्रामाण्यं कल्प्यत इति भावः। **सदृष्टान्तमिति।** दृष्टन्तभूता ऋचः तत्रापि गुणाभिधानस्यादृष्टार्थत्वे सुतरां स्तोभजन्यगुणाभिधानस्यादृष्टार्थत्वम्। अतो न तत्रैव तात्पर्यमिति भावः। **तदा अस्त्विति।** आहार्यज्ञानजनकत्वे यथार्थानुभवजनकत्वाभावेन अप्रामाण्यापत्ताविति तदेत्यस्यार्थः। **पदार्थविषयेति।** यथैव हि मन्त्राणां स्मारकत्वेन प्रयोजनवत्वे सिद्धेऽपि अनधिगतार्थगन्तृत्वरूपं प्रामाण्यं, अत एवानुभावकत्वाभावात् अनुभावकत्वरूपं वा प्रामाण्यं न सम्भवति; तथापि सर्वत्र गामानयेत्यादौ संसर्गविषयकशाब्दबोधं प्रति यथा शब्दः करणं

**भावेऽपि प्रयोजनवत्त्वमात्रेण स्वाध्यायविधेरुपयोगः। नहि वेदत्वावच्छेदेन प्रामाण्यमिति राजाज्ञा 'वेदोऽखिलो धर्ममूलम्' इति मूलपदस्य** जनकत्वज्ञापकत्वोभयसाधारण्ये**नाप्युपपत्तेः॥ १०॥**

---

पदार्थज्ञानं अवान्तरव्यापारः, तथा पदार्था एव करणं तज्ज्ञानमवान्तरव्यापारः। शब्दस्तु पदार्थज्ञानं प्रति करणत्वेनोपक्षीण इति तर्कपादे आचार्यप्रदर्शितरीत्या पदार्थानामेव करणत्वं युक्तम्। न च भूतभाविपदार्थानां नियतपूर्ववृत्तित्वाभावात् करणत्वानुपपत्तिः। भूतभाविपदार्थानां स्वरूपेणाविद्यमानानामपि ज्ञानविषयत्वेन सत्वात् ज्ञाततायामिव शाब्दबोधं प्रत्यपि करणत्वोपपत्तेः। अत एवोक्तं **न्यायसुधाकृता**—अतीतानागतयोरपि अतिक्रान्तदिनगतसङ्ख्यावत् ज्ञाततायामपि करणत्वोपपत्तिरिति। नैयायिकमते मौनिवाक्यस्थले शब्दस्याप्यभावाच्च। अतश्च ज्ञानविषयत्वेनैव यथा शब्दस्य करणत्वोपपत्तिः तथा मन्मतेऽप्युपपत्तिः; तेन पदार्थानामपि शाब्दप्रमितिकरणत्वात् सर्वमन्त्राणाञ्च स्वविनियोगविधौ प्रयोगविधौ च पदार्थत्वेनान्वयात् अर्थविषयकशाब्दप्रमाकरणत्वोपपत्तेः युक्तं प्रामाण्यमिति मन्त्राधिकरणकौस्तुभदर्शितरीत्या पदार्थविधया प्रामाण्यं अनर्थस्तोभवत् अर्थवत्स्तोभानामप्युपपद्यत एवेति भावः। यदि त्वस्मिन् मतेऽनाश्वासः तदा तदधिकरणोपपादितमेव प्रकारान्तरमनुवदति—**अथवेति**। **जनकत्वज्ञापकत्वेति**। तथाच मन्त्रेष्विव स्तोभेषु अनधिगतार्थप्रमाजनकत्वरूपप्रामाण्याभावेऽपि धर्मोत्पत्त्युपयोगिस्तोत्रसाधनगीतिकालपरिच्छेदरूपप्रयोजनजनकत्वेनैव धर्ममूलत्वोपपत्तिरित्यर्थः।

---

(११)—धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

तदेवं त्रिविधस्याप्यूहस्य प्राकृतदेवतादिस्थानापन्न एव वैकृतदेवतादौ प्रसक्तेः स्थानापत्तिरिदानीं निरूप्यते। तत्र मूले तत्कार्यकारित्वरूपां स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्वमुक्तम्। यद्यपि च सर्वत्र विधिरेव स्थानापत्तौ बीजं, तथाऽपि

---

धर्मस्यार्थकृतत्वात्।

व्रीह्यादिषु श्रुता अपि धर्माः न तत्प्रयुक्ताः। किन्तु अपूर्वसाधनविशेषप्रयुक्ताः इति पूर्वपादे स्थितम्। नीवारादिषु च तत्साधनविशेषरूपमस्तीति कर्तव्यमेव प्रोक्षणादीति किमत्र विचार्यते इत्याशङ्कामपनुदन्नाह—तदेवमिति। सत्यं अपूर्वप्रयुक्ता धर्मा इति स्थितं, तथापि यदीया धर्माः प्राप्यत्वेन येषु अपेक्षिताः तेषां न तत्स्थानापत्तिं विना तद्धर्मप्राप्तिः इत्यतः स्थानापत्तिः अस्ति नवेत्यस्मिन्नधिकरणे चिन्त्यते। यद्यपि स्थानापत्तिकल्पितातिदेशसिद्ध्यर्थं ससमादावेव युक्ता चिन्तयितुं; अन्यथा प्रकृतौ यवानां व्रीहिस्थानापन्नत्वेऽपि अतिदेशाभावे ऊहाभावात्; तथापि देहलीदीपकन्यायेन ऊहार्थापीत्यतः उभयोपयोगित्वेनेहैव विचार्यते। ततश्च नीवारैः सूर्यदेवतादिभिरङ्गैः तत्तत्प्रधानापूर्वं भावयेदित्येवं तत्तदवान्तरवाक्यार्थभावनानामितिकर्तव्यताकाङ्क्षया तत्तत्स्थानापत्त्यतिदेशेन प्राप्तानां प्राकृततद्धर्माणां तेषु ऊहस्सिध्यतीत्यर्थः। तदेवमित्येवंपदेन अनन्तरोपपादितसामोहः परामृश्यते। पूर्वमुपपादितः मन्त्रसंस्कारद्वैविध्येन द्विविध ऊहः सामोहेन त्रिविधो जातस्तस्येत्यर्थः।

अथवा एवंपदेन पूर्वोक्तः पञ्चविधन्यायः परामृश्यते—मन्त्राः अर्थप्रकाशनार्थाः नोच्चारणेनादृष्टार्था इत्येकः। मुख्यार्थ एवैषां विनियोगो न गौणे इति द्वितीयः। अपूर्वसाधनत्वप्रयुक्ताः, न त्वग्न्यादिस्वरूपप्रयुक्ता इति तृतीयः। प्रकृतौ समवेतार्थाः न सवित्रादिपदवत् असमवेतार्था इति चतुर्थः। तथा स्वार्थपरा न तु 'ये यज्ञपतिं वर्धान्' इति निगदपठितयज्ञपतिपदवत् परार्था इति पञ्चम इति।

एवं पञ्चविधन्यायेन सिद्धस्य त्रिविधस्योहस्येत्यर्थः। यद्यपि आर्द्रभावरूपयोनिसाम्ना उत्तरागतैकारे ऊहे विद्यमानेऽपि न योनिगतैकारस्थानापत्तिः पञ्चविधमानेन अस्ति उत्तरागतैकारे, इति न त्रिविधस्योहस्य स्थानापत्तिविचारो लभ्यते। तथापि इरापदवृत्तिगीतेरेव स्थानापत्तिविचारोपपत्तेः न त्रिविधस्येति प्रतिज्ञाभङ्गः। तस्याः पञ्चविधत्वमिति। उक्तमिति शेषः।

**तत्सहकारीणि पञ्चेति पञ्चविधत्वम्।** प्रत्यक्षाद**नुमानात्** श्रुतस्वशब्दात् **प्रतिषेधानुमित-स्वशब्दात् अभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दादिति।**

**तेषां चोदाहरणानि, 'नैवारश्चरुः' इति नीवाराणां व्रीहिकार्यकारित्वं प्रत्यक्षात् न च नैवार इति विकारार्थतद्धितरूपस्वशब्दादेव तदिति शङ्क्यं, तस्य सम्बन्धसामान्य-वाचित्वेनाप्युपपत्तौ चरोर्नीवारविकृतित्वस्य** प्रत्यक्षाधीनत्वात्।

**तथा 'नखावपूतश्चरुर्भवति' इत्यत्र नखानामुलूखलमुसल**स्थानापन्नत्वमनुमानात्**—नखानां हि** आवपनमेव [1] **प्रत्यक्षेण कार्यमवधार्यते उलूखलमुसलयोश्चावघातः। आवपनाव-घातयोश्चैकवितुषीभावकार्यत्वात् तत्साधनयोरप्येकवितुषीभावप्रयोजनकत्वमनुमेयमेव।**

**तथा पाशुकचातुर्मास्येषु परिधौ पशुं नियुञ्जीत' इति श्रुतस्य परिधेः यूपकार्य-कारित्वं** श्रुतस्वशब्दादेव। न **ह्यत्राप्राकृतनियोजनान्तरविधिः विशिष्टविध्यादिगौरवापत्तेः।**

---

प्रत्यक्षविधिनाऽभावे विधानेन विकारतः।
स्वशब्दाच्च निषेधानुवादात्तत्कार्यकारिता॥

इत्यभियुक्तोक्तं पञ्चविधत्वं दर्शयति—**प्रत्यक्षादिति।** श्रुतस्वशब्दादिति। स्वपदेन कार्यकारित्वमुच्यते। तद्वाचकाच्छब्दादित्यर्थः। अत्र च अनुमानादित्यनेन विकारत इत्यस्य सङ्ग्रहः। **प्रत्यक्षाधीनत्वादिति।** **यद्यपि** तद्धितेन नीवारसम्बन्धित्वमात्रमुक्तचरो-रुच्यते **तथापि** प्रत्यक्षमेव हि नीवारेभ्यो हविर्निष्पद्यमानं दृश्यते। तेन दृष्टसामर्थ्यानुसारेण तद्धितशब्देन नीवारप्रकृतिकत्वमेव चरोरुच्यत इति प्रत्यक्षप्रमाणिकैव कार्यापत्तिः। एवञ्च व्रीहयः पुरोडाशाख्यहविर्निर्वृत्त्या यागार्थाः। नीवारा अपि यागसाधनहविरर्था इत्येवं प्रत्यक्षमुपलभ्यते। तस्माद्व्रीहयोऽपूर्वार्था इति कृत्वा धर्मैर्युज्यन्ते तद्वन्नीवारा अपीति सिद्धं भवतीत्यर्थः। **स्थानापन्नत्वमनुमानादिति।** नखाः उलूखलमुसलस्थानापन्नाः तत्प्रयोज्य-वितुषीभावप्रयोजकत्वादित्येवं अनुमानप्रयोगो द्रष्टव्यः। **आवपनमेवेति।** निलुञ्छनं आवपन-पदेनोच्यते। **तयोरपीति।** तच्छब्देन आवपनावघातयोः परामर्शः। **अनुमेयमेवेति।** नखाः उलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकाः स्वव्यापारद्वारा उलूखलमुसलजन्यकार्यजनकत्वात् इत्यनुमानेन उलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वरूपहेतुज्ञाने जाते पश्चात् पूर्वोक्तानुमानेन तत्स्थानापन्नत्वज्ञानं जायते नखेष्विति साक्षात् तत्कार्यकारित्वाभावेऽपि तत्कार्यप्रयोजकत्वमेव स्थानापन्नत्वमित्यर्थः। **श्रुतस्वशब्दादेवेति।** पशुनियोजनरूपयूपकार्यनिरूपिताधिकरणतापरात् पशुं नियुञ्जीतेति सप्तम्यन्तपरिधिशब्दादेव पशुनियोजनरूपयूपकार्यकारित्वमित्यर्थः। **नह्यत्रेति।**

---

1. निर्लुञ्छनमेव

तथा 'न गिरागिरा' इति निषेधानुवादबलात् गिरापदकार्यवाचिस्वशब्दानुमानेनेरापदस्य गिरापदस्थानापन्नत्वम्।

तथा 'संस्थिते षडहे मध्वाशयेत् घृतं वा' इत्यत्र षडहाभावे मध्वशनादिविधिना

---

यदि ह्यत्र विशिष्टोद्देशे वाक्यभेदापत्त्या नियोजनान्तरविधिः स्यात् तदा परिध्यधिकरणकं नियोजनं स्वतन्त्रमेव विधीयमानं न यूपाधिकरणकं पशुनियोजनं स्यादिति न यूपस्थानापत्तिः सिध्येत्; अतो वक्ष्यमाणोत्तराधिकरणप्रकारेण वाक्यभेदानापत्तेः गौरवापत्तेश्च तस्मिन्नेव नियोजनरूपे कार्ये यूपः अधिकरणत्वेन सप्तम्या विहित आसीत्। तस्मिन्नेव सप्तमीश्रुत्या परिधेरधिकरणत्वेन विधाने यूपवद्वृत्तेः यूपकार्यकारित्वमित्यर्थः। **कार्यवाचिस्वशब्देति**। कार्यवाचिपदरूपो यः स्वशब्दः तस्यानुमानेनेत्यर्थः। न गिरा गिरेति निषेधः 'ऐरं कृत्वोद्गेयम्' इति च विधिरित्येवं भेदेनाश्रयणे वाक्यभेदः स्फुट एव। अत एवेरापदविधिरेव। तेन च गिरापदं निवृत्तमेव निषेधेनानूद्यत इति निषेधोऽनुवादः। अत एव वाक्यभेदापत्तिभियैव न स्तोभविधया इरापदविधिः; अनपेक्षितविधित्वापत्तेः। तच्च विधीयमानमिरापदं कस्मिन् कार्ये विधीयत इत्यपेक्षायां यद्यपि तत्कार्यमनुपस्थितं शब्दानभिहितञ्च, तथापि यद्गिरापदं निषिध्येरापदं विधीयते नूनमिरापदं गिरापदकार्ये इति कार्यविषयानुमितिर्भवति। एवञ्च गिरापदकार्यानुमानं प्रतिषेधात् भवति। यद्यपि न केवलं प्रतिषेधमात्रेण तत्कार्यानुमानं, अपितु विधिसहकृतेन तथापि प्राधान्येन निषेधस्यैव तत्र व्यापारात् निषेधानुमितत्वव्यवहारः शास्त्रे। अनुमानेनोपस्थितमपि गिरापदकार्यं अशाब्दत्वान्नेरापदविधावुद्देश्यं भवितुमर्हतीति तस्य शाब्दत्वसिध्यर्थं तद्वाचिपदकल्पनया गिरापदं न ब्रूयात् कार्यार्थन्त्विरापदं ब्रूयादिति वचनव्यक्तिराश्रीयते। **यद्यपि** प्रतिषेधेन गिरापदकार्यमात्रस्यैवोपस्थितिरिति न तद्वाचकशब्दकल्पनापर्यन्तमपि तस्य व्यापारः, स तु विध्यन्वयानुरोधात् स्वीक्रियते, अतो न प्रतिषेधानुमितशब्दत्वं तथापि कार्योपस्थितिद्वारा पदकल्पना निषेधाधीनेत्येतावतैव प्रतिषेधेन स्वशब्दानुमानमिति व्यवहारः। एवमग्रेऽपि ज्ञेयम्। तथा च एककार्यार्थत्वेन इरापदस्य गिरापदस्थानापत्तिरिति भावः। **षडहाभावे इति**। अत्र भाष्यकाराभिप्रायेण संस्थिते षडहे इत्यत्र संस्थापदेनाभाव उच्यते। तेन अभावे विधिरिति भावः। अत एवोक्तं तन्त्ररत्नकृता—"क्वचित्तु संस्थया अभावरूपया प्रतिषेधानुमानं प्रतिषेधाच्च स्वशब्दोऽनुमीयते। तेनानुमितानुमानलब्धात् स्वशब्दात् कार्यापत्तिरिति प्रतिज्ञाय मध्ये 'जुहूषा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः सन्निष्ठते' इत्यत्र संस्थया प्रतिषेधो लक्ष्यते। नहि संस्थितः कर्तव्यो भवति इति; प्रतिषेधेन

च पूर्ववत् कार्यं लक्ष्यते। तस्मिन् लक्षिते मध्वशनघृताशने विधीयेते। एवमत्र लक्षित-लक्षणः स्वशब्द इत्युक्तम्। भाष्यकारेणाप्येवं षडहेनोपासीतेति चोदनायां सत्यां यदा षडहः सन्निष्ठते न षडहेनोपास्यते इत्यर्थः मधुघृताभ्यामुपासीतेति गम्यते। यस्य भावे यस्य निवृत्तिः तस्य तत्स्थानेऽवगम्यते। षडहनिवृत्तौ मध्वशनं ब्रुवन् षडहकार्यं वदतीति गम्यते। तस्मात् षडहधर्मान्यागनिमित्तान् ग्रहचमसस्तोत्रशस्त्रसवनीयादीन् सुत्याकालीनान् विहाय व्रतं नियमो वा मध्वशने भवतीत्युक्तम्।

अत्र च तन्त्ररत्ने क्वचित् जुहूषावेति लिखनं क्वचिच्च भाष्ये उद्गीथावेति लिखनं पुस्तकाशुद्धयैव ज्ञेयम्। तथाविधपाठस्य श्रुतावनुपलम्भात्। तथाच सामगानां महाब्राह्मणे त्रयोदशाध्याये वचनं "जुहूषीव वा एतर्हि वाक् यदा षडहः सन्तिष्ठते न बहु वदेत्, नान्यं पृच्छेत्, नान्यस्मै प्रब्रूयात्, मधु वा आशयेत् घृतं वा यथोहुषो वहं प्रत्यनक्ति तथा तदि"ति। अस्यार्थः भाष्ये कृतः। यदा असौ षडहः समाप्यते एतर्हि एतस्मिन् काले, षडहे बह्वी ऋचो बहूनि सामानि प्रयुञ्जानानामृत्विजां वाक् उहूषीव ऊढवतीव भारवतीव भवति। श्रान्ता भवतीति यावत्। ततः श्रमापनोदाय न बहु वदेदित्यादि। अथ एतस्मिन् समये मधुघृतान्यतरेणोपसिक्तमन्नं भोजयेत्। यथा उहुषो ऊढवतो बलीवर्दादेः वहनप्रदेशं स्कन्धभागं तैलादिभिः प्रत्यनक्ति स्नेहयति, तथा मध्वशनं घृताशनं वा ऋत्विजां भवति। यथा वहस्य प्रत्यञ्जनेन बलीवर्दादिः पुनर्वहनसमर्थो भवति, एवं श्रान्तवाचोऽपि ऋत्विजो मधुघृत-प्राशनेन स्फुरद्वाचः क्रियन्ते इति। यद्यप्ययमर्थो वार्तिकमते सङ्गतो भवति तथापि वार्तिककृता षडहकर्तृसंस्कारकत्वं मधुघृताशनयोरुक्तं ऋत्विक्संस्कारकत्वप्रतिपादनेन विरुद्धमिति ध्येयम्। भाष्यकारमते तु यतः यदा षडहः सन्तिष्ठते समाप्यते, तदा उहुषी परिश्रान्तेव वाक् भवति अतो न कर्तव्यः षडहः इत्येवं निन्दार्थवादोन्नीतनिषेधकल्पनया षडहाकरणे स्थिते तत्स्थाना-पन्नत्वेन मधुघृताशनं विधीयते इत्येवं रीत्या व्याख्येयम्। तत्र च समाप्तेरारम्भाव्यभिचारात् समाप्तिनिषेधेन आरम्भस्यापि निषेधात् अनारम्भणीय एव षडह इत्यर्थः। एवञ्च संस्थया अभावरूपया प्रतिषेधानुमानमिति तन्त्ररत्नकृन्‌नं व्याख्यानमपास्तम्। तथात्वे उहुषीवेत्यस्या-सङ्गतत्वापत्तेः।

'अथवा उद्गीथावेति भाष्यधृतशाखान्तरीय [पाठात्] उद्गीथावेत्यस्य गुणपरत्वेन स्तुतिपरत्वं तदा षडहाकरणेन तादृशगुणलाभात् षडहाकरणमेव विधीयत इति कथञ्चित्समाधेय-मिति दिक्।

**षडहप्रतिषेधमनुमाय तेन** षडहकार्यवाचिस्वशब्दानुमानेन **षडहस्थानापन्नत्वं मध्वशनादेः।** इदं च **भाष्यकारोक्तमपि** कृत्वाचिन्तयोदाहृतमिति मन्तव्यं, **षडहसमाप्त्युत्तरं तदङ्गत्वेनात्र मध्वशनविधानेन षडहाभावे मध्वशनविधौ प्रमाणाभावात्।** स्थिरोदाहरणान्तरं **मृग्यमित्युक्तम्।**

---

अत्र च वहधातोः भूतसामान्ये 'छन्दसि लिट्' इति लिटिकृते तस्य '**क्वसुश्च**'इति (पा. ३-२-१०) क्वस्वादेशे तस्मिन् परतः 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे, 'लिटिधातोरनभ्यासस्य' इति द्वित्वे 'हलादिश्शेष' इति हस्य निवृत्तौ 'अकस्सवर्णे दीर्घ' इति दीर्घे 'उगितश्च' इति ङीपि वसोस्सम्प्रसारणे उहुषीतिरूपं ; तथा उवाहेत्यूहवानित्यूहवच्छब्दस्य षष्ठ्यन्तम्। **कार्यवाचिस्वशब्दानुमानेनेति।** अत्राप्यनुमितिप्रतिषेध इव कार्यवाचकशब्दानुमानं यत् तत्पूर्ववदेवोपपादनीयम्।

**तदेतद्भाष्यकारमतमयुक्तम्;** सन्तिष्ठतेरत्र समाप्तिवाचकत्वसम्भवे क्लिष्टकल्पनया प्रागभावरूपसंस्थापरत्वकल्पनस्यायुक्तत्वात्। नहि प्रागभावरूपसंस्थापरत्वं क्वचिद्दृष्टम्। यत्रापि अनारब्धे कर्मणि तदक[त्क]रणाशक्तौ 'इदं कर्म अनेन संस्थापितं' इति निष्प्रमाणः क्वचित्प्रयोगः, तत्रापि पूर्वं तद्विषयकिञ्चिदध्यवसायसद्भाव एव सति तत्प्रयोगदर्शनात् तदध्यवसाय समाप्तिमादायैव तत्र संस्थापितमिति व्यवहारोपपत्तेः न तद्वाच्यत्वकल्पनं प्रमाणवत्। अन्यथा अनारब्धकर्मविषये सर्वथा औदासीन्ये सति तादृशव्यवहाराभावात्। अतो न प्रागभावः संस्थापदार्थः एतादृशे विषये। किन्तु समाप्त्यनन्तरे सामर्थ्यात् षडहकर्तृसंस्कारतया विधीयमाने मध्वशनघृताशने तत्संस्कारद्वारा षडहाङ्गे इत्येव युक्तमित्याशयेन दूषयति—**इदञ्चेत्यादिना।** अत्र "अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् अन्ते वा कृतकालत्वात्" इति पूर्वोत्तरपक्षसूत्राभ्यां 'यत्र आवृत्तं पृष्ठ्यं षडहरुपयन्ति' इति श्रुता षडहावृत्तिः, तत्र एकस्य षडहस्य प्रयोगसमाप्तावपि षडहसंस्थाया निमित्तभूतायाः सत्वात् षडहाङ्गत्वाच्च प्रतिप्रधानावृत्ति-प्रतिनैमित्तिकावृत्तिन्यायाभ्यां मध्वशनप्राप्तौ व्यापारोपरमरूपायाः संस्थायाः पुनः षडहकरणे सम्भवात् तस्याश्च सर्वान्त एव सत्वात् अन्त एव मध्वशनमिति सिद्धान्तितम्। उपपत्तिरपि च तदधिकरणे **पूज्यपादैः** दर्शिता। "नह्यत्र प्रयोगसमाप्तिः उत्तरकालतामात्रं वा संस्थापदार्थः; येन प्रतिषडहान्ते तत्सत्वात् आवर्तेत मध्वशनम्। व्यापारोपरमवाची तु संस्थाशब्दो वृद्धव्यवहारात्" इति ग्रन्थेन। तत्र यदि व्यापारोपरमो नाम व्यापारध्वंसरूपा समाप्तिरेव विवक्षिता तदा तस्याः प्रथमषडहप्रयोगसमाप्ताववर्जनीयत्वात् प्रथमषडहान्त एव तदापत्तिरनिवार्या। अतो मूलस्थसमाप्तिशब्दः षडहव्यापारोपरमपरो द्रष्टव्यः। **स्थिरोदाहरणमिति। यद्यपि** सान्नाय्यनाशेन

अत्र[1] प्रतिभाति—न तावत् तत्कार्यकारित्वं तत्स्थानापन्नत्वं ब्रह्मवर्चसादिफलस्य सौर्यादिकरणस्य च स्वर्गाग्नेयादिकार्यकारित्वाभावेन स्थानापत्त्यनापत्तेः। न चेष्टापत्तिः, 'अगन्म सुवः' इत्यादौ यागानुमन्त्रणादौ चोहानापत्तेः। 'सूर्यस्याहं देव यज्यया' इत्यादियागानुमन्त्रणे यज्यापदे पदान्तरप्रक्षेपरूपभाक्तोहाभावेऽपि यागान्तरपरत्वेन अन्यथाभावात्मकस्य मुख्यस्योहस्य तादवस्थ्यात्। चरुनीवारनखादीनामवान्तरकार्यभेदेन स्थानापत्त्यनापत्तेश्च।

---

दर्शनाशात् तत्कार्यस्य साधनापेक्षायां "यत्र हविरार्त्यां दर्शो नष्टः स न दर्शं कुर्यात् तत्कार्यं तु पञ्चशरावयागेन कुर्यात्" इत्येवं दर्शनिषेधकल्पनया पञ्चशरावयागस्य विधानात् तदुदाहरणं वार्तिककृता दर्शितम्। तथापि तस्य प्रत्याम्नायपूर्वपक्ष एव सम्भवस्य तेनैव दर्शितत्वात् सिद्धान्ते अभावेन अस्थिरत्व सूचयितुं स्थिरपदोपादानम्। अत एव प्रत्याम्नायपूर्वपक्षे हविर्नाशप्रयुक्तदर्शनाशेन दर्शनिषेधकल्पना आवश्यिकी। अन्यथा द्रव्यान्तरोत्पादेन सिद्धान्तवत् कार्यस्य साधनानपेक्षत्वापत्त्या तत्कार्यसाधनापेक्षया प्रत्याम्नायपूर्वपक्षानुत्थानात्।

अत्र भाष्यकारेण यद्यपि मध्वशनादेः षडहस्थानापत्तिनिरूपणे "यस्य भावे यस्य निवृत्तिः तत् तस्य तत्स्थानेऽवगम्यते (९–२–४७) इति ग्रन्थेन यस्य यन्निवर्तकत्वं तस्य तत्स्थानापन्नत्वमित्युक्तं भवति। सम्भवति च मध्वशनादाविव तथाविधस्थानापन्नत्वं नीवारनखइरापदपरिधिष्वपि, निवर्तकत्वाविशेषात्। नीवारादिषु व्रीह्यादिस्थानापन्नत्वनिरूपणन्तु तत्कार्यकारित्वरूपं स्थानापन्नत्वं भाष्यतन्त्ररत्नादिषु प्रतीयते। तथापि तत्कार्यकारित्वं विना निवर्तकत्वस्यैवासम्भवात्। ब्रह्मवर्चससौर्यादिषु स्वर्गादिनिवर्तकत्वाभावेन तत्स्थानापन्नत्वाभावापत्तेश्च प्रयोजकीभूतं तत्कार्यकारित्वमेव लाघवात् स्थानापन्नत्वं कल्पयितुं युक्तमित्यभिप्रेत्य प्राचीनाभिमतत्वेन तत्कार्यकारित्वरूपं स्थानापन्नत्वमनूद्य दूषयति—न तावत् तत्कार्येति। कार्यकारित्वाभावेनेति। स्वर्गादिकार्यं हि स्वर्गसाक्षात्कारः आग्नेयकार्यञ्च स्वर्गः। तयोश्च न ब्रह्मवर्चससौर्ययागकार्यत्वम्। अतो न ब्रह्मवर्चससौर्ययोः तत्कार्यकारित्वम्। एवमुलूखलमुसलयोः कार्यं अवघातः, स च न नखकार्यमिति नखानामपि नोलूखलमुसलकार्यकारित्वमित्यपि द्रष्टव्यमिति भावः। अवान्तरकार्यभेदेनेति। न च प्रकृतकार्यसमानकारित्वमिति विवक्षणे न दोष इति वाच्यम्। तथात्वे तस्मिन्नेव षडहाभावे

---

1 C adds हि

**तथोदाहरणान्यप्ययुक्तानि। तथा हि—नीवाराणां चरुविशेषजनकत्वस्यान्वयव्यतिरेकाभ्यामनुमेयत्वेन प्रत्यक्षाविषयत्वात्।** न हि साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपप्रत्यक्षायोग्यपदार्थघटितव्याप्तिघटितजनकत्वस्य लौकिकप्रत्यक्षं सम्भवति। अलौकिकप्रत्यक्षं **तु नखादावपि तुल्यम्।** किञ्चैवं **नखेष्वप्युलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वस्य प्रत्यक्षत्वापत्तिः। तृतीयोदाहरणेऽपि यद्यपि परिधेः** पशुनियोजनसाधनत्वं **श्रुतं, तथाऽपि नियोजनस्य** यूपीयत्वं **न श्रुतमिति न यूपकार्यकारित्वस्य श्रुतस्वशब्दगम्यता।** चतुर्थे **तु गिरापदस्याग्निष्टोमस्तोत्रसाधनत्वाभावेन तत्कार्यस्यैवाप्रसिद्धेरर्थाभिधानमात्ररूपकार्यस्य च गीत्यादिधर्मग्राहित्वाभावात् सत्यपि तन्निवर्तकत्वे इरापदस्य नैव तत्कार्यापत्तिरित्युक्तमेव। पञ्चमेऽपि सत्यामपि षडहादिकार्यापत्तौ अभावे विधिनैवाशक्त्यादिना तदकरणे स्वशब्दमात्रकल्पनया तत्कार्ये मध्वशनादिविध्युपपत्तेः प्रतिषेधानुमानवैयर्थ्यम्। अतो** मूलोक्तप्रकारानुपपत्तेरेवं **वाच्यं—**

---

विहितमध्वशनादीनां तदनापत्तेरित्यर्थः। **साधनसमानाधिकरणेति।** अत्र च कार्यनियतपूर्ववृत्तित्वस्य व्याप्तिघटितत्वे वक्तव्ये कार्यसमानाधिकरणेति वक्तुं युक्तं **तथापि** प्रसिद्धव्याप्तिस्वरूपसदृशं इहातीन्द्रियपदार्थघटितं व्याप्तिस्वरूपं प्रविष्टमिति ज्ञापयितुं तथोक्तम्। चरुप्रत्यक्षेणैव नीवारजनकताज्ञानं ज्ञानलक्षणाजन्यत्वेन अलौकिकं सम्भवतीति चेत् अत आह—**अलौकिकप्रत्यक्षमिति।** ननु नीवारादिनिष्ठजनकतायाः प्रत्यक्षागम्यत्वेऽपि नीवारेभ्यो निष्पन्नं हविस्तु प्रत्यक्षमेव। तत्र नीवारान्वयस्य प्रत्यक्षेण दर्शनात् उपपद्यत एव व्रीहिकार्यहविरर्थत्वं प्रत्यक्षादित्याशङ्कां प्रतिबन्द्या परिहरन्नाह—**किञ्चैवमिति। पशुनियोजनसाधनत्वमिति।** अधिकरणकारकस्यापि साधनत्वविवक्षया साधनत्वमित्युक्तम्। **यूपीयत्वं न श्रुतमिति।** यद्यपि तदेवेदं नियोजनं तथापि नियुञ्जीतेतिपदात् प्राकृतनियोजनव्यक्तिमात्रोपस्थित्यनन्तरं तद्गतयूपीयत्वोपस्थितिः जायमानापि प्रकृतौ तत् यूपीयमासीदित्येवं तर्कजन्यैव। तथा च नियोजने यूपकार्यत्वोपस्थितिरेव न शब्दगम्येति यूपीयकार्यनिरूपिताधिकरणतायाः सप्तम्या अनुपात्तत्वात् न परिधौ शब्दगम्या स्थानापत्तिरिति भावः। **चतुर्थेत्विति।** गिरापदं अग्निष्टोमस्तोत्रसाधनं भवति न वा? आद्ये विहितप्रतिषिद्धत्वात् विकल्पापत्तिः। द्वितीये तत्साधनत्व एव निषिद्धे सति तत्कार्यमेवाप्रसिद्धमिति कुतस्तत्कार्यकारितेति भावः। **इत्युक्तमेवेति।** अत्रैव प्रथमपादान्त्ये इति शेषः। **मूलोक्तप्रकारानुपपत्तेरिति।** यद्यपि तत्कार्यसदृशकार्यान्तरकारित्वरूपं स्थानापन्नत्वं सर्वसाधारणं युज्यत एव वक्तुम्। सादृश्यञ्च वितुषीभावजनकत्वहविष्ट्वफलजनकत्वाद्यनेकधर्मावच्छिन्नत्वेनेति न क्वाप्यव्याप्त्यादिप्रसक्तिः। **तथापि** सदृशकार्यान्यतरत्वनिवेशापेक्षया कार्यमात्रस्यैवाकाङ्क्षापूरणरूपस्य लक्षणे

यस्य पदार्थस्य येन रूपेण यादृशयदीयाकाङ्क्षापूरकत्वं तेनैव रूपेण[1] तस्यास्तादृशाया वा भावनायास्तादृशाकांक्षापूरकत्वं यस्य पदार्थस्य तस्य पदार्थस्य तत्पदार्थस्थानापन्नत्वम्। अस्ति चेदं ब्रह्मवर्चसादौ. स्वर्गादेर्हि येन रूपेण भाव्यत्वकरणत्वादिना 'किमस्या भाव्यं करणं वा' इत्यादि भावनाकांक्षापूरकत्वं प्रकृतौ, तेनैव रूपेण तद्भावनासदृशायां सौर्यादिभावनायां ब्रह्मवर्चसादेस्तादृशाकांक्षापूरकत्वात् स्वर्गादिस्थानापन्नत्वसिद्धिः। सौर्यस्य चाग्नेयस्थानापन्नत्वम्। नीवारनखादीनां च—'किमस्य प्रदेयप्रकृतिद्रव्यं वैतुष्यसाधनीभूतक्रियासाधनं वा' इत्येवमाद्याकांक्षापूरकत्वं तेन तेन रूपेण व्रीहिमुसलादिवदेव समानमिति तत्स्थानापन्नत्वसिद्धिः। षडहस्य च येन रूपेण यस्यामेव भवनायां यादृशाकांक्षापूरकत्वं तस्यामेव तेन रूपेण[2] माध्वशनस्येति तस्यापि तत्स्थानापत्तिः कृत्वाचिन्तया न विरुद्ध्यते।

ईदृशस्थानापत्तिघटकं च भाव्यत्वादिकं रूपं पञ्चधाऽवगम्यते। क्वचिदनुमानात् क्वचिच्छक्तस्वशब्दात् क्वचिल्लाक्षणिकात् क्वचित्प्रतिषेधानुमितात् क्वचिदभावेविध्यनुमितात्। तत्राद्योदाहरणं नीवाराः। अनुमानप्रकारश्च—नीवाराः प्रदेयचरुप्रकृतिभूताः चर्वन्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वे सति समवायित्वात् सामान्यमुखव्याप्त्या मृत्पिण्डवदिति। नखेष्वपि चैवमेवानुमानप्रकारो बोध्यः—नखा वैतुष्यप्रयोजकाः वैतुष्यान्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वात्, कुलालपितृदण्डत्वादिवत्[3]। द्वितीयोदाहरणं तु—परिधिरेव, यूपीयत्वस्य शक्तशब्दगम्यत्वाभावेऽपि परिधिजन्यत्वस्य[4] तद्गम्यत्वात्। तृतीयोदाहरणं 'शरमयं बर्हिः' इत्यत्र बर्हिःपदेन तत्कार्यलक्षणात् शराणां बर्हिस्स्थानापन्नत्वम्। चतुर्थोदाहरणं 'ऋधक्सोम स्वस्तये' इत्यादिकर्चां प्रकृतौ बहिष्पवमानस्तोत्रे कलसकार्याणां उपहव्याख्यविकृतौ अतिदेशेन प्राप्तौ 'न सोमेति ब्रूयात्

---

निवेशे लाघवात् स्वयं तल्लक्षणमुपेक्ष्य आकाङ्क्षापूरणरूपकार्यघटितं लक्षणमाह—**यस्य पदार्थस्येति**। **सामान्यमुखव्याप्त्येति**। यस्य यदन्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकवत्त्वे सति समवायित्वं तस्य तत्कार्योपादानत्वं यथा घटोपादानत्वं मृत्पिण्डे इति सामान्यमुखव्याप्तिर्द्रष्टव्या। **परिध्यधिकरणस्येति**। पशुनियोजनं कुत्र कार्यमित्याकाङ्क्षापूरकत्वं यूपवृत्त्यधिकरणत्वान्वयेन यूपस्यासीत्। तथैव तदाकाङ्क्षापूरकत्वं परिध्यधिकरणत्वान्वयेन परिधेरिति तत्स्थानापन्नत्वम्। तच्चाधिकरणत्वरूपं सप्तमीरूपशक्तशब्दादेवावगम्यत इत्यर्थः। **कलसकार्याणामिति**। एतेन

---

1. B & C यादृशयदाकाङ्क्षा
2. A & B omit रूपेण
3. B & C read दण्डादिवत्
4. परिध्यधिकरणस्येति टीकापाठः।

इन्दो इति ब्रूयात्' इति निषेधानुवादबलेनेन्दुपदस्य सोमपदस्थानापन्नत्वम्। एवं 'न मित्रस्येति ब्रूयाद् यज्ञस्येति ब्रूयात्' इत्याद्यपि वैकृतमुदाहर्तव्यम्। पञ्चमं तु निषेधकल्पनाभावेऽपि क्त्वाचिन्तया तदेव। स्थिरोदाहरणं 'यदि दीक्षितानां साम्युत्तिष्ठेरन् सोममपभज्य विश्वजिता यजेत, यस्सत्रायागुरते स विश्वजिता यजेत' इत्यादौ सोमाद्यभावे वैश्वानरेष्ट्यादौ बोध्यम्। [1]तत्र च स्थानापत्तिसत्त्वेऽपि न सत्रादिधर्मप्राप्तिः, अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरस्स्फूर्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्यैव[2] बलवत्त्वात् ॥ ११ ॥

---

अकल्पककार्यगिरापदस्थानापन्नत्वाभावः इरापदे इष्टापत्त्यैव परिहर्तव्य इति सूचितम्। साम्युत्तिष्ठेरन्निति। सामिशब्दो अर्धार्थे। कश्चन यजमानः अर्ध एव सत्रं त्यजेदित्यर्थेन अभावे विधानं गम्यते। 'यः सत्रायागुरते' इत्यत्रापि 'सर्वेभ्यो देवेभ्य आगुरते यस्सत्रायागुरते' इति वाक्यशेषात् सत्रे प्रवृत्तस्य केनचिद्धेतुना तदसम्भवे विश्वजिति तेन विधानं गम्यते। तेन च विधिना तत्कार्योपस्थित्या तद्वाचिपदकल्पनया विश्वजिदादीनां विधानात् तत्कार्यजनकाकाङ्क्षापूरकत्वेनान्वयात् तत्स्थानापन्नत्वं युक्तमेवेत्यर्थः। एतच्च अभावे विध्यनुमितकार्यवाचकपदोदाहरणं प्रकाशकारैर्दर्शितमपि प्रकृतानुपयोगित्वादयुक्तमिवेति सूचयितुमाह— अत्र चेति। तथाचाभावे विध्यनुमितकार्यवाचकपदकल्पनया यत्स्थानापन्नत्वं धर्मप्राप्तिद्वारा ऊहोपयोगि भवति तदुदाहरणं मृग्यमेवेति भावः।

अत्र च नीवाराणां प्रदेयप्रकृतित्वरूपं अनुमानगम्यं, तथा नखानां उलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वरूपं अनुमानगम्यमङ्गीकृत्य स्थानापत्तिरित्युभयं यत्पूज्यपादैरुक्तं तत्रेदं प्रतिभाति —यद्यपि नीवारसम्बन्धमात्रमेव तद्धितो वदेत्, तथापि दृष्टेन अनुमेयेन वा सामर्थ्येन कल्प्यमानं नीवारे प्रकृतित्वमपि शाब्दत्वसिध्यर्थं लक्षणया प्रतिपादयतीत्यवश्यमभ्युपेयमेव। इतरथा बार्हस्पत्येन नैवारेण चरुणा यजेतेति विधौ चरुपदार्थगतप्रकृतिद्रव्याकाङ्क्षाशामकत्वेन शाब्दबोधेनैव अपरपदार्थान्वयानुपपत्तेः; शाब्दस्यापि नीवारसम्बन्धमात्रस्य प्रकृतिद्रव्याकाङ्क्षापूरकत्वाभावेन अनाकाङ्क्षितान्वयापत्तेश्च। अतश्च यथैव स्रुवेणावद्यतीत्यत्र सामर्थ्यनिर्णेयस्याप्यर्थस्य शाब्दत्वसिद्धये द्रवमिति पदाध्याहारेण तदुपस्थितत्वेनैवावद्यतिनान्वयः, तद्वदिहापि चरुपदार्थेनान्वयसिद्धये लक्षणाया आवश्यकत्वात् लाक्षणिकादेव

---

1. B & C अत्र

2. B & C omit एव

शब्दात् प्रकृतिद्रव्यत्वरूपत्योपस्थितिरिति न प्राचां मतेन प्रत्यक्षात्, पूज्यपादोक्तविधया अनुमानाद्वा, तस्योपस्थितिः। न च लक्षणामूलं सामर्थ्यं प्रत्यक्षं, अथवाऽनुमेयमित्येतावतैव प्रत्यक्षादनुमानाद्वा स्थानापत्तिरिति व्यवहार इति वाच्यम्। तथात्वे 'शरमयं बर्हिः' इत्यत्रापि लक्षणामूलभूताया अन्यथानुपपत्तेरेव स्थानापत्तिघटकरूपगमकत्वापत्तेः लाक्षणिकत्वादित्युक्तेरयुक्तत्वापत्तेः।

वस्तुतस्तु नैवारमित्यादौ 'नस्य विकार' इति सूत्रेण (पा. ४–३–१३४) विकारार्थकाण्प्रत्ययस्य साधुत्वेऽपि नैवारमित्यनेन तद्धितेन नीवारसम्बन्धित्वमात्रं चरोरुच्यते, न तत्प्रकृतित्वमित्यादि तन्त्रकारादीनां प्राचीनानां नवीनानाञ्च वचः कथमिव विश्वसनीयम्। अत एव तस्य विकार इत्यधिकारे व्रीहेः पुरोडाश इति सूत्रेण पुरोडाशरूपविकारविशेषबोधे तात्पर्ये सति व्रीहिपदात् मयटो विधावेव व्रीहिमय इति प्रयोगमुपपाद्य पुरोडाशरूपविकारविवक्षाऽभावे तु व्रैह इति प्रयोग इत्युक्तं वैयाकरणैः। तथा च व्रैहनैवारपदयोः विकारार्थाण्प्रत्ययोत्पत्तौ विशेषाभावात् शक्तस्वशब्दादेव स्थानापत्तिरित्येव युक्तम्। अन्यथा तद्धितस्य नीवारसम्बन्धमात्रबोधकत्वाभ्युपगमे प्रकृतिद्रव्याकाङ्क्षायां प्रकृतिप्राप्तव्रीहिरूपप्रकृतिद्रव्यप्राप्तेर्नीवारसम्बधमात्रविधानेन निवारयितुमशक्यत्वापत्तेः। एवं नखेष्वपि स्थानापत्तिसिध्यर्थं वितुषीभावप्रयोजकत्वानुमानमपि निष्प्रयोजनकमेव भवन्मते। यस्यां भावनायां उलूखलमुसलयोः 'मम किं साधनम्' इत्याकाङ्क्षापूरकत्वं करणत्वेन रूपेणासीत् तथैव तत्सदृशायां अवलुञ्छनभावनायां तादृशाकाङ्क्षापूरकत्वं नखानामपि करणत्वेनेत्येतावतापि स्थानापत्त्युपपादनेऽनुपपत्त्यभावात्। यथैव हि सामर्थ्यात् वितुषीभावोऽवहन्तिभावनाया भाव्यं तद्वाच्यिकायाञ्च साधनाकाङ्क्षया साधनत्वेन उलूखलमुसलयोरन्वयः तृतीयाश्रुत्यैव, तथैव सामर्थ्यावगतवितुषीभावभाव्याया निर्लुञ्छनभावनायाः साधनाकाङ्क्षया साधनत्वेनान्वयः तृतीयाश्रुत्यैव भवतीति परिध्यधिकरणत्वस्यैव शक्तशब्दादेव स्थानापत्तिघटककरणत्वरूपस्य लाभात् वैतुष्यप्रयोजकत्वरूपविवक्षया तद्बोधार्थं अनुमानपर्यन्तानुधावनं किमित्याश्रयणीयम्। येषां हि मते तत्कार्यकारित्वरूपं स्थानापन्नत्वं तच्च नखोलूखलमुसलयोः अवघातनिर्लुञ्छनरूपकार्यद्वयस्य प्रत्यक्षेणैक्यानुपलब्धेः तत्कार्यवितुषीभावैकफलप्रयोजनकत्वेन प्रत्यक्षागोचरेण तदनिर्वाहे अनुमानविधया निर्वहणीयमित्यवश्यं तेषां मते एतादृशे विषये आनुमानिकत्वमभ्युपेयम्। न त्वाकाङ्क्षापूरणरूपकार्यघटितस्थानापन्नत्वनिरूपणेऽपि।

किञ्च आग्नेयसौर्यादीनां यत् कारणत्वादिरूपं तत्रैव निरूपितपञ्चप्रकारान्यतमप्रकारेणावगम्यते तद्रूपस्य शाब्दबोधे भासमानस्यापि संसर्गविधया सर्वैरपि भानाङ्गीकारात्। अत

(१२)—तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ४१ ॥ आवेश्येरन् वाऽर्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

**परिधौ पुनराक्षिप्य समाधीयते।** न परिधेर्यूपस्थानापन्नत्वं 'परिधौ पशुं नियुञ्जीत' इत्यत्र परिधेर्नियोजनानुवादेन विधावतिप्रसङ्गापत्तेः पशुनियोजनानुवादेन विधौ विशिष्टो-द्देशापत्तेः नियोजनान्तरस्यैवाप्राकृतस्य विधेयत्वात्। अस्तु वा स्थानापत्तिः तथाऽपि न परिधौ यूपधर्माः, सत्यपि परिधेः पशुनियोजनं प्रति सप्तम्याऽङ्गत्वे पुरोडाश-कपालन्यायेनाग्निपरिधानप्रयुक्तस्यैव परिधेः पशुनियोजनशेषत्वेन तत्प्रयुक्तत्वाभावात् धर्माणां चापूर्वीयपशुनियोजनप्रयुक्ताधिकरणार्थत्वेन तदप्रयुक्ताधिकरणपरिधावसम्भवात्।

———

एवं यागस्वर्गगतकरणत्वकर्मत्वबोधयोः वृत्त्यनपेक्षत्वमभिप्रेत्यैव समाहितं वार्तिककृता षष्ठाद्याधि-करणे—"यद्यपि यागे तृतीया न श्रुता, नापि स्वर्गे द्वितीया, तथापि स्वर्गस्य स्वरसादेव भाव्यत्वात् परिशेषाद्यागस्य करणत्वं,

न कर्मकरणत्वे हि विभक्ती सन्नियच्छतः।
प्रमाणान्तरगम्ये ते तद्विरुद्धं न किञ्चन ॥

इति। अतः कथञ्चित् षष्ठाद्याधिकरणभावार्थाधिकरणकौस्तुभदर्शितरीत्या करणत्वभाव्यत्वयोः लाक्षणिकत्वमभ्युपेत्य लाक्षणिकाच्छब्दादेव तद्रूपसम्प्रतिपत्तिरङ्गीकार्या। तदपेक्षया पञ्चधा-ऽवगतिनियममुपेक्ष्य यथाकथञ्चिदवगततत्तद्रूपविवक्षया पूर्वोक्ताकाङ्क्षापूरणरूपकार्यघटितमेव स्थानपन्नत्वं युक्तमाश्रयितुमित्यलं श्रमेण।

———

तदुत्पत्तेस्तु निवृत्तिः।

परिधौ पुनराक्षेपः। 'तावत्संस्कारे क्रियान्तरं तस्य विधायकत्वात्' इति दाशमिकतृतीयपादाद्याधि-करणपूर्वपक्षेणैवारभ्यते—**न परिधेरित्यादिना।** **अतिप्रसङ्गापत्तेरिति।** शकटीयवृषभ-नियोजनेऽप्यापत्तेरित्यर्थः। अतो वाक्यभेदापादकगुणान्नियोजनान्तरस्यैव विधिरित्याह—**नियोज-नान्तरस्येति।** वस्तुतस्य यूपकार्यस्य बन्धनस्य अणुना परिधिना कर्तुमशक्यत्वात् न यूपस्थानापन्नत्वम्। अङ्गीकृत्यापि च स्थानापत्तिं न यूपधर्मप्राप्तिरित्याह—**अस्तु वेति।**

न च गौरवेण प्रयुक्तत्वस्य नोद्देश्यतावच्छेदककोटिप्रवेशः, शेषत्वसाधनत्वसम्बन्धित्वापेक्षया प्रयुक्तत्वस्यापि तदघटितत्वेन लघुत्वात्।

किञ्चादृष्टघटिते यूपस्वरूपे वैयर्थ्याभावात् धर्माणां छेदनादीनां यूपोत्पत्त्यर्थत्वमेव न त्वपूर्वीयसाधनविशेषार्थत्वं आधानवत्। न च परिधौ यूपत्वमस्ति तद्धि दृष्टादृष्टसंस्कारसमुदायो वा स्यात्, तावत्संस्कारजन्यादृष्टान्तरं वा, तद्विशिष्टं काष्ठं वा? सर्वथा न परिधौ तत्सम्भवः। परिधानप्रयुक्तधर्माणामपि सत्वक्त्वादीनां तत्रावाच्यकत्वस्य वक्ष्यमाणत्वेन जोषणादीनां यूपधर्माणां बाधावश्यंभावेन तावत्संस्कारसमुदायासम्भवात्। न हि यूपशब्दः प्रत्येकमेकैकसंस्कारवाची, अनेकशक्तिकल्पनापत्तेः। कतिपयसंस्कारयुक्ते यूपशब्दप्रयोगाभावाच्च। 'यूपं छिनत्ति' इत्यादेस्तत्तत्संस्कारेण यूपं सम्पादयेत् इत्यर्थाङ्गीकारेण समुदायादिवाचित्वेऽप्युपपत्तेः। अन्यथा एकैकसंस्कारस्यापि यूपत्वे तज्जनकच्छेदनादीनां विकल्पापत्तेः। अतो यूपत्वोत्पादकानां धर्माणामर्थलोपादेव परिधावसम्भव इति प्राप्ते—

न तावत्स्थानापत्त्यसम्भवः, सत्यपि नियोजनान्तरविधौ प्राकाशाध्वर्युदानवत् प्राकृतनियोजनकार्य एव तद्विधानेन तदुपपत्तेः।

वस्तुतस्तु—यावदतिदेशेन प्राप्यते तावत्पूर्वमेव परिधिविशिष्टप्राकृतनियोजनस्यैव परिधिमात्रफलकतया पशूद्देशेन विधानोपपत्तेः स्थानापत्त्यविरोधः। न च धर्मासंभवः उद्देश्यस्वरूपे आनर्थक्यप्रसक्तौ शास्त्रस्य महाविषयत्वसिद्ध्यर्थमपूर्वसम्बन्धित्वस्यैवोद्देश्यता—

---

आधानवदिति। यथा आधानस्यादृष्टविशेषरूपाहवनीयस्वरूपार्थत्वं, न त्वपूर्वीयसाधनविशेषार्थत्वं तद्वदित्यर्थः। वक्ष्यमाणत्वेनेति। 'परिधिः द्व्यर्थत्वादुभयधर्मा स्यात्' इत्यधिकरणे द्वादशे द्वितीयपादे। एवञ्च सत्वक्त्वजोषणादिधर्माणां परस्परं विरोधादेवासम्भवात् अन्येषाञ्च यूपत्वोत्पादकानां अर्थलोपादेव बाध इति भावः। प्राकाशाध्वर्युदानवदिति। 'प्राकाशौ तथेति चेत्' इति दशमतृतीयपादाधिकरणे प्राकाशावध्वर्यवे ददातीति दानान्तरविधानेऽपि लाघवात् प्राकृतकार्य एव तद्विधीयते। एवमिहापीत्यर्थः। न चापूर्वीयपशुनियोजनप्रयुक्ताधिकरणार्थत्वात् धर्मासम्भव इति शङ्कां परिहरति—नचेति। उद्देश्यस्वरूपे इति। छेदनादिना उत्पन्ने यूपे ये प्रोक्षणादयो धर्माः तत्र हि यूपस्वरूपं उद्देश्यं तत्रानर्थक्यप्रसक्तावित्यर्थः। तन्त्ररत्ने हि कार्यार्था हि धर्माः तत्र साक्षाद्वर्तितुमसमर्थाः तत्साधनं द्वारमाश्रयन्ते; साधननिवेशिनश्च धर्मा इति लिखनात् अपूर्वसाधनत्वलक्षणामाश्रित्य साधनत्वाविशेषात् परिधावपि भवन्ति धर्मा इति सिद्धान्ते, यत्पूर्वपक्षिणा उक्तं "साधनत्वापेक्षया प्रयुक्तत्वस्य लघुत्वात् पशुनियोजनप्रयुक्ताधिकरणत्वस्य परिधावसम्भवान्न धर्मा" इति तत्परिहरति—अपूर्वसम्बन्धित्वस्यैवेति। पूर्वमपि

घटकत्वात्। सम्बन्धत्वं सम्बद्धाविति प्रतीतिसाक्षिकस्सकलतत्तत्सम्बन्धत्वव्यापकोऽखण्डोपाधिरूपो धर्मः; तेन तत्तत्सम्बन्धान्यतमत्वरूपतया सम्बन्धत्वस्य न गुरुभूतत्वाशङ्का, वक्ष्यते चैतत् 'अगन्म' इत्यादिमन्त्रस्यापूर्वार्थत्वसिद्ध्यर्थमुत्तराधिकरणे।

यत्तु छेदनादीनां यूपत्वोत्पादकतया नायूपे परिधौ धर्मप्राप्तिरिति। तत्र पार्थसारथिः—"[1] त्वदुक्तरीत्यैव यूपशब्दस्य दृष्टादृष्टसंस्कारसमुदाये शक्तिः। न तु तावत्संस्कारजन्यादृष्टान्तरे प्रमाणाभावात्। तावत्संस्काराणामेव च नियोजनाङ्गत्वं अतश्च परिधिखलेवाल्यादौ कतिपयधर्मबाधेऽपि धर्मान्तरकरणं नानुपपन्नम्" इति।

---

'फलदेवतयोश्चे'त्यधिकरणे 'अगन्म सुवः' इति मन्त्रस्य फलमात्रप्रकाशने आनर्थक्यप्रसक्तिपरिहाराय अपूर्वसाधनत्वलक्षणायां फलस्यापूर्वसाधनत्वाभावात् अपूर्वसाध्यत्वं लक्षणीयम्; ततश्च सर्वत्रैकरूप्यार्थं अपूर्वसम्बन्धित्वमेव लक्षणीयमित्युक्तमेवोत्तराधिकरणे वक्ष्यते। **अयूपे परिधाविति**। यथैव साद्यस्के खलेवाली यूपो भवतीति विहिता खलेवाली क्षेत्रस्था स्वतः सिद्धा यूपरूपेति न तस्यां यूपत्वोत्पादकधर्माः छेदनादयो भवन्तीति 'कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात्' इति दशमप्रथमपादाधिकरणे वक्ष्यते, तद्वदिहापि अयूपे परिधौ लुप्तार्थत्वात परिधित्वविरोधाद्वा ये न सम्भवन्ति छेदनतक्षणादयः संस्काराः तावन्मात्रमेव हातव्यं, न तु तावता सम्भवदपि हातव्यं भवति। खलेवाल्यामलुप्तार्थं खलेवालीत्वाविरुद्धञ्च अञ्जनादि कर्तव्यमेवेति वक्ष्यते। एवञ्च कार्यभेदात् छेदनादीनां समुच्चयोऽपि सुकरो भविष्यति। अतश्च 'यूपायाज्यमानाय' इत्यत्र सम्भविनश्च संस्कार्यैकदेशस्य अभिधायकं पदान्तरन्तु नास्तीति, अवश्यञ्च प्रकृतिवत् तद्रूपप्रदर्शनं कर्तव्यमिति, यूपशब्द एवालब्धसकलार्थोऽपि प्रयोक्ष्यते तत्प्रकाशनायेत्यनूह एवेति भावः।

अत्रच यद्यप्युणादिषु तृतीयपादे 'पानीविषिभ्यः पः' (उ. ३१०) इति पप्रत्ययाधिकारे कुयुभ्याञ्च' इत्यनुशासनेन (उ. ३१४) कुनन्ति मण्डूका अस्मिन्निति व्युत्पत्त्या 'कुशब्दे' इति क्र्यादिगणपठितकुधातोः परतः पप्रत्ययान्तकूपशब्दवत् युवन्ति बध्नन्ति पशुं अस्मिन् इति व्युत्पत्त्या 'युञ्बन्धने' इति क्र्यादिगणपठितयुधातोः परतः पप्रत्ययान्तत्वेन यूपशब्दः शाब्दिकैः साधितः। तथाच पशुबन्धनाधिकरणत्वरूपयोगस्य अतिप्रसङ्गपरिहारार्थं यज्ञसाधनपशुबन्धनाधिकरणत्वविशिष्ट एव रूढिं प्रकल्प्य पङ्कजपदात् पङ्कजनिकर्तृत्वप्रकारकपद्मत्वावच्छिन्नविशेष्यकपद्मबोधस्येव इहापि यज्ञसाधनपशुबन्धनाधिकरणत्वप्रकारककाष्ठविशेष्यकबोधस्य

---

1 A. reads तदुक्त

यूपपदादुत्पत्तेः, तथाविधकाष्ठप्रकृतिकत्वेन खदिरादीनां छेदनादीनाञ्च संस्कारकत्वेन विधानोपपत्तेः। संस्काराणां दृष्टादृष्टरूपाणां यूपशब्दवाच्यताकोटौ निवेशे नैव प्रयोजनं दृश्यते; तथापि वैयाकरणैः युवन्ति बध्नन्ति पशुमस्मिन्निति बहुवचनान्तेनैव विग्रहकरणात् बन्धनकर्तृत्वेन बहूनामन्वयापेक्षायां बहुवचनान्तयाज्ञिकपदकल्पनया तदर्थस्यैवान्वयकल्पनेन यस्मिन् याज्ञिकाः पशुं बध्नन्ति स यूपः इत्यर्थप्रतीत्या याज्ञिकप्रसिद्ध्युपजीव्यत्वमेवावयवयोगस्यावगम्यते। तथाच याज्ञिकैः संस्कारविशिष्टे काष्ठ एव पशुबन्धनानुष्ठानात् संस्काराणामेवातिप्रसङ्गनिराकरणार्थं वाच्यताकोटौ निवेशावश्यकत्वे अनुशासनस्य व्युत्पादनमात्रपरत्वात् न तदनुरोधेन यज्ञीय-पशुबन्धनाधिकरणत्वविशिष्टे रूढिकल्पनं प्रमाणवत्; गौरवात्, प्रयोजनाभावाच्च। अत एव पशुबन्धनाधिकरणत्वविधौ पशुबन्धनसम्बन्धात्पूर्वमपि यूपे पशुं नियुञ्जीतेति यूपशब्दप्रयोगो दृश्यते। तत्र 'आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् (९-२-४३) इत्यत्र सिद्धान्तसूत्रे 'अथ यदुक्तं यूपायाज्यमानायेतिशब्द ऊहितव्यः स्यादिति—अत्रोच्यते—नोहितव्यो भविष्यति। धर्मावेशादाख्यापि यूप इति भविष्यति। धर्मनिबद्धा हि सा यथैव यूपे तथा परिधावपि भवि-तुमर्हति। तस्मान्नोहिष्यते शब्द' इति भाष्यकारलिखनस्वारस्यमनुगृह्य पार्थसारथिना तन्त्ररत्ने—भाष्यविदस्तु समादधति यूपशब्दोऽयमनेकेषां छेदनजोषणाञ्जनोच्छ्रयणादिजन्यानां दृष्टादृष्टरूपाणां संस्काराणामभिधाता। न त्वेतेभ्योऽतिरिक्तं यूपाख्यं किञ्चिददृष्टमस्ति। तेन एभिः संस्कारैः संस्कृते काष्ठे पशोर्नियोजनं यूपे पशुं नियुञ्जीतेत्यनेन विधीयते—इति ग्रन्थे संस्काराणामभिधाता इति लिखनात् तत्तत्संस्काराणां समुदायरूपेण प्रत्येकरूपेण वा यूपपदवाच्यत्वं स्पष्टं प्रतीयते। तथा शास्त्रदीपिकायामपि—'न च यूपाख्यं एकं किञ्चिदस्ति यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः। छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टं अदृष्टं वा यथायथं कार्यं गमयन्ति सर्वाणि तानि कार्याणि नियोजनस्याङ्गं' इति तत्संस्काराणा-मेव यूपपदवाच्यत्वमुक्तम्। तत्रापि यावद्विहितदृष्टादृष्टसंस्कारेषु यदि भिन्नभिन्ना शक्तिः तदा अनेकशक्तिकल्पनापत्तिगौरवम्। किञ्च अनेकशक्तिस्वीकारेऽपि 'यूपे पशुं नियुञ्जीत' इत्यादि-वचनगतयूपशब्देन तावच्छक्तिमदनेकसंस्कारबोधः; परिधौ तु किञ्चिच्छक्तिमत्संभवत्संस्का-रैकदेशस्यैव बोध इत्यत्र नियामकाभावः।

एतेन पुष्पवच्छब्दवत् एकयैव शक्त्या युगपत् तावत्संस्काराणां बोध इति नानेकशक्ति-कल्पनाप्रसरः। अथवा तावत्संस्कारविशिष्टे काष्ठ एव पूर्वलिखिततन्त्ररत्नोपपादितदिशा यूपपदस्य शक्तिरित्यप्यपास्तम्। परिधौ कतिपयसंस्कारबोधमादाय यूपशब्दप्रयोगस्य भवत्सम्मतस्य अनापत्तेः। न च परिधौ एकदेशलक्षणयैव यूपशब्दप्रयोगो भाष्यकारादीनामभिमतः।

तथात्वे पूर्वलिखितभाष्यादिग्रन्थस्वारस्यभङ्गापत्तेः। इतरथा अन्यत्रापि लक्षणापत्त्या ऊहोच्छेदापत्तेश्च। संस्काराणामनेकेषां शक्यतावच्छेदकत्वे शक्यतावच्छेदकभेदादनेकशक्तिकल्पनदोषतादवस्थ्याच्च। अतो लाघवात् तद्विहितसंस्कारात्यवहिततत्तदपूर्वापेक्षया सर्वसंस्कारान्ते उत्पद्यमानमेकमदृष्टान्तरं स्वीकृत्य तत्रैवैकस्मिन् यूपपदशक्तिः कल्पयितुं युक्ता। आवश्यकञ्च तददृष्टान्तकल्पनम्। यथैव हि पवमानेष्टीनामग्न्युत्पादकत्वपक्षे (वा) तत्तत्कर्माव्यवहितोत्पत्त्यपूर्वातिरिक्तं सर्वान्ते परमापूर्वरूपमदृष्टं उत्पद्यते इत्यवश्यमङ्गीकार्यम्। इतरथा उत्तरतन्त्रवैयर्थ्यापत्तेः, तदेव च लाघवादाहवनीयादिपदवाच्यम्। तथा इहापि छेदनादिविधौ सर्वत्रैव यूपपदश्रवणात् छेदनेन यूपमुत्पादयेदिति वाक्यार्थाङ्गीकारे एकेनैव संस्कारेण यथातथाभूतस्य यूपस्योत्पत्तिः उत्तरसंस्कारवैयर्थ्यपरिहाराय यावत्सर्वान्त्यसंस्कारं यूपपदवाच्यादृष्टानुत्पत्तेः अवश्याङ्गीकार्यत्वात् सर्वान्त एवोत्पद्यमानमदृष्टमेव यूपपदवाच्यम्। अत एव छेदनाद्युत्पाद्यादृष्टाभेदज्ञापनायैव एकरूप्येण तत्तद्विधौ यूपपदस्यैव प्रयोगः। अत एव च एकादृष्टार्थत्वात् च्छेदनादीनां समुच्चयोऽऽस्मन्मतेऽपि नानुलभः। एवञ्च दृष्टादृष्टसंस्कारविधीनां आधानविधिवत् काष्ठनिष्ठादृष्टोत्पादकत्वेन छेदनादिविधायकानामपूर्वविधित्वमेवेति नात्रावघातादिवत् दृष्टार्थत्वमात्रेण नियमविषयतेत्यर्थे सिद्धे, यदत्र **विधिरसायनकृता**—

यूपस्सर्वोऽप्यपूर्वः स्वयमपि विविधादृष्टसंस्कारयोगात्
तस्मिन् दैक्षेऽपि दृष्टं खदिरनियमनं तत्र का प्राप्तिवार्ता।
तस्मात्तत्तत्स्वरूपे परमनवगतं रूपभेदं विहाय
प्राप्त्यप्राप्ती विचार्ये कथमपि तदिहाव्याप्तिदोषान्न मुक्तिः;॥ (वि. र. श्लो ३)

इति तृतीयश्लोकविवरणे यूपः प्राकृतो वैकृतः सर्वोऽपि तावदाहवनीयादिवदलौकिकः प्रोक्षणजन्यादृष्टछेदनतक्षणाष्टाश्रीकरणादिजन्यनियमादृष्टरूपानेकसंस्कारविशिष्टस्यैव यूपशब्दार्थत्वादिति ग्रन्थेन छेदनादिजन्यनियमादृष्टरूपत्वं यूपशब्दार्थेऽभिहितम्; तदपास्तम्।

नियमविषयत्वाभावेऽदृष्टकल्पनायां मानाभावात्। तत्संस्कारविशिष्टकाष्ठपरत्ववादिनां प्राचामपि मते तत्संस्कारविशिष्टे यूपे दृष्टानामपि संस्काराणां पक्षे प्राप्त्यसम्भावनाया एवाप्रसक्तेः नियमविषयत्वस्याभावाच्च। न च यूपशब्दस्य अदृष्टविशिष्टाकारविशिष्टकाष्ठपरत्वात् आकाररूपदृष्टार्थत्वेन नियमविधिविषयत्वमिति युक्तम्। अदृष्टमन्तरेण आकारविशिष्टे काष्ठे तच्छब्दप्रयोगाभावेन अदृष्टनिवेशेनैवातिप्रसङ्गपरिहारः [रे] आकारस्यापि वाच्यताकोटौ निवेशो प्रयोजनाभावात्। अत एवादृष्टविशिष्टे काष्ठे यूपपदस्य शक्तिरित्येव अभियुक्तानां लिखनम्। अतस्ते

अपूर्वविधिगतादृष्टे एकस्मिन्नेव यूपपदस्य शक्तिः; तदपि काष्ठगतमदृष्टं न यावद्विहितसंस्कारमात्र-जन्यम्; अपि तु कतिपयसंस्कारमात्रजन्यमेवेत्यनुपदमेव वक्ष्यते पूज्यपादैः।

वस्तुतस्तु काष्ठमन्तरेण केवलादृष्टे यूपपदाप्रयोगात् काष्ठगतादृष्टे च पशुनियोजनाधिकरण-तायाः साक्षादसम्भवात् तादृशादृष्टविशिष्टकाष्ठमेव यूपपदवाच्यमित्येव युक्तम्। एतच्च दृष्टादृष्टसंस्कारवाचित्वं यूपशब्दस्येति प्रसिद्धिरपि काष्ठरूपदृष्टस्वरूपं तन्निष्ठादृष्टसंस्कारश्चेत्येवमुभय-योगादेव ज्ञेया। न त्वनेकादृष्टसंस्कारयोगादित्यपि द्रष्टव्यम्। अनेकादृष्टसंस्कारविशिष्टं एकादृष्टविशिष्टं वा काष्ठं यूपशब्दार्थः। उभयथापि यूपे पशुं नियुञ्जीतेति विधिना यूपाधिकरण-पशुबन्धनविधाने यूपशब्दार्थस्य चात्वालवेद्यादिशब्दार्थवत् लौकिकत्वाभावात् 'कोऽयं यूपो नाम, कथं वा कर्तव्यः' इत्याकाङ्क्षयाऽन्वीयमानछेदनादिखादिरत्वादिविषयविधीनां प्रवृत्तौ तत्र तत्र यूपादिशब्दश्रवणेऽपि यूपस्यालौकिकत्वस्य व्रीह्यादिवत् संस्कार्यत्वासम्भवात् उत्पाद्यत्वेनैव क्वचिदन्वयः, क्वचिच्च संस्कार्यत्वेनापि।

तत्रायं विवेकः—यूपं च्छिनत्तीत्याद्युत्पादकधर्मविधौ छेदनादिना अदृष्टविशिष्टं काष्ठं उत्पादयेत् इत्युद्देश्यविधेयभावे विशेष्ये काष्ठे स्वतः सिद्धे उत्पत्त्यन्वयायोगात् विशेषणीभूतादृष्टप्राधान्येनैव विशिष्टस्योद्देश्यत्वम्। अथवा लक्षणया विशेषणविशेष्यभावे वैपरीत्यमाश्रित्य काष्ठनिष्ठादृष्टविशेषस्यैव वा भाव्यत्वमित्यङ्गीकार्यम्। यूपं प्रोक्षतीत्यादौ तु वक्ष्यमाणपूज्यपादोक्तविधया उत्पन्नसंस्कारत्वात् अदृष्टविशिष्टकाष्ठपरत्वमेव न तु लक्षणा।

अथवा छेदनाद्युद्देश्यवाचके यूपपदे नापूर्वसाधनत्वलक्षणा। प्रोक्षणादिविधौ च आनर्थक्यपरिहाराय आवश्यकी सेति वक्ष्यते। एवं च्छेदनादिविधीनां यूपशब्दान्तर्गतादृष्ट-जनकाकाङ्क्षाशामकापूर्वच्छेदनादिविधायकत्वं यथा, तथैव अदृष्टाश्रयं किंकाष्ठप्रकृतिकमिति प्रकृत्याकाङ्क्षायां अनियततत्तत्प्राप्तौ खादिरो यूपोभवतीत्यादिविधिभिः खदिरद्रव्यं उपादानत्वेन नियम्यत इति खदिरादिविधीनामुपादाननियमविधायकत्वं युक्तमेव। न हि खदिरतापि छेदनादिवत् काष्ठनिष्ठादृष्टोत्पादिका। दृष्टकाष्ठप्रकृतित्वद्वारा तत्सम्भवे अदृष्टार्थत्वकल्पनस्य अन्याय्यत्वात्। तथा च खदिरादिविधावपि श्रूयमाणं यूपपदं च्छेदनादिविधाविव यद्यप्यदृष्ट-विशिष्टकाष्ठपरमेव, तथापि तत्र विशेषणप्राधान्यविवक्षयेव इह विशेष्यभूतकाष्ठप्राधान्यविवक्षया, अथवा तत्र काष्ठनिष्ठादृष्टे लक्षणावत् पशुनियोजनाधिकरणकाष्ठमात्रे लक्षणयैव भाव्यसमर्पकम्। ततश्च यथैव 'धान्यमसि' इति मन्त्रगतधान्यपदस्य प्रथमतो धान्यप्रकृतिकत्वलक्षणामाश्रित्य अनेन मन्त्रेण धान्यप्रकृतिकं प्रकाशयेदिति लिङ्गकल्प्यश्रुतौ उद्देश्यसमर्पणे सति पश्चात्

तत्र—समुदायस्यातिरिक्तत्वे तस्यैव नियोजनाङ्गत्वापत्तेः संस्काराणां समुदायोत्पादकत्वापत्तौ परिध्यादौ तदभावेन धर्मग्राहयनापत्तेः। अनतिरिक्तत्वे शक्यतावच्छेदकभेदेनानेकशक्तितादवस्थ्यात्। इतरथा लक्षणोच्छेदापत्तेः। अतो लाघवादाहवनीयादिपदवदेवादृष्टान्तरे तद्विशिष्टकाष्ठ एव वा यूपपदस्य शक्तिः। तच्चादृष्टं नोच्छ्रयणा-

---

आनर्थक्यपरिहारार्थं अपूर्वसाधनत्वलक्षणा अपरा आश्रीयते। एवमिहापि प्रथमतः पशुनियोजनाधिकरणकाष्ठलक्षणायामपि पश्चात् अपूर्वसाधनत्वलक्षणा आश्रीयते इति न किञ्चित् बाधकम्। एवञ्च खादिरो यूपो भवतीत्यादिविधेयानां शक्याकारेण लक्ष्याकारेण वा उद्देश्यतावच्छेदकरूपावच्छिन्नयूपपदार्थोद्देशेन खादिरत्वादीनां पक्षे प्राप्तिसत्वात् उपपन्न एव नियमविधित्वे, यद्विधिरसायनकृता पूर्वलिखिततृतीयश्लोके 'तत्र का प्रातिवार्ता' इत्युक्तं तत् विवक्षितरूपानङ्गीकारेण आपातत एव द्रष्टव्यम्।

तत्सिद्धं न यूपपदस्य अनेकादृष्टविशिष्टकाष्ठे शक्तिः, किन्तु एकादृष्टविशिष्टकाष्ठ एवेत्यभिप्रायेण पार्थसारथिमतं खण्डयन् स्वमतमुपपादयति— तत्रेत्यादिना। आहवनीयादिपदवदेवेति। ननु यूपपदस्य अदृष्टान्तरे तद्विशिष्टकाष्ठे वा शक्त्यङ्गीकारेण अनेकशक्तिकल्पनागौरवपरिहारसम्भवेऽपि आहवनीयादिपदे नैकशक्तिकल्पनमुपपद्यते। तद्धि आधानसामग्र्या उत्पद्यमानमदृष्टान्तरं ज्वलने यद्युत्पद्यते तदा आधानकाले निहितस्याग्नेः पवमानेष्ट्यनन्तरं त्यागेन तद्गतस्य संस्कारस्य तन्नाशतो नाशापत्त्या आहवनीयाननुवृत्तिप्रसङ्गात्। अजस्रपक्षेऽपि अनुगतस्य मथनादिना पुनराहवनीयाद्युत्पादने तदनुवृत्त्यभावप्रसङ्गात्। अत एवाहवनीयत्यागे तददृष्टान्तरं गार्हपत्ये सञ्चरति। तदानीं गार्हपत्ये अस्त्यग्निद्वयं आहवनीयो गार्हपत्यश्चेति; तत्र द्वयोरप्यन्योः भेदाकल्पनया गार्हपत्यबुद्ध्या तन्मन्त्रेणोपस्थानम्। यदा तु गार्हपत्यादाहवनीयस्य प्रणयनं क्रियते तदा केवलं गार्हपत्यस्यैव तन्त्रे आयतनान्तरे स्थितस्य केवलाहवनीयस्य इति याज्ञिकानां लिखनमपि परास्तम्। एवञ्च अदृष्टान्तरमनङ्गीकृत्यापि आधानपवमानेष्टिजन्यसंस्कारसमूहस्यैव आहवनीयादिपदशक्यत्वाङ्गीकारेऽपि न निस्तारः। तस्याप्याश्रयाभावेन स्थित्यसंभवात्। न च मास्तु तदनुवृत्तिरिति वाच्यम्। तथात्वे विकृत्यर्थं प्रणीताहवनीये आधानसम्पादितत्वाभावेन आहवनीयप्रयोजकत्वापत्तेः। अतश्च आधानपवमानेष्टिजन्यादृष्टस्येव प्रणयनमथनादिजन्यसंस्काररूपादृष्टानामपि आहवनीयशब्दार्थत्वं वाच्यम्। ततश्चागतमेवानेकार्थत्वम्। किञ्च गार्हपत्यापादानकप्रणयनेन आहवनीयरूपमेवादृष्टमुत्पद्यत इत्यत्रापि न किञ्चिन्नियामकम्। पशौ आहवनीयापादानकौत्तरवेदिकप्रणयनानन्तरं प्रणीतस्य आहवनीयत्वे

ऽप्यस्य गार्हपत्यताङ्गीकारेण प्रणयनस्याहवनीयशब्दप्रवृत्तिनिमित्तत्वायोगात् इति चेत् । अत्र समाहितं परिमले जिज्ञासासूत्रे देवताधिकरणे च—न ज्वलनविष्ठादष्टनिचयो न वाऽदृष्टान्तरमाहवनीयादिपदवाच्यम् । अपि तु आहवनीयाद्यभिमानिदेवता एव तत्तदायतनविशेषनिहितेषु सम्भारेषु मथिताग्निनिधानरूपेणाधानेन संस्क्रियन्ते । ताश्च संस्कृतदेवताः अजस्रपक्षे यजमानशरीरे, अग्निदानपर्य [न्तं] मध्ये अग्निसंस्कारविच्छेदनिमित्तोपजनने तत्पर्यन्तं च तेष्वग्निषु सन्निदधते । अग्नीनामजस्रधारणाभावे तत्तत्कर्मावसानेषु आहवनीयदेवता गार्हपत्यमनु प्रविशन्ति । पश्चावौत्तरवेदिके प्रणयने क्रियमाणे तमाहवनीयोऽनुप्रविशति । तेन प्रागधिष्ठितमग्निं गार्हपत्यः इत्येवमादिकमभ्युपगन्तुं युक्तम् । एवं सत्येव "नान्तराग्नी सञ्चरति । यदि पूर्वोऽनुगतः सञ्चार्यम् पश्चाद्धि स तर्हि गतः", "गार्हपत्याज्ज्वलन्तमाहवनीयमुद्धरति ।" इति च कल्पसूत्रकारवचनं सङ्गच्छते । नहि संस्कारमात्रस्य पश्चाद्गमनं सम्भवति । नाप्याहवनीयस्य गार्हपत्त्यानुप्रवेशाभावे गार्हपत्यात् तत्रासतः आहवनीयस्योद्धरणं सम्भवति । न च तथासति अग्निद्वयसंसर्गनिमित्तकप्रायश्चित्तप्रसङ्गः, तस्य प्रत्यक्षाग्निसंसर्गनिमित्तकत्वात् । न च देवतानां आहवनीयशब्दार्थतायां 'आहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति'इत्यादिवाक्यश्रुतहविःप्रक्षेपश्रपणाद्याधारत्वमपि तासां भवेदित्ययं दोषः ; इष्टापत्तेः । 'अभूत्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा' इति मन्त्रवर्णतः पाकेन हविषां सुरभिकरणस्य उद्देश्यदेवतार्थं नयनस्य चैककर्तृत्वावगतेश्च । तत्राभिमान्यभिमानविषयाणामभेदाध्यवसायेन समानकर्तृत्वव्यपदेश इति चेत् । इहापि तर्हि अभेदाध्यवसायो गतिरस्तु । एवञ्च अग्निसंस्काराधारदेवतानामेवाङ्गीकारेण तदाश्रयसन्निधानकल्पनाया आवश्यकत्वे तेनैव न्यायेन हविरुद्देश्यदेवतानामप्यङ्गीकारेण बहुषु यागदेशेषु सन्निधानमपि शक्यत एव कल्पयितुमिति । धूर्तस्वामिरामाण्डारप्रभृतिग्रन्थस्वारस्यमप्येवमेव । अत एव पूर्वस्य आहवनीयस्यानुगतौ तस्य गार्हपत्ये प्रवेशात् अविहृतावस्थायां गार्हपत्यानुगतौ सर्वाग्न्यनुगमननिमित्तं पुनराधानादि भवत्येव ।

यस्य तु आश्वलायनसूत्रवृत्तिकृतो मते न कर्मावसाने आहवनीयस्य गार्हपत्ये प्रवेशः प्रत्यक्षस्य शास्त्रस्य वा तत्प्रमाणस्य अनुपलम्भात्; तस्याप्यविहृतावस्थायां गार्हपत्यानुगमने सर्वाग्न्यनुगमनाभावात् पुनराधानाभावेऽपि गार्हपत्यापादानकोद्धरणे आहवनीयस्तत्कर्मकाले भवतीत्यर्थस्य वचनप्रामाण्यात् स्वीकारेण कर्मान्तरालकाले आहवनीयस्य कर्मापूर्वस्येवात्मनि स्थितेरङ्गीकारोऽस्त्येव । स्थिते च तस्मिन् उद्धरणकाले तस्य तत्र सञ्चारो देवतारूपतया विना न सम्भवतीत्यावश्यकमेव देवतारूपत्वम् । तथासति देवतारूपस्य पश्चाद्गमनस्याप्यस्त्येव सम्भवः

इति 'पश्चाद्धि स तर्हि गत' इत्यस्य स्वारस्यमपि शक्यत एवानुग्रहीतुम् । अतोऽत्र यत्नैवाहवनीयादेः गार्हपत्यप्रवेशरूपपश्चाद्गमनासम्भवात् 'पश्चाद्धि स तर्हि गत' इत्यस्य 'पश्चाद्धि स गत' इत्यभिप्रायेण अन्यपरत्वमुक्तम् । विह्नाहवनीयानुगतौ आहवनीयस्योत्पादकं पुनः प्रणयनं, निमित्तभेदवशात् कचिन्मन्थनादिकम् । यदा प्रणयनं तदा द्वितीयस्याम्यन्तरस्याभावात् न सञ्चारनिषेधः । मथनपक्षे तु भस्मनि अवक्षाणादौ वा अग्न्यन्तरसत्वात् 'नान्तराग्नी' इति निषेधान्न सञ्चार इति तदपास्तम् । आत्मगताहवनीयस्य उद्धरणकाले प्रणीताग्निसञ्चारस्येवानुगमनकालेऽपि गार्हपत्यागारसञ्चारस्य सम्भवेन मुख्यगमनोपपत्तेः । अतो युक्तमुक्तं आहवनीयादीनां देवतारूपत्वमिति नानेकार्थत्वकल्पनापत्तिरिति । येषान्तु न देवताविग्रहादिस्वीकारः तेषान्तु ज्वलननिष्ठमेवादृष्टं आधानेनोत्पाद्यते तन्नाशे च तददृष्टस्य नाशः आधानोत्पादिते वाऽदृष्टविशेषे तदाश्रित एव वा अग्नौ आहवनीयादिपदानां प्रचुरप्रयोगात् शक्तिः । प्रणयनेन प्रत्यहं तदुत्पत्तौ मन्थनादिना वा अनुगमने तदुत्पत्तौ तु आधानोत्पादितगार्हपत्याद्युत्पादितत्वसम्बन्धात् प्रणयनादिजन्यसंस्काररूपादृष्टविशेषे तद्वति वा अग्नौ निरूढलक्षणा इत्येवमेवानेकशक्तिकल्पनाकृतगौरवपरिहारार्थं यत्न उचितः । एवञ्च सर्वदा आहवनीयानुवृत्तेरपि नावश्यकत्वम् । तदभावेऽपि यदैव विधिवशात् य एवाहवनीयत्वेनोत्पादितः तस्य तत्कार्यार्थं तयैवोत्पादने सति तत्कार्यस्य तेनैव वचनवशादनुष्ठाने बाधकाभावात् ।

**एतेन** विकृतीनामाहवनीयप्रयोजकत्वापत्तिरित्यपास्तम् । साक्षात् परम्परया वा आधानोत्पादिताग्निलाभेन तदपेक्षाया अभावात् । नहि 'यदाहवनीये जुहोति' इति वचनं मुख्याहवनीयपरमेवेत्यत्र प्रमाणमस्ति । तथात्वे पवमानेष्टीनां आधानाङ्गभूतहोमानाञ्च तत्रानुपपत्तेः । तदानीमाधानप्रयोगान्ते उत्पद्यमानस्य मुख्याहवनीयादेरभावात् प्रणयनाद्युत्पादितानां आहवनीयादिसंज्ञाकरणस्यैतत्प्रयोजनकत्वाच्च । लक्षणाभावपक्षे प्रणीताहवनीयादीनामपि मुख्यत्वाच्च । वचनवशात् प्रणयनव्यक्तिविशेषस्य कचित्पशौ गार्हपत्योत्पादकत्वेऽपि इतरप्रणयनव्यक्तिविशेषाणां आहवनीयोत्पादकत्वं नैव विरुध्यते । सञ्चारनिषेधस्येव सञ्चारविधेरपि वचनत्वादेव प्रामाण्योपपत्तौ 'पश्चाद्धि स तर्हि गत' इत्यस्य हेत्वधिकरणन्यायेन प्रत्यक्षाभावादर्थवादत्वमेव । अत एव **पूज्यपादानां** यूपपदस्यानेकसंस्कारेषु अनेकशक्त्यापत्तिमापादयतां नाहवनीयादिपदानां देवतावाचित्वेन एकशक्तित्वं विवक्षितम् । किन्तु मदुक्तरीत्यैव । इतरथा 'यूपो यज्ञस्य दुरिष्टमामुञ्चते' इत्यर्थवादात् यूपोपस्थानाङ्गमन्त्राम्नानाच्च यूपपदस्य एकदेवतावाचित्वापत्तौ अनेकशक्तिकल्पनाऽप्रसक्तेः; अतो यथाकथञ्चित् वचनबलात् उत्पादितेष्वग्निषु साक्षात् परम्परया वा आहवनीयपदप्रवृत्तौ बाधकाभावात् आहवनीयादिकार्यस्य च तैरेव सिद्धौ

**अनादि**सकलसंस्कारजन्यं अपि तु **यूपाहुत्याद्यङ्कच्छेदनजोषणाद्याश्रीकरणजन्यमेव। अत एव याज्ञिकानां दीक्षाकाले तावतामेवापकर्षः।**

**युक्तं चैनत्। 'दीक्षासु यूपं छिनत्ति' इत्यत्र यूपोत्पत्त्यनुवादेनैव दीक्षाकाल-विधानात्। इतरथा यूपच्छेदनोद्देशेन तद्विधाने** वाक्यभेदात्। **उच्छ्रयणादीनां तु** अग्निसंमार्गन्यायेनोत्**पन्नयूपसंस्कारकत्वादपूर्वसाधनीभूतपशुनियोजनाधारत्वलक्षणावश्यं—भावेनायूपे परिध्यादावपि प्राप्त्युपपत्तिः। उच्छ्रयणमात्रं परमर्थ**लोपादिना **निवर्तते। न चैवं 'यूपायाज्यमानाय' इति मन्त्रे ऊहापत्तिः,** भवन्मतेऽपि **समानत्वात्।**

---

आहवनीयाद्यनुवृत्तेः प्रयोजनाभावेन न तदर्थं विग्रहवद्देवतास्वीकारो युक्तः इत्याधानोत्पादितेषु तेष्वाहवनीयपदस्य शक्तिः अन्यत्र निरूढलक्षणा, इत्येवं रीत्यैवानेकशक्तिकल्पनापत्तिः परिहरणी-येत्यास्तान्तावत् ।

प्रकृतमनुसरामः । **सकलसंस्कारजन्यमिति** । तेषामुच्छ्रयणादीनां यूपस्वरूपो-त्पत्त्यनन्तरं निष्पन्नयूपसंस्कारत्वादिति भावः । **वाक्यभेदादिति** । अतश्च यूपच्छेदना-नुवादेन दीक्षाकालविधानानुपपत्तेः च्छिदिधातोः उत्पादकछेदनादिधर्ममात्रोपलक्षणत्वात् छेदनादिभिः उत्पादकैर्धर्मैः उत्पत्तिलक्षणया 'च्छेदनादिभिः यूपोत्पत्तिं कुर्यात्' 'तां दीक्षासु' इत्येव वाक्यार्थो युक्त इति भावः । **अग्निसम्मार्गन्यायेनेति** । आहवनीयाद्युत्पत्त्यनन्तरं 'अग्निं सम्मार्ष्टि'इति विहितस्य सम्मार्गस्य नाहवनीयाद्युत्पादकत्वं अपितु उत्पन्नसंस्कारकत्वं; तत्राग्निपदे यथा अपूर्वसाधनत्वलक्षणा तेन न्यायेनेत्यर्थः । **अर्थलोपादिनेति** । अवटे यूपस्य निधानार्थे उच्छ्रयणं समन्त्रकं विहितं; नहि परिधेः आहवनीयपरिधानार्थस्य तिर्यगवस्थितस्य अवटे निधानाभावे उच्छ्रयणमपेक्षितम् । पशुनियोजनसमर्थस्य स्थूलपरिधेः करणेऽपि यथावस्थिते शयाने एव नियोजनकरणात् । उच्छ्रयणकरणे परिधानार्थत्वा [भाव]-प्रयुक्तपरिधित्वस्यैव बाधापत्तेः लोप एव । अत एव परिधित्वानुपमर्देनाविरोधिधर्माणां परिधावनुष्ठानेऽपि, विरोधे परिधिधर्माणामेवानुष्ठानं न यूपधर्माणामिति " यौप्यस्तु विरोधे स्यात् मुख्यानन्तर्यादित्यधिकरणे (१२—२) द्वादशद्वितीयपादे उक्तमित्यर्थः । **भवन्मतेपीऽति** । यूपशब्दस्य भवन्मते सकलसंस्कारसमुदायवाचित्वे तत्समुदायस्य परिधावकरणे प्रवृत्तिनिमित्ता-भावात् यूपशब्दस्य कथं स्यात् प्रयोग इति तत्प्रकाशनार्थं अवश्यं परिधिपदप्रक्षेपरूपोहापत्तिः त्वापि समानेत्यर्थः ।

'परिधये अज्यमानाय' इत्याद्यूहस्येष्टापत्त्यैव सुपरिहरत्वाच्च। सूत्रस्य ऊहपरत्वेनापि व्याख्यानसम्भवात् ॥ १२ ॥

---

यत्तूक्तं सम्भविनश्च संस्कारैकदेशस्याभिधायकं पदान्तरं तु नास्ति। अवश्यञ्च प्रकृतिवत् यूपप्रकाशनं कर्तव्यमिति यूपशब्द एवालब्धसकलार्थोऽपि प्रयोक्ष्यते तत्प्रकाशनायेति।

तन्न। यूपत्वोत्पादकसंस्काराणां दीक्षाकालकर्तव्यमात्राणां यूपशब्दवाच्यत्वेऽपि तदुत्तर-संस्काराणां तत्पदवाच्यत्वकल्पने प्रमाणाभावेन तावन्मात्रेणैव यूपशब्दप्रयोगानुपपत्तेः। अत एव सम्भवत्संस्कारैकदेशे लक्षणया यूपपदप्रयोग इत्यपि न। तथात्वे सर्वत्रैव तदादाय प्रयोगापत्तौ ऊहोच्छेदापत्तेरिति भावः।

अतश्चेष्टापत्त्यैवोहापत्तिं परिहरति—**परिधये इति**। अत्र च सकलसंस्कारसमुदा-यस्य यूपपदवाच्यत्वमङ्गीकृत्य सम्भवत्संस्कारैकदेशमप्यादाय परिधौ यूपशब्दप्रयोगसम्भवेन यूपायाज्यमानायेत्यत्र ऊह इति न केवलं पार्थसारथिनैवोक्तं; अपितु 'आख्याचैवं तदावेशा-द्विकृतौ स्यादपूर्वत्वात्' इति सिद्धान्तसम्बन्ध्यन्तिमसूत्रं व्याचक्षाणेन भाष्यकारेणापि 'अथ यदुक्तं यूपायाज्यमानायेति च शब्द ऊहितव्यः स्यादिति—अत्रोच्यते। नोहितव्यो भविष्यति। धर्मविशादाख्यापि यूप इति भविष्यति। धर्मनिबद्धा हि सा। यथैव यूपे तथैव परिधावपि भवितुमर्हति। तस्मान्नोहिष्यते शब्द इति ग्रन्थेनानूह उक्तः। तदत्र पूज्यपादैः पार्थ-सारथिमतखण्डनेन भाष्योक्तमपि निरस्तमिति वेदितव्यम्।

तन्निरासे च न स्वमते सूत्रानुपपत्तिरित्यपि दर्शयति—**सूत्रस्य चेति**। आख्या चैवं तदावेशाद्विकृतौ स्यात् अपूर्वत्वात्' इति हि अन्त्यसिद्धान्तद्वितीयसूत्रम्। तस्यायमर्थः —तदावेशात् तेषां छेदनाद्युत्पादकसंस्काराणां यूपे आवेशात् 'यूप' इत्याख्या भवति। एवं सति विकृतौ तत्स्थानापन्ने प्रकृतिसदृशे परिधौ अपूर्ववत् 'यूपायाज्यमानाये'ति मन्त्रः। अपूर्वे शब्दवत् स्यादित्येवंप्रकारेण ऊहपक्षेऽप्युपपद्यत एव सूत्रमिति भावः।

---

(१३)—परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥

क्रियेरन्वाऽर्थनिर्वृत्तेः ॥ ४५ ॥

अभ्युदितेष्टौ दधिश्रृतयोः प्रदानार्थत्वात् प्रदेयधर्मास्सायंदोहादयो भवन्त्येव। तण्डुलश्रपणसाधनत्वस्यापि तु 'मध्ये श्रपयति' इति विधिबलेनार्थसिद्धत्वादसत्यपि तत्प्रयुक्तत्वे तच्छेषत्वे वा साधनत्वस्य येनापूर्वसम्बन्धिश्रपणसम्बन्धित्वस्य सत्त्वात् दधिश्रृतयोः प्रणीताधर्मा अपि उत्पवनप्रणयनादयो भवन्ति। न हि धर्मसम्बन्धे उद्देश्यस्यापूर्वशेषत्वमपि प्रयोजकं, गौरवात्। अपि तु शास्त्रस्य महाविषयत्वसिद्ध्यै अपूर्वसम्बन्धित्वमेव। अत एव 'अगन्म' इत्यादिमन्त्रस्याप्यपूर्वसाध्यफलार्थत्वम्। स च सम्बन्धः प्रकृते श्रपणसाधनत्वाख्यस्समस्त्येव।

ननु दधिश्रृतयोस्तण्डुलश्रपणसाधनत्वेऽपि न प्रणीताधर्मप्राप्तिः, प्रणीतानां हि संयवनार्थत्वेन विनियोगात्। प्रकृते च संयवनाभावेन तदनुपपत्तेः। अत एव सौर्यादिचरुष्वपि बहिरूष्मणा पाकाभावात् कपालतद्धर्मनिवृत्तिवत् संयवनाभावात् प्रणीतातद्धर्मनिवृत्तिरेवेति चेत्।

प्रणीतानां वाक्येन पिण्डसंयवनसाधनत्वावगमेऽपि आनुषङ्गिकहविःपाकसाधनत्वस्यापि सत्त्वात् सौर्यादिचरौ प्रकृते च प्रणीताधर्मोपपत्तेः।

कृत्वाचिन्तया वाऽयं **विचारः। इयं च प्रणीताधर्मप्राप्तिस्सत्यप्यकर्मान्तरत्वे दधिश्रृतयोः** आज्येयः विश्रपणसाधनत्वस्य **नैमित्तिकसहश्रपणप्रयुक्तत्वेन नैमित्तिकतुल्यत्वात् फलचमसन्यायेन स्थानापत्त्यैव। न तु व्रीहियवन्यायेनेति ध्येयम्॥ १३ ॥**

---

परार्थेन त्वर्थसामान्यं संस्कारस्य।

प्रणीतानां हविः पाकसाधनत्वमपि संयवननान्तरीयकमेव। तथाच धर्माणां संयवनद्वारा अपूर्वसन्बन्धिद्रव्याङ्गत्वम्। न तु हविः पाकनिष्पत्तिद्वारा यदपूर्वसम्बन्धिद्रव्यं तदङ्गत्वमिति संयवनाऽभावे द्वाराभावात् न कथञ्चिदपि सौर्ये प्रकृते वा प्राप्तिः सम्भवतीत्यपरितुष्याह—**कृत्वाचिन्तया वेति।** यदि कर्मान्तरमेतत् स्यात् तदा एकापूर्वसाधनत्वाभावादेव न व्रीहियवन्यायेन औपदेशिकधर्मप्राप्तिः भवेदेव। अकर्मान्तरत्वे तु कदाचित् सामानविध्यन्यायेन स्यात्। सापि न भवतीत्याह—**सत्यप्यकर्मान्तरत्वे इति।**

---

एकार्थत्वादविभागः स्यात्।

अत्रैवं भाष्यानुसारेण तन्त्ररत्नकारादिभिः सिद्धान्तो वर्णितः। 'रथन्तरं पृष्ठं भवति' 'बृहत् पृष्ठं भवति' इति वाक्यद्वये पृष्ठशब्दस्य स्तुतिवाचकत्वात् रथन्तरबृहत्पदाभ्यां अजहत्स्वार्थ-लक्षणया तत्तत्सामसाधनकत्वं लक्षयित्वा रथन्तरबृहत्साधनिकां पृष्ठाख्यां स्तुतिं कुर्वीतेति वाक्यार्थः। तथाच उत्पत्तिभेदात् स्तुतशस्त्राधिकरणनीत्या (पू. २-१-५) अदृष्टार्थ-पृष्ठस्तोत्रद्वयस्य भेदात् तज्जन्यापूर्वस्यापि भेदे सत्यपि न तयोर्न्यायतो विकल्प उपपद्यते। अपि त्वदृष्टार्थत्वात् प्रयाजानूयाजादिवत् समुच्चय एव तथापि बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनेनैव विकल्पः। अत एव बृहद्रथन्तरसाम्नोः परस्परं तत्तत्पृष्ठस्तोत्रजन्यापूर्वप्रयुक्तानां सम्मीलनादिधर्माणां न व्रीहिधर्माणां यवेष्विव साङ्कर्यम्। अतः पृष्ठद्वयमेव युक्तं, न तु 'पृष्ठैः स्तुवत' इत्यस्योत्पत्तिविधित्वमङ्गीकृत्य वामदेव्यादिसाधारण्येन माहेन्द्रस्तोत्राख्यं होतुः पृष्ठमेकमेव। तत्रैव बृहद्रथन्तरयोः साम्नोः न्यायत एव विकल्प इति। तथात्वे पृष्ठैरिति सङ्ख्याया उत्पत्तिवाक्यगतत्वेन कर्मभेदापादकत्वात् पृष्ठबहुत्वापत्त्या 'विश्वजित्सर्वपृष्ठोऽतिरात्र' इत्यत्र सर्वपृष्ठपदेन ज्योतिष्टोमे पृष्ठबहुत्वाभावेन षाडहिकानामेव साम्नां ग्रहणमिति साप्तमिको-पपादनविरोधापत्तेरिति। अतः 'पृष्ठैः स्तुवत' इति मैत्रावरुणस्तोत्रादिसाधारण्येन प्रयोगः छत्रिवदजहल्लक्षणया अनुवादरूप एवेति। सोऽयंसिद्धान्तो **विधिरसायनकृता**

> यद्व्रीहिप्रोक्षणादेर्यवमपि विषयं तन्वते तच्च चिन्त्यं
> युक्ताऽपूर्वेण दध्यानयनविधिनयादर्थवत्ता विधीनाम्।
> नोचेन्नैमित्तिकोऽपि प्रतिनिधिवदियात् सोमधर्मातिदेशान्
> ऋच्छेत् सम्मीलनादीनपि च बृहदपि स्तुत्यपूर्वाविभेदात्॥

इति श्लोकविवरणे अपूर्वसाधनत्वलक्षणाक्षेपप्रस्तावे आक्षिप्तः—

तथाहि—'पृष्ठैः स्तुवत' इत्येतदेव माहेन्द्रादीनां चतुर्णां स्तोत्राणां उत्पत्तिवाक्यम्। बृहद्रथन्तरवाक्यद्वयं तु माहेन्द्रस्तोत्रे साधनमात्रविधायकमित्युपपत्तौ विशिष्टविधिगौरवस्य माहेन्द्रस्तोत्रतदपूर्वभेदकल्पनागौरवस्य च अभ्युपगमो नैव युक्तः। 'आज्यैः स्तुवते' 'पञ्चदशान्याज्यानि' 'पञ्चदशं होतुराज्यं सप्तदशं मैत्रावरुणस्य एकविंशं ब्राह्मणाच्छंसिनः पञ्चदशमच्छावाकस्य' इत्यादिप्रयोगात् बहिष्पवमानानन्तरभाविषु चतुर्ष्वपि स्तोत्रेषु आज्यशब्दवाच्य-ताया इव 'पृष्ठैः स्तुवते' 'सप्तदशानि पृष्ठानि' 'एकविंशं होतुः पृष्ठं' 'त्रिणवं मैत्रावरुणस्य' 'सप्तदशं ब्राह्मणाच्छंसिनः' 'पञ्चदशमच्छावाकस्य' इत्यादिप्रयोगात् माध्यन्दिनपवमानानन्तरभाविषु

चतुर्ष्वपि स्तोत्रेषु पृष्ठशब्दवाच्यतायाः कल्पने बाधकाभावे सति पृष्ठैः स्तुवते इत्यस्याः श्रुतेः अनुवादत्वलाक्षणिकत्वकल्पने प्रमाणाभावात् । क्वचित् होतुः पृष्ठे विशिष्य पृष्ठशब्दप्रयोगस्तु धने द्रव्यशब्दप्रयोगवत्, अर्जुने पार्थशब्दप्रयोगवत् निरूढलक्षणावशादेवेति न बाधकम् । प्रकृतौ पृष्ठबहुत्वं नास्तीति सातमिकव्यवहारस्य विश्वजिति विधानयोग्यं चोदकाप्राप्तपृष्ठबहुत्वं नास्तीत्येवमर्थोपपत्तेः । अत एव तत्र ज्यौतिष्टोमिकपृष्ठचतुष्टयस्य चोदकप्राप्तस्यानुवादवैयर्थ्यमपि ग्रन्थकारैः दर्शितम् । वैयर्थ्यमप्यविगणयन्तं प्रति 'रथन्तरं पवमाने कुर्यात्, आर्भवे-बृहत्, मध्यत इतराणि, वैरूपं होतुः पृष्ठे, वैराजं ब्रह्मसाम, शाक्करं मैत्रावरुणसाम, रैवतमच्छावाकसाम', इति षाडहिकपृष्ठविधित्वज्ञापकलिङ्गविरोधोऽपि सूत्रकारेण दर्शितः ।

ननु पृष्ठस्तोत्रभेदाभावे 'बृहद्रथंतरं वा पृष्ठं कार्यं' इति ग्रन्थकारैः व्यवहारविषयतामापादितं विकल्पवचनं व्यर्थं; बृहद्रथन्तरवाक्ययोः एकस्मिन् पृष्ठे बृहद्रथन्तरविधायकतायां तयोरक्षराभिव्यक्तिरूपदृष्टप्रयोजननिवर्तने परस्परनिरपेक्षयोः न्यायत एव विकल्पप्राप्तेः इति चेत्,

मैवम् । 'पृष्ठैः स्तुवत' इति विहितेषु स्तोत्रेषु रथन्तरबृहद्वामदेव्यनौधसकालेयानां पञ्चानां साम्नामुपदेशात् पृष्ठैः स्तुवत इत्यत्र पञ्च स्तोत्राणि विहितानीतिशङ्कानिराकरणार्थं एकस्मिन्नेव प्राथमिके पृष्ठस्तोत्रे बृहद्रथन्तरयोः विकल्प इति वचनस्यापेक्षितत्वात् 'द्वादश स्तोत्राणि, द्वादशशस्त्राणि' 'तस्य नवतिशतं स्तोत्रीया' इत्यादिलिङ्गात् अधिकस्तोत्रसद्भावशङ्कानिराकरणसम्भवेऽपि अधिकतया भासमानादवश्यं यत्र क्वचित् कल्पनीयस्य विकल्पस्य बृहद्रथन्तरयोरेव नियमार्थतया वचनस्य अर्थवत्त्वोपपत्तेः । अन्यथा बृहद्रथन्तरवाक्यद्वयविधेयपृष्ठद्वित्वाभ्युपगमेऽपि उक्तलिङ्गादेव तत्समुच्चयनिराकरणसम्भवेन विकल्पवचनवैयर्थ्यापत्तेरप्यपरिहार्यत्वात् । तस्मात् बृहद्रथन्तरपृष्ठस्तोत्रापूर्वभेदाभ्युपगमस्य गौरवपराहतत्वात्, अपूर्वसाधनत्वलक्षणाङ्गीकारे व्रीहिधर्माणां यवेष्विव बृहद्धर्माणां रथन्तरे रथन्तरधर्माणां बृहति च साङ्कर्यापत्तेर्दुर्निवारत्वात् । तद्वारणाय रथन्तरत्वादिविवक्षायां व्रीहित्वादिविवक्षापत्तेः अपूर्वसाधनत्वलक्षणां परित्यज्यैव तत्तत्स्वरूपविवक्षयैव साङ्कर्यं परिहरणीयम् । न च रथन्तरधर्माणां 'नोच्चैर्गेयम्' इत्यादीनां बृहद्धर्माणाञ्च 'उच्चैर्गेयं' इत्यादीनां परस्परविरोधादेव साङ्कर्यं सुपरिहरमिति वाच्यम् । अपूर्वसाधनत्वलक्षणया धर्माणां साधारण्ये सति अतिरात्रे षोडशिग्रहतदभावयोरिव आधाने सामगानतदभावयोरिव च बृहति रथन्तरे च उच्चैस्त्वतदभावयोः वैकल्पिकत्वाङ्गीकारेण समाधातुमुचितत्वात् । समुद्ध्याननिमीलनादीनामेवमप्यविरोधसम्भवे

## (१४)—एकार्थत्वादविभागस्स्यात् ॥ ४६ ॥ निर्देशाद्वा व्यवतिष्ठेरन् ॥४७॥

ज्योतिष्टोमे 'पृष्ठैस्स्तुवते' इत्यनेन षट् पृष्ठस्तोत्राणि विहितानि। तत्र बृहद्रथन्तरसामसाध्ययोः 'बृहद्वा रथन्तरं वा पृष्ठं भवति' इति वचनाद्विकल्पः। तथा नौधसश्यैतसाध्ययोरपि। तथा च नियतानि चत्वारीत्यादि चित्राधिकरणे कौस्तुभे स्पष्टम्। तत्र च

---

साधारण्यस्यानिवेश्यत्वाच्च। अतो बृहद्रथन्तरधर्मयोः असाधारण्यवत् व्रीहिधर्माणामप्यसाधारण्यमेव युक्तमिति न यवेषु व्रीहिधर्मप्राप्तिरिति। तमिममाक्षेपं परिहर्तुमाह—षट्स्तोत्राणीति।

अयं भावः। माभूत् पार्थसारथ्याद्युक्तदिशा पृष्ठस्तोत्रद्वयमेव; अपि तु भवदुक्तरीत्यैव चत्वारि स्तोत्राणीव बृहद्रथन्तरवामदेव्यनौधसकालेयश्यैतानां षण्णामेव साम्नां 'अभि त्वाशूर नोनुमः' इत्यादीनां षण्णामेव तृचानामाम्नानाच्च षट्पृष्ठानि 'पृष्ठैः स्तुवते' इतिवाक्यविहितानीत्यङ्गीकारे नैव किञ्चिद्बाधकम्। एतेन बृहद्रथन्तरसामविषयविकल्पवचनस्य पञ्चस्तोत्राशङ्कानिराकरणार्थत्वेन सार्थक्यं भवदुपपादितमपास्तम्। षट्स्तोत्रापत्तिं इष्टापत्त्या परिहरतः पञ्चस्तोत्रापत्तिशङ्काया अपि इष्टापत्त्या परिहर्तुं शक्यत्वात्।

किञ्च विकल्पवचनेन बृहद्रथन्तरविकल्पनियमो यदि क्रियते, तर्हि तेनैव वचनेन बृहद्रथन्तरसामद्वयरूपविशिष्टविकल्पविधानोपपत्तेः 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवति' इति वचनद्वयवैयर्थ्यापत्तिः एवमपि दुरुद्धरैव; अतः षट्पृष्ठाङ्गीकारे बाधकाभावात् 'बृहत्पृष्ठं भवति' रथन्तरं पृष्ठं भवति' इति वचनद्वयेन होतुः पृष्ठद्वये माहेन्द्रसंज्ञकबृहद्रथन्तरसामरूपसाधनमात्रविधानात् विकल्पवचनस्य माहेन्द्रसंज्ञकहोतुःपृष्ठद्वयविकल्पविधायकत्वेनैव सार्थक्यं, वाच्यमित्यभिप्रेत्याह—बृहद्रथन्तरसामसाध्ययोरिति। न ह्यस्मन्मते पृष्ठद्वयविकल्पविधानपरत्वे साधनविशिष्टपृष्ठद्वयविधानाङ्गीकारेण साधनविधानलाभोपपत्तेः 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवति' इति वचनद्वयवैयर्थ्यापादनं सम्भवति विकल्पविधायकवचने बृहद्रथन्तरपदस्य वामदेव्यादिपदवत् तत्प्रख्यन्यायेन नामधेयपरत्वेन बृहद्रथन्तरसामपरत्वाभावेन तद्विधानासम्भवात्। तव तु साधनपरत्वात वैयर्थ्यं स्फुटमेवेति भावः।

ननु माहेन्द्रसंज्ञकपृष्ठद्वयाङ्गीकारे होतुः पृष्ठमिति एकवचनानुपपत्तिरित्याशङ्कानिराकरणायाह—नियतानि चत्वारीति। तथाचानुष्ठेयपृष्ठैक्याभिप्रायेणैकवचनम्। तथा 'द्वादशस्तोत्रशस्त्रोऽग्निष्टोम' इति द्वादशत्वसङ्ख्या च द्रष्टव्येति भावः। एवञ्च माहेन्द्रसंज्ञकपृष्ठद्वयाङ्गीकारेण तज्जन्यापूर्वयोर्भेदात् अपूर्वसाधनत्वलक्षणायामपि धर्माणां साङ्कर्यापत्तेः न बाधकमित्येतदाह—कौस्तुभे स्पष्टमिति। यथा चैवं सति एतदधिकरणपूर्वपक्षोत्थानं तथा

**रथन्तरपुरस्कारेण केचिद्धर्मा विहिताः। 'रथन्तरे प्रस्तूयमाने सम्मीलयेत् नोच्चैर्गेयम्' इत्यादयः। केचिच्च बृहत्पुरस्कारेण 'बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत् उच्चैर्गेयम्' इत्याद्याः। अत्र उभयत्रापि** साम्नश्शेषित्वमेव **न तु निमित्तत्वं उच्चैस्त्वादिप्रायपाठात्। ते किमुभयत्रापि सङ्कीर्णाः उत व्यवस्थिता इति चिन्तायां—**

सत्यपि **स्तोत्रभेदे तज्जन्यादृष्टस्य लाघवादेकजातीयस्यैव कल्पनादेकापूर्वसाधनीभूतार्थत्वेन धर्माणामवघातादिवत् सङ्करः। न ह्यनयोः प्रयाजानूयाजवत् समुच्चयः येनादृष्टवैजात्यमावश्यकं स्यात्। अत एव विकल्पवचनस्याप्यदृष्टैक्य एव तात्पर्यमित्यपि** सुवचम्। **अतश्चापूर्वस्यैकत्वात् तत्तत्स्तोत्रसाम्नोश्च स्वरूपेणाप्रवेशाद्युक्तो धर्मसङ्करः।**

**अत एव रथन्तरस्य 'अभि त्वा शूर' इत्यस्यामृच्युत्पन्नत्वेन शूरादिप्रकारस्य बृहतश्च 'त्वामिद्धि हवामहे' इत्यस्यामुत्पन्नत्वेन आवाहनादिप्रकारस्य च भेदेऽपि न प्रवेशः। अस्य ऋक्साधनताप्रकारत्वेन सामसाधनताघटकत्वाभावाच्च। न हि**

---

दर्शयिष्यतेऽनुपदमेव। **साम्नः शेषित्वमेवेति।** यत एवात्र साम्नः शेषित्वादुद्देश्यत्वं अत एव प्रस्तूयमाने इत्युद्देश्यविशेषणं अविवक्षितमिति रथन्तरादिसाममात्रोद्देशेन उच्चैष्ट्वादिधर्माणां विधानमिति भावः।

एवं स्थिते यदत्र **भाट्टालङ्कारकृता** विधिरसायनोपपादितापूर्वसाधनत्वलक्षणाक्षेपखण्डनप्रस्तावे बृहद्रथन्तरयोः धर्मसाङ्कर्यापत्तिपरिहारायोक्तम्—आस्तां बृहद्रथन्तरयोः एकस्तोत्रसाधनत्वं, यद्यपि च तदपूर्वसाधनत्वमेव बृहद्रथन्तरशब्दाभ्यां लक्ष्यते। तथाप्यन्वारम्भणीयायाः आरम्भद्वारा दर्शयागापूर्वार्थत्ववत् प्रस्तूयमानपदसमभिव्याहारेण प्रस्तावाख्यरथन्तरभक्तिद्वारैव निमीलनादीनां स्तोत्रापूर्वार्थत्वप्रतीतेः न बृहति प्रसक्तिः। एवं बृहद्धर्माणां रथन्तरेऽपि। ननु रथन्तरशब्दस्यापूर्वसाधनत्वलक्षणया सामद्वयसाधारण्ये प्रस्तावोऽप्युभयनिरूपित एव द्वारं स्यात्। मैवम्। प्रथमबोधवेलायां रथन्तरीयभक्तिविशेषस्य द्वारत्वे निर्णीते पश्चात् आनर्थक्यपरिहाराय सत्यपि रथन्तरादिशब्दस्य लाक्षणिकत्वे बाधकाभावेन पूर्वावगतद्वारविशेषबाधायोगादिति। तदपास्तम्। अविवक्षितविशेषणार्थस्यापि द्वारताघटकत्वे ग्रहैकत्वव्रीह्यादिस्वरूपस्यापि तद्घटकत्वापत्त्या तत्राप्यनेकग्रहयवादिसाधारण्या [ना] पत्तेः। उद्गीथादिभागान्तरे, 'पुनान स्सोमधारय' इत्यादिऋगन्तररूढकण्वरथन्तरादौ च विवक्षितद्वाराभावेन धर्मप्राप्त्यनापत्तेश्च। अन्वारम्भणीयाया आरम्भद्वारकत्वाविवक्षाकारणाभावान्न किञ्चिद्बाधकमिति तत्रैवावेदितम्। एवं पृष्ठस्तोत्रापूर्वभेदे सत्यपि पूर्वपक्षोपायमारचयति—**सत्यपीति। इत्यपि सुवचमिति।** अनेन

ऋगर्थभेदेऽपि साम्नः अक्षराभिव्यञ्जकता भिद्यते। कण्वरथन्तरे प्रकारद्वयस्याप्यभावेन धर्मप्राप्त्यनापत्तेश्च।

अत एव केषुचिद्धर्मेषु रथन्तरस्योपादानं केषुचित् बृहत इति प्रतिनियतनिर्देशाद्रथन्तरत्वादिविवक्षया धर्मव्यवस्थेत्यप्यपास्तम्। न चैवमपि रथन्तरादिगीतेः ऋगक्षरवृत्त्यंशस्य दृष्टार्थत्वेऽपि स्तोभाक्षरवृत्त्यंशस्यादृष्टार्थत्वात् तददृष्टयोश्च गीतिभेदेन भेदात् तत्तदपूर्वसाधनत्वलक्षणया धर्माणां प्रकृतौ न साङ्कर्यं, कण्वरथन्तरस्य बृहद्रथन्तरस्थानापन्नत्वेन तद्गतस्तोभाश्रितगीत्यंशस्य प्राकृतस्तोभाश्रितगीत्यंशजन्यादृष्टार्थत्वेनैव हिरण्यगर्भमन्त्रन्यायेन कल्पनात् तत्रापि धर्मप्राप्त्युपपत्तिरिति वाच्यं, एवमपि

---

च विकल्पवचनस्य निर्मूलत्वेऽपि एकजातीयादृष्टार्थत्वेन ऐकार्थ्यन्यायादेव विकल्प इत्यपि सूचितमिति ज्ञेयम्। **भिद्यतेइति।** वस्तुतस्तु नायं प्रकारभेदः शास्त्रे विवक्षितः; अपि तु स्वाभाविकः। न च तेन धर्मव्यवस्था भवति। यदि हि स्यादन्यथा नखैस्तुषकणमोकः क्रियतेअन्यथा उलूखलेनेत्युलूखलमुसलधर्मा नखेषु न भवेयुरित्यप्यनुसन्धेयम्। अत्र सिद्धान्ते 'निर्देशाद्वा व्यवतिष्ठेरन्' इति सूत्रानुसारेण भाष्ये शास्त्रदीपिकायाञ्च अपूर्वसाधनत्वलक्षणायामपि बृहद्रथन्तरत्वादिस्वरूपविवक्षया प्रतिनियतनिर्देशाद्व्यवस्थेत्युक्तम्। तदनूद्याक्षिपति—**अत एव केषुचिदिति।** तथात्वे कण्वरथन्तरे धर्मप्राप्त्यनापत्तेरिति भावः। **यत्तु** अपूर्वसाधनीभूतरथन्तरस्योद्देश्यत्वे विशिष्टानुवादकृतवाक्यभेदापत्तिरित्युक्तम् **विधिरसायनकृता,** तदयुक्तमेव। अजहत्स्वार्थलक्षणया विशिष्टलक्षणाश्रयणे युगपत् वृत्तिद्वयविरोधवाक्यभेदप्रसरात्। अतः कण्वरथन्तरे धर्मप्राप्तिरेव सुदृढं दूषणमित्यवधेयमिति अत एवेति पदेन सूचितम्। **हिरण्यगर्भमन्त्रन्यायेनेति।** वायव्यपशौ 'हिरण्यगर्भः समवर्तताग्रे इत्याघारयति' इत्ययं प्राजापत्ये पूर्वाघारे मन्त्रविधिर्न भवति। किन्त्वैन्द्रे उत्तराघारे इति निर्णीतं दशमे 'हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात्। उत्तरस्य नार्थवत्वात्' इति पूर्वोत्तरपक्षसूत्राभ्याम्। तत्रायं सिद्धान्तन्याय उक्तः। मन्त्रविधौ मन्त्रजन्यं नियमादृष्टमपेक्षणीयं; अन्यथा ब्राह्मकल्पसूत्रोपद्रष्टृवचनादिभिरप्यनुष्ठेयार्थस्मरणसम्भवेन मन्त्रनियमवैयर्थ्यात्। तच्च नियमादृष्टं प्रकृतौ पूर्वाघारे न क्लृप्तं, तत्र तस्यामन्त्रकत्वादिति। पूर्वाघारे मन्त्रविधिपक्षे अत्रैव कल्पनीयम्। उत्तराघारे तु तत् क्लृप्तम्, तस्य प्रकृतावपि समन्त्रकत्वात्, अतः क्लृप्ते नियमादृष्टेमन्त्रविशेष विधानं लघु इत्युत्तराघार एव मन्त्रविधिर्युक्त इति। तेन न्यायेन इहापि प्राकृतस्तोभाश्रितगीत्यंशजन्यादृष्टस्य प्रकृतौ क्लृप्तत्वात् तज्जनकत्वेनैव लाघवात् कण्वरथन्तरीयस्तोभवृत्तिगीत्यंशस्य विधानं क्रियत इति भावः। **एवमपीति।** अत्र च स्तोभानामेवादृष्टार्थत्वमङ्गीकृत्य तज्जन्यापूर्वप्रयुक्तत्वमुच्यते उत तद्वृत्ति-

गीत्यंशस्यादृष्टार्थत्वात् तददृष्टप्रयुक्तत्वम्? नाद्यः स्तोभानामदृष्टार्थत्वेऽपि ऋगक्षराभिव्यञ्जक-रथन्तरादिपदवाच्यनत्तत्सामाङ्गत्वात् धर्माणामपि च तत्तत्सामाङ्गत्वादेव 'गुणानाञ्च परार्थत्वाद-सम्बन्धः समन्वात् स्यात्' (पू. मी. ३–१–१२) इति न्यायेन परस्परमङ्गाङ्गिभावानुपपत्तेः स्तोभानां साम प्रति गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वेनैवाङ्गत्वस्य अत्रैव पूर्वं साधितत्वेन अदृष्टार्थत्वाभावाच्च, रथन्तरादिशब्दे स्तोभलक्षणापत्तेश्च। धर्माणां साक्षात् रथन्तरान्वयसम्भवेन अरुणैकहायनीन्यायलभ्यपार्ष्ठिकस्तोभान्वयकल्पनस्याप्यपेक्षणाच्च। न द्वितीयः। तावतापि रथन्तरादिपदेषु स्तोभवृत्तिगीत्यंशलक्षणापत्तेरनिवार्यत्वात्। अतो न धर्माणां स्तोभतद्वृत्ति-गीतिजन्यादृष्टप्रयुक्तत्वमित्ययमर्थः एवमपीति पदद्वयेन सूचितः। एवञ्च ऋगक्षराभिव्यक्ति-रूपदृष्टप्रयोजनार्थे साम्नि गीतिकालपरिच्छेदरूपदृष्टद्वारा स्तोभैरुपकारमात्ररूपं साहाय्यं क्रियते, इत्यर्थे 'स्तोभस्यैके द्रव्यान्तरे निवृत्तिं ऋग्वत् [पू. मी. ९–२–९] इत्यधिकरणे निर्णीयते।

यदत्र तन्त्ररत्नकृता—इदमाकूतम्। नादृष्टार्थं साम, दृष्टमेव तु साम्नः प्रयोजनम् सामाङ्गभूतन्त्वदृष्टं स्तोभैः क्रियते। नचाङ्गादृष्टप्रयुक्ता धर्माः, किन्तु रथन्तरकार्यप्रयुक्ताः। अङ्गादृष्टप्रयुक्तत्वे हि रथन्तरशब्दः स्तोभलक्षणार्थः स्यादिति। यत्तु 'उभयसाम्नि चैवमेका-र्थापत्ते' रिति पूर्वपक्षसूत्रोत्तरस्मिन् 'स्वार्थत्वाद्वा व्यवस्था स्यात्' इति सिद्धान्तसूत्रे भाष्यकारो वक्ष्यति—'सामप्रयुक्ता एवैते धर्माः साम्नापि हि दृष्टमदृष्टञ्च क्रियते। तस्मात् सामापि धर्मप्रयोजने समर्थं, अतो व्यवस्था धर्माणाम्'इति। तस्यायमर्थः—ऋगक्षराभिव्यक्त्या दृष्टं साक्षात्करोति येन पुनरदृष्टार्थां स्तुतिं अक्षराण्युत्पादयन्ति तेनादृष्टमपि परम्परया साम्ना क्रियते। अतश्च तद्भेदाद्धर्माणां व्यवस्था सिध्यतीत्यभिप्रायः, न सामैवादृष्टार्थमिति। स्तोभास्तु सामाङ्गभूतमदृष्टं जनयन्तीत्युक्तम्। तत्कथमिव युक्तमिति न प्रतीमः। स्तोभानां स्वत एवादृष्टात्मकस्तुतिजनकत्वे प्रमाणाभावात्। सत्यपि वा तस्मिन् सामाङ्गत्वानापत्तेः। सामाङ्गत्वस्य च दृष्टद्वारैवोक्तत्वात्। स्तोभवृत्तिसाम्नामेव अक्षराभिव्यक्तिरूपदृष्टप्रयोजनाऽसम्भवे साक्षाददृष्टार्थत्वकल्पनस्यैव युक्तत्वात्। अतः स्तोभानां सामाङ्गत्वं दृष्टद्वारैव भवतीति—अर्थात् साम तदाश्रयं भवन्नेव दृष्टविधयैवोपकारकम्। तेन च साम्ना जनितादृष्टसंस्कारसंस्कृतैः स्तोभाक्षरैः सह अभिव्यक्तानि ऋगक्षराणि दृष्टमेव स्तुतिं जनयन्ति। तया च स्तुत्या यददृष्ट-मुत्पद्यते तत्रैव स्तोभगतसामजन्यादृष्टस्योपयोग इत्येव युक्तम्। प्रकृते च स्तोभगतादृष्टजनके-

ऋगक्षराधिरूढगीत्यंशे उच्चैस्त्वादिरूपधर्मसाङ्कर्यस्यानिवारणात्।

न च तथाऽपि सामद्वयजन्यनियमादृष्टभेदात् तन्नियमादृष्टसाधनत्वस्यैव च तद्धर्मविधावुद्देश्यतावच्छेदकत्वात् कण्वरथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् साङ्कर्याद्यनापत्तिरिति वाच्यं, नियमादृष्टस्य नियमजन्यत्वेन सामजन्यत्वाभावात। तज्जन्यत्वेऽपि वा दृष्टप्रयोजनस्यैवाक्षराभिव्यक्त्यादेः पुरस्स्फूर्तिकतया साधनतद्धर्मप्रयोजकत्वेन नियमादृष्टस्य तत्प्रयोजकत्वाभावात्। इतरथा कृष्णलचरावपि अवघाततद्धर्मप्राप्त्यापत्तेरिति प्राप्ते—

---

साम्नि सत्यपि न सम्मीलनादिधर्माणां तदपूर्वार्थत्वम्, रथन्तरादिपदे लक्षणापत्तेरित्येव समाधातुमुचितं, न तु साम्नोऽदृष्टार्थत्वमेव नास्तीति वक्तुमुचितमिति दिक्।

सामजन्यादृष्टार्थत्वाङ्गीकारेऽपि दूषणान्तरमाह—ऋगक्षराधिरूढेति। स्तोभवृत्तिगीत्यंशजन्यादृष्टप्रयुक्तत्वे स्तोभाक्षराधिरूढगीतिकाले तत्तद्धर्मप्राप्तावपि तत्तदृगक्षरसंस्कारिकायां गीतौ तत्प्राप्तौ मानाभावः। यदा तु कथञ्चित् तस्यां तद्धर्मप्राप्तिरावश्यिकी तदा स्तोत्रापूर्वसाधनत्वलक्षणापत्त्या धर्मसाङ्कर्यं दुर्निवारमेवेत्यर्थः।

अत्र **भाट्टालङ्कारकृता** विधिरसायनोपपादितबृहद्रथन्तरधर्मसाङ्कर्यापत्तिवारणाय यदुक्तं तदनूद्य दूषयति—**न चेति**। किञ्च यदि प्राकृतसामद्वयनियमादृष्टजनकत्वमेव लाघवात् कण्वरथन्तरस्य कल्प्यते तर्हि प्रकृतावपि एकजातीयनियमादृष्टजनकत्वमेव सामद्वयस्य कल्प्यतामिति न तददृष्टभेदादपि धर्मव्यवस्थासिद्धिः। अत एव वैकल्पिकव्रीहियवयोः नियमापूर्वमेवेत्याकरे विकल्पनिरूपणप्रसङ्गे स्थापितम्। नचात्र व्यवस्थितधर्मविध्यन्यथानुपपत्त्या विभिन्नमेव तत् कल्प्यत इति युक्तम्। व्यवस्थितधर्मविधिप्रवृत्तेः पूर्वमेव प्रवृत्तेन बृहद्रथन्तरसामविधिना विहितयोः साम्नोः लाघवतर्कसहकारेण नियमादृष्टैक्यजनकत्वस्य पूर्वमवगतस्य तदनुरोधेन बाधे प्रमाणाभावात्। प्रत्युत व्यवस्थितधर्मप्रवृत्तिसमयोद्भूतान्यथानुपपत्त्या अपूर्वसाधनीभूतरथन्तरत्वबृहत्वस्यैवोद्देश्यतावच्छेदकत्वकल्पनाया एवोचितत्वेन बृहद्रथन्तरयोः धर्मासाङ्कर्यवत् कण्वरथन्तेऽपि तदसाङ्कर्यापत्तेरनिवारणात्। अतो व्यवस्थितधर्मविध्यनुपपत्तिरत्राक्षमेति मत्त्वैव स्तोत्रापूर्वभेदसाधने प्रयासः प्राचामित्यपूर्वभेद एव धर्मव्यवस्थापकः। स च एकजातीयापूर्वकल्पने बाधकाभावात् न धर्मव्यवस्थायां प्रमाणम्।

एतेन धर्मासाङ्कर्योपपादकप्रतिनियतनिर्देशहेतूपपादनपरस्य भाष्यस्य अस्मिन्नधिकरणे रथन्तरादिस्वरूपविवक्षया व्याख्यानं कृत्वा तत्र कण्वरथन्तरे धर्मप्राप्त्यनापत्त्या अपरितोषेण उत्तरा-

धिकरणे पृष्ठैक्याङ्गीकारेणापि रथन्तरादिपदे तत्तन्नियमादृष्टसाधनत्वलक्षणापरं व्याख्यानं यत् प्रकाशकारैः कृतं तदपास्तम्।

प्रतिनियतनिर्देशस्य स्वान्यतरोपादानवैयर्थ्यात्त्या स्वरूपविवक्षातात्पर्यग्राहकत्वसम्भवेऽपि तज्जन्यनियमादृष्टसाधनत्वपर्यन्तलक्षणातात्पर्यग्राहकत्वे मानाभावेऽपि व्रीह्यादिपदेष्वपि तल्लक्षणाया निवारणासम्भवात्। नियमादृष्टसाधनत्वलक्षणायामपि अतिप्रसङ्गपरिहाराय तत्तत्स्वरूप-प्रवेशस्यावश्यकत्वे लाघवात् तत्तत्स्वरूपविवक्षामात्रेणैव बृहद्रथन्तरयोः धर्मासाङ्कर्यस्येव कण्वरथन्तरे धर्माप्राप्तेरेवापत्तेश्च। अतः क्वचित् प्रधानापूर्वसाधनत्वस्य क्वचित् नियमादृष्टसाधनत्वस्य लक्षणेति वैरूप्याश्रयणे मानाभावात्, ऐकरूप्याश्रयणे च व्रीहियवयोरिव तत्साङ्कर्यं दुर्निवारम्। अपूर्वैक्ये ऽस्वरसः सूचितः।

तथाहि—यत्र हि आग्नेयादिवाक्येनोत्पन्नस्य यागस्यापूर्वार्थत्वं क्लृप्तं तत्र तज्जनक-यागोद्देशेन विधीयमाना व्रीहयः यवाश्च भवन्त्येकजातीयापूर्वप्रयुक्ता इत्येकार्थत्वाद्युक्तो विकल्पः। उक्तञ्च तन्त्ररत्ने—"व्रीहियवौ तु न साक्षादपूर्वस्य साधकौ यागाच्चापूर्वम्। स चाग्नेयादि-वाक्यैरुत्पादितो व्रीहियववाक्ययोः द्रव्यविधानायानूद्यते, न तु ताभ्यां यागोत्पत्तिः क्रियते। [तथा सति] यागभेदोऽपूर्वभेदश्च स्यात्। इह तु स्तोत्रद्वयस्य भेदे तदेवादृष्टमपरेण उत्पद्यते इत्यत्र प्रमाणाभाव" इति। प्रकृते च पृष्ठैः स्तुवत इति वाक्येन षण्णामेव स्तोत्राणां विधानात् तत्र च कारणतावच्छेदकतत्तत्पृष्ठत्वावच्छिन्नकारणभेदादपूर्वभेद आवश्यक एव नहि लाघवमात्रेणैवैकापूर्वकल्पना, लाघवञ्चास्ति किञ्चित्प्रमाणम्। किन्तु विधिरूपप्रमाणेन निर्णेयार्थे सन्देहे अनुग्राहकमात्रम्। तच्च विधिविरोधे अप्रयोजकम्। अन्यथा षट्पृष्ठसाध्या-पूर्वाणामपि लाघवादेकजातीयत्वापत्तेः। अतो नैकापूर्वजनकपृष्ठस्तोत्रसाधनत्वं बृहद्रथन्तरयोरिति नापूर्वभेदात् धर्माणां साङ्कर्यमित्येव युक्तमिति।

अत एव येषां मते 'पृष्ठैः स्तुवते' इति षण्णां पृष्ठस्तोत्राणामुत्पत्तिवाक्यं तेषां मते माहेन्द्रपृष्ठद्वयाङ्गीकारात् 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवति' इति वचनद्वयेन सामद्वयविधान-मेव क्रियत इति सिद्धं भवति। तेषां मते अस्मिन् वचनद्वये पृष्ठशब्दस्य रूढ्या माहेन्द्रस्तोत्र-परत्वात् तद्गतैकत्वस्य च उद्देश्यविशेषणत्वेनाविवक्षितत्वे सति पृष्ठ[शब्द] वाच्योभयस्तोत्रेऽपि प्रत्येकं बृहतो रथन्तरस्य च साधनत्वेन विधानापत्तिरनिवार्यैव। तथा च एकैकस्मिन् होतुः पृष्ठे बृहद्रथन्तरयोर्विधाने एकापूर्वसाधनऋगक्षराभिव्यक्त्यर्थत्वेन ऐकार्थ्यात् विकल्पसिद्धेः

**सत्यपि स्तोत्रद्वयजन्यापूर्वैक्ये** अवान्तरकार्यभेदात् **व्यवस्थासिद्धिः। तथा हि—स्तोत्रत्वं तद्व्याप्यवैजात्यं वा न तावत्प्रतिगुणाभिधानव्यक्ति विश्रान्तं द्वादशस्तोत्रत्वानुपपत्तेः, अपि तु तत्तत्स्तोमकगुणाभिधानव्यक्तिषु व्यासज्यवृत्ति, तासां च न यौगपद्यं, क्षणिकत्वात् क्रमिकत्वाच्च। अतस्तत्तद्गुणाभिधानेभ्यस्संस्काररूपाण्यदृष्टान्युत्पद्यन्ते। तैश्च सकलगुणसमूहालम्बनात्मिका तत्तद्विजातीयस्तोत्रत्वावच्छिन्ना अभिधानव्यक्तिरेका उत्पद्यत इत्यवश्यं वाच्यं, तत्र च विजातीयस्तोत्रजनकतावच्छेदकतया संस्कारेष्वपि वैजात्यावश्यंभावात्, दीक्षणीयावाङ्नियमन्यायेन तत्तत्संस्कारसमूहप्रयुक्ता एव तत्तद्धर्मा इति न प्रकृतौ साङ्कर्यम्।**

कण्वरथन्तरे **च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकतयैव ऋगन्तरजन्यसप्तदशसङ्ख्याकगुणाभिधानव्यक्तिविधानात्** [1]**तत्तत्संस्कारसमूहप्रयुक्तधर्मप्राप्त्युपपत्तिरिति** सर्वमनाकुलम् ॥ १४ ॥

---

कदाचित् बृहत् कदाचित् रथन्तरमित्यनुष्ठानापत्तिः। पृष्ठस्तोत्रद्वयविधानपरमेतद्वचनद्वयमित्येतत्पक्षे, एकपृष्ठवादिमते च नेयमनुपपत्तिरित्यपास्तम्।

पृष्ठस्वरूपे आनर्थक्यपरिहारार्थं तत्तद्विजातीयापूर्वसाधनत्वलक्षणया बृहद्रथन्तरसामरूपविधेयसामर्थ्यानुरोधेन च तत्तद्विजातीयापूर्वसाधनीभूतत्वप्रकारकस्तोत्रस्यैव भिन्नतयैवोद्देश्यत्वावगतेः साङ्कर्यप्रसक्त्यभावादिति।

एवन्तावत् पृष्ठस्तोत्रभेदे सति अपूर्वभेदाङ्गीकारस्यावश्यकत्वात् तेनैव धर्माणां साङ्कर्यमिति सिद्धान्तसिद्धिर्भवत्येव। अङ्गीकृत्याप्यपूर्वैक्यं प्रकारभेदादेव धर्मव्यवस्थां ये वदन्ति तेषां मतेनापि प्रकारभेदस्वरूपनिरूपणेन सिद्धान्तः सूपपाद एवेत्यभिप्रयेणाह—**अवान्तरकार्यभेदादिति**। तथाच प्रकारपदमवान्तरकार्यपरं ज्ञेयमिति भावः। तदेव निरूपयति—तत्तच्छूरत्वादिगुणाभिधानजन्यतत्तत्संस्काररूपादृष्टसमूहरूपावान्तरकार्योत्पत्त्यनन्तरं एकैकपृष्ठस्योत्पत्तौ रथन्तरजन्यविजातीयपृष्ठस्तोत्रव्यक्तिजनकतावच्छेदकतया रथन्तरजन्यावान्तरादृष्टसमूहे एकं वैजात्यं, तथा बृहत्सामजन्यविजातीयस्तोत्रजनकतावच्छेदकतया बृहत्सामजन्यादृष्टसमूहे अपरं वैजात्यम् तादृशविजातीयावान्तरादृष्टसाधनत्वस्यैव लक्षणात् अवान्तरादृष्टानाञ्च भेदात् धर्मव्यवस्थेति भावः।

यत्तु अस्मिन् मते प्रकारद्वयविधुरेषु कण्वरथन्तरादिषु न बृहद्धर्माः न वा रथन्तरधर्माः स्युः द्वाराभावादिति दूषणं तन्त्ररत्नकृता दत्तं तत् परिहरति—**कण्वरथन्तरे चेति। सर्वमनाकुलमिति।** अस्मिंश्च पक्षे तत्तन्निर्देशादिदमवगच्छामः। अन्यथा बृहत्साधयति, अन्यथा

---

1 B & C omit समूह

रथन्तरमिति। प्रत्यक्षं खल्वप्यन्यदुपलभामहे रथन्तरं शूरादिकांशे स्तुतिं कुर्वत् पृष्ठं साधयति; बृहत् चित्रिकाम्। तस्माद्रथन्तरधर्माः शूरादिकायां स्तुतौ निबद्धाः रथन्तरे प्रस्तूयमाने भवेयुः न बृहति। बृहद्धर्मा अपि चित्रादिकायां स्तुतौ निबद्धाः बृहति भवेयुः न रथन्तरे। तस्माद्व्यवस्था धर्माणाम् इति भाष्यं समञ्जसार्थमुपपद्यते। स्तोत्रापूर्वभेदप्रयुक्तधर्मव्यवस्थामात्रोपपादनपरत्वेन आञ्जस्यं स्फुटमेव। यद्यपि तन्त्ररत्नकृता—"भाष्यस्य चायमर्थः—निर्देशसामर्थ्यात् केषुचिद्धर्मेषु बृहन्निर्दिश्यते केषुचित्तु रथन्तरं। तस्य निर्देशस्यार्थवत्त्वादिदमवगच्छामः— अन्यथा बृहत्साधयति, अन्यथा रथन्तरं, अपूर्वभेदानुविद्धं स्तुतिद्वयं सामद्वयेन साध्यत इत्यर्थः। न केवलं चोदनान्तरादेव स्तुत्योर्भेदः किन्तु प्रत्यक्षं खल्वप्यन्यत्वमुपलभामहे रथन्तरं शूरादिकां बृहत् चित्रादिकामिति। तस्माद्व्यवस्था" इत्यनेन ग्रन्थेन स्वपक्षेऽपि भाष्यं योजितम्; तथाप्यपूर्वभेदानुविद्धं स्तुतिद्वयं सामद्वयेन साध्यते इत्यर्थस्तु नैव धर्मविधिगततन्निर्देशाधीनः। किन्तु उत्पत्तिवाक्यद्वये विशिष्टविध्यधीन एवेति निर्देशादिदमवगच्छाम इति भाष्यस्यानाञ्जस्यं स्फुटमेव। तावतैव च धर्मव्यवस्थोपपादनसम्भवे प्रत्यक्षं खल्वप्यन्यत्वमुपलभामहे इत्यग्रिमग्रन्थस्य निष्प्रयोजनत्वमपि। प्रत्युत एतस्य ग्रन्थस्य प्रकारभेदप्रतिपादनपरस्य कण्वरथन्तरादिषु धर्मप्राप्तिसाधकत्वमेवेति सर्वथाऽनाञ्जस्यं भाष्यग्रन्थस्येत्ययमर्थः सर्वपदेन सूचितः।

अत एवात्र स्तोत्रापूर्वभेदेऽपि निर्देशाद्व्यवतिष्ठेरन्निति सिद्धान्तसूत्रगतनिर्देशपदस्वारस्यमनुगृह्णता नैवापूर्वभेदो धर्मव्यवस्थानियामक इत्ययं हेतुः एतदधिकरणे साधारण इति वक्तुं शक्यते। अपूर्वैक्येऽपि शक्यतावच्छेदकरूपनिर्देशभेदभिन्नोद्देश्यानामपि धर्माणामेतदधिकरण एव व्यवस्थाप्रतिपादनावश्यकत्वात्। अत एव 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति ऋगुद्देशेन विहितानां त्रिरभ्यासादीनां अपूर्वसाधनत्वलक्षणायामपि प्रथमामुत्तमामिति निर्देशवैयर्थ्यानुपपत्त्या अपूर्वसाधनीभूतप्राथम्योत्तमत्वावच्छिन्नत्वेन उद्देश्यत्वाङ्गीकारात् तदवच्छिन्नोद्देशेन विहितत्वेन च न ऋगन्तरेषु साङ्कर्यम्। तथा 'इत्यश्वाभिधानीमादत्ते' इत्यत्र अश्वाभिधान्युद्देशेन मन्त्रविशिष्टादानविधानेऽपि अश्वाभिधानीस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणायां एकया प्रणाड्या एकापूर्वसाधनत्वात् व्रीहिधर्माणां यवेष्विव गर्दभाभिधान्यामपि मन्त्रप्राप्तेः। 'इत्यश्वाभिधानीमादत्ते' 'युञ्जाथाँ रासभं युवमिति गर्दभं प्रतिष्ठापयति' इति नियतनिर्देशानुपपत्त्या अपूर्वसाधनीभूताश्वसम्बन्धित्वगर्दभसम्बन्धित्वादेः उद्देश्यतावच्छेदककोटिनिवेशेनैव निवारणात् न मन्त्रसाङ्कर्यं भवति। नचात्रापूर्वभेदोऽस्ति येन तद्वारणं भवेत्। अतः सर्वसाधारण्येन धर्मविधौ उद्देश्यवाचकनियतशब्दभेद एव निर्देशपदेन सूत्रस्थेनाभिधीयते। स च प्रकृतेऽपि बृहद्रथन्तरशब्दरूपः सामरूपो वेति। यद्यप्यपूर्वसाधनीभूतरथन्तरत्वविवक्षा इहापि प्राप्ता,

## (१५)—अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥

वैश्वस्तोमे 'कण्वरथन्तरं पृष्ठं भवति' इति श्रुतम्। तच्च, प्रकृतौ बृहद्रथन्तरयोरेव पृष्ठशब्दसमानाधिकरण्यात् पृष्ठपदसमानाधिकरणसामत्वसादृश्येन होतुः पृष्ठ एव निविशते, न तु मैत्रावरुणादिपृष्ठेषु इति तत्रैव कौस्तुभे स्पष्टम्। अतश्च बृहद्रथन्तरविकारत्वात् तद्धर्मप्राप्तिरपि पूर्वाधिकरणोक्तरीत्या अविवादैव। सा च किं समुच्चयेनोभयधर्मप्राप्तिः उत विकल्पेनेति चिन्तायां—

---

तथापीह कण्वरथन्तरादिषु धर्माप्राप्तिरूपबाधकस्य सत्वात् न सा आश्रिता। किन्तु बृहद्रथन्तरशब्दोपजीव्या बृहद्रथन्तरपदप्रतिपाद्यावान्तरादृष्टभेदरूपप्रकारनिवक्षैव लाघवात् स्वीकृता। यत्र तु अश्वाभिधानस्य आदौ प्रसिद्धतद्विकृत्यभावेन न तत्र मन्त्राप्राप्तिरूपं बाधकं तत्रोद्देश्यतावच्छेदकधर्मावच्छिन्नस्यैव विवक्षेति न किञ्चित् बाधकं इत्यप्यनुकूलमिति पदेन सूचितमित्यलं विस्तरेण।

---

अप्राकृतेतद्विकारात्।

ननु यदि प्रकृतौ षट् पृष्ठानि तद्विकृतौ विधीयमानानां कण्वरथन्तरादीनां वामदेव्यादिपृष्ठस्तोत्रनिवेशापत्तिरित्याशङ्कानिराकरणायाह—तच्च प्रकृताविति। यथैव हि 'उक्थ्यो वैरूपसामा' इति विहितवैरूपसाम्नो बहुव्रीह्यन्तपदनिर्दिष्टाङ्गत्वरूपधर्मस्य रथन्तरे प्रकृतौ 'यदि रथन्तरसमा' इत्यादौ दृष्टत्वात् तेनैव सादृश्येन रथन्तरसाध्यहोतुःपृष्ठ एव निवेशः, तथेहापि पृष्ठशब्दसामानाधिकरण्यसादृश्येन होतुः पृष्ठ एव निवेशो न त्वन्यत्रेति चित्राधिकरणे कौस्तुभे स्पष्टमुपपादितमिति भावः।

अत्र शास्त्रदीपिकायां सन्देहे विकल्पसमुच्चयकोटिद्वयं प्रदर्श्य पूर्वपक्षोत्तरत्वेन समुच्चयसिद्धान्तपक्षं भाष्यकारीयं उपपाद्य पुनरपि विकल्पसिद्धान्त एव वार्तिककारीयमतत्वेनोपपादितः। तत्रैवं रीत्या प्रकारत्रयोपपादने गौरवं स्फुटमेवेति तदपेक्ष्य लाघवं दर्शयन् सन्देहकोटौ विकल्पकोटिमुपेक्ष्य समुच्चयकोटिमनुवदति—सा च किमिति। अत्र भाष्यकारेण सिद्धान्ते यस्मात् कण्वरथन्तरमुभयोः कार्ये वर्तते तस्मादुभयधर्मान् लभते इत्युक्तम्। तदनुपपन्नम्। यद्यप्युभयोः कार्ये वर्तते कण्वरथन्तरं तथापि कार्यपृष्ठभावेन विकल्पेनैव प्राप्तयोः बृहद्रथन्तरयोः विकृतौ समुच्चयाभावात् तत्तत्स्थाने विहितं कण्वरथंतरं अन्यतरधर्मानेव लभते न तूभयधर्मानिति न

स्तोत्रद्वयजनकविजातीयसंस्कारसमूहयोः प्रकृतौ तत्तदृक्सामादिसामग्रीभेदेन विकल्पेनोत्पत्तावपि वैद्यस्तोमे कण्वरथन्तरतदाश्रयभूतऋगादिरूपसामग्र्यैकस्यैवैकस्मिन्नेव सप्तदशसङ्ख्याकसंस्कारसमूहे तज्जन्यगुणाभिधानसमूहालम्बने वा वैजात्यद्वयाभिव्यक्तौ बाधकाभावात् प्रयोजकद्वयसत्त्वेनाविरुद्धसम्मीलनादिधर्माणां समुच्चयः विरुद्धोच्चैष्ट्वादीनां तु विकल्प इति प्राप्ते—

भाष्यकारेण तावदिदमुपन्यस्तं न समाहितम्। वार्तिककारस्तु—पृष्ठद्वयजन्यापूर्वस्यैकजातीयत्वेनातिदेशेनेह प्राप्तौ तत्साधनत्वेन विकल्पेनैव पृष्ठस्तोत्रद्वयस्य तत्साधनीभूतसंस्कारसमूहद्वयस्य च प्राप्तेस्तादृशसाधनत्वेनैव चोपदिष्टयोः कण्वरथन्तरादिसामतदृचोर्विकल्पेनैव तज्जनकत्वम्। न च सामग्रीवशात् वैजात्यद्वयावच्छिन्नोत्पत्तिः,

---

समुच्चयसिद्धान्तोपपत्तिस्संभवतीत्यभिप्रेत्य उभयोः कार्यं वर्तते इति भाष्यग्रन्थस्य यथाश्रुतार्थं परित्यज्य भाष्याभिप्रायं विवृण्वन् पूर्वपक्षमारभते—स्तोत्रद्वयजनकेति। **वैजात्यद्वयाभिव्यक्ताविति।** **अयं भावः**—प्रकृतौ तावत् बृहद्रथन्तरसामद्वयतदाश्रयऋगादिभिन्नसामग्रीजन्यत्वात् सप्तदशसङ्ख्याकसंस्कारसमूहद्वयं प्रागुक्तरीत्या संस्कारसमूहद्वयजनकत्वानुरोधात् समूहद्वयमेवोत्पादनीयम्। तथापि लाघवात् एकस्य विकल्पेनोत्पत्तिस्स्वीक्रियते। प्रकृते च एकया कण्वरथन्तरादिसामग्र्या प्रागुक्तरीत्या संस्कारसमूहद्वयजनकत्वानुरोधात् समूहद्वयमेवोत्पादनीयम्। तथापि लाघवात् एक एव सप्तदशसङ्ख्याकः संस्कारसमूह उत्पद्यते; तत्रैव बृहद्रथन्तरसामग्रीजन्यं वैजात्यद्वयमङ्गीक्रियते; कण्वरथन्तरं पृष्ठं भवतीत्यस्य च अयमर्थः—कण्वरथन्तरेण पृष्ठस्तोत्रसाधनवैजात्यावच्छिन्नसंस्कारद्वारा पृष्ठस्तोत्रं भावयेदिति। **यद्यपि** कण्वरथन्तरादिसामग्रीजन्यसप्तदशसङ्ख्याकसंस्कारसमूहस्य एकस्यापूर्वस्य न प्राकृतबृहद्रथन्तरादि सामग्रीजन्यता, (येन) प्राकृतसंस्कारसमूहद्वयजनकत्वेन कण्वरथन्तरस्य विधानाभावात्। तादृशसंस्कारसमूहद्वयाभावे तत्प्रयुक्तधर्माणां कण्वरथन्तरे प्राप्तिरुपपादिता दुरुपपादा;

**तथापि** धर्मविधौ पृष्ठस्तोत्रसाधनीभूतबृहद्रथन्तरसाध्यवैजात्यावच्छिन्नसंस्कारमात्रस्यैवोद्देश्यत्वस्वीकारात्। तस्य च प्रकृतौ प्रत्येकं तत्तद्वैजात्यावच्छिन्नत्वस्य संस्कारसमूहद्वय इव इहैकस्मिन्नप्यपूर्वे सत्त्वात् प्रयोजकलाभात् धर्मसमुच्चयो नासुलभः। नहि धर्मप्राप्तौ तत्तद्वैजात्यावच्छिन्नतत्संस्कारसमूहव्यक्तित्वं प्रयोजकम्, अपि तु लाघवात् तत्तद्वैजात्यावच्छिन्नसंस्कारत्वमात्रमेव। तावतैव बृहद्रथन्तरयोः परस्परं धर्मासाङ्कर्यस्य कण्वरथन्तरे उभयधर्मसाङ्कर्यस्य चोपपत्तिरिति न किञ्चित् बाधकमिति। **पृष्ठस्तोत्रद्वयस्यैवेति।** एतच्च पृष्ठस्तोत्रे द्वित्वाभिधानं वार्तिककृता पृष्ठस्तोत्रद्वयाङ्गीकारात् वास्तववार्तिकसिद्धान्तमात्रकथनाभिप्रायम्; न तु

निमीलनादेरपि सामग्रीत्वसम्पादकतया ऋक्साममात्रस्य तदभावात्। न च सम्मीलनादेरपि समुच्चयः, सम्मीलनादिसमुच्चये सामग्रीसत्त्वाद्वैजात्यद्वयावच्छिन्नोत्पत्तिः, तदुत्पत्तौ च प्रयोजकसत्त्वात् सम्मीलनादिसमुच्चय इति इतरेतराश्रयात्। एकव्यक्तौ जातिद्वयाङ्गीकारे साङ्कर्यप्रसङ्गाच्च। अतस्सम्मीलनादीनामैच्छिको विकल्प एवेति ॥१५॥

---

एकपृष्ठस्तोत्रवादिमते विकल्पसिद्धान्तानुपपत्तिप्रदर्शनपरम्। तन्मतेऽपि तदुपपत्तेः। तदुक्तं शास्त्रदीपिकायाम्— यद्यपि तावदेकैव पृष्ठस्तुतिः धर्माणां प्रयोजिका तथापि तेषां सामद्वारत्वात् साम्नोश्च वैकल्पिकत्वात्, धर्माणाञ्च पृथङ्निर्देशेन व्यवस्थितत्वात् केचिद्धर्माः रथन्तररूपसाधनद्वारेण स्तुत्यपूर्वं साधितवन्तः केचित् बृहद्द्वारेण। एवमेव विकृतावप्यतिदेशेन कदाचित् रथन्तरं स्वधर्मयुक्तं पृष्ठसाधनं, कदाचित् बृहत्; एवं प्राप्ते कण्वरथन्तरं तयोः कार्ये विहितमपि यथाप्राप्तयोः कार्ये विधानात् कदाचित् रथन्तरकार्ये कदाचित् बृहत्कार्ये विहितं भवति, न सर्वदा द्वयोः कार्ये। ततश्च कदाचित् कस्यचित् धर्मान् गृह्णाति न सर्वदा सर्वान्। स्तुतिरपि प्रकृतौ अन्योन्यनिरपेक्षैर्धर्मैः साधिता विकृतावपि न समुच्चयमपेक्षते। किमुत यदा द्वे स्तुती प्रकृतौ वचनात् विकल्पेनानुष्ठिते विकृतावपि तथैव प्राप्ते तयोः वचनात् विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कण्वरथन्तरं अन्यतरधर्मानेव गृह्णातीति व्यक्तमेतत्। तस्माद्विकल्प इति। **इतरेतराश्रयादिति**। वस्तुतस्तु एतादृशेतरेतराश्रयापत्तेः प्रकृतावपि तत्तद्वैजात्यावच्छिन्नसंस्कारसमूहद्वयोत्पत्तौ सम्मीलनादिधर्मसिद्धिः; तत्सिद्धौ च तत्तद्वैजात्यावच्छिन्नोत्पत्तिः इत्येवं समानत्वात् तत्तद्वैजात्यावच्छिन्नसंस्कारसमूहस्य अनुत्पन्नस्यैवानुष्ठापकत्वाङ्गीकारेण तदुत्पत्तेः सम्मीलनादिधर्मानुष्ठानेऽनपेक्षितत्वेन अन्योन्याश्रयाप्रसक्तिरूपपरिहारस्याप्युभयत्र समानत्वमित्यभिप्रेत्य दूषणान्तरमाह—**एकव्यक्ताविति**।

---

(१६)—उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥ स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥

यत्र संसवगोसवश्येनादौ बृहद्रथन्तरयोः प्रकृतित एव विकल्पे प्राप्ते—'उभे बृहद्रथन्तरे भवतः,' इति श्रुतम्ः तत्र यन्मते तावदेकं पृष्ठस्तोत्रं साधनसाम्नोरेव च तस्मिन् विकल्पः, तदाऽनेन वचनेन तयोस्समुच्चयमात्रविधानादेकस्मिन्नेव सप्तदशस्तोमके पृष्ठे अंशतस्सामद्वयं, तत्र च व्यवस्थिता एव तद्धर्माः। यदा तु प्रकृतावेव पृष्ठस्तोत्रद्वयं

---

उभयसाम्नि चैवमेकार्थापत्तेः।

अत्र पृष्ठैः स्तुवत इति वाक्येन एकमेव होतुः पृष्ठं विधीयते। पृष्ठैरिति बहुवचनं पृष्ठापृष्ठसमुदायानुवादकम्। तस्मिंश्च पृष्ठस्तोत्रे बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनात् साधनभूतयोः बृहद्रथन्तरयोः साम्नोः विकल्प इति न्यायसुधाकारमते 'संसवे उभे कुर्यात्' इति वाक्यार्थवर्णने अनुष्ठानभेदफलं दर्शयति—तत्र यन्मते इति। अत्र च 'एकार्थत्वादविभागः स्यात्' इत्यधिकरणभाष्ये आपाततः प्रतीयमानमपि पृष्ठैक्यं एकजातीयापूर्वजनकत्वेन नेयमिति पूज्यपादैः तदधिकरणे पृष्ठद्वयाङ्गीकारेण सूचितम्। भाष्यमपि च तन्त्ररत्ने पृष्ठभेदपरतया स्पष्टमेव व्याख्यातमिति भाष्यकारस्य न पृष्ठैक्ये आग्रह इति सूचयितुं सामान्यतो यन्मते इत्युक्तम्। एवं स्थिते प्रकाशकाराणां भाष्यकारमतत्वेन यदेतेष्वधिकरणेषु पृष्ठैक्ये आग्रहप्रदर्शनं तत् व्यर्थमेवेति ध्येयम्। तयोः समुच्चयमात्रविधानादिति। अस्मिंश्च मते बृहद्रथन्तरयोरेव समुच्चयविधानात् बृहद्रथन्तरपदं यथा श्रुतार्थं भवति। पृष्ठद्वयवादिमते यथा बृहज्जन्यस्तोत्रापूर्वप्रयुक्तानां धर्माणां रथन्तरजन्यस्तोत्रापूर्वप्रयुक्तानाञ्च धर्माणां तदपूर्वजनकसमुच्चितपृष्ठद्वयजनकयोः बृहद्रथन्तरयोः प्राप्त्यापत्तिः स्यात्। न चैतद्युक्तम्। समुच्चितपृष्ठद्वयविधाने विशिष्टविधित्वापत्त्या तदपेक्षया स्तोत्रगतसमुच्चयमात्रविधाने लाघवेन तद्विधानानुपपत्तिरिति। अंशत इति। एकयेव सप्तदशस्तोमकं पृष्ठं प्रकृतौ कदाचित् रथन्तरेण कदाचित् बृहता साधितमासीत्। तदेव त्विह उभाभ्यां समुच्चयेन साधनीयम्। तत्र विषमसङ्ख्यत्वात् 'समं स्यादश्रुतत्वात्' इति न्यायाप्रवृत्तेः प्रथमतः एकतरेण साम्ना आद्यं स्तोमं संपाद्य तदुत्तरस्तोमसंपादनं उत्तरेण कर्यमित्येव अंशतः सामद्वयनिवेशोऽथवा दाशमिकाधिकरणवक्ष्यमाणरीत्या कल्पसूत्रकारवचनात् विभाग इत्यर्थः। पृष्ठस्तोत्रद्वयवादिमतेऽनुष्ठानभेदं दर्शयति—यदा त्विति। अत्र तन्त्ररत्ने पृष्ठानुवादेन कण्वरथन्तरवत् इह सामद्वयं विधीयते। तत्र यद्बृहतः कार्यं पृष्ठं तदुभाभ्यां साध्यते। तथा रथन्तरकार्यमपि। कार्यप्रयुक्ताश्च धर्माः। तेनोभयत्रापि

वैकल्पिकं इह च तयोरेव बृहद्रथन्तरपदलक्षितयोः समुच्चयस्तदा तत्तत्सामकपृष्ठद्वयस्य प्रत्येकं सप्तदशस्तोमकस्य करणाद्धर्माणां व्यवस्थैव। न ह्यत्रैकैककार्ये समुच्चितस्तोत्रद्वयविधानं, येनैकैककार्ये उभयविधानात् उभयत्रोभयधर्मास्स्युः। विशिष्टविधिगौरवाद-

---

उभये भवितुमर्हन्ति। यथा कण्वरथन्तरे सामद्वयधर्माणामव्यवस्थया प्रयोगः तद्वदिहापि उभयोरप्युभयधर्माः अव्यवस्थया स्युरिति पूर्वपक्षं प्रापय्य पृष्ठानुवादेन कण्वरथन्तरविधिः—यत्पृष्ठं तत् कण्वरथन्तरमिति। बृहद्रथन्तरे तु न पृष्ठानुवादेन विधीयेते। किन्तर्हि? चोदकेन विकल्पेन प्राप्नुवती वचनेन समुच्चीयेते। अन्यथा रथन्तरस्य बृहत्साध्यपृष्ठे बृहतश्च रथन्तरसाध्ये पृष्ठे विधानात् अप्राकृतकार्यकारिता स्यात्। तस्मादिहापि एककार्यकारित्वाभावात् स्वस्वतत्तत्पृष्ठरूपभिन्नकार्यसाधनत्वात् तत्तत्पृष्ठजन्यापूर्वप्रयुक्तव्यवस्थितधर्मके यथाप्राप्त एव बृहद्रथन्तरे सामनी प्रयोक्तव्ये। कथं तर्हि पृष्ठानुवादेनाविहितयोः पृष्ठसाधनत्वमिति चेत्। उच्यते। यद्यपि पृष्ठशब्दो नोच्चारितः तथापि प्रकृतौ पृष्ठसाधने दृष्टे इति विकृतावपि पृष्ठसाधने एव भविष्यतः नान्यस्मिन् प्रदेशे प्रयोक्तव्ये इति सिद्धान्तितम्। तस्माच्च तन्त्ररत्नग्रन्थात् स्पष्टमेव बृहद्रथन्तरपदं केवलसामपरमेव प्रतीयते। नचैतद्युक्तं, प्रकृतौ बृहद्रथन्तरसाध्यपृष्ठद्वयविकल्पस्य शास्त्रसिद्धत्वेऽपि तदनुनिष्पन्नस्य साधनभूतसामद्वयविकल्पस्य अर्थसिद्धत्वेन आर्थिकस्य विकृतावनतिदेशेन साधनविकल्पस्य प्राप्त्यभावे तद्बाधेन समुच्चयविधानस्य असम्भवात्। अतः शास्त्रीयस्य पृष्ठस्तोत्रद्वयविकल्पस्यातिदेशप्राप्तस्य बाधनयैव समुच्चयविधानं युक्तम्। अतश्चास्मिन् मते बृहद्रथन्तरपदयोः तत्साध्य पृष्ठलक्षणया ये बृहद्रथन्तरसाध्ये पृष्ठस्तोत्रे ते उभे कर्तव्ये इत्यर्थसिद्धिः। एवञ्च पृष्ठशब्दाभावे प्रकृतिदृष्टत्वमात्रेण पृष्ठसाधनत्वमित्यादिकल्पनाक्लेशो नापद्यते इत्यभिप्रेत्याह—**बृहद्रथन्तरपदलक्षितयोरिति**। **नह्यत्रैककार्ये इति**। बृहद्रथन्तरसामद्वयजन्यपृष्ठद्वयजन्यतत्तदपूर्वरूपे कार्ये समुच्चितस्य पृष्ठस्तोत्रद्वयस्य जनकत्वेन विधानमित्यर्थः। तथा सति बृहद्धर्माणां प्राप्तिरनिवार्यैव। इदमेव हि अवान्तरापूर्वार्थत्वसाधनस्य फलं यत् प्रधानापूर्वाभावेऽपि अवान्तरापूर्वसत्वे तद्धर्मप्राप्तिः, तच्चेहाप्यस्त्येव। नहि पवमाने विधीयमानं रथन्तरं पृष्ठस्तोत्रसाधनऋगाश्रयीभूतसामव्यक्तितो भिन्नं, येन तज्जन्यगुणाभिधानानां तज्जन्यसंस्कारसमूहानां वा भेद आशङ्क्येत। पवमानस्तोत्रसाधनत्वेन प्राप्तसामान्तरव्यावर्तकत्वेन तयोरेव रथन्तरबृहतोः समुच्चयविषययोः व्यवस्थया विधानात्। एतेन अप्राकृतकार्यापन्नत्वं रथन्तरस्य निरस्तम्। अत एव तत्तत्संस्कारसमूहरूपावान्तरादृष्टप्रयुक्तत्वाङ्गीकारोपोद्बलकमेतदधिकरणसिद्धान्तभाष्यम्-साम्नोश्चैते धर्माः न पृष्ठस्य। तच्च सामप्रयुज्यते रथन्तरं बृहद्वा। रथन्तरे प्रयुज्यमाने

प्राक्तनकार्यतापत्तेश्च यथाश्रुतिनयोरेव समुच्चयमात्रविधानाङ्गीकरणात्। अतस्तत्तत्साम्नि तत्तद्धर्मा एव सम्मीलनादयः।

नैमित्तिकग्रहाग्रतानियमस्तु सत्यपि सामद्वये तयोर्विरोधित्वाभावेन निमित्तत्वाभावान्न भवतीत्युक्तं कौस्तुभे। अत्र च पृष्ठद्वयजन्यापूर्वस्यैकजातीयत्वेऽपि समुच्चयानु-

---

तद्धर्माः प्रयोक्तव्याः, बृहत्यपि प्रयुज्यमाने बृहद्धर्माः। सामप्रयुक्ता एवैते धर्माः। साम्नापि हि दृष्टं अदृष्टं च क्रियते। तस्मात् साम्नापि धर्मप्रयोजने समर्थम्। अतो व्यवस्था धर्माणामिति।

अस्मिंश्च भाष्ये साम्ना ऋगक्षराभिव्यक्तिरूपदृष्टार्थत्वस्येव तत्तत्संस्कारसमूहरूपावान्तरादृष्टप्रयोजनकत्वस्यापि अभिधानात् तदर्थत्वेनाप्यानर्थक्यपरिहारसम्भवस्य स्पष्टमेवोक्तेः पृष्ठस्तोत्रापूर्वप्रयुक्तत्वस्य 'साम्नोश्चैते धर्माः न पृष्ठस्य' इत्यनेन अंशेन निराकृतत्वात्, केवलं पृष्ठस्तोत्रापूर्वनिरपेक्षतया साममात्रधर्मत्वे सिद्धे अन्यस्तोत्रसाधनेऽपि रथन्तरादौ सम्मीलनादिधर्मप्राप्तिः अभ्यनुज्ञायते। अतो युक्तैव पवमानसाधने रथन्तरे सम्मीलनादिधर्मप्राप्तिः। तथापि रथन्तरादिपदे अपूर्वसाधनत्वलक्षणायां पृष्ठस्तोत्रप्रकरणेनोपस्थितानां तद्व्याप्यानामेव अवान्तरापूर्वाणां पूर्वाङ्गत्वात् घटकत्वं; नह्यत्र दीक्षणीयायामिति पृथक्पदवत् तद्वाचकं पदान्तरं तद्विषयकं प्रकरणान्तरं वा समस्ति। येन मुख्यापूर्वनिरपेक्षस्यैव तत्सन्मूहस्य तद्घटकत्वं भवेत्। न त्वेतदस्ति। अतः पृष्ठस्तोत्रजनकसंस्कारसन्मूहसाधनत्वस्यैव लक्षणया युक्तैव पवमानसाधने तद्धर्माणामप्राप्तिरिति। अप्राकृतकार्यतापत्तेरिति। प्रकृतौ रथन्तरसाध्यपृष्ठस्तोत्रस्य स्वाव्यवहितापूर्वजनकत्वमेवासीत्। ननु बृहत्साध्यपृष्ठस्तोत्रजन्यापूर्वार्थत्वमपि। एवं बृहत्स्तोत्रस्याप्यासीत्। इह तु रथन्तरसाध्यपृष्ठस्तोत्रापूर्वजनकत्वं बृहत्पृष्ठस्य बृहत्साध्यपृष्ठस्तोत्रापूर्वजनकत्वं रथन्तरसाध्यपृष्ठस्तोत्रस्यापद्येत इति अप्राकृतकार्यकारितापत्तिरिति भावः।

अत्र च पृष्ठस्तोत्रद्वयवादिमत इव सप्तदशस्तोमकपृष्ठद्वयानुष्ठानलाभाय एकपृष्ठस्तोत्रवादिमतेऽपि बृहद्रथन्तरसाध्यापूर्वपृष्ठस्तोत्रद्वयविधानाङ्गीकारे बाधकाभावात नांशतः सामद्वयनिवेशानुष्ठानापत्तिरित्यप्यपास्तं विशिष्टविधिगौरवापत्तेरपरिहार्यत्वात्। विरोधित्वाभावेनेति। निमित्तस्य यदिशब्देन कादाचित्कत्वं बोध्यते। कादाचित्कत्वस्य बृहद्रथन्तरयोः अन्योन्यविरोधप्रयुक्तत्वात् बृहद्विरोधिनो रथन्तरस्य रथन्तरविरोधिनो बृहतश्च निमित्तत्वं तयोर्विकल्पात् प्रकृतावासीदिति रथन्तरादेः निमित्तत्वलाभात् तत्प्रयुक्ताग्रतानियमोऽपि संभवति। इह तु

रोधेन व्यक्तिद्वयोत्पत्तिरिति ध्येयम्। इदं च पृष्ठद्वयसमुच्चयोदाहरणं संसवगोसवादिरूपं मूले कृत्वाचिन्तयेति द्रष्टव्यम्।

वस्तुतस्तु—तेषु 'उभे बृहद्रथन्तरे भवतः,' इति प्रकृत्य 'पवमाने रथन्तरं कुर्यात् बृहत्पृष्ठं भवति' इति पञ्चविंशब्राह्मणानुरोधेन लाट्यायनिकल्पे रथन्तरस्य पवमानस्तोत्रे निवेशाभिधानात् न पृष्ठस्तोत्रे उभयोः साम्नोर्न वा एकस्मिन् क्रतावुभयोः पृष्ठस्तोत्रयोस्समुच्चयः।

अत एव पवमानेऽपि रथन्तरं विधीयमानं न सम्मीलनादीन् धर्मान् गृह्णाति। रथन्तरस्य तैर्विनाऽपि जायमानत्वेन रथन्तरस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणायां पृष्ठजनकसंस्कारसमूहसाधनत्वस्यैव लक्षणीयत्वात्। तदभावे यूपावटास्तरणबर्हिर्वेद-प्राकृतकार्यापत्ते रथन्तराद्यावप्राप्तेः।

अत एव यैर्विना रथन्तरमेव पठितुं न शक्यं यथा स्तोभादिभिः तत्रेतराक्षेपकत्वे प्रमाणाभावात् यदा तदाश्रयभूता ऋचोऽपि ऋगन्तरग्राहकप्रमाणाभावे आक्षिप्येरन् तदा तदङ्गभूतस्तोभादीनां 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इति न्यायेनानुष्ठाने न काचन क्षतिः। अतः क्रत्वन्तरे एतादृशवाक्यसत्त्वे स्तोत्रान्तरे विनियोगाभावे चेद-मधिकरणं द्रष्टव्यम् ॥ १६ ॥

---

उभयोरपि समुच्चयेन विकल्पप्रयुक्तकादाचित्कत्वव्याप्यनिमित्तत्वासम्भवात् नैकतरसामत्वप्रयुक्त-तत्तदग्रतानियमः। किन्तु तयोरग्रतयोः ऐच्छिको नियम इति रथन्तरपादे कौस्तुभे प्रथमाधि-करणे व्यक्तमिति भावः। व्यक्तिद्वयोत्पत्तिरिति। प्रकृतौ हि विकल्पात् प्रयोगभेदेन पृष्ठव्यक्तिद्वयोत्पत्तिः। इह तु एकस्मिन्नेव प्रयोगे उभयोः समुच्चयविधानात् पृष्ठव्यक्तिद्वयोत्पत्तिः। एतावदेव वैषम्यं, पृष्ठद्वयजन्यापूर्वस्य एकजातीयत्वं तु उभयत्रापि तुल्यमिति भावः। पञ्चविंशब्राह्मणेति। पञ्चविंशब्राह्मणपदं उपलक्षणं, श्येने षड्विंशब्राह्मणे 'उभे बृहद्रथन्तरे भवत' इति प्रकृत्य ब्रह्मसाम बृहद्रथन्तरं होतुः पृष्ठमिति भेदेन विनियोगाम्नानात्। रथन्तस्वरूपे आनर्थक्यादिति। यद्यपि प्राचां मते प्रधानभूतपृष्ठस्तोत्रापूर्वप्रयुक्तत्वात् तदभावेन पवमानसाधनरथन्तरे सम्मीलनादिधर्मप्राप्तिः [न] सम्भवति। भवन्मते तु दीक्षणीयावाङ्नियमन्यायेन तत्तद्गुणाभिधानजन्यतत्तत्संस्कारसमूहप्रयुक्तत्वात् दैक्षधर्माणां दैक्षजन्या-वान्तरापूर्वार्थत्वेन तद्विकृतौ ज्योतिष्टोमविकारानङ्गभूतायां दैक्षधर्माणामिव पृष्ठस्तोत्रापूर्वाभावेऽपि प्रयोजकस्य तत्तत्संस्कारसमूहस्य पवमानसाधने रथन्तरेऽपि सत्त्वात् सम्मीलना................ तथाऽनुपदमेव वक्ष्यत इति भावः।

---

(१७)—पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि ॥ ५१ ॥ कालस्येति चेत् ॥ ५२ ॥ नाप्रकरणत्वात् ॥ ५३ ॥ मन्त्रवर्णाच्च ॥ ५४ ॥ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ नाधिकारिकत्वात् ॥ ५६ ॥

दर्शपूर्णमासयोः—'स्रुवेण पार्वणौ होमौ जुहोति' इति श्रुतम्। तत्र सङ्ख्याभिन्नं कर्मद्वयं स्रुवपर्वदेवताविशिष्टं विधीयते। न च हविस्समभिव्याहाराभावात् नायं देवतातद्धितः, सम्बन्धसामान्यवाचिन एव योग्यतया देवतात्वपरत्वोपपत्तेः। तदिदं होमद्वयं विकृतावतिदिश्यते न वेति चिन्तायाम्—

प्रयाजवदतिदेशसम्भवः। न च पर्वशब्दवाच्यकर्मसमुदायस्यैवात्र देवताभूतस्य उद्देशांशेन संस्कारात् तस्य च विकृतावभावान्नातिदेशः, पर्वशब्दस्य काले मुख्यतया कर्मणि लक्षणाङ्गीकारे प्रमाणाभावात्। अतोऽत्र कालस्यैव देवतात्वात् तस्य चासंस्कार्यत्वादारादुपकारकयोरनयोर्युक्त एवातिदेशः।

यदि तु कालस्यापि कर्माङ्गतयोपयोगात् स्मृतिबलेन सर्वादौ स्मृतस्यापि पुनरकालिकत्वेनसम्भावनानिमित्तकाश्रद्धापरिहारार्थं कर्मवदेव स्मरणोपपत्तेः सामवायिकत्वलाभाय

---

पार्वणहोमयोस्त्वप्रवृत्तिः।

पर्वशब्दस्य कालपरत्वपूर्वपक्षेऽपि सन्निपत्त्योपकारकत्वमुपपादयन्ति—यदि त्विति। स्मृतिबलेनेति।

मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः।
उल्लेखनमकुर्वाणो न तत्फलमवाप्नुयात् ॥,

इति स्मृतिबलेनेत्यर्थः। यत्त्वत्र तन्त्ररत्ने 'उभयोरविशेषात्' इत्युत्तराधिकरणस्य पूर्वाधिकरणप्रयोजनार्थत्ववर्णने, यद्यपि कालस्य कर्माङ्गताऽवगम्यते तथापि सकृदेवादौ स्मृत्वा चोदिते काले कर्म प्रस्तूयते, न तस्य भूयो भूयः स्मृत्या प्रयोजनं येन कर्ममध्ये स्मर्येत। यथा अन्याङ्गानि भूयो भूयः स्मारकमपेक्षन्ते नैवं कालः, तस्मात् कालवचने पर्वशब्दे सति अदृष्टार्थौ होमौ प्राप्नुतः इत्युक्तम्। तद्दूषयति—पुनरकालिकत्वेनेति। कर्मवदेवेति। यथैवान्याङ्गानामनुष्ठेयानामनुष्ठानार्थं स्मारकापेक्षा, नैवं (अनुष्ठितानां) कदाचिदप्यनुष्ठितानामप्यङ्गानां अङ्गश्रेषनिमित्तप्रायश्चित्तापत्तिभिया। अस्तु वा तदपेक्षा। प्रधानानान्तु पूर्वमनुष्ठितानां न कस्यापि स्मरणमिति

कालसंस्कारकत्वमिष्येत, तथाऽपि विकृतौ तत्कालीनायामतिदेशे बाधकाभावात्। अन्यकालीनायामपि पशुपुरोडाशादिवत् ऊहेनातिदेशोपपत्तेर्न काचित् क्षतिः।

अस्तु वा पर्वशब्दस्य पृणातेर्दानवाचित्वादधिकरणव्युत्पत्त्या कालवाचित्ववत् भाव-

---

अनु [भ]वशपथनिर्णयमेव। एवं सत्यपि पुरुषदोषात् कदाचित् अकरणसंभावनानिवृत्तिद्वारा स्मरणस्य दृष्टार्थत्वेनोपयोगः कर्मसंस्कारकत्वपक्षे। एवं कालसंस्कारकत्वपक्षेऽपि तथाविधोपयोगो नादुर्लभ इति भावः।

यदपि तत्रैव तन्त्ररत्नकृता उक्तम्—यद्यपि चात्र ऊहानूहौ न स्तः, तथापि ऊहसिद्ध्यर्थं अवान्तरकार्यनिरूपणस्य प्रस्तुतत्वात् तत्प्रसङ्गात् पार्वणहोमयोरपि अवान्तरकार्थं निरूप्यत इति सङ्गतिरिति। तद्दूषयितुं साक्षादेवोहप्रयोजनं दर्शयति—अन्यकालायामिति। विकृतिषु च पौर्णमासीविकाराणां पौर्णमास्यामेव, अमावास्याविकाराणाममावास्यायामेवानुष्ठानमित्येवं प्राप्त-व्यवस्थाबाधेन, य इष्ट्येति वचनेन पौर्णमास्यमावास्यान्यतरकालकत्वं अव्यवस्थयेति साधितं पञ्चमे। एवञ्च पौर्णमासीप्रकृतेर्यदा अमावास्यायामनुष्ठानं यदा वा विपरीतं तदा तत्तद्विकृतौ तत्तत्प्रकृत्यति-देशेन प्राप्ताभ्यां तत्तत्कालदेवत्याभ्यां पार्वणहोमाभ्यां यद्यपि स्वीयोद्देशांशेन तस्य संस्कार्यस्या-भावात् न स्मरणरूपसंस्कारः उत्पादयितुं शक्यते। तथापि प्रकृतौ पौर्णमास्यमावास्याकाल-स्वरूपमात्रार्थत्वे आनर्थक्यात् अपूर्वसाधनत्वलक्षणावश्यंभावे, कालिकसम्बन्धावच्छिन्नापूर्वसाधना-धिकरणत्वमात्रस्यैव पौर्णमास्यमावास्यात्वरूपशक्यतावच्छेदकाप्रवेशेन लक्षणात् तद्रूपेण संस्कार्य-त्वस्य प्रकृताविव विकृत्यङ्गभूतविभिन्नकालस्यापि संभवात्, त्यागकाले मन्त्रयोश्च तत्तद्विकृत्य-ङ्गभूतविभिन्नकालवाचकपदप्रयोगेण तत्तत्कर्माङ्गकालस्मरणं शक्यत एव कर्तुमित्यतिदेशप्रयोजनं ऊहानूहरूपं सम्भवत्येवेति न प्रासङ्गिकसङ्गतिपर्यन्तानुधावनमाश्रयणीयमिति भावः। **पशुपुरोडाशवदिति**। दृष्टान्तविवरणं स्फुटमपि व्यक्तीकरिष्यते। **अधिकरणव्युत्पत्त्येति**। पृणाति यस्मिन् काले इति व्युत्पत्त्या कालवाचित्वम्। प्रणीतमेव पर्वेति भावव्युत्पत्त्या कर्मपरत्वमिति भावः। अत्र तन्त्ररत्ने "सिद्धान्तस्तु नायं कर्मणि लक्षणाशब्दः तत्रापि प्रसिद्ध्यविशेषात् अवयवव्युत्पत्त्या। यथाऽधिकरणव्युत्पत्त्या काले योगरूढः पर्वशब्दः तथैव भावव्युत्पत्त्या कर्मण्यपि योगरूढ" इत्युभयवाचकत्वं पर्वशब्दस्योक्तं भवति। न चैतद्युक्तं, अनेकशक्तिकल्पने प्रमाणाभावात्। कर्मापेक्षया काल एव बहुतरप्रसिद्धेः तत्रैव शक्ति-कल्पनात्। तत्सम्बन्धेन निरूढलक्षणयैव कर्मणि पर्वपदप्रयोगस्य युक्तत्वात्। इतरथा

व्युत्पत्त्या कर्मवाचित्वस्यापि सम्भवात् प्रकरणतः कर्मपरत्वमेव, तथाऽपि पर्वशब्दवाच्यत्वा-व्याग्नेयादिसमुदायस्य विकृतावपि देवतात्वसम्भवादारादुपकारकयोरनयोरतिदेशे न किञ्चिद्बाधकम् ।

यदि तु सन्निपत्योपकारकत्वलाभार्थं देवतासंस्कारकत्वमिष्येत तथाऽपि पर्वत्वस्य दानत्वापरपर्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावादपूर्वसाधनत्वेन रूपेणाग्नेयादीनां प्रत्येकमेवोद्देश्यत्वावगतेः हविरभिमर्शनमन्त्रवद्विकृतावतिदेशोपपत्तिः ।

न च तत्र शब्दत एव हविषामुद्देश्यत्वावगतेरुद्देश्यसाहित्यस्य चाविवक्षितत्वाद्युक्तो-ऽतिदेशः प्रकृते तु तद्धितशब्देन देवतात्वेनैतेषामुपादानात् साहित्यविवक्षोपपत्तेः,

---

नीलं रूपं, नीलो घट इत्युभयथापि प्रसिद्ध्यविशेषात् नीलादिपदानामपि द्रव्ये शक्तिकल्पनापत्तेः । दर्शपूर्णमासादिपदानामपि प्रसिद्ध्यविशेषेण कर्मणि रूढत्वापत्त्या विलम्बितकालसम्बन्धोपांशु-यागस्यानायासेनैव दर्शपूर्णमासपदेन ग्रहणोपपत्तेः निबन्धकाराणां पौर्णमासीकालसम्बन्धबोध-कवाक्यान्वेषणप्रयासकरणवैयर्थ्यापत्तेश्च । अतः कर्मपरत्वे लक्षणापत्त्या वस्तुतः कालपरत्व-मेव युक्तमिति अस्तुवेति पदेन अनास्थाद्योतकेन सूचितम् । एवं सत्यपि न कालवाचित्वं प्रकृते आश्रयणीयं प्रकरणबाधापत्तेः अतः प्रकरणानुग्रहाय कर्मपरत्वमेवेत्याह—**प्रकरणादिति** । अत्र भाष्यकारेण—अपि च पृणातेः पर्वशब्दः पृणातिश्च दाने प्रसिद्धः । दानानि च समुदायाः तस्मात् समुदायाभिधानेति सिद्धान्ते उक्तम् । तेन च पर्वत्वोपाधिना समुदायवाचिता पर्वशब्दस्य उक्ता भवति । तदेतद्दूषयति—**तथापि पर्वत्वस्येति** । मा भूत् पर्वत्वोपाधिना पर्वशब्दस्य समुदायवाचित्वम्, किन्तु तत्राभिहितत्वाच्च प्रकृतानां कर्मणां व्यासज्य देवतात्वं न प्रत्येकमिति तन्त्ररत्नोक्तमाश्रित्य यत् प्रकाशकारैः एकपदोपादानप्रतीतसाहित्यावच्छिन्ना-नामेव उपादेयानुरोधेन उद्देश्यत्वमिति अभिमर्शनमन्त्रवैलक्षण्येन तथाभूतानामुपपादितम् । तदनूद्य दूषयति—**न च तत्रेति** । अत्र च तन्त्ररत्ने अभिमर्शनमन्त्रवैलक्षण्योपपादनार्थमुक्तम् । भाष्यकारेण चाष्टमेऽध्याये चतुर्होत्राद्यभिमर्शनद्वयं समुदायार्थत्वात् विकृतिषु समुदायाभावान्न प्राप्नोतीति चोदयित्वा उक्तम्—न प्राप्नुयाद्यदि समुदाययोरभिमर्शनमुच्येत तयोस्त्वनभिप्रष्टव्य-त्वात् समुदायिनामेव लक्षणया अभिमर्शनमुच्यते । समुदायिविकारश्च सौर्यः । तस्मात् तत्रापि चोदकप्राप्त्या अभिमर्शनमिति । अस्माच्च ग्रन्थात् पौर्णमास्यमावास्याशब्दौ तत्तत्समुदाये शक्तौ समुदायिनि लाक्षणिकाविति भाति । तत्र यथैव समुदाययोः साक्षात्, अथवा समुदायाङ्गत्वेन हविषश्चाप्रसिद्धेः आनर्थक्यतदङ्गन्यायेनापि अनभिप्रष्टव्यत्वम्, एवं समुदायिनामप्युद्देश्यत्वेऽपि तेषां

सत्यपि वैमृधन्यायेनोद्देश्यवाचकपदान्तरकल्पनयाऽऽग्नेयादीनां प्रत्येकमुद्देश्यत्वे उपादेयतादशायां विवक्षितसाहित्यानामाग्नेयादीनामेव देवतात्वावगमात् विकृतौ च तेषामनुपयोगित्वेन संस्कार्यत्वानुपपत्तेर्देवतासंस्कारकयोः पार्वणहोमयोरनतिदेश इति वाच्यम् । उद्देश्यसामर्थ्यानुरोधेनाग्नेयादीनामपि अपूर्वसाधनत्वेनैव रूपेण देवतात्वावगतेर्विकृतावति-

---

साक्षात्, अथवा आनर्थक्यतदङ्गन्यायेन नियमेन हविर्द्वारैवेत्यत्र प्रमाणाभावात् अनभिमृष्टव्यत्वं तुल्यम् ।

वस्तुतस्तु पौर्णमास्यादिशब्दानां स्वातन्त्र्येण समुदायवाचित्वे प्रमाणाभावात्, प्रत्युत विद्वद्वाक्ययोः यजिसामानाधिकरण्यात् यागव्यक्तिवाचित्वमेव । तयोश्च वाक्ययोः एकपौर्णमास्यमावास्याशब्देन तन्त्रेणोपादानात् तत्तद्यागव्यक्तिसाहित्यप्रतीतिलभ्या परं समुदायप्रसिद्धिः । ततश्च सहितयागत्रयवाचिनौ शब्दौ यद्यपि, तथापि सहितानामङ्गभूतं एकं हविर्नास्तीति तद्द्वाराप्यङ्गत्वानिर्वाहात् अगत्या विशेषणांशत्यागेन केवलयागव्यक्तिमात्रलक्षणया तत्तद्यागाङ्गत्वं चतुर्होतृमन्त्राणामित्येवं रीत्यैव भाष्यकारीयं समुदायिलक्षणपरं वचः समर्थनीयम् । तत्तद्यागव्यक्तिलक्षणायामपि तन्त्रेणोपादानात् प्रतीयमानसाहित्यावच्छिन्नयागव्यक्तीनामुद्देश्यत्वापत्तिः, न तु प्रत्येकमित्यनुपपत्तिस्तु उद्देश्यविशेषणत्वात् सर्वेभ्यः कामेभ्य इत्यादाविव अविवक्षयैव परिहार्या । तदिदं भाष्योक्तं लक्षणया समुदायपरत्वं नियमेन हविर्द्वाराऽङ्गत्वप्राप्त्यर्थं हविःपर्यन्तलक्षणां विना न निर्वहतीत्यवश्यं पौर्णमास्यमावास्याशब्दाभ्यां तत्तद्यागीयहविर्लक्षयित्वा तदुद्देशेनैव तत्तन्मन्त्रकरणकाभिमर्शनम् ।

अथवा अभिमर्शनस्य प्रकरणप्राप्तानुवादत्वात् मन्त्रमात्रमेव विधीयते इत्येव तृतीयसप्तमपादे निर्णीतं युक्तमभिप्रेत्योक्तं शब्दत एव हविषामुद्देश्यत्वावगतेरिति । अत्र च यत्र तन्त्रेणोपादानं तत्र साहित्यप्रतीतावपि साहित्यावच्छिन्नपदार्थस्यैकेनैव पदेन सप्तम्यन्तपदेनैवाभिधानात् साहित्यस्य एकत्वादेरिव उद्देश्यविशेषणत्वाभावात् कथमविवक्षेत्यनुपपत्तिपरिहारस्तु अनुपदमेव दर्शयिष्यते—**उपादेयतादशायामिति**। अयं भावः। या हि वचनेन विहिता देवता तद्विषयकोद्देशांशेन तद्वाच्यार्थस्मरणं कार्यम् । देवता च साहित्यावच्छिन्ना; आग्नेयादित्रयं वचनबोधितम् । तदेव च संस्कार्यत्वेनोपस्थितमिति वैमृधन्यायेन कल्प्यमानं पदं सहितयागत्रयवाचकमेव कल्प्यते । उपस्थापकपदार्थानुरोधात् । अतश्च एकपदोपस्थाप्यत्वेन साहित्यस्य पृथक् विशेषणत्वाभावात् अविवक्षाकारणाभावेन विवक्षितसाहित्यानामेव संस्कार्यत्वात्, विकृतौ च तदभावात् नातिदेश इति। तामिमामाशङ्कां दूषयति—**उद्देश्यसामर्थ्येति**

अयमर्थः। एकपदोपस्थाप्यत्वेन प्रकृते साहित्याविवक्षायां कारणाभावं वदसि नहि तत् अग्निमरीनवन्तयोरपि तुल्यत्।

वस्तुतस्तु उद्देश्यविशेषणस्य साहित्यस्याविवक्षायां न पृथक् विशेषणत्वं ग्रहैकत्व इव प्रयोजकं ग्रन्थकाराणां विवक्षितम्। अपि तु उद्देश्यस्वरूपे आनर्थक्ये प्राप्ते अपूर्वसाधनत्व-लक्षणायां यथा प्रकृत्यर्थस्यापि व्रीहित्वादेः अविवक्षा गौरवभयात् उपक्षीणत्वाच्च स्वीक्रियते; एवमिहापि पार्वणहोमस्य प्रयोजनापेक्षायां वाक्योपस्थितपर्ववाचकशब्दकल्पनया पर्वणि उद्देश्यत्वेऽपि अपूर्वसाधनत्वलक्षणायां प्रकृत्यर्थत्वेनैव साहित्यावच्छिन्नपर्वत्वस्य अविवक्षायां गौरवं उपक्षीणत्व-मेव च प्रयोजकम्।

एतेन पुंस्त्वस्य प्रातिपदिकार्थत्वाङ्गीकारेण एकपदोपस्थाप्यत्वाद्विवक्षेति पूर्वपक्षे एक-पदोपस्थाप्यत्वेऽपि उद्देश्यस्य चमसाधिकरणन्यायेन विवक्षायामपि पुंस्त्वस्य तद्विशेषणत्वादविवक्षैव युक्ता अङ्गीकर्तुं, इतरथा वाक्यभेदापत्तेरिति दूषणे, षष्ठे अधिकारप्रसाधनाधिकरणे तन्त्ररत्न-शास्त्रदीपिकोक्तमपास्तम्। पदान्तरनैरपेक्ष्येण विशिष्टार्थस्योद्देश्यत्वे वाक्यावृत्तेरप्रसक्तेः।

यदपि ग्रहैकत्वाधिकरणे कौस्तुभे साहित्यस्य कारकेऽन्वयमङ्गीकृत्याविवक्षोपपादनं तत् प्रौढवादमात्रमित्युपपादितं षष्ठे **लिङ्गाविवक्षाधिकरणे** (६–१–४) मयेति तत्रैव द्रष्टव्यम्। अत एवैतदधिकरणान्ते प्रकृतौ साहित्यस्य आग्नेयत्वादेश्चोद्देश्यतावच्छेदककोटौ विवक्षा न तु व्रीहित्वादिवदविवक्षेति ग्रन्थे व्रीहित्वादिवदिति दृष्टान्तव्याजेन सूचितं पूज्यपादैः। सर्वेभ्यः कामेभ्यः इत्यादौ अपूर्वसाधत्वलक्षणाऽभावेऽपि कामनाविषयत्वावच्छिन्नस्योद्देश्यत्वे कामनानाम-नियमेन तत्र साहित्यासम्भवात् कतिपयफलविशेषकामनानां तत्सम्भवेऽपि सर्वयावत्फलविषयत्वेन युगपत् कामनोत्पादायोगात् उद्देश्यस्वरूपसामर्थ्यबलादेव साहित्याविवक्षा द्रष्टव्या। तथा च प्रकृते वैयर्थ्यपरिहारार्थं यत् उद्देश्यस्यापूर्वसाधनत्वकल्पनरूपं सामर्थ्यं तदनुरोधेन वाक्योप-स्थितमपि साहित्यावच्छिन्नयागत्रयदेवतात्वं बाधित्वा येनापूर्वसाधनत्वेन रूपेण पार्वणहोमं प्रति संस्कार्यता तेनैव रूपेण देवतात्वमपि कल्पनीयम्। ततश्चापूर्वसाधनत्वविशिष्टार्थदेवताकौ पार्वणहोमौ अपूर्वसाधनत्वविशिष्टार्थसंस्कारकावित्यर्थेन तत्तदपूर्वसाधनत्वस्य आग्नेयादिषु प्रत्येकवृत्तितया प्रत्येकमेव देवतात्वात् प्रकृतौ दैवादपूर्वसाधनत्वविशिष्टार्थस्याग्नेयादिष्वेव वृत्तेः तद्वाचकः साधारणः त्यागकाले पर्वशब्दः, मन्त्रयोश्चामावास्यापूर्णमासशब्दौ प्रयुक्तौ। विकृतौ चापूर्वसाधनत्वविशिष्टसौर्यरूपार्थप्रतिपादने पर्वादिपदानामशक्तेः सौर्यादिपदप्रक्षेपणोहसिद्धेरतिदेशः पार्वणहोमयोरनिवार्य एवेति।

देशोपपत्तेः। इतरथा स्वाहाकारपशुपुरोडाशादावप्यग्नीषोमत्वादिनैव देवतात्वापत्तेस्सौर्यसवनीयादौ तेषामतिदेशानापत्तिः। इदं च सर्वं तद्धितस्य देवताविधायकत्वमङ्गीकृत्योक्तम्।

वस्तुतस्तु—विशिष्टविधौ गौरवापत्तेर्हविस्समभिव्याहाराभावेन च देवतातद्धितत्वानिश्चयात् पर्वणि भवौ पर्वसंस्कारकौ चेत्येवमपि तद्धितोपपत्तेर्योग्यतयाऽपि तदवधारणायोगात् नायं देवतातद्धितः। मन्त्रवर्णादेव तु क्रमावगताङ्गभावाद्देवताप्राप्तिसिद्धेः पार्वणपदं नामधेयमेव।

अत एव याज्ञिकानां 'ऋषभं वाजिनं वयम्, पूर्णमासं यजामहे, अमावास्या सुभगा सुशेवा' इतिमन्त्रगतपूर्णमासामावास्याशब्दयोरेव त्यागवेलायामुद्देशः न तु पर्वशब्दस्य। एवं च तद्गतपूर्णमासामावास्याशब्दयोः काले प्रयोगाभावात् मन्त्रार्थपर्यालोचनया कर्मपरत्वावगतेरेकैकस्याग्नेयादित्रिकसंस्कारकत्वेऽपि पूर्वोक्तरीत्या पशुपुरोडाशादिवत् सौर्यादावति-

---

यदि तूपस्थापकपदार्थानुरोधात् कल्प्यमानोद्देश्यवाचकपदार्थस्य तादृशस्यैवोद्देश्यत्वं देवतात्वञ्चेत्याग्रहः तदा विपक्षे बाधकमाह—इतरथेति। अधुना पर्वपदार्थस्य देवतात्वमेव नास्तीति दूरे पार्वणपदस्य देवतापरत्वमिति कथनव्याजेन क्लृप्तोपस्थापकपार्वणपदार्थानुरोधेन उद्देश्यत्वकल्पनमपि तादृशस्यैवेति प्राचामभिप्रेतम्। तद्दूषयितुमुपक्रमते—वस्तुतस्त्विति।

यत्तु प्रकाशकारैरुक्तं मन्त्रवर्णापेक्षया विरोधे तद्धितस्य प्राबल्यात् तद्धितेनैव देवतासमर्पणं याज्ञिकसंमतं मन्त्रवर्णस्य देवतासमर्पकत्वमिति, तदयुक्तमिति सूचयितुं देवतातद्धितनिश्चयाभावपूर्वकमविरोधं दर्शयति—विशिष्टविधाविति। मन्त्रार्थपर्यालोचनयेति'। मन्त्रवर्णयोः पूर्णमासामावास्ययोः यष्टव्यत्वप्रतीतेः तयोश्चाग्न्यादिवत् देवतात्वेनाप्रसिद्धयोः यागरूपेणैव यष्टव्यत्वम्। अत एव फलदातृत्वेन प्रसिद्धत्वात् हेतुत्वादिरूपकेण प्रकाशनमुपपद्यते अतः कर्मपरत्वावसानमित्यर्थः। एकैकस्येति। पार्वणहोमान्तर्गतोद्देशांशस्येत्यर्थः। आग्नेयादित्रिकसंस्कारकत्वेऽपीति। अपिशब्देनायमर्थः सूचितः। सत्यं मन्त्रान्तर्गतं अमावास्यापदं पूर्णमासपदञ्च यद्यपि साहित्यावच्छिन्नयागत्रिकपरम्। तथापि मन्त्रवर्णकल्प्यं देवतात्वं उद्देश्यत्वानुरोधात् प्रत्येकमेव कल्प्यते लाघवात् अतो न तावत् समुदायस्य देवतात्वं क्लृप्तम्, येन क्लृप्तोपस्थापकार्थानुरोधात् साहित्यावच्छिन्नस्य उद्देश्यत्वं कल्प्यत इति।

ननु यत्र प्रथमत एव देवतात्वं कल्प्यं तत्रास्तु नाम उत्तरकालीनकल्प्यमानोद्देश्यत्वानुरोधात् प्रत्येकमेव तत्, यथा प्रकृते। यत्र तु पशुपुरोडाशादौ प्रत्यक्षतद्धितेन त्यागांशे अग्नीषोम-

देशे बाधकाभावः। न ह्युद्देशांशस्य प्रयोजकसत्त्वे परप्रयुक्तदेवतोपजीवित्यागांशे स्वरूपेणाग्नेयादेर्देवतात्वं सम्भवति। अतो येनैवापूर्वसाधनविशेषरूपेणोद्देशांशं प्रति संस्कार्यता तेनैव रूपेण त्यागांशं प्रति देवतात्वमिति युक्त एव पशुपुरोडाशादेरिव पार्वणहोमयोरप्यतिदेशः। एवं वैमृधेऽपि येनैव रूपेणापूर्वसाधनविशेषत्वादिना

---

त्वादिना स्वरूपेण तत्कल्पनं, तत्र उद्देश्यत्वमपि तदनुरोधेनैव कल्पनीयमापतेत्। तथाचाग्नीषोमस्वरूपदेवताकत्यागांशस्य विकृतावसम्भवे कथं पशुपुरोडाशस्याप्यतिदेशः सिध्येदित्याशङ्कानिराकरणायाह—नहीति। अयमर्थः—यथाऽवघाते वैतुष्यमेव दृष्टं प्रयोजनं न तु नियमादृष्टं तथैव पार्वणहोमप्रयोजकत्वं देवताविषयकस्मरणरूपदृष्टसंस्कारस्यैव नतु त्यागजन्यादृष्टस्येत्युद्देशांशस्य सन्निपत्योपकारकत्वलाभार्थं देवतार्थत्वात् देवतासंस्कारप्रयुक्तोद्देशांशीययैव देवतया त्यागांशेऽपि प्रसङ्गेनोपकारसिद्धेः, न स्वातन्त्र्येण देवताप्रयोजकत्वं कल्पनीयम् गौरवापत्तेः। उद्देशांशे च देवतोद्देश्यत्वसामर्थ्यात् अपूर्वसाधनत्वावच्छिन्नत्वरूपेणैवेति त्यागांशेऽपि तेनैव रूपेण देवतात्वं युक्तं नाग्नीषोमत्वादिरूपेणेति न बाधकम्। उद्देशांशस्य प्रयोजकस्य सत्वे इति मूले उद्देशांशस्य प्रयोजकस्येति व्यधिकरणषष्ठ्यौ। तथाच त्यागांशस्त्वेतादृशस्थले परप्रयुक्तदेवतोपजीवी। सा चापूर्वप्रयुक्ताग्नेयादियागरूपा। सैव चोद्देशांशस्य संस्कार्यत्वेन प्रयोजिकेत्युद्देशांशस्य यत्प्रयोजकं अपूर्वसाधनत्वावछिन्नत्वरूपेण संस्कार्यदेवतास्वरूपं तत्सत्वे सैव परप्रयुक्ता देवता लभ्येति नान्यरूपेणाग्नेयादीनां त्यागांशे देवतात्वमित्यर्थः। अतः पार्वणहोमयोरतिदेशो नासुलभ इत्युपसंहरति— अत इति। किञ्च यदि साहित्यावच्छिन्नाग्नेयादित्रिकस्य अत्र स्वरूपेणैव देवतात्वं, तस्य च विकृतौ अनभीष्टव्यत्वात् अनतिदेश इत्युच्यते, तर्हि प्रकृतावेवासोमयाजिनः सान्नाय्यादेरनभीष्टव्यत्वेन संस्कार्यस्य समुदायस्य अभावात् असोमयाज्यधिकारिकदर्शपूर्णमासप्रयोगे पार्वणहोमाननुष्ठानापत्तिः। देवतासंस्कारके पशुपुरोडाशादौ अग्नीषोमादेः देवतात्वेनानुभूतस्य देवतात्वविषयकस्मरणरूपदृष्टसंस्कारजननवत् इहाग्नेयादियागानां पूर्वं देवतात्वेनानुभवात् तेन रूपेण स्मरणरूपदृष्टसंस्कारानुत्पत्तावपि अनुष्ठानविषयत्वेन रूपेण पूर्वमनुभूतस्य तेनैव रूपेण स्मरणरूपदृष्टसंस्कारजननात् प्राक् साहित्यावच्छिन्नस्य अभीष्टव्यत्वावश्यकत्वात्। अतः साहित्याविवक्षासिद्धान्तेऽपि आवश्यकेन (न्यायेन) तेनैव न्यायेनाग्नीषोमत्वादेरिव आग्नेयत्वादिस्वरूपाविवक्षापि न कथं सिद्ध्येत्। अतश्चाग्नेयत्वादिस्वरूपस्य साहित्यस्य चाविवक्षायां यद्यप्यपूर्वसाधनत्वावच्छिन्नत्वेन रूपेण वस्तुगत्या आग्नेयादीनामेव देवतात्वात् तद्वाचकः प्रत्येकं व्यस्तः प्रयोग एव त्यागकाले आपद्यते, तथापि मन्त्रवर्णे कल्पके अमावास्यापूर्णमासशब्दाभ्यामेव तेषामभिधानात्

**पौर्णमास्या उद्देश्यता तेनैव रूपेणोत्तरकालप्रतियोगित्वं** दृष्टार्थत्वात्, **न तु समुदिताग्नेय-त्वादिरूपेणेति उद्देश्यतावच्छेदककोटौ** साहित्यस्याग्नेयत्वादेश्चाविवक्षितत्वाद्युक्त **एव वैमृधस्यापि** विकृतावतिदेशः।

अस्तु वा **तत्रोद्देश्यतावच्छेदककोटौ** साहित्याद्यविवक्षायामप्युत्तरकालप्रतियोगित्वे **उपादेयत्वात् 'दर्शपूर्णमासाभ्यामिष्ट्वा' इतिवत् विवक्षा। अतश्च सोमे** विकृत्युत्तरत्व प्रसङ्गवत् **सौर्यादावपि पौर्णमास्युत्तरत्वाभावात् नातिदेशप्रसङ्गः। अन्वारम्भणीयायां तु साहित्यादेरविवक्षा दर्शपूर्णमासत्वस्योद्देश्यतावच्छेदककोटिप्रविष्टत्वाभावादिति युक्त-स्तस्या अतिदेशः। प्रकृते पार्वणहोमयोस्तु आश्रयिकर्मत्वेन परप्रयुक्तदेवतोपजीवित्वात् स्वरूपेणाग्न्यादीनां देवतात्वानुपपत्तेर्युक्त एवातिदेशः।**

**यत्तु समुदायापूर्वप्रयुक्तत्वात् पार्वणहोमयोर्विकृतौ च सौर्यादौ तदभावादनति-देश इति;** तन्न — **एवमपि वैश्वदेवादिपर्वणि तत्सत्वेनातिदेशापत्तेः।**

---

विधिगतशब्दस्यैव त्यागकाले प्रयोगनियमात् अमावास्यापूर्णमासकालसम्बन्धवत्त्वप्रवृत्तिनिमित्तस्यापि सम्भवेन प्रत्येकं आग्नेयादिवाचकत्वसामर्थ्याच्च अमावास्यापूर्णमासशब्दप्रयोग एव त्यागकाले नानुपपन्न इति ध्येयम्। **दृष्टार्थत्वादिति।** प्रत्येकमेवाग्नेयादीनामुद्देश्यत्वेन तत्तद्यागसमाप्त्युत्तर-कालस्यैव बोधनात्, तदनुरोधेन तत्तद्यागानन्तरमेव वैमृधानुष्ठानात्, अङ्गप्रधानयोः अव्यवहित-प्रत्यासत्तिरूपदृष्टप्रयोजनलाभादित्यर्थः। अस्मिंश्च पक्षे प्रतिप्रधानं वैमृधावृत्त्यापत्तेः विकृतौ याज्ञिकानां वैमृधानुष्ठानाचाराभावाच्चापरितुष्य पक्षांतरमाह — **अस्तुवेति। विकृत्युत्त-रत्वप्रसङ्गवदिति।** यथा दर्शपूर्णमासाभ्यामिष्ट्वेत्यत्र उत्तरकालप्रतियोगित्वेनान्वितदर्शपूर्णमास-पदार्थस्य दर्शपूर्णमासत्वस्य विवक्षितत्वात् न दर्शपूर्णमासविकृत्युत्तरत्वप्रसङ्गो भवति सोमे, एवमिहापि उत्तरकालप्रतियोगित्वेनान्वितस्य पौर्णमासीत्वस्य साहित्यस्य च विवक्षणात्, विकृतौ तदुत्तरकालाभावान्नानुष्ठानप्रसङ्गः प्रकृतौ प्रतिप्रधानमावृत्त्यापत्तिः वैमृधस्येति भावः।

किं पार्वणहोमयोः सन्निपत्योपकारकयोः उद्देश्यस्वरूपे आनर्थक्यपरिहारायापूर्वसाधनत्व-लक्षणायां समुदायवाचकपदस्य लक्षकस्योपस्थापकस्य सत्वात् तत्समुदायापूर्वसाधनत्वलक्षणया समुदायापूर्वार्थत्वमुच्यते; अथवा प्रयाजादिसाधारण्येनैव प्रकरणात् समुदायापूर्वार्थत्वम्? तत्राद्ये दूषणमाह—**तन्नेति।** एतेन तन्त्ररत्नकृता यत्सिद्धान्ते उक्तं 'समुदायाभीज्यैवेयं तत्सं-स्कारार्था। न च सौर्यादिष्वयं समुदायोऽस्ति; नापि समुदायविकारत्वं तेषामस्ति, समुदायाधि-विकारत्वात्। नापि समुदायकार्यापन्नं अर्थान्तरं तेष्वस्ति येनोहेनापि प्रवृत्तिः स्यादि'ति,

प्रयाजादेरपि तत्प्रयुक्तत्वेन सौर्यादावनतिदेशापत्तेश्च । न हि प्रयाजादीनां प्रकृतौ परमापूर्वप्रयुक्तत्वं द्विःकरणानापत्तेः । अपि तु समुदायापूर्वप्रयुक्तत्वमेव ।

अथ तस्य प्रयोजकता न समुदायापूर्वत्वेन, अपि तु उत्पत्त्यपूर्वाव्यवहितापूर्वत्वेनेति तेषां सौर्यादावतिदेशः, ततः पार्वणहोमयोरपि तुल्यमिति प्राप्ते—

**सत्यमेवं, तथाऽपि केषामपि याज्ञिकानां विकृतौ पार्वणहोमाननुष्ठानात् आचारस्यैव प्रकृतौ साहित्यस्याग्नेयत्वाद्युद्देश्यतावच्छेदककोटौ विवक्षा न तु व्रीहित्वादिवदविवक्षा इत्येवंविधतात्पर्यग्राहकत्वावसायात् तस्य च विकृतावभावादनतिदेशः पार्वणहोमादीनाम् । अत एव नाचारेण तत्तद्विकृतिपर्युदासरूपेणानन्तश्रुतिकल्पना, गौरवापत्तेः । सूत्राण्यप्याचारमेवोररीकृत्य समुदायार्थतारूपहेतुपरतया व्याख्येयानि ॥ १७ ॥**

---

तदपास्तम्; सौर्यादौ समुदायाभावेनानतिदेशोपपत्तावपि चातुर्मास्यान्तर्गतवैश्वदेवादिपर्वसु समुदायजन्यापूर्वसत्त्वात् अतिदेशापत्तेरनिवार्यत्वात् । द्वितीये दूषणमाह—प्रयाजादेरपीति । वस्तुगत्या तत्र तत्र साधितं प्रयाजादीनामुत्पत्त्यपूर्वार्थत्वं युक्तमप्यनङ्गीकृत्य समुदायापूर्वार्थत्वं ब्रूषे, तर्हि येनैव प्रकारेण विकृतौ प्रयाजादीनामतिदेशः तेनैव पार्वणहोमयोरप्यतिदेशापत्तिरित्युपपादयति—नहीति । एकवचनान्ता.............. .. । अत्र सत्यमेवमित्यारभ्य सिद्धान्तग्रन्थः स्पष्टार्थः । वस्तुतस्तु कल्पकमन्त्रवर्णे एकवचनान्तसमुदायवाचकपदद्वयानुरोधेन कल्प्यमानदेवतात्वं समुदायस्यैवेति तद्वाचकपदान्तरकल्पनया समुदायसंस्कारकत्वेऽपि आनर्थक्यपरिहारार्थं अपूर्वसाधनत्वलक्षणायां उपस्थितत्वात् तज्जन्यसमुदायापूर्वसाधनत्वलक्षणैव युक्ता आश्रयितुमिति समुदायापूर्वप्रयुक्तत्वमेव । प्रयाजादीनान्तु समुदायापूर्वोपस्थापकाभावात् उत्पत्त्यपूर्वार्थत्वमेवेत्येवमेवात्र युक्त्या सिद्धान्तकरणं युक्तम् । वैश्वदेवादिपर्वसु पार्वणहोमातिदेशापत्तिस्तु इष्टापत्त्यैव परिहर्तव्या । अत एव तन्त्ररत्ने 'नापि समुदायकार्यापन्नं अर्थान्तरेष्वस्ति येनोहेनापि प्रवृत्तिः स्यात्' इति पूर्वलिखितग्रन्थेन यत्र समुदायकार्यापन्नमर्थान्तरमस्ति तत्रोहेनातिदेश इति सूचितम् । अत एव पौर्णमासत्रिकस्थानापतिताध्वरकल्पेष्टिगतत्रिकत्रये समुदायापूर्वस्य प्रयोजकस्य सत्त्वात्, सूक्तवाकोत्तमप्रयाजस्विष्टकृन्न्यायेन त्रिकसंस्कारार्थं भवत्येव पार्वणहोमातिदेश इति केचिन्मतं लघुवार्त्तिकटीकायामत्रोपन्यस्तम् । याज्ञिकानां वैश्वदेवादिपर्वसु पार्वणहोमानुष्ठानाचारस्तु मीमांसान्यायविरुद्ध एवाङ्गीकर्तव्यः । एवञ्च सकलसूत्रभाष्यवार्त्तिकादिग्रन्थानुगुण्यं लभ्यते इति सुधीभिरवधेयम् ।

## (१८)—उभयोरविशेषात् ॥ ५७ ॥ यदभीज्या वा तद्विषयौ ॥ ५८ ॥

सङ्ख्यया कर्मभेदावगतेरेकवाक्योपात्तकर्मद्वयस्यापि सन्निधानादवान्तरप्रकरणाद्वा एकैकमन्त्रं प्रति शेषित्वावगतेः कर्मद्वयस्यापि पूर्णमासदेवताकतया तत्संस्कारकत्वं अमावास्यादेवताकतया चामावास्यासंस्कारकत्वं प्रधानद्वयानुरोधेनैव मन्त्रद्वयस्यापि

---

अत्र च शब्दस्य देवतात्वमते पार्वणहोमयोरपि पर्वादिशब्दानामिव[मेव] देवतात्वापत्त्या तदर्थस्याग्नेयादेः देवतात्वाभावेन समुदायरूपार्थसंस्कारकत्वाभावात् विकृतावपि पर्वादिशब्दैः उद्देशांशासम्भवात् अतिदेशापत्तिर्दुर्वारेति सकलैतदधिकरणसूत्रभाष्यादिग्रन्थासामञ्जस्यं स्फुटमिति देवताधिकरणे भाट्टालङ्कारकृता उक्तम् तत् पूर्वं तद्विचारं [रे] मया परिहृतमपि प्रयाजेपीति चे दित्यधिकरणे (९–२–१९) पूज्यपादैरप्याशङ्काव्याजेन परिहरिष्यत इति दिक्।

---

उभयोरविशेषात्।

अत्र भाष्यकारेण 'उभयोरविशेषात्, यदभीज्या वा तद्विषयौ' इति पूर्वोत्तरसूत्राभ्यां किमुभयोर्होमयोः उभयोरपि पर्वणोः प्रवृत्तिः, उत यदभीज्या यस्मिन् पर्वणि तत्रैव तस्या इति सन्दिह्य पूर्वपक्षसिद्धान्तपक्षावुद्भाव्याधिकरणान्तररचना कृता। साऽयुक्ता। पूर्वाधिकरणे वाक्यात् तत्तद्यागसमुदायसंस्कारकौ होमाविति स्थापिते अन्यतरत्र संस्कार्याभावात् एकतरस्या-प्रवृत्तिरित्यर्थस्य सिद्धेः, प्रकरणाविशेषात् एकैकस्योभयाङ्गत्वपूर्वपक्षोत्थानासम्भवात्। अतो नाधिकरणान्तरम्। अपि तु पूर्वाधिकरणप्रयोजनकथनपरत्वमेव सूत्रद्वयस्य युक्तम्। पूर्वपक्षे कालपरत्वादुभयोः पर्वणोः प्रवृत्तिः, समुदायपरपौर्णमास्यमावास्याशब्दरूपलिङ्गेन विशेषा-सिद्धेरविशेषात्। सिद्धान्ते तु समुदायसंस्कारकत्वात् प्रभवति व्यवस्थाकरणे पौर्णमास्यमावास्या लिङ्गम्। अतो यदभीज्याविति तन्त्ररत्ने उक्तम्। तत्र प्रयोजनस्य सूत्रद्वयाभावेऽपि अन्यत्रैवोपपादयितुं शक्यत्वेन सूत्रद्वयवैयर्थ्यापत्तेः स्फुटत्वात् विशेषशङ्कां दर्शयति—**सङ्ख्यया कर्मभेदेति**। यदि ह्यत्र पर्वणोर्देवतात्वं तद्धितश्रुत्या भवेत् तदा पार्वणाविति तद्धितविग्रहस्य, पर्वणी देवते ययोः इत्येवमेव औत्सर्गिकन्यायेन करणात् समसङ्ख्यन्यायेन ऐकैकहोमे एकैकस्यैव पर्वणो देवतात्वापत्त्या उभयोरपि पर्वणोः (न) होमद्वयानुष्ठानपूर्वपक्षस्य प्रस्तुतस्यानुत्थानापत्तेः देवतातद्धितपक्षमुपेक्ष्य मन्त्रवर्णकल्प्यैवात्र देवतेति पक्षाश्रयणेन पूर्वपक्षमारभते—**एकैकमन्त्र प्रतीति**। तथा च एकैकस्मिन् होमे मन्त्रद्वयं अङ्गत्वेन कल्प्यमाने देवताद्वयमपि समुच्चयेन

**तत्र तत्रावृत्तिः।** एकपदोपादानावगत **कर्मद्वयसाहित्यवत्त्वाच्च**[1] **सकृत्स्मृतस्यापि पुनस्स्मरणं 'तां चतुर्भिः' इतिवन्नानुपपन्नम्। न ह्यत्र यथाक्रमं पाठः येनैकस्य कर्मण** एक एक **मन्त्रो भवेत्।** एकपदोपादानात्तु **उभयोरप्युभयाङ्गत्वम्।** अत एव नात्र **सूक्तवाकविभागन्याय इति प्राप्ते—**

**समसङ्ख्याङ्गप्रधानविषये यथाक्रममेव सम्बन्ध इति न्यायस्यौत्सर्गिकत्वात् एकस्य प्रधानस्यैकेनैव मन्त्रेण निराकांक्षत्वाच्च अश्रुतमन्त्रावृत्तिकल्पने पुनस्स्मारकाकांक्षाकल्पने च प्रमाणाभावादेकस्यैकसंस्कारार्थत्वमेवेति** प्रयोजनवशाद्विभागः ॥ १८ ॥

---

एकैकहोमाङ्गमित्येकवारं मन्त्रद्वयसहितं अमावास्यापौर्णमास्युभयदेवताकं होममनुष्ठेयं कृत्वा अपरहोमस्यापि तथैवानुष्ठानमिति शास्त्रार्थः। प्रतिप्रधानं गुणावृत्तिन्यायेन मन्त्रद्वयावृत्तौ बाधकाभावात्। **यद्यपि** पौर्णमास्यां अमावास्याकर्मणोऽभावात् अमावास्यायाञ्च पौर्णमासिककर्मणोऽभावात् न होमद्वयानुष्ठानं उभयसंस्कारकं सम्भवति। **तथापि** एकत्रोपयुक्तसंस्कारकतया अपरत्र उपयोक्ष्यमाणसंस्कारकतया होमद्वयानुष्ठाने नानुपपत्तिरित्याशयः। न च समन्त्रकैकहोमीय—देवतोद्देशांशेन आग्नेयादियागषट्कस्मरणस्य सिद्धेः पुनस्तत्स्मरणापेक्षाभावेऽपि अर्थात् [व्यर्थं] द्वितीयहोमानुष्ठानमित्याशङ्कानिरासायाह—**एवपदोपादानेति**। यथैव एकेन मन्त्रेण अभ्र्यादानप्रकाशनोपपत्तेः इतरमन्त्रवैयर्थ्यापत्तौ 'तां चतुर्भिरादत्ते' इति मन्त्रचतुष्टयसमुच्चयफलकमन्त्रविनियोगविधिबलात् स्मृतस्यापि पुनरितरमन्त्रैरपि स्मरणं कर्तव्यमभ्युदयशिरस्कत्वाय इत्येवं परिहारवत्, इहापि एकपार्वणपदोपादानावगतसमुच्चयानुरोधेन पूर्वहोमीयोद्देशांशेन स्मृतस्यापि द्वितीयहोमोद्देशांशेनापि पुनःस्मरणेन वैयर्थ्यपरिहारोपपत्तेः न किञ्चित् बाधकमित्यर्थः। **एकपदोपादानात्त्विति**। अयमर्थः—पार्वणपदं तावत् उभयोर्होमयोः पर्वदेवताकत्वयोगेन नामधेयम्। पर्वत्वञ्चामावास्यापौर्णमासीसाधारणमित्येकेन पर्वपदेनोभयोरुपादानात् पर्वसामान्यदेवताकत्वरूपज्ञापकबलात् मन्त्रद्वयस्यापि एकैकहोमाङ्गत्वे निश्चिते तत्कल्प्यदेवतापि एकैकहोमे समुच्चितैवेति उभयोरप्युभयाङ्गत्वमिति। एतेन उभयोर्मन्त्रयोः अवान्तरप्रकरणाविशेषात् उभयहोमाङ्गत्वमित्येवं पूर्वपक्षसूत्रं व्याख्यातं भवति। **अत एव नात्रेति**। सूक्तवाकपदस्य योगरूढत्वेन यत्र यावत्यः प्राकृत्यो वैकृत्यो वा देवता इष्टाः तत्प्रकाशकत्वलिङ्गानुरोधेन तत्र तावानेव सूक्तवाक इति न्यायेन विभज्य विनियोगः कृत्स्नोपदेशादिति तार्तीयद्वितीयपादाधिकरणे साधितः; तद्वदिह एकैकस्मिन् कर्मणि मन्त्रद्वयाङ्गत्वेऽपि लिङ्गाविरोधोपपत्तेः न पौर्णमास्यनुष्ठेयहोमद्वये पूर्णमासमन्त्रः, अमावास्यानुष्ठेयहोमद्वये अमावास्यामन्त्र इत्येवं विभाग इत्यर्थः। **प्रयोजनवशादिति**। तत्तत्पर्व-

---

1. B. साहित्यबलाच्च

## (१९)—प्रयोजेऽपीति चेत् ॥ ५९ ॥ नाचोदितत्वात् ॥ ६० ॥

**समिदादीनां चतुर्णां प्रयाजानां यदि समिदादिपदैर्द्वितीयान्तैः 'विष्णुं यजति' इतिवत् देवताविधिः यदि वा विशिष्टविधिगौरवापत्तेर्मन्त्रवर्णादेव समिदादिदेवताविधिः, उत्पत्तिवाक्यस्थं तु समिदादिपदं देवतानुवादो नामधेयमेव वा,** सर्वथा **सन्निपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव** पार्वणहोमस्वाहाकारो**क्तमानुयाजादिवदिति । न**

---

साध्यप्रधानानुष्ठाने तत्तत्प्रधानानामपेक्षितस्मरणरूपप्रयोजनवशादित्यर्थः । एतेन आगामिपर्वसाध्यप्रधानस्मरणस्य प्रयोजनत्वं निरस्तम् । एवमत्र स्रुवेण पार्वणहोमौ जुहोतीति भाष्यलिखितवाक्यस्योत्पत्तिविधित्वमङ्गीकृत्य एतदधिकरणप्रवृत्तिर्दर्शिता । यदा तु तैत्तिरीयब्राह्मणे तादृशोत्पत्तिवाक्यस्यानुपलम्भात् स्वाहान्तमन्त्रद्वयाम्नानबलादेव आकूत्यादिहोमविधीनामिव इह होमविधिकल्पनं तदा नियतमन्त्रकल्प्यविधिना नियतमन्त्रकल्प्यतत्तद्देवत्यत्वस्यैव निश्चयात् एकैकमन्त्रस्य एकैकहोमाङ्गत्वमेवेति नैतत्पूर्वोत्तरपक्षयोः प्रवृत्तिरिति ध्येयम् ।

---

प्रयाजेऽपीति चेत् ।

अत्र प्राचीनैः द्वितीयान्तसमिदादिपदानां 'विष्णुं यजति' इत्यादौ विष्ण्वादिपदानामिव देवतापरत्वमङ्गीकृत्य प्रकृतक्रतुसम्बन्धिनां समिदादीनामुद्देश्यत्वेन संस्कार्यत्वात् तत्संस्कारकत्वमेव प्रयाजादीनामिति पूर्वपक्षं कृत्वा उद्देशपूर्वकद्रव्यत्यागे हि यागपदार्थे देवतायाः कर्मत्वासम्भवात् विशेषणभूतोद्देशांशनिरूपितं कर्मत्वं विशेष्यभूते त्यागेऽप्युपचर्यते इति लक्षणयैव 'विष्णुं यजति' इत्यादौ द्वितीयायाः सम्प्रदानत्वैकदेशदेवतापरत्वमङ्गीक्रियते, विष्ण्वादिपदानां अत्यन्तरूढत्वेन कर्मनामत्वासम्भवेन अगत्या तत्स्वीकारात् । द्वितीयान्तत्वादेव करणभूतेन यजिना सामानाधिकरण्याभावेन नामत्वानुपपत्तेश्च । अस्तु वा मन्त्रवर्णप्राप्तविष्ण्वादिपदानुवादो नामधेयं वा विष्ण्वादिपदं, असिद्धस्य यागस्य करणत्वानुपपत्तेः अर्थाक्षिप्तकर्मत्वस्यापि यागे सत्त्वात्, तदादायापि द्वितीयान्तविष्ण्वादिपदानां यजिसामानाधिकरण्यमुपपत्स्यते । एवमिहापि विधिगौरवापत्तेः मन्त्रवर्णप्राप्तसमिदादिदेवतानुवादो नामधेयं वा समिदादिपदमिति समिदादिपदार्थस्योद्देश्यत्वाभावात् संस्कार्यत्वानुपपत्तेः आरादुपकारकत्वमेव प्रयाजादीनामिति सिद्धान्तितम् । तदेतत्सिद्धान्तकरणमयुक्तमिति सूचयन् पूर्वपक्षमारभते —**सर्वथेति। पार्वणहोमस्वाहाकारेति।** यथैव पार्वणहोमादिषु मन्त्रवर्णकल्प्यदेवताकेषु देवतावाचकपदान्तरकल्पनया तत्संस्कारकत्वं तद्वत् इहापि तदुपपत्तेः तुल्यत्वात् संस्कारकत्वं नायुक्तम् ।

च समिदादीनामुपयोगाभावः, वेदे सर्वत्र समिदादिपदानामग्निसामानाधिकरण्यदर्शने-नाग्नये उपयोगसम्भवात्। सन्निन्मात्रस्यैव वा समिन्धनादावुपयोगसत्त्वेन तस्यैव सन्निपत्योपकारकत्वमिति प्राप्ते—

सत्यपि वेदे समिदादिपदानामग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादिपदैस्तत्तत्प्रकाशनानुपपत्तिः। शब्दस्य देवतात्वेन तद्भेदे पदान्तरप्रयोगानुपपत्तेः। न च पूर्णमासादिशब्दस्य पार्वणहोमयोर्देवतात्वेऽपि तदर्थस्याप्याग्नेयादेरुद्देशांशविषयशब्दप्रतिपाद्यत्वसम्बन्धेनोद्देश्यसम्बन्धित्वात् पार्वणहोमसंकार्यत्ववदिहापि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याग्नेस्संस्कार्यत्वोपपत्तिरिति वाच्यं, तथात्वेऽपि 'समिधो अग्न आज्यस्य वियन्तु। तनूनपादग्न आज्यस्य वेतु' इत्यादिमन्त्रवर्णेष्वग्नेस्सम्बोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियान्वयप्रतीतेस्समिदादिपदस्याग्निप्रतिपादकत्वाभावात्, अग्निसंस्कारकत्वे पशावतिदेशानुपपत्तेश्च।

यत्तु इतरप्रयाजानामाराडुपकारकत्वेऽपि समिद्यागस्य समिन्धनाङ्गभूतसमित्संकारकत्वमिति। तन्न। तथात्वे 'यो वै प्रयाजानां मिथुनं वेद, स समिधो बह्वीरिव यजति इति लिङ्गानुपपत्तेः। अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेनारोपितं बहुत्वमिति सूच्यते। न च तत्समिन्धनाङ्गसमित्सु युज्यते, वस्तुत एव तासां बहुत्वात्। आरा-

---

अत्र च स्वाहाकारोत्तमानूयाजदृष्टान्तद्वयेन उभयत्रोद्देशांशस्य दृष्टार्थत्वेन एकार्थत्वात् विकल्पप्राप्तावपि त्यागांशस्य अदृष्टार्थत्वेन समुच्चयस्तयोर्भवति तद्वदिहापि पञ्चानामपि प्रयाजानां पूर्वपक्षेऽपि समुच्चय एवेति सूचिते सति एते यागाः वैकल्पिका विधीयन्ते इति पूर्वपक्षे प्रकाशकाराणां यद्विकल्पाभिधानं तत्परास्तम्। समुच्चयविधिबलात् एकदा स्मृतस्याग्निरूपार्थस्य पुनःद्वितीयमन्त्रेण स्मृतावेवादृष्टसिद्धिकल्पनवत् इहापि पञ्चप्रयाजाः चतुर्दश पौर्णमास्यामित्यादिसमुच्चयज्ञापकबलात् पुनः स्मरणस्य दृष्टफलकत्वकल्पनोपपत्तेश्च; अतो न विकल्प इति भावः। **तस्यैवेति**। समिद्यागमात्रस्यैवेत्यर्थः। शक्यते तु बर्हिः प्रयाजस्याप्येवंरीत्या सन्निपत्योपकारकत्वम्। ननु समिदादिपदानां अग्निप्रतिपादकत्वाभावे प्रयाजान्मे अनूयाजांश्चेत्यादिना अग्नेर्वरप्रार्थनवरदानाख्यापुरस्सरं 'आग्नेया वै प्रयाजाः आग्नेया अनूयाजा' इत्याद्यर्थवादेषु प्रयाजानां अग्निदेवत्यत्वकथनानुपपत्तेः पाञ्चमिकाधिकरणदर्शितरीत्याऽग्निप्रतिपादकत्वं समिदादिपदानामवश्यं वक्तव्यम्। ततश्च अग्नेरेव समिदादिपदाभिलप्यत्वेन प्रयाजादिषु देवतात्वात् कथं नोपयुक्ताग्न्यादिसंस्कारकत्वमित्याशङ्कानिरासाय बाधकान्तरमाह—**अग्निसंस्कारकत्वे इति**। **पशाविति**। द्विदैवत्ये इति शेषः।

दुपकारकत्वपक्षे तु सत्यपि बहुवचनान्तसमित्पदस्य देवतात्वे प्रातिपदिकसंज्ञाबलेनैक-स्यैव समित्पदार्थस्य सिद्धौ लिङ्गवशेन युक्तो बहुत्वारोपः। तस्मात् चत्वारोऽपि प्रयाजा आरादुपकारका एवेति न विकृतावूहितव्याः ॥ १९ ॥

इति श्रीखण्डदेवविरचितायां
भाट्टदीपिकायां
नवमस्याध्यायस्य
द्वितीयः पादः

---

वस्तुतस्तु अग्न्यादिसंस्कारकत्वपूर्वपक्षे पशौ अतिदेशानापत्तेः इष्टापत्त्यापि परिहर्तुं शक्यत्वात् 'एकादश प्रयाजान् यजति' इत्यादिषु विशिष्टविध्यङ्गीकारे बाधकाभावात् नाग्निसंस्कारकत्वे किञ्चिद्दूषणमस्ति। तथापि 'प्रयाजान्मे' इत्यादिमन्त्रार्थपर्यालोचनायां आग्नेयादियागीयाग्न्या-दिदेवतानां हव्यप्रापणरूपकर्मकरिष्यता अग्निना तेषामाग्नेययागादिसम्बन्ध्यग्न्यादिदेवानां प्रार्थनया वरो याचितः। तैश्च स्वहव्यप्रापणरूपकर्मकर्त्रे अग्नये वरो दत्त इत्यर्थप्रतीत्या वरार्थिवरदा-त्रग्न्योः स्पष्टं भेदावगमात् आग्नेययागसम्बन्ध्यग्न्यपेक्षया हव्यवहनकर्तृभूतस्य भिन्नस्यैवाग्नेः समिदा-दिपदैः देवतात्वं बोध्यते। तस्य च प्रधानयागेऽनुपयोगात्, न तत्संस्कारकत्वम्। न च हव्यवहनकर्तृत्वस्य प्रत्यक्षेणाहवनीय एव दर्शनात्, तस्य चोपयोगित्वेन तत्संस्कारकत्वमेवास्त्विति वाच्यम्। प्रत्यक्षेण अदृष्टविशेषावच्छिन्नज्वलने प्रक्षेपरूपप्रतिपत्तिदर्शनेऽपि तस्य देवताः प्रति हव्यप्रापकत्वे प्रमाणाभावात्। अतः आहवनीये निक्षिप्तं द्रव्यं सारभूतं अन्य एवाग्निः देवतां प्रापयतीति न तत्संस्कारकत्वं प्रयाजादीनामित्येव सिद्धान्तकरणं युक्तमिति द्रष्टव्यम्। स्पष्टार्थम-न्यत। पञ्चमप्रयाजस्य दशमे सन्निपत्योपकारकत्वं वक्ष्यते। तदभिप्रेत्य चत्वार इत्युम्।

इति श्रीशम्भुभट्टविरचितायां
भट्टदीपिकाप्रभावल्यां
नवमाध्यायस्य
द्वितीयः पादः

---

# अथ नवमध्यायस्य तृतीयः पादः.

## (१)—प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥

'अग्नेरहं देवयज्यया' 'व्रीहीणां मेध' इत्यादिमन्त्रेषु समवेतार्थत्वादियुक्तिबलेन अग्निव्रीह्यादिपदानां सौर्यनीवारादिषु द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मक ऊह-

---

अथ तृतीयः पादः

प्रकृतौ यथोत्पत्तिवचनमर्थानाम् ।

पूर्वं सामसंस्कारविषय ऊहश्चिन्तितः । इदानीं मन्त्रविषयः स चिन्त्यते । स च आद्याधिकरणदर्शितरीत्या प्रकृतिलिङ्गादिविषयभेदेनाष्टविधोऽपि षडङ्गत्वेनाप्युपादितः । अर्थप्रकाशनार्था मन्त्राः, न तु उच्चारणमात्रादृष्टार्थाः । तथा मुख्यार्थाभिधायिनः, न तु गौणार्थाः। तथा अपूर्वप्रयुक्ताः, न तु अग्न्यादिस्वरूपप्रयुक्ताः तथा प्रकृतौ समवेतार्थाभिधायिनः, न तु सवित्रादिपदवत् असमवेतार्थाः । तथा अपरार्थाः, न तु यज्ञपतिशब्दवत् परार्थाः । तथा च प्राकृतस्थानापन्नान्यद्रव्यदेवताका विकृतिः तत्र मन्त्रान्तर्गतः प्रकृत्यूहः प्रायेण अर्थाभिधानसंयोगादित्यादिना प्रथमपादे निरूपितः । अल्पशस्त्वदानीं प्रकृत्यूहः । यथा एतदधिकरणे प्रतिनिध्यधिकरणे च । बाहुल्येन तु वचनोहस्त्विदानीं चिन्त्यते ।

तत्र विकृतौ कार्यातिदेशेऽपि तज्जनकशास्त्रस्यैवातिदेशेन यथाम्नातस्यैव मन्त्रस्य प्राप्तेः तदनुरोधेन गौण्यादिपदं पठनीयमिति न्यायसिद्धेऽर्थे स्थिते तत्परिवृत्तिमूललक्षणास्वीकारेऽपि न प्राकृतलक्षणानुरोधेन विकृतौ अविकृतः प्रयोगो युक्तः, स्वायत्ते शब्दप्रवृत्त्या ऐन्द्रीमन्त्रेण गार्हपत्यप्रकाशनस्येव इहापि अग्निपदेन सूर्यप्रकाशनोपपत्तेर्नोह इति पूर्वपक्षः । कार्यातिदेश एव शास्त्रेण, तज्जनकपदार्थातिदेशस्त्वार्थिकः । तथा च सूर्यप्रकाशनरूपकार्येऽतिदिष्टे तत्पृष्ठभावेनार्थादपि नाग्निपदघटितमन्त्रस्य प्राप्तिः; तत्कार्यजननेऽसामर्थ्यात् । अतो मन्त्रस्य अग्निपदघटितस्य प्राप्तेरेवाभावात् नाग्निपदेन गौण्या वृत्त्या सूर्यप्रकाशनं शक्यं कर्तुमित्यर्थात् साधनत्वेन प्राप्यमाणो मन्त्रः अग्निपदस्थाने सूर्यपदप्रक्षेपेणैव प्राप्यत्वेन कल्प्यत इति सिद्ध ऊह इति सिद्धान्तः—इत्यधिकरणरचना प्राचीनैः कृता । साऽयुक्ता । पूर्वत्र

स्सिद्ध एव, प्रोक्षणादिवत्। तद्वशेन पदान्तरप्रक्षेपात्मको भाक्त ऊहः परमर्थसिद्धोऽप्याक्षिप्य समाधीयते। प्रकृतौ हि अग्निब्रीह्यादिपदेनाग्निब्रीह्यादीनां लक्षणयैवापूर्वसाधनत्वेन रूपेण प्रतिपादनात् सूर्यनीवारादीनामपि तेनैव रूपेण प्रकाशनोपपत्तेः न पदान्तरप्रक्षेपो युक्तः। अत एव 'पाशान्' इति बहुवचनान्तरस्य मन्त्रस्य प्रकृताविवैकपाशकायां विकृतावपि लक्षणयैवैकत्वप्रकाशकत्वान्नोहः। न ह्यग्निब्रीह्यादिपदं शक्त्या अपूर्वसाधनीभूतद्रव्यदेवतादिपरं अपि तु लक्षणयैव। 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति न्यायात्। विशेषतश्च शब्दस्यैव देवतात्वात्तस्य चाग्निपदेन लक्षणयैव प्रतीतेस्सूर्यस्यापि तथैव प्रतीतिसिद्धौ नोहसिद्धिरिति प्राप्ते—

सत्यप्यपूर्वसाधनत्वस्य प्रकृतावुद्देश्यतावच्छेदकत्वे अग्निब्रीह्यादिपदेन स्वशक्तिजन्यबोधद्वारा अपूर्वसाधनीभूतद्रव्यदेवतादि संस्कुर्यादित्यर्थोऽवगम्यते। अत एव शक्तिजन्यबोधोऽपि ब्रीहित्वाग्नित्वादिप्रकारक एव न त्वपूर्वसाधनत्वप्रकारकः। लिङ्गकल्प्यश्रुतिवाक्येन तदवच्छिन्नस्योद्देश्यत्वेऽपि मन्त्रान्तर्गत[1] ब्रीह्यग्न्यादिपदे लक्षणायां प्रमाणाभावात्। अत एव तादृशबोधेनापि प्रोक्षणजन्यादृष्टवत् विशेष्य एव द्रव्यदेवतादौ संस्कारो जन्यते न तूद्देश्यतावच्छेदकेऽप्यपूर्वसाधनत्वे। अतश्चोपकारपृष्ठभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतावतिदेशे तत्पृष्ठभावेन प्राप्यमाणस्याग्न्यादिपदस्य सौर्यादौ बाधात् द्वारसिद्ध्यर्थं पदान्तरप्रक्षेपो युक्त एव।

अत एवाग्निब्रीह्यादिपदानामवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ निरुक्तकार्यजनकत्वेन विधानेऽपि तत्कार्याभाव इव तत्कार्यस्य तेन कर्तुमशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोपः।

---

फलदेवतयोश्च (९—१—३) इत्यत्र अग्न्यादिस्वरूपाविवक्षया अपूर्वसाधनीभूतार्थमात्रविवक्षया प्रयुक्ताग्न्यादिपदघटितमन्त्रस्य सूर्यप्रकाशनेऽपि प्राप्तेरुपपादितत्वात्। अनागतावेक्षणन्यायेन दशमाद्याधिकरणसिद्धशास्त्रातिदेशनिरासपूर्वकोपकारमात्रातिदेशं सिद्धीकृत्यैव ऊहाध्यायारम्भस्योपपादनाच्च पूर्वपक्षोत्थानासंभवादित्यभिप्रेत्य आक्षेपसमाधानपरतयाऽधिकरणं विवृण्वन्नाह— अर्थसिद्धोऽप्याक्षिप्येति। अत एव पाशानिति। अत्र च प्रकृतौ बहुवचनान्तमन्त्रपाठानुरोधेन कथञ्चित् छान्दसविधिप्रवृत्तिमूललक्षणास्वीकारेऽपि न प्राकृतलक्षणारोधेन विकृतावविकृतः प्रयोगो युक्तः। स्वायत्ते शब्दप्रयोगे इति न्यायात्; इतरथा धान्यपदगतलक्षणानुरोधेन मांसद्रव्यकविकृतौ मृगपदोहापत्तेः। अतः प्राकृतलक्षणादिवृत्तेःआर्थिक्या अनतिदेशेन विकारप्रकाशनानुरोधेन मांसपदप्रयोगः एवमिहापि एकपाशायामेकत्वप्रकाशनानुरोधेन एकवचनोह एव युक्त इति वदन्ति केचित्। तदग्रे निराकरिष्यते। तत्त्वेनैवेति। अग्नित्वब्रीहित्वादिरूपेणेत्यर्थः। निरुक्तं कार्यं अग्नित्वादिप्रकारकाग्निविशेष्यकशाब्दबोधरूपम् तत्कार्याभावे तस्य अवघातस्य

1. C. ब्रीह्यग्न्यादिप्रकाशकपदे

**तत्र त्वेतावान् विशेषः। कार्याभावे लोप एव, अशक्यत्वे तु तज्जनकोपाया-न्तरानुष्ठानमिति।**

---

कार्यं वैतुष्यं तस्याभावे, कृष्णलचरौ अववातस्य लोपवत् अग्निपदेन सूर्यप्रकाशनरूपकार्यस्य कर्तुमशक्यत्वेऽग्निपदस्य युक्तो लोप इत्यर्थः ।

**अत्रेदमवधेयम्**—यद्यपि लिङ्गकल्प्यश्रुतौ अपूर्वसाधनत्वावच्छिन्नस्यैवाग्नित्वाविवक्षया उद्देश्यत्वं, तथापि मन्त्रगतकरणत्वशक्तिजन्यबोधगतद्वारत्वान्यथानुपपत्त्या प्रकृतौ अग्निरित्याकारका-पूर्वसाधनत्वरूपोद्देश्यतावच्छेदकानालिङ्गिताग्नित्वप्रकारकाग्निविशेष्यकमेव प्रकाशनं मन्त्राणां कार्यमापद्येतेति किं शब्दमात्रेण अग्नित्वाविवक्षया स्यात् । ततश्चानर्थक्यपरिहारार्थमपूर्वसाधन-त्वलक्षणायामपि विधेयसामर्थ्यानुरोधेन उभयत्वाविवक्षायामपि उभयाग्न्यनुगमनस्यैव निमि-त्तत्ववत् इहाप्यग्नित्वाविवक्षायामपि अपूर्वसाधनीभूताग्निविशेषस्यैवोद्देश्यत्वापत्त्या अपूर्वीया-ग्निप्रकाशनस्यैव मन्त्रकार्यत्वान्न सौर्यादौ मन्त्रप्राप्तिः । अत एव प्राकृतकार्याभावे मन्त्रस्य लोप एव न तु तत्कार्यस्याग्निपदेन कर्तुमशक्यत्वे सूर्यादिपदप्रक्षेपरूपोपायानुष्ठानं ; सूर्यप्रकाशन-रूपकार्यस्य प्राकृतमन्त्रजन्यत्वाभावेन प्रयोजकस्यैवासत्वे उपायानुष्ठाने प्रमाणाभावात् । अपि च प्रकृतौ अपूर्वीयदेवताप्रकाशकत्वेन तावत् देवस्य त्वादिपदानां समवेतार्थत्वाभावात्, अयोग्य-त्वाच्च; अपितु अग्न्यादिपदस्यैव; तद्घटितत्वादेव सकले मन्त्रे देवताप्रकाशकत्वव्यवहारः । एवञ्च कदाचिद्भवेदपि सूर्यप्रकाशनं प्राकृतमन्त्रकार्यं तथापि तत्पृष्ठभावेन साधनतया अग्निपदं प्राप्तुं शक्यते वा न वा? आद्ये अग्निपदलोपाप्रसक्त्या उपायान्तरानुष्ठाने प्रयोजनाभावः । **द्वितीये** अयोग्यत्वात् तल्लोपे तद्घटितमन्त्रस्यैवाप्राप्त्या उपायान्तरानुष्ठाने प्रयोजनाभावः । अतः यावत् पठितमन्त्रान्तर्गताग्न्यादिपदं स्वार्थाविवक्षया अपूर्वीयदेवतासामान्यपरं लक्षणया न भवति न तावत् सूर्यादिप्रकाशनं मन्त्राणां सिद्ध्यति । तदसिद्धौ च न मन्त्रप्राप्त्युपजीव्यूहः सिद्ध्यती-त्यवश्यं मन्त्रगताग्न्यादिपदं अपूर्वीयदेवतासामान्यपरं सत् तत्तद्देवताविशेषवाचिपदमात्रोपलक्षण-मङ्गीकृत्य देवतासामान्यात्मना तत्प्रकाशनरूपं कार्यं सौर्येऽप्यस्तीति तद्द्वारा प्रक्षिप्तसूर्यादिपदयुक्तत्वेन प्रकृतावेव सिद्धे मन्त्रे साधनत्वेन प्राप्ते अग्निरूपविशेषार्थप्रकाशनरूपप्रयोजकान्तराभावात् सूर्यरूपार्थविशेषप्रकाशनासामर्थ्याच्चाग्निपदाप्रवृत्तौ, अथवा प्रकृतौ अग्निपदस्यार्थतः प्रयुक्तस्य शास्त्रीयत्वाभावात् विकृतावार्थिकत्वेनानतिदेशादेव निवृत्तेः सूर्यपदप्रक्षेपः सूर्यप्रकाशनानुरोधात् इत्येतावतैवेदानीमूहस्यातिदेशशास्त्रानुरोध्यत्वं, न तु प्राकृतशक्तिजन्यबोधस्य द्वारत्वानुरोध्यत्व-मित्येव **फलदेवतयोरित्यधिकरणे** (९–१–३) प्रागुपपादितं युक्तम् । एवं सत्यपि नाग्निपदस्यैव सूर्यरूपार्थान्तरे लक्षणा तथोपपादितं अधिकरणारम्भे प्राचां मतोपपादने द्रष्टव्यम् ।

यत्तु मूले प्रकृतावेव नावघातस्य तत्त्वेन विधेयता, अपि तु अपूर्वसाधनविशेषोपायत्वेन, इतरथा अदृष्टार्थत्वापत्तेः। अतश्चाग्न्यादिपदस्य स्वरूपेणाविवक्षितत्वात् युक्त एव पदान्तरप्रक्षेप इति। तन्न—तथात्वे प्रकृतावेव व्रीहिपर्यायाणां विदलनादेश्चानुष्ठाने वैगुण्यापत्तेः। येनैव रूपेण मुख्यकार्यं प्रति जनकता तेनैव रूपेण नियमादृष्टं प्रत्यपि जनकत्वौचित्याच्च।

यत्तु अग्निपदेन शब्दरूपदेवताप्रकाशनार्थं लक्षणाऽवश्यंभाव इति; अत्र ब्रूमः, सत्यामपि लक्षणायां येन स्वशक्यवाच्यत्वसम्बन्धेन प्रकृतौ शब्दलक्षणा न तेनैव सम्बन्धेन विकृताविति द्वारभेदाद्युक्तः पदान्तरप्रक्षेपः।

वस्तुतस्तु—शब्दस्य देवतात्वेऽपि अपूर्वीयदेवतारूपशब्दवाच्यत्वसम्बन्धेनार्थस्याप्यपूर्वसम्बन्धात्प्रकाश्यत्वोपपत्तेः न मन्त्रान्तर्गताग्न्यादिशब्दे शब्दलक्षणेति युक्तो

---

अत्र च पदप्रक्षेपरूपोहे विश्वजिन्न्यायेनान्यत्र वेदे पठितस्यैव सूर्यादिपदस्य सस्वरस्यैवात्र प्रक्षेपात् गिरापदस्थानकत्वेन इरापदे गिरापदस्वरस्येव अग्निपदस्वरस्याप्राप्तेः तदुत्तरपठिताक्षरगतस्वरविशेषसिद्ध्यर्थमवश्यं स्वरयुतमेव सूर्याय [इति पदं प्रयोक्तव्यमिति ध्येयम् ।]

अत्र तन्त्ररत्नादौ—अग्निशब्दे अस्ति रूपद्वयं अग्निशब्दत्वं समवेताभिधायित्वञ्च। तत्र यदेव समवेताभिधायिस्वरूपं देवतावाचिरूपेण तस्यैवापूर्वीयदेवताप्रकाशकत्वेन विधानम्। तत्र बहुषु समवेताभिधायिषु सत्सु पदविशेषाम्नानात् काममवघातादिवत् नियमादृष्टमात्रं कल्प्यताम्। तस्मादग्निशब्दस्वरूपस्याविधानात् युक्त एव विकृतावूह इत्युक्तम्। तदनूद्य दूषयति—**यत्तु मूले इति। दलनादेश्चेति**। तुल्यन्यायेन वैतुष्यजनकोपायमात्रत्वेनैव अवघातस्यापि विधेयत्वापत्त्या दलनादेर्निवृत्त्यनापत्तेः तदनुष्ठाने वैगुण्यानापत्तेरित्यर्थः। **येनैव रूपेणेति**। यद्यपूर्वीयदेवताप्रकाशनजनकत्वेन देवतावाचिपदरूपेण विधानं तर्हि नियमादृष्टं प्रत्यपि समवेताभिधायकपदत्वेनैव विधानापत्तेः येन केनचिदपि पर्यायशब्देन मन्त्रपाठेऽपि नियमादृष्टसहितापूर्वीयदेवताप्रकाशनोपपत्तेः नाग्निपदघटित एव नियतः पाठः स्यादित्यर्थः। वस्तुतस्तु देवतावाचिनामपि सूर्यादिपदानां बहूनां विद्यमानत्वेऽपि यदग्निशब्दाम्नानं तन्नेच्छातः; किन्तु यत्र पाठो मन्त्रस्य तत्राग्नेरेवार्थस्य समवायाभिप्रायेण। तत्र यदर्थसमवायाभिप्रायेण एषां वह्न्यादिपदानामनियमेन प्राप्तिः तदर्थविशेषप्रकाशन एव कार्येऽग्निपदाम्नानबलान्नियमः। ततश्च वह्न्यादिपदनिवृत्त्यर्थं पठितमप्यग्निपदं न स्वरूपविवक्षया किन्तु देवतान्तरवाचकपदोपलक्षणत्वेन न तु स्वार्थवाचकपदान्तरोपलक्षणत्वेनेति नापूर्वीयदेवताप्रकाशनमात्रेऽग्निपदस्य देवतावाचि-

व्रीहिपद इव पदान्तरप्रक्षेपः। अत एव सर्वत्रैव तत्प्राप्तौ 'पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत्' इति ऋगक्षरोहपर्युदासोऽपि सङ्गच्छते। अत एव तत्कार्यप्रकाशनार्थं तत्प्रकाशनसमर्थऋगन्तरोह एव कार्यः, वैदिकत्वसामान्यात्, तदसम्भवे लौकिकवाक्योहः। तथा 'अन्वेनं माता मन्यताम्' इत्याद्यध्रिगुप्रैषे मात्रादिशब्दोहप्रतिषेधोऽपि 'न माता वर्धते न पिता' इत्यादिरूपोऽन्यत्रोहलिङ्गम्।

यद्यपि च नायं प्रतिषेधविधिः न्यायप्राप्तत्वादित्युक्तं मन्त्राधिकरणकौस्तुभे, तथाऽपि नित्यानुवाद एवायमन्यत्रोहलिङ्गम्। न चोहस्य न्यायसिद्धत्वे विकृतिविशेषे 'विश्वेषां देवानामुस्राणां वपानां मेदसोऽनुब्रूहि,[1] छागस्य वपाया मेदसोऽनुब्रूहि' इत्यादिमन्त्रपाठवैयर्थ्यं, तस्य मन्त्रभ्रेषप्रायश्चित्तप्राप्तिफलकमन्त्रत्वसिद्ध्यर्थत्वात्॥ १॥

---

पदरूपेण नियमार्थं विधानमिति ध्येयम्—इति विस्तरभयान्नोच्यते। **व्रीहिपदे इति।** यद्यपि व्रीह्यादिपदघटितमन्त्रेषु अग्न्यादिपदघटितमन्त्रेष्विव इहैवोहस्साधनीय इति न व्रीहिपद इवेति दृष्टान्तः सिद्धः; तथापि यत्र द्रव्यादिप्रकाशकपदेषु कथमपि प्रकृतावेव शब्दपरलक्षणाशङ्कालेशोऽपि नास्ति तत्रागत्या पदान्तरप्रक्षेपरूपोहो निस्सन्दिग्धः मन्त्रगतदेवतावाचकपदेषु शब्दलक्षणाऽवश्यंभावेन सूर्यरूपार्थान्तरलक्षणावादिसिद्धत्वेन तदुक्तिरिति ध्येयम्। **कौस्तुभ इति।** यज्ञपतिशब्दवत् पशुविशेषणतयोपात्तानां मात्रादीनां परार्थत्वादेव, अपरार्थत्वेऽपि मात्राद्यभेदे ऊहस्याप्रसक्तेः, मात्रादिभेदे मातृत्वादीनां स्त्रीत्वसमानाधिकरणजनकत्वादिरूपाणां ससम्बन्धिकतया प्रतिसम्बन्धिपशुभेदप्रतीत्यैव तद्भेदप्रतीतेः तज्ज्ञानार्थमप्यूहानपेक्षणात्, न्यायप्राप्तानुवादत्वमिति तत्रोक्तमित्यर्थः। यद्यप्यनेकपशुकायां विकृतौ द्विबहुवचनान्ततया प्राप्तोहरूपशब्दवृद्धिनिषेधकत्वस्यैवेह भाष्यादिषु स्वयमपि च तत्रोक्तेः, पूर्वोक्तरीत्या मात्रादिभेदप्रतीतिहेतोरेव एकवचनानुपपत्त्या प्राप्ततादृशोहस्य निवारणं अपरार्थत्वेऽन्यथा न भवतीति युक्तमेव प्रतिषेधविधित्वं; तथापि वक्ष्यमाणन्यायेन पत्नीं सन्नह्येत्यत्रेव इहापि प्रत्येकव्यक्तिगत्वेनापि तदुपपत्तेः तद्वदेवानूहप्राप्तौ युक्तमेवानुवादत्वम्। यदि तु प्राकृतप्रयोगस्य एकमातापितृकपशुपरत्वात् पाशन्यायेनैकवचनं समवेतार्थं सत एकत्वप्रकाशकत्वात् परिच्छेदकसङ्ख्यापरमेवेति न पत्नीमन्त्रन्याय इति विभाव्यते तदा प्राकृतप्रयोगस्य एकद्व्यादिभ्रातृकस्यापि सम्भवात् शब्दपरैकवचनेष्वेव पत्नीमन्त्रन्यायप्रवृत्तेः तत्परमेव नित्यानुवादत्वमिति द्रष्टव्यम्। स्पष्टार्थमन्यत्।

---

1. C. adds अग्नये

(२)—जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ अविकारमेके अनार्षत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥ विकारो वा तदुक्तहेतुः ॥ ६ ॥ लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥ नियमो वोभयभागित्वात् ॥ ८ ॥

मौद्गे चरौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इति श्रुतम्। तत्र बर्हिःपदेन तत्कार्याणि हविरासादनवेदिस्तरणहोतृषदनपवित्रकरणादीनि लक्षयित्वा तदुद्देशेन पुण्डरीकाणि विधीयन्ते। जन्यत्वसम्बन्धार्थकश्च तद्धितः। तत्र वेदिस्तरणे प्रकृतिप्राप्ते 'स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरनुया शयाना। दर्भैस्तृणीत हरितैस्सुपर्णैः निष्का इमे यजमानस्य ब्रध्ने' इति मन्त्रोऽवश्यं बर्हिःपदे दर्भपदे चोहितव्य एव। हरितपदेऽप्यूहितव्यो न चेति चिन्तायां—

गुणस्य प्रकृतावविहितत्वेन तत्प्रकाशकपदस्यासमवेतार्थत्वादनूहः। कथञ्चिन्मान्त्रवर्णिकगुणविधिकल्पनया वा समवेतार्थकत्वेऽपि, इह पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वात् दर्भपदस्थाने ऊहितेन पुण्डरीकपदेनैव गुणप्रकाशनोपपत्तेः न पुनः पदान्तरेण प्रकाशनापेक्षा अतो हरितपदलोप एव, न तु तत्स्थाने पदान्तरप्रक्षेप इति प्राप्ते—

विधौ श्रुतस्य पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वेऽपि प्रकृतौ दर्भादिपदस्य जातिमात्रवाचित्वात् तन्मात्रप्रकाशनार्थं जातिमात्रवाचकस्य पद्मादिपदस्यैव दर्भादिपदस्थाने ऊहितव्यत्वात् प्रकृताविव पदान्तरेण गुणप्रकाशनार्थं हरितपदस्थाने पुण्डरीकपदशक्यनिष्ठगुणवाचिपदान्तरोह आवश्यक एव ।

तच्च यद्यपि 'पुण्डरीकं सिताम्भोजम्' इति त्रिकाण्डिस्मरणात् सितपदं प्रसज्यते तथापि 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति वेदे प्रयोगात् पुण्डरीकाक्ष इत्यादौ रक्ताम्भोज एव शास्त्रस्थानां पुण्डरीकपदप्रयोगाच्च रक्ताम्भोजस्यैव विधेयत्वेन रक्तपदमेवोहितव्यम्।

शास्त्रदीपिकायां तु दर्भपदस्थाने पुण्डरीकपदोहं वदतः पार्थसारथे रक्तगुणस्यापि तेनैव प्रकाशनान्न रक्तपदोहस्सिद्ध्येदिति ध्येयम् ॥ २ ॥

---

जातिनैमित्तिकं यथास्थानम्।

**मौद्गे चरावि**ति। 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम' इति वचनविहिते इति शेषः। **शास्त्रस्थानामि**ति। वैदिकयाज्ञिकानामित्यर्थः। तेन यद्यपि कोशः शास्त्रस्थप्रयुज्यमानशब्दविषय एवेति भवति शास्त्रस्थपरिगृहीतः तथापि अन्यशास्त्रस्थप्रसिद्ध्यपेक्षया वैदिकयाज्ञिकप्रसिद्धिः बलीयसीति तत्प्रसिद्धार्थ एव युक्तो ग्रहीतुमित्याशयः। **शास्त्रदीपिका**–

यान्त्विति। वस्तुतस्तु दर्भत्वजात्यवच्छिन्नवाचकदर्भपदस्थाने पद्मत्वावच्छिन्नपद्मपदोहेऽपि पद्म-त्वावच्छिन्नपद्मसामान्यवृत्तित्वेन नीलादिगुणानामप्युपस्थितौ भवन्मते नियमेन रक्तगुणस्यैवोप-स्थापकाभावात् रक्तगुणविशेषप्रकाशनाय रक्तपदोह एव प्रमाणाभावः। यदितु दर्भत्वा-वच्छिन्नदर्भकार्यकारित्वेन रक्तकमलत्वावान्तरजात्यवच्छिन्नस्यैव विधानात् तत्स्थानापन्नत्वेन तत्र प्राप्तस्य मन्त्रस्य प्रकाशकतानिर्वाहाय तदवान्तरजात्यवच्छिन्नवाचकपदस्यैवोहेन तद्वृत्तिरक्तगुणस्यैव नियमेनोपस्थितिस्संभवति इति रक्तपदस्यैवोह इत्युच्यते तदा रक्तगुणस्यापि पुण्डरीकपदेनैव प्रकाशनात् रक्तपदोहो न सिद्ध्येदिति दूषणं भवतामपि सममेव। नह्यवान्तरजात्यवच्छिन्नस्य स्थानापत्त्या विधाने सति तद्वाचकस्पष्टपदोहसम्भवे तं विहाय तद्वृत्तिसामान्यधर्माभिधायकपदोहे प्रमाणमस्ति। अत एव विकृतौ येनैव शब्देन द्रव्यादीनां विधानं तस्यैवोपस्थितत्वात् प्राकृत-द्रव्यवाचकपदस्थाने उहेन प्रक्षेपाचरणं सर्वेषां, न तु तद्वाचकपर्यायान्तरस्य तत्। तथा च पुण्डरीकपदोहस्यैव प्रमाणसिद्धत्वे तेनैव रक्तगुणस्यापि प्रकाशनसिद्धेः न पुनः रक्तपदोहस्सिद्ध्ये-दिति दूषणं युक्तमेव। परन्तु रक्तपदोहसिद्धान्तानुरोधेन पुण्डरीकपदत्यागे पद्मपदोहसाधनं यत्प्रकाशकारव्याख्यानुसारेण पूज्यपादानां तन्नातीव युक्तम्। अतः पुण्डरीकपदोहाविरोधेन रक्तपदोहवैयर्थ्यनिरसनं सर्वेषामपि कर्तव्यतया समानमिति मम प्रतिभाति ॥ २ ॥

---

(३)—लौकिके दोषसंयोगादपवृक्त हि चोद्यते निमित्तेन प्रकृतौ स्याद-भागित्वात् ॥ ९ ॥

दैक्षे दर्शौ "यूपो वै यज्ञस्य दुरिष्टमामुञ्चते यद्यूपमुपस्पृशेत् यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यः यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वावेतौ ते वायू इति, यदि बहून् एते ते वायव" इति श्रुतम्। तत्र यूपस्य प्रकरणादिना प्राप्तत्वात् तत्सङ्ख्याकस्पर्श एवेदं मन्त्रविधानमित्यविवादम्। स्पर्शः परं विहितो अविहितो वेति चिन्तायां—

[1] प्रकरणात् अश्वप्रतिग्रहेष्टिन्यायेन च विहितस्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिक

---

लौकिके दोषसंयोगात्।

**यूपो यज्ञस्येति।** यज्ञस्य स्वशेषिभूतस्य दुरिष्टं पापं स्वस्मिन् यूपो निदधाति तत्स्पर्शी स्पर्शकर्तरि तत्पापं सञ्चरतीत्यतः न यूपः स्पृश्य इत्यर्थः।

अत्र प्रकाशकारैः पूर्वपक्षे यूपस्पर्शस्योद्देश्यत्वमङ्गीकृत्य तस्य प्रकृतत्वादेवैकत्वादेकपदमनुवादः। निमित्तपरत्वे तु प्रकृतानियमात् अप्रकृतानियमात्, अप्रकृतानेकयूपस्पर्शगतनिमित्तत्वव्यावृत्तये एकत्वस्यावश्यविशेषणीयत्वे वाक्यभेदः स्यादित्युक्तं तदयुक्तमिति सूचयितुमाह—**तत्र यूपस्येति।** उत्कर्षफलकत्वेन भवत्सम्मतेऽनिगिमे [निगमे] विनियोगविधिद्वये, द्वित्वाद्यवच्छिन्नोद्देश्यताबलादेव अप्रकृतविकृतसम्बन्धस्य वक्तव्यत्वेन तत्र द्वित्वाद्यनुवादासम्भवात् अगत्या यूपपदस्यानुवादत्वेन द्वित्वाद्यवच्छिन्नस्यैवोद्देश्यत्वावश्यकत्वात् तत्साहचर्येणेहापि तत्कल्पनमुचितम्। तथाविधस्य च वाक्यभेदपरिहारेण यथा उद्देश्यत्वं तथा निमित्तत्वमपि सम्भवत्येवेति नात्रार्थे विवाद इत्यर्थः। **प्रकरणादिति।** दैक्षप्रकरणपाठान्मन्त्रस्य दैक्षयागसम्बन्धावगमे सति यद्येकमिति वाक्येन तत्स्पर्शनं यदञ्जनादिसंस्कारकरणवेलायां अध्वर्य्वादीनां प्रसक्तं तदेव द्वारत्वेन समर्प्यते। तत्र "तमभिमन्त्रयीत" इति वचनान्तरात् यूपोपस्थानद्वारा विहितप्रकृतापूर्वसाधनयूपस्पर्शाङ्गमयं मन्त्रः, इतरथा फलान्तरकल्पनापत्तिरित्यर्थः। अस्मिंश्च पक्षे यदि वेदाः प्रमाणमित्यत्रेव असंशयपरो यदिशब्दः। यूपस्य स्पर्शनप्रधानगतप्रयोजकत्वरूपहेतुत्वार्थश्च लिङिति न विरोधः। निमित्तपरत्वाङ्गीकारेणापि कर्माङ्गत्वं साधयति—**अश्वप्रतिग्रहेष्टिन्यायेनेति।** यथैवाश्वप्रतिग्रहेष्टिः दातुपक्रमवशात् दातुर्यजमानस्य कर्तव्या।

---

1. A reads प्रकरणादिना

मिदं कर्माङ्गतया विधीयते। न हीदं दोषनिर्घातार्थं येन विहिते तदभावादप्रवृत्तिः, यज्ञस्य विहितत्वेन दुरिष्टजनकत्वासम्भवेनार्थवादमात्रत्वात्। यदि त्वत्र स्पर्शनिषेधाधिक्यात् यदिशब्दोपादानाच्चाश्वप्रतिग्रहेष्टिवैलक्षण्यमाशङ्क्येत ततोऽस्त्वियं विहितस्यैव यूपान्वारम्भादेस्स्पर्शस्य ग्रहणाग्रहणवत् पाक्षिकत्वसिद्ध्यर्थो निषेधः। ततश्च तत्करणपक्षे अयं मन्त्रपाठोऽङ्गमिति यदिशब्दाविरोधः।

यदि त्वदृष्टदोषदुष्टविकल्पभिया निषेधस्य रागप्राप्तयूपस्पर्शविषयत्वमाशङ्क्येत ततो निषेधस्यापि क्रतुमध्यप्रसक्तगमनागमनादिप्रयुक्तयूपस्पर्शविषयत्वेन 'नानृतं वदेत्, न स्त्रियमुपेयात्' इत्यादिवत् क्रत्वङ्गत्वोपपत्तेः स्पर्शस्य क्रतुवैगुण्यापादकत्वावसायात्

---

यजमानगामिफलकर्माङ्गमेव न तु दोषनिर्हरणार्थम्, तथैव अञ्जनादिकर्मसु यः अर्थाद्विहितः स्पर्शः तस्मिन्निमित्ते तत्स्पर्शवत्कर्माङ्गत्वेन मन्त्रविधानमिति भावः। **पाक्षिकत्वसिद्ध्यर्थ इति।** वाक्यभेदमङ्गीकृत्य, यूपो नोपस्पृश्य' इति निषेधः 'यद्येकं' इति तु मन्त्रविधिः। तत्रार्त्विज्यनान्तरीयकस्पर्शस्य साक्षादविहितस्यार्थिकत्वात् निषेध एव स्यात् न विकल्प इति स्पर्शपक्षो न सिद्ध्येत् अतः तत्सिद्ध्यर्थं **विहितस्य यूपान्वारम्भादेरित्युक्तम्। नानृतं वदेदिति।** अत्र च वार्तिकतन्त्ररत्नयोः सिद्धान्ते नानृतं वदेदिति निषेधवैलक्षण्यमुपपादितम्। तत्र हि द्विसाधनके कर्मणि व्रीहिमयपुरोडाशं सङ्कल्प्य यवमयो न कर्तव्य इत्युक्तम्। तत्रार्थप्राप्तं क्रत्वङ्गतयाऽनृतवदनं कदाचित् व्रीहिभिर्यक्ष्ये इत्युक्त्वा तद्विसंवादेन यवैर्यजेत तन्न कर्तव्यमिति तत्र शास्त्रार्थः। इहतु न द्वौ प्रयोगौ स्तः सोपस्पर्शनकोऽनुपस्पर्शनकश्च यत्रानुपस्पर्शनकप्रयोगे उपस्पर्शनप्रतिषेधोऽङ्गं स्यात। एक एव ह्यत्र सोपस्पर्शनकप्रयोगो विहितः। कथं तत्रोपस्पर्शनप्रतिषेधोऽङ्गं स्यात्, विरुद्धत्वात। अतो न क्रत्वङ्गत्वं निषेधस्येति, तद्दूषयति— **न स्त्रियमिति।** अयमर्थः यत्र द्विसाधनकः प्रयोगः तत्रैव एकतरनिषेधस्य क्रत्वङ्गत्वमित्ययुक्तम्। 'न स्त्रियमुपेयात्' 'न मांसमश्नीयात्' इति निषेधानां क्रत्वङ्गत्वानापत्तेः। नह्यत्र प्रयोगद्वयमस्ति विहितम्। अतः क्रतुमध्यप्रसक्तमात्रस्य क्रतुवैगुण्यजनकत्वसम्भावनया एते निषेधाः क्रत्वङ्गम्। एवमेवोपस्पर्शननिषेधः क्रतुमध्यप्रसक्तगमनागमनादिप्रयुक्तस्पर्शविषयः शक्यत एव वक्तुं क्रत्वङ्गमिति।

**वस्तुतस्तु** नानृतं वदेदित्यत्रापि यथा क्रत्वर्थत्वेन प्रसक्तमनृतवदनं विषयः तथैव पुरुषार्थनिषेधमुल्लङ्घ्य क्रतुमध्ये 'लौकिकविषयमनृतवदनं कृत्वापि क्रतुं साधयिष्यमि' इत्येवं प्रवृत्तलौकिकानृतवदनमपि विषयोऽस्तु। तथा च शास्त्रस्य महाविषयत्वमपि लभ्यत इति क्रतु-

तत्प्रायश्चित्तत्वेनायं मन्त्रविधिः क्रत्वर्थ एव। एवं च यूपानेकत्वे न्यायादेव एतौ ते इत्याद्यूहो मन्त्रत्वसिद्ध्यर्थं पुनः पठ्यते। न चैवमप्यूहितमन्त्रपाठमात्रस्य प्रयोजनलाभेऽपि यदि द्वावित्यादिविनियोगप्रयोजनाभावः। दैक्षसन्निधिपठितानां त्रयाणामेषां पाशाधिकरणन्यायेन तत्रैव विकल्पप्रसक्तावुत्कर्षसिद्ध्यर्थत्वादिति प्राप्ते—

वस्तुतो यज्ञस्य पापापरपर्यायदुरिष्टजनकत्वाभावेऽपि निन्दार्थवादे यज्ञप्रयोगजन्ययूपनिष्ठदुरिष्टस्य यूपस्पर्शकर्तरि सञ्चारसङ्कीर्तनेनास्य निषेधस्य यज्ञप्रयोगसमाप्त्युत्तरकालीनत्वावगमात् पुरुषार्थत्वावगतेरस्यापि तद्दोषनिवारणार्थस्य प्रायश्चित्तस्य लिङ्गेन प्रकरणं बाधित्वा पुरुषार्थत्वमेव। अत एव सूत्रभाष्यस्वारस्या-

---

मध्ये यत्किञ्चिद्विषयमप्यनृतवदनं क्रतुवैगुण्यजनकं भवति। तन्निषेधस्य च क्रतुवैगुण्यप्रागभावपालनफलकत्वकल्पनया क्रत्वङ्गत्ववत् इहापि तथैव कल्पने न काचित् क्षतिः। यद्यपि क्रतुसिद्ध्यर्थप्रसक्तयूपस्पर्शविषयनिषेधस्य क्रत्वर्थत्वात् क्रतुवैगुण्यपरिहारार्थं मात्रपाठोऽदृष्टार्थ एवापद्यत इति नास्मिन् पक्षे वक्ष्यमाणोहरूपपूर्वपक्षफलसिद्धिः, तथापि पूर्ववचनात् यूपोपस्थानद्वारैव तद्वैगुण्यपरिहारार्थत्वस्वीकारात् नानुपपत्तिरिति भावः। तथा च सर्वथा स्पृश्यमानयूपोपस्थानार्थत्वपूर्वपक्षसिद्धौ फलितमाह—एवञ्चेति। पाशाधिकरणन्यायेनेति। दैक्षे पशौ एकवचनान्तः पाशमन्त्रो यथा पठितः तथा बहुवचनान्तोऽपि, तयोश्च विकल्पः इत्यग्रिमाधिकरणे वक्ष्यते तेन न्यायेन प्रकृतेऽपि प्रसक्तविकल्पनिरासार्थं विनियोगविध्याम्नानमिति भावः। यूपस्पर्शकर्तरि पापप्रसक्त्या 'यूपो नोपस्पृश्य' इत्येतद्वास्तवम्। अन्यत्तु निरसनीययज्ञकर्तृपापं यज्ञे आरोप्यावास्तवमेव यूपगतत्वेनोपस्पर्शननिन्दायै उच्यते; तावता उपस्पर्शनं पापजनकं तत्परिहारार्थमेव प्रायश्चित्तमिदमुपपद्यते इत्यभिप्रेत्य सिद्धान्तमाह—वस्तुत इति। "वैगुण्यरूपं दुरिष्टं यज्ञस्य" इति प्रकाशकारव्याख्यानं दूषयितुं पापापरपर्यायेत्युक्तम्। अन्यथा सिद्धान्तेऽपि क्रतुवैगुण्यरूपदुरिष्टपरिहारद्वारा क्रत्वर्थत्वस्यैवापत्तेरिति भावः। सूत्रभाष्यस्वारस्यात् इति।

अत्र च 'लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात्' इति सूत्रस्य लौकिक एव स्पर्शे इदं प्रायश्चित्तं तत्र दोषसंयोगादित्येकदेशं व्याख्याय भाष्यकारेण अपवृक्ते हि चोद्यते इति हेत्वन्तरं सूत्रोक्तं व्याख्यातम्—अपि चापवृक्ते हि कर्मणि इदं प्रायश्चित्तं नैमित्तिकं चोद्यते, यूपो वै यज्ञस्य दुरिष्टमामुञ्चते इत्यर्थवादगतस्य दुरिष्टशब्दस्य यद्येकमुपस्पृशेदित्यनेन सम्बन्धात् इष्टे यद्येकमुपस्पृशेदिति तस्माल्लौकिक इति। तदयुक्तम्। दुरिष्टशब्दस्य समुदायशक्त्या पापवाचित्वेन अवयवशक्त्या समाप्तिवाचित्वाभावात्; सत्यपि

यूपकार्यापवर्गोत्तरमेवेदं **प्रायश्चित्तं न तु वार्तिकादिस्वारस्यात् क्रतुमध्यगतलौकिकस्पर्शेऽपीति ध्येयम्।**

---

वा तद्वाचित्वे उपस्पर्शननिमित्तविशेषणत्वे वाक्यभेदापत्त्या उभयत्ववत् अविवक्षापत्तेः। अतः 'अपवृक्ते हि चोद्यते' इति सूत्रावयवस्यायमर्थः—अपवृक्तपदेन अपवृक्तो हि नोपस्पृश्य इत्यर्थसिद्धः प्रतिषेधो लक्ष्यते। तथाच नोपस्पृश्य इति प्रतिषेधे सति चोद्यते प्रायश्चित्तत्वेन मन्त्राः [न्त्रः] उपस्पर्शनेन निमित्तेन तस्य अनिनिकर्तव्यतारूपस्य क्रत्वङ्गत्वाभावात्। क्रत्वङ्गतया विहितस्य स्पर्शस्य च वर्जनाऽसम्भवेन तद्वारापि क्रत्वङ्गत्वानुपपत्तेः। कदाचित् पुरुषः स्वभावात् स्वाच्छन्द्येन विचरन् उपस्पृशेदपि कर्ममध्यगतो वा, तत्र प्रतिषिद्ध्यते नोपस्पृशेद्यूपम्। तत्र हि दुरिष्टापरपर्यायं पापमावद्धमित्यर्थात् अपवृक्तयूपस्पर्शविषयत्वे सिद्धे तत्र विधीयमानं प्रायश्चित्तं लौकिक एव भवतीति वार्तिककृतोक्तम्।

अस्मिंश्च व्याख्याने एतावता च क्रतुमध्यगतसञ्चारनान्तरीयकस्पर्शविषयत्वं निषेधस्य दर्शयता सूत्रस्थापवृक्तपदस्य संस्काराविषयत्वमर्थो द्योतितो भवति न तु समाप्तिरूपः। तदानीमेव क्रतुमध्यगतसञ्चारनान्तरीयकस्पर्शविषयत्वमुपपद्यते। इतरथा तदानीं कर्मसमाख्याऽभावेन तद्विषयत्वानुपपत्तेः। तथा च वार्तिककारमते संस्कारविषयस्तु यदा यूपः तदा तत्स्पर्शस्य विहितत्वान्न प्रतिषेधः। यदा तु संस्काराविषयः स तु क्रतुमध्यगतो वा क्रतुसमाप्त्यनन्तरवर्ती वा तस्योभयरूपस्यापि स्पर्शोऽविहितत्वान्निषेधविषय इति फलितोऽर्थः। तत्र सूत्रस्थापवृक्तपदस्य कर्मसमाप्तिपरत्वं स्वरसतः प्रतीयमानं स्पष्टमेवोज्झितम्। अतः तदीयस्वारस्यानुरोधात् कर्मसमाप्त्युत्तरकालीनयूपस्पर्शविषयत्वमेव निषेधस्य प्रतिपादनीयम्। तच्च यद्यपि भाष्यदर्शिरीत्या इष्टपदान्वयानुरोधान्न भवति तथापि तदन्यथाभावेऽपि यज्ञस्य दुरिष्टमित्यर्थवादमात्रेणैव स्पष्टं प्रतीयत इति दर्शितमेव प्राक्। अत्र च यज्ञस्य दुरिष्टजनकत्वाभावेन प्राथमिकबोधनिर्वाहाय यजमानः प्रस्तर इत्यत्रेव लक्षणया यज्ञप्रयोगसम्बन्धिवैगुण्यरूपदुरिष्टं, अथवा यज्ञकर्तृयजमाननिष्ठं पापमेव प्रतिपाद्यते। पश्चाच्च निन्दालक्षणेत्यवधेयम्। उभयथापि यज्ञसमाप्त्युत्तरकालीनत्वप्रतीतौ नैव विवाद इति।

**यूपकार्यापवर्गोत्तरमेवेति।** एवञ्च यूपसाधारण्यात् ज्योतिष्टोमे सवनीयानुबन्ध्यपरमापूर्वोत्पत्तिः। तदनन्तरं यजमानकर्तृकयूपोपस्थाने जाते तदनन्तरं यूपस्पर्श एवेदं प्रायश्चित्तमित्यर्थः। केचित्तु पशुनियोजनमेव यूपकार्यमाहुः। **यदपि वार्तिके** क्रतुमध्यगतलौकिकस्पर्शसाधारणनिषेधस्य श्रौतस्यैव 'यूपचित्याद्युपस्पर्शे स्नायात्' इति स्मृतेर्मूलत्वमुक्तम्,

**अत एव यज्ञस्यैव यूपनिष्ठदोषजनकत्वात् यज्ञात्पूर्वं कारणाभावेन अशुचित्वापरपर्यायदोषाभावात् क्रतुमध्यगतलौकिकस्पर्शेऽपि न दोषः।**

अत एव 'यूपचित्याद्युपस्पर्शने स्नायात्' इति **स्मार्तमपि प्रायश्चित्तं बहिःक्रतुविषयमेव निषेधस्य मूलान्तराकल्पनात्।**

अस्तु वा **तस्य सामान्यविषयत्वादन्तःक्रतुगतलौकिकविषयत्वमपि।** तदा तु **ऋत्विक्कर्तृको विहितोऽपि स्पर्शः शामित्रवन्निषेधविषय एव। तमतिक्रम्य प्रवृत्तस्यार्त्विज्यविधानोपपत्तेः।** सर्वथा **यूपकार्यापवर्ग एवायं पुरुषार्थो मन्त्रपाठः।** अत एव **निषेध-**

---

तदप्ययुक्तमिति सूचयन् अस्या अपि स्मृतेर्बहिःक्रतुविषयत्वमुपपादयति—**अत एव यूपेति।** पक्षान्तरमाह—**अस्तु वेति।** तस्य स्मार्तनिषेधस्य तावतापि स्पष्टं प्रतीयमानबहिःक्रतुविषयस्य स्पर्शनिषेधश्रुतेः विशेषरूपाया अस्या न सामान्यतःप्रतीयमानलौकिकस्पर्शमात्रविषयायाः स्मृतेर्मूलत्वं, भिन्नविषयत्वात्। अतः तन्मूलत्वेन श्रुत्यन्तरमेव सामान्यविषयकं कल्पयितुमुचितमापद्यते इति दूषणे विद्यमानेऽपि वार्तिकोक्तं श्रौतनिषेधस्य सामान्यस्पर्शविषयत्वेन स्मार्तनिषेधमूलत्वमभ्युपेत्यापि दूषणान्तरमाह—**तदा त्विति।** तथा च भवन्मते स्मृतेः सामान्यविषयत्वेनैव हेतुना विहिताविहितस्पर्शमात्रविषयत्वे बाधकाभावात् एतत्स्मृतिमूलत्वेनोक्तस्य श्रौतनिषेधस्यापि तद्विषयत्वापत्त्या विहितस्पर्शे न निषेधप्रवृत्तिः किन्तु लौकिके इति प्रस्तुतसिद्धान्तासिद्धिः। न च विहितत्वादेव निषेधासम्भवः। स्पर्शस्य साक्षाद्विध्यभावेन आर्त्विज्यविधानानुपपत्त्या ऋत्विक्कर्मनान्तरीयकत्वेनार्थप्राप्तस्य शामित्रवन्निषेधविषयत्वोपपत्तेः। आर्त्विज्यविधानन्तु तमतिक्रम्य प्रवृत्तं प्रत्युपपद्यत एवेति भावः।

वस्तुतस्तु स्मार्तनिषेधस्य विहिताविहितस्पर्शमात्रविषयत्वेन वैदिकस्य तत्परत्वेऽपि न तक्षणादिनान्तरीयकस्पर्शादौ निषेधद्वयस्यापि प्रवृत्तिस्सम्भवति। तदानीं यूपस्यैवाभावेन तत्स्पर्शस्य निषेध्यस्यैवाप्रसक्तेः, शामित्रे तु हिंसात्वात् युक्ता हिंसानिषेधप्रवृत्तिः, अत एव निषेधोपजीव्ययूपस्पर्शो यावता विना न सिद्ध्यति तावतो यूपनिष्पादकस्पर्शस्यानिष्टसाधनत्वं निषेधो नैव बोधयति। नैवं शामित्रे हिंसानिषेधोपजीव्यम् अतः शामित्रवैलक्षण्यात् यूपोत्पादकधर्मानुष्ठाननान्तरीयकतया अर्थात् प्राप्तस्य स्पर्शस्य न निषेधविषयत्वमित्यभिप्रेत्य उपसंहरति—**सर्वथेति।** सिद्धान्तप्रयोजनं अनूहरूपं दर्शयिष्यन् 'यद्येकं यूपम्' इत्यादिवाक्यार्थं निरूपयति—**अतएवेति।** नह्यत्र आद्यो मन्त्रो यूपप्रकाशकः येन द्विबहुस्पर्शकविकृतिषु ऊहः

वाक्यप्राप्तयूपमनूद्य मन्त्रत्वमिदं स्वतन्त्रमेव तत्तत्सङ्ख्याकस्पर्शे निमित्ते तज्जन्यदोषनिर्घातार्थं विधीयते। न तु कश्चित् कस्यचिदूह इति सिद्धम्॥ ३॥

(४)—अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ विकारो वा तदर्थत्वात्॥ ११ ॥ अपि त्वन्यायसम्बन्धात्प्रकृतिवत् परेष्वपि यथार्थं स्यात् ॥ १२ ॥ यथार्थं त्वन्यायस्याचोदितत्वात् ॥ १३ ॥ छन्दसि तु यथादृष्टम्॥ १४ ॥

**दैक्ष एव पशुपाशप्रमोचनेऽनुमन्त्रणद्वयमाम्नातम्—'अदितिः पाशं प्रमुमोक्त्वेतं' इत्येकवचनान्तमेकं 'अदितिः पाशान् प्रमुमोक्त्वेतान्' इति बहुवचनान्तमपरम्। तत्रान्त्यस्यापि विकल्पेनैकपाशिकायामेव प्रकृतौ निवेश इति** वक्ष्यते। **तदेतन्मन्त्रद्वयं** द्विपशुकायां[1] **विकृतौ अतिदेशेन प्राप्तम्। तत्र एकवचनान्तस्य तावत् प्रकृतौ समवेततया पाशसङ्ख्याप्रकाशकत्वात् द्विवचनेनोह** इत्यविवादमेव। **न च प्रतिपाशमोचनमस्यावृत्ते-**

---

स्यात्। प्रत्युत वायुप्रकाशकमन्त्रपाठमात्रं प्रायश्चित्तरूपमत्र विधीयते। अतो न कस्यचिदूह इति भावः।

---

**अन्यायस्त्वविकारेण।**

इतः पूर्वं प्रातिपदिकविषय ऊहश्चिन्तितः। इतः प्रभृति वचनविषय ऊह आरभ्यते। **वक्ष्यत इति।** उत्तराधिकरणे इति शेषः। तेनोत्तराधिकरणेन मन्त्रद्वयस्यापि दैक्षे पशौ समावेशे विकल्पेन सिद्धे तदुत्तरं विकृतावूहविचारः कर्तुमुचितो **यद्यपि, तथापि** ऊहलक्षणप्रत्यासन्नत्वेन इह विचारे प्रथमतः कृते तदारोपेण उत्तराधिकरणमारभ्यमाणं नासङ्गतमिति भावः। **द्विपशुकायामिति।** मैत्रं श्वेतमालभेत वारुणं कृष्णग्रीवमपाञ्चौषधीनाञ्च सन्धावन्नकाम इति वाक्यविहितायामिति शेषः। **अविवादमेवेति।** अनेन च बहुवचनान्तस्याविकारेण प्रवृत्तिः। प्रकृताविव अवयवगतबहुत्वस्यावयविन्युपचारेण विकृतावपि प्रयोगोपपत्तेः, एकवचनान्तस्य द्वयोर्बाधात् सर्वथा निवृत्तिरिति प्रथमकल्पेन प्राचां पूर्वपक्षकरणं अतीव निर्युक्तिकमिति सूचितम्। तथाच पक्षे अतिदेशतः प्राप्तस्य एकवचनान्तमन्त्रस्य प्रकृतौ समवेतार्थप्रकाशकस्य न्यायादूहेन प्रयोग एव युक्तो, नतु सर्वथा निवृत्तिरेवेति भावः।

---

1. A. द्विपाशिकायां

**रनूहः शङ्क्यः**, अस्यानुमन्त्रणमन्त्रत्वेन **तन्त्रेणैव प्रयोगात्।** बहुवचनस्य **तु प्रकृतावसम-वेतार्थकत्वेनादृष्टार्थं साधुत्वार्थं वा प्रयोगाद्विकृतावनूहः।**

---

अत्र **वार्तिककृता** "नन्वयं पाशमन्त्रः पाशोन्मोचनकरणत्वात् द्वयोरपि पाशयोरेकैकस्मिन् पर्यायेण स्यात्, तेनोभयोरपि मन्त्रयोः नार्थ ऊहेन इत्याशङ्क्य परिहृतम्—जपोऽयं पाशोन्मोचनकाले क्रियमाणानुवाद्येव, न तु करणः तस्मात् तत्राभिधानादूह इति। **तस्यायमर्थः।** यद्ययं करणमन्त्रः स्यात्, ततः "मन्त्राणां करणत्वात् मन्त्रान्तेन कर्मादिसन्निपातः स्यात्, सर्वस्य वचनार्थत्वात्" इति द्वादशतृतीयपादाधिकरणन्यायेन सकलमन्त्रसमाप्तौ कर्मादेः सन्निपाता-पत्त्या प्रतिपशु पाशमोचनस्य मन्त्रान्तेऽनुष्ठानेनावृत्तिप्राप्तौ नोहः स्यात्। न त्वेवं तथा करण-मन्त्रत्वमस्ति। किन्तु अध्वर्युणा क्रियमाणपाशोन्मोचनकर्मानुवादी सन् अन्येनोच्चारणीयो ऽध्रिगुप्रैषवत्। अतः तन्त्रेणोच्चरितोऽपि शक्नोत्येव क्रियमाणं पाशोन्मोचनं स्मर्तुमिति नावृत्ति-प्रसक्तिरित्यूह इति। तदेतदुपपादनमयुक्तम्। पाशमन्त्रस्य क्रियमाणानुवादित्वाङ्गीकारे 'उच्छ्रयस्व वनस्पते' इत्यादिक्रियमाणानुवादिमन्त्राणामिव 'हौत्रास्तु विकल्पेरन् एकार्थत्वात्' इति द्वादशतृतीयपादान्त्याधिकरणन्यायेन समुच्चयस्यैवापत्तौ एकवचनान्तबहुवचनान्तपाशमन्त्रयोः विकल्पानापत्तेः। 'जपोऽयं पाशमन्त्रयोर्विकल्पानापत्तेः' 'जपोऽयं पाशोन्मोचनकाले' इत्युक्त्या चानयोर्मन्त्रयोः जपमन्त्रत्वाङ्गीकारे च 'जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यात् आशीः पृथक्त्वात्' इति द्वादशचतुर्थपादाद्याधिकरणन्यायेनादृष्टार्थत्वस्यैवापत्तौ सुतरां समुच्चयापत्तेः। क्रियमाणानुवादिजपमन्त्रत्वाङ्गीकारेण तन्त्रेण पाठस्वीकारे याज्ञिकैः अध्वर्युकर्तृककरणमन्त्रत्वाङ्गीकारेण मन्त्रान्ते क्रियमाणेन पाशोन्मोचनानुष्ठानेन विरोधापत्तेश्चेति सोमनाथकृतशास्त्रदीपिकाटिप्पणोक्तमभिसन्धाय प्रकारान्तरेणावृत्तिं निरस्यति—**अस्यानुमन्त्रण-मन्त्रत्वेनेति।** अनुमन्त्रणसमाख्ययाऽनुमन्त्रणमन्त्रत्वाङ्गीकारात् तेषाञ्चादृष्टार्थत्वस्य मन्त्राधिकरण-कौस्तुभे निराकरणेन दृष्टार्थत्वस्यैव साधितत्वेन प्रयाजानुमन्त्रणद्वयस्येव इह भिन्नकार्यत्वाभावाच्च विकल्पोपपत्तेः पाशोन्मोचनानन्तरं अनुमन्त्रणमन्त्रत्वेन दृष्टार्थं पठ्यमानो मन्त्रः सकृत्पठितोऽपि उभयोरपि पाशोन्मोचनयोरुपकरोतीति द्वितीयपाशोन्मोचनानन्तरमेव लाघवात् पठनीयः तत्र पाशद्वयानुरोधादूहितव्य इति नानुपपत्तिरिति भावः।

**वस्तुतस्तु** अनुमन्त्रणसमाख्याऽभावात् प्रत्युत करणमन्त्रसमाख्यानात् याज्ञिकाचार-विरोधो दुष्परिहर एवेति ध्येयम्। यस्तु पक्षप्राप्तो बहुवचनान्तो मन्त्रः तस्याविकारेणैव प्रकृतिवत्प्रयोगो न तु ऊहेनेति निष्कृष्टमधिकरणपूर्वपक्षं विवृणोति—**बहुवचनस्य त्विति।**

अस्तु वा लक्षणयाऽप्यर्थप्रकाशकत्वे सम्भवति साधुत्वाद्यर्थकत्वस्यान्याय्यत्वात् बहुवचनस्यैकत्वलक्षणार्थकत्वं, तथाऽपि स्वशक्याश्रयावयवजन्यावयविवृत्तिसङ्ख्यात्वसम्बन्धेन प्रकृतावेकत्वलक्षणाया इव विकृतौ द्वित्वलक्षणाया अपि सम्भवादनूहः। न चेयं निषिद्धा 'सुपां सुलुक्' इत्यनुशासनेनैव विहितत्त्वात्। न च 'दृष्टानुविधिश्छन्दसि' इत्यनुशासनात् प्रकृतावस्य दृष्टत्वेनैकत्वलक्षकत्वेऽपि विकृतावदृष्टत्वेन द्वित्वलक्षकत्वानुपपत्तिरिति वाच्यं, प्रकरणेन प्रकृतौ दृष्टत्ववत् अतिदेशेन विकृतावपि दृष्टत्वात्। इतरथोत्कर्षेणाप्यस्य मन्त्रस्योपपत्तेरेकत्वस्यापि लक्षणानापत्तेः। अतो द्विपाशिकायामपि विकल्पेन द्विवचनवत् बहुवचनप्रयोग इति प्राप्ते—

सत्यं निरुक्तसम्बन्धेन द्वित्वलक्षणासम्भवः तथाऽपि सा किं 'सुपां सुलुक्' इत्यनुशासनशिष्टतया निरूढलक्षणा वा स्यात् गङ्गायां घोष इतिवत् साम्प्रतिकी वा। नाद्यः, अनुशासनस्य 'दृष्टानुविधिः छन्दसि' इत्यनेन यत्रैव पाठाख्यदर्शनं तद्विषयत्वेनैव नियतत्वात्। अन्यथा वैदिकप्रमाणप्रमितमात्रस्य दृष्टपदार्थत्वे विश्वजिति स्वर्गकामपदे ऊहादौ च छान्दसविधिप्रवृत्त्यापत्तेः। अतश्छान्दसविधेः पठितमात्रविषयत्वात् विकृतावतिदिष्टमन्त्रेऽप्रवृत्तेः नानुशासनिकनिरूढलक्षणया द्वित्वोपस्थितिः।

नान्त्यः—अनुशासनाविषयीभूतेऽपि बहुवचनस्य लक्षणाङ्गीकारे अनुशासनवैयर्थ्यापत्तेः।

अस्तु वा सा, तथाऽपि प्रकृतौ यया वृत्त्या एकत्वोपस्थितिर्न तया विकृतौ द्वित्वोपस्थितिरिति प्राकृतवृत्तिबाधात् तद्द्वारकस्य बहुवचनस्यापि बाधे द्वित्वप्रकाशनरूपका-

---

अतो द्विपाशकायामिति। एकवचनान्तस्य द्विवचनोहेन बहुवचनान्तस्य यथावस्थित एव विकल्पेन प्रयोग इत्यर्थः। स्वर्गकामपदोहादौ चेति। वेदाकाङ्क्षयाऽध्याहृतस्वर्गकामपदं तव मते दृष्टम्, तत्राप्यग्रे स्वर्गलक्षणापि च्छान्दसविधिप्रवृत्त्यधीनैवापद्येतेति भावः। अस्तु वेति। अनेन च प्राकृतपदस्य यया वृत्त्या प्रकृतार्थबोधकत्वं तयैव वृत्त्या विकृतौ तादृशार्थबोधकत्वसम्भवे तस्यैव पदस्याविकारेण प्रयोगः; अन्यथातूहः यथा एकधा पदस्योहेन प्रयोगो वक्ष्यते, यथा वा धान्यपदस्य मांसप्रकाशने प्रयोगेण मांसपदोह उक्तः। अत एव [न] प्राकृतबहुवचनान्तमन्त्रगतपाशप्रातिपदिकार्थवृत्तिबहुवचनस्य एकावयविजनकावयवघटितशक्यसम्बन्धरूपप्राकृतः प्रयोगः; किन्तु द्विवचनान्तोह एवेत्युक्तं भवति। तत्र यः प्राकृतपदस्यार्थः तत्प्रकाशनस्य यद्यस्ति विकृतौ संभवः, तदाऽतिदेशेन तत्पृष्ठभावेन द्वारभूतायाः तन्निष्ठवृत्तेः तद्द्वारा तद्वाचकप्राकृतपदप्रयोग एवेति तु युक्तमेव। परन्तु प्राकृतार्थप्रकाशनाभावेऽपि प्राकृतशक्तिजन्यबोधस्य द्वारभूतस्य सिद्ध्यर्थं नूतनसूर्यादिपदप्रक्षेपः, तथैव प्राकृतलक्षणाजन्यबोधस्य द्वारतासिद्ध्यर्थं

र्थानुरोधेन शक्तद्विवचनप्रक्षेपावश्यंभावः। स्वाधीने शब्दप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामह इति न्यायात्।

---

प्राकृतबहुवचनान्तपाशमन्त्रस्यैवापत्तिः प्रसज्यते। यदि तु प्रतिपदं लक्षणाभेदात् प्राप्तेऽपि बहुवचनान्तपाशमन्त्रे न प्राकृतलक्षणाजन्यबोधस्य द्वारत्वसम्भवः तर्हि प्रतिपदं शक्तीनामपि भेदात् सूर्यपदप्रक्षेपेऽपि न प्राकृतशक्तिजन्यबोधस्य द्वारत्वलाभः। अथ प्राकृतपदप्राप्तौ तदर्थप्रकाशने तत्पदनिष्ठवृत्तिरेव द्वारं मन्त्रप्राप्तौ तु सामान्यतः शक्तिजन्यबोध एव द्वारं, तच्च सूर्यपदप्रक्षेपेऽपि नासुलभं; पाशमन्त्रगतबहुवचनप्रयोगश्च तदर्थैकत्वप्रकाशनाऽभावे तद्बोधकप्राकृततत्पदनिष्ठवृत्तेरभावादेव नापद्यते इत्युच्येत तदा अग्निपदनिवृत्तावपि सूर्यपदप्रक्षेपेण शक्तिजन्यबोधस्य द्वारतां संपाद्य प्राकृतमन्त्रप्राप्तिवदिहापि बहुवचननिवृत्तावपि लक्षणाजन्यबोधस्य द्वारतासिद्ध्यर्थं बहुपाशायां बहुवचनान्तोहवत् द्विपाशायामपि बहुवचनान्तोहेन लक्षणाजन्यबोधस्य द्वारतां सम्पाद्य बहुवचनान्तमन्त्रप्राप्त्यापत्त्या द्विवचनान्तमन्त्राप्राप्त्यापत्त्या द्विवचनान्तोहासिद्धिः, सुतराञ्च विकारप्रकाशनरूपप्राकृतकार्यसत्वे धान्यपदे मृगपदोहापत्तिश्च। अतः प्राकृतार्थनिर्णायकत्वेन प्राकृतपदप्राप्तौ प्राकृततत्तत्पदवृत्तेर्द्वारत्वेऽपि वैकृतार्थप्रकाशनेऽपि कर्तव्ये प्राकृतपदनिष्ठवृत्तेरतिदेशमङ्गीकृत्य तद्बाधे द्वारालाभान्न तत्पदप्राप्तिरिति नार्थः। तथात्वे प्राकृतपदनिवृत्तावपि यावत्संभवमतिदिष्टवृत्तिनिर्वाहार्थं मृगपदाद्यूहापत्तेः। अपि तु धान्यपदबहुवचनान्तपदाम्नानबलात् प्रकृतौ दैवात् लक्षणावृत्त्याश्रयणेन तथाविधप्रयोगोपपादनेऽपि विकृतावार्थिक्या वृत्तेरनतिदेशे द्वारालाभात् प्राकृतपदनिवृत्तौ, अनतिदिष्टवृत्तिनिर्वाहस्यापि प्रयोजनाभावेन मृगपदादिनिवृत्तौ स्वायत्ते शब्दप्रयोगे इति न्यायेनैव मांसद्विवचनप्रयोग इत्येव साधु। अत एव प्राकृतार्थनिर्णायकत्वेन यत्र प्राकृतपदप्राप्तिः तत्रापि या शास्त्रार्थरूपा शक्तिवृत्तिः सैव द्वारत्वेन विवक्षिता प्रकृताविति, विकृतावपि प्राकृतार्थनिर्णायकत्वानुरोधेनैव तस्य शास्त्रीयत्वेनातिदेशे सत्येव प्राकृततत्पदप्राप्तिः नान्यथेत्यभिप्रायेणैव एकधापदे ऊहः, अग्निपदाप्राप्तौ सूर्यपदप्रक्षेप इत्यावेदितं प्राक्।

यत्र तु लक्षणावृत्तिर्न शास्त्रीयरूपा किन्त्वार्थिकी तत्र प्राकृतार्थनिर्णायकत्वेऽपि तस्याः विकृतावनतिदेशात् तत्पूर्वकपदाप्राप्तावूह एव। यथा एकपाशायां विकृतौ बहुवचनान्तस्यैकवचनान्तेन, तत्रापि शक्तपदप्रक्षेपसंभवे लाक्षणिकावाचकपदप्रयोगस्यायुक्तत्वादिति यद्यपि प्राप्तं, तथापि प्रकृतौ धान्यपदाम्नानबलात् प्रकृतिजन्यविकारबोधे स्वशक्यार्थजन्यत्वरूपलक्षणा-

वृत्तेर्द्वारत्वस्य च्छान्दसविधिमूलकत्वेन शास्त्रार्थत्वेन व्रीहिद्रव्यकविकृतौ तादृशार्थबोधे कर्तव्ये तत्पृष्ठभावेन तदनुकूलप्राकृतवृत्तेः तद्द्वारा तत्पदातिदेशे बाधकाभावात् धन्यपदस्यैवार्षरूपाबाधेन प्रयोगोपपत्तौ स्वायत्तत्वाभावेन स्वायत्ते शब्दप्रयोगे इति न्यायाप्रवृत्तौ अनूहितप्रयोगवत् एकपाशायामपि विकृतौ अविकृतबहुवचनान्तप्रयोगोपपत्तेः नैकवचनान्तेनोहः। तत्र लक्षणाया आर्थिकत्वोक्तिस्तु स्वजन्यो यत्र विकारस्तद्बोधे तस्याः शास्त्रर्थत्वेऽपि नैतावता यत्र न प्रकृतिजन्यत्वेन विकारबोधापेक्षा किन्तु विकारमात्रप्रकाशनापेक्षा तत्राक्षिप्ता कर्तव्येति शास्त्रार्थ इति विकारमात्रबोधे सा आर्थिक्येवेत्यभिप्रायेण द्रष्टव्या। अत एवोक्तं तदधिकरणे **तन्त्ररत्नादौ** यदुक्तं प्रकृतौ तथा कृतमिति तत्राह—प्रकृतौ धान्यपदाम्नानसामर्थ्येन अवाचकेनापि शब्देन विकारप्रकाशनं कृतम्। तच्च धान्यपदमिहार्थान्निवृत्तं न तच्चोदकः प्रापयति लुप्तार्थत्वात्। यत्तु विवक्षिता लक्षणेति—तत्राह—न च वचनमस्ति प्रकृत्या विकारः प्रत्याय्य इति। नहि धान्यपदाम्नानस्यैतत्सामर्थ्यं यदुत लक्षणया प्रकाशयितुमिति। तदाम्नानात्तु तद्युक्त एव मन्त्रः कार्याङ्गमित्येतावद्गम्यते लक्षणा नान्तरीयकी न शास्त्रार्थः। न त्विह धान्यपदं प्रयोक्तुं शक्यम् तस्मान्मांसशब्दस्यैव प्रयोग इति। अस्माच्च ग्रन्थात् यत्रार्थार्थे शब्दप्रयोगे मांसाभिधानासमर्थे वाऽन्यशब्दे निवृत्ते शब्दान्तरप्रक्षेपे कर्तव्ये किमर्थं मुख्यमुल्लङ्घ्य लक्षणाश्रयणमिति मृगपदोहः। यत्रार्थार्थे प्रयोगे कर्तव्ये धान्यपदस्य प्राकृतस्य न निवृत्तिः तत्र प्राकृतलक्षणाद्वारापि आर्षरूपाबाधसम्भवेन पदान्तरप्रक्षेपेण मुख्यार्थाश्रयणमित्युक्तं भवति। अनेनैव न्यायेनाग्न्यादिपदानां तद्गतवृत्तेश्च शास्त्रीयत्वार्थिकत्वोपपादनं द्रष्टव्यम्। अत **एव शास्त्रदीपिकायां विकृतौ चापि तद्वचनादित्यधिकरणे** (पू. मी. ९-३-७) 'पत्नीं सन्नह्ये'ति मन्त्रगतपत्नीशब्दस्य द्विबहुपत्नीकविकृतिप्रयोगेऽनूहसिद्धान्तप्रसाधनेन चासाधुत्वं द्वयोरेकवचनस्यासाधुत्वात्। पाशे तु द्वयोर्बहुवचनप्रयोगस्य छान्तसत्वाभावादसाधुत्वं स्यादिति विशेष इति ग्रन्थेन यत्र एकपाशायां विकृतौ प्राकृतबहुवचनान्तप्रयोगः छान्दसः शक्यते कर्तुं तत्र (यत्र) पत्नीमन्त्रवदनूह इति व्यतिरेकेण सूचितम्। एतदभिप्रायेणैवात्र तृतीयपादाद्याधिकरणे "अत एव पाशानिति बहुवचनान्तमन्त्रस्य प्रकृताविव एकपाशायां विकृतावपि लक्षणयैकत्वप्रकाशनान्नोह" इत्युक्तं पूज्यपादैः। अतो यत्र विकृतौ प्राकृतपदार्थसमवायेन प्राकृतपदस्यैवार्थनिर्णायकत्वसम्भवः तत्र तदर्थप्रकाशनानुरोधेन तत्पदस्य तत्पदनिष्ठवृत्तेश्चातिदेशः, यथाऽग्निदेवत्यायां विकृतौ प्राकृताग्निपदस्य तत्र तेनैवार्षरूपेण प्रकाशनसम्भवे नोहः। यत्र तु प्राकृतपदार्थसमवायाभावात् न प्राकृतपदस्यार्थनिर्णायकत्वसम्भवः तत्र प्राकृतवृत्त्यभावे प्राकृतपदनिवृत्तौ अर्थार्थे पदप्रयोगे शक्तपदोह एव। यथैकधापदाग्निपदयोरूह इत्ययं सिद्धोऽर्थो "यथा वृत्त्या

**अत एव द्वित्वोपस्थित्यर्थं अङ्गुलिविन्यासोऽप्यनाशङ्कयः मन्त्रपदान्तराणमप्यथा-बोधकत्वानापत्तेः। अत एव** बहुपाशकस्थले **बहुवचनप्रयोगेऽपि न तस्य मन्त्रत्वम् प्रकृतौ निरूढलक्षणया एकत्वप्रकाशक एव तस्मिन् मन्त्रत्वात्। इह शक्त्या बहुत्व-प्रकाशके तस्मिन् मन्त्रत्वानुपपत्तेः ॥ ४ ॥**

---

एकत्वोपस्थितिः न तया द्वित्वोपस्थितिः" इति ग्रन्थेन पूज्यपादैः दर्शितम्। एतावतापि न प्राकृतपदार्थसमवायाभावे तत्पदाप्रयोगप्राप्तावपि तन्निष्ठवृत्तेरतिदेशमङ्गीकृत्य तज्जन्यबोधस्य द्वारतायाः प्रकृतौ विद्यमानायाः सिद्ध्यर्थं सूर्यादिपदप्रक्षेप इति तथोक्तमधस्तादित्यलं विस्तरेण।

तदेवं एकपाशायां विकृतौ विकल्पेन प्राप्तयोर्द्वयोरपि पाशमन्त्रयोरनूहेनैव प्रयोगः। द्विपाशायां विकृतौ तु द्वयोरप्यूहेनैव प्रयोगः इति प्रदर्श्य बहुपाशायामपि विकृतावेकवचनान्त-मन्त्रस्योहेनैव प्रयोगं निस्सन्दिग्धं मत्वा तेनैव न्यायेन बहुवचनान्तमन्त्रस्योहे सिद्धेऽपि प्रयोगे विशेषाभावात् फलभेदं दर्शयति—**अत एव बहुपाशस्थल** इति। तस्मिन्—बहुवचने इत्यर्थः। तथा च कदाचित् तद्भ्रेषे प्रायश्चित्तलाभालाभकृतो विशेष इति भावः॥

---

**(५)—विप्रतिपत्तौ विकल्पस्स्यात् समत्वात् गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १५ ॥ प्रकरणविशेषाच्च ॥ १६ ॥ अर्थाभावात्तु नैवं स्यात् गुणमात्रमितरत् ॥ १७ ॥ द्यावोस्तथेति चेत् ॥ १८ ॥ नोत्पत्तिशब्दत्वात् ॥ १९ ॥**

**बहुवचनान्तपाशमन्त्रस्य दैक्ष एव निवेशमङ्गीकृत्य विकृतावूहश्चिन्तितः। स एव त्विह चिन्त्यते—किं बहुपाशिकायामुत्कर्षः, उत दैक्ष एव निवेश इति। तत्र बहुत्वप्रकाशनलिङ्गादनुष्ठानसादेश्यादेर्बाधेन**[1] **पूषानुमन्त्रणादिवत् विकृतावुत्कर्षः। न च तद्वत्सामान्यसम्बन्धबोधकप्रमाणाभावः, ज्योतिष्टोममहाप्रकरणस्यैवानर्थक्यतदङ्गन्यायसहकृतस्य क्रतुपशुषु सामान्यसम्बन्धबोधकस्य सत्त्वात्।**

---

विप्रतिपत्तौ विकल्पः स्यात्।

अत्र तन्त्ररत्ने "यथा बहुवचनं लिङ्गं बहुपाशायामेव मन्त्रं विकृतावपकृष्य प्राकरणिकं प्रकृतिसम्बन्धं बाधते, तथा एकवचनलिङ्गमपि एकवचनान्तं प्रकृतौ प्रापयत् तत्समानविषयं बहुवचनान्तं प्रकरणात् प्राप्यमाणं बाधते; तस्मादुत्कर्ष" इत्येवं लिङ्गद्वयं दैक्षप्रकरणस्य बाधकमुपन्यस्तम्। तत्रैकवचनलिङ्गस्य प्रकरणप्राप्तबहुवचनान्तमन्त्रसम्बन्धबाधकत्वमुक्तमयुक्तम्। लिङ्गस्य स्वाश्रयमन्त्रविनियोजकत्वेऽपि प्रमाणान्तरप्राप्तेतरमन्त्रसम्बन्धव्यावृत्तावपि व्यापारकल्पने प्रमाणाभावात्। विकल्पेनेतरमन्त्रसमावेशेऽविरोधोपपत्तौ प्रमाणान्तरबाधकत्वकल्पनस्यान्याय्यत्वाच्च। अतो नैकवचनलिङ्गं तावत् प्रकरणबाधायालमित्यभिप्रेत्य बहुत्वप्रकाशनलिङ्गस्यैव प्रकृतिनिवेशबाधकत्वमाह—**बहुत्वप्रकाशनलिङ्गादिति**। **पूषानुमन्त्रणादिवदिति**। आदिपदेन सावित्रसारस्वतद्यावापृथिवीयाद्यनुमन्त्रणानां सङ्ग्रहः। अत्र बहुपाशायां विकृतावुत्कर्ष इति प्राचां ग्रन्थेषु सामान्यतोऽभिधानात् पश्वैकादशिन्यादिविकृतिष्वपि बहुवचनान्तमन्त्रनिवेशो भाति तं भ्रमं आशङ्कोत्तरेण निराकरिष्यन् अनुत्कर्षमाशङ्क्य निराकरोति—**नच तद्वदिति**। पूषानुमन्त्रणमन्त्रे हि यागानुमन्त्रणसमाख्यैव सामान्यसम्बन्धबोधकं किञ्चिदस्तीति व्यतिरेकदृष्टान्तपरस्तच्छब्दः। **क्रतुपशुष्विति**। यद्यपि ज्योतिष्टोमे 'आग्नेयमजमग्निष्टोमे आलभते ऐन्द्राग्नमुक्थ्ये द्वितीयं ऐन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीमतिरात्रे चतुर्थीम्' इत्यादिवचनैः चत्वारः सवनीयाः पशवः समाम्नाताः; तथापि अग्निष्टोमोक्थ्यसंस्थाकज्योतिष्टोमाङ्गभूतयोः

---

1. A & B बधे

न चैवमपि **पाशप्रातिपदिकार्थस्य पाशस्य द्वितीयार्थस्य कर्मत्वस्य प्रमोचनभावनायाश्च प्रधानभूताया दैक्ष्येऽपि सम्भवेन तत्प्रतिपादकपदानां** लिङ्गविरोधाभावेना**नुष्ठानसादेश्यादिबाधे प्रमाणाभावात् न गुणभूतबहुवचनमात्रानुरोधेनोत्कर्षकल्पना युक्तेति वाच्यं,** अनेकेषामपि **पदानामेकव्रीह्यादिपदानुरोधेन व्रीहिप्रयोग एव सङ्कोचवदुत्कर्षस्याप्युपपत्तेः। इतरथा एकपूषपदानुरोधेनेतरपदानामुत्कर्षानापत्तेश्च।** गुणभूतलिङ्गानु**रोधेन प्रातिपदिकादेर्मेषीवर्जं सङ्कोचवत् गुणभूतवचनानुरोधेनापि तदुत्कर्षोपपत्तेश्च।** प्रातिपदिकार्थवत् **लिङ्गसङ्ख्यादेरपि कारक एवान्वयेन प्रातिपदिकार्थं प्रति सङ्ख्यादेर्गुणत्वे**

---

**पशुयागयोर्न** निवेशः तत्रैकस्य द्वयोर्वा पशोर्विद्यमानत्वेन बहुत्वासम्भवात्। अपितु ज्योतिष्टोमातिरात्रसंस्थाकज्योतिष्टोमयोरेव सः। तत्र त्रयाणां चतुर्णां वा पशूनां तन्त्रेणानुष्ठानेन पाशबहुत्वस्य सम्भवादिति क्रतुपशुष्विति बहुवचनेन सूचितम्। अतः तथाविधबहुपाशायां विकृतावेव सामान्यसम्बन्धबोधकप्रमाणलाभे लिङ्गात् बहुवचनान्तमन्त्रस्योत्कर्षो युक्त एवेति भावः।

अत्र सिद्धान्ते तन्त्ररत्नादावनुत्कर्षसाधनं युक्तिद्वयेन कृतम्। तत्र बहुवचनान्तमन्त्र**लिङ्ग**कल्प्यश्रुतौ 'अनेन मन्त्रेणापूर्वीयं द्रव्यं उन्मोचनकर्मीभूतं प्रकाशयेत्' इत्येवंरूपायां, द्रव्यस्य पाशाख्यस्योद्देश्यत्वेन तद्गतबहुत्वस्य ग्रहैकत्वस्येवाविवक्षितत्वात् विवक्षितपाशोन्मोचनरूपप्रकाश्यस्य प्रकृतावपि सम्भवेनानुत्कर्ष इत्यविवक्षा—एकायुक्तिः। अथवा बहुत्वविवक्षायामपि तस्य प्रातिपदिकार्थं प्रति गुणभूतत्वात् प्रधानभूतद्रव्याभिधायिनीं प्रकृतिं कर्म विभक्तिञ्च नोत्क्रष्टुं शक्नुयादिति गुणभूतत्वं द्वितीया युक्तिः, तत्राविवक्षाबलादनुत्कर्ष इत्ययुक्तम्। अविवक्षायामपि मन्त्रप्रयोगकाले एकस्मिन्नसमवेतार्थबहुत्वप्रतिपादकबहुवचनप्रयोगानुपपत्तेः अपरिहार्यत्वात्। इतरथा पाशगतबहुत्वस्येव तद्गतैकत्वस्यापि समानन्यायेनाविवक्षितत्वात् एकवचनान्तमन्त्रस्यापि द्विपाशायां प्रयोगोपपत्तौ द्विवचनान्तोहानापत्तेः। यदि चाविवक्षितमप्येकत्वं द्वयोः पाशयोरसमवेतमिति नैकवचनप्रयोगः साधुरित्युच्यते, तर्हि बहुवचनान्तप्रयोगोऽप्येकस्मिन्नसाधुरिति तुल्यमेव। अतो नाविवक्षाऽनुत्कर्षे मुख्या युक्तिः। किन्तु गुणभूतत्वमेवेत्यभिप्रायेण तामुपेक्ष्य इमामेव युक्तिं मुख्यां पूर्वपक्षेऽनुवदति—**नचैवमपीति। लिङ्गविरोधाभावेनेति।** पाशोन्मोचनप्रकाशनसामर्थ्यरूपलिङ्गस्यैकपाशायामपि प्रकृतौ [सम्भवेनेत्यर्थः] किमेकं बहुत्वं नानेकेषां पदानामुत्कर्षापादकमित्येकत्वेन हेतुनाऽनुत्कर्षं साधयति? अथवा गुणभूतत्वेन वा आद्ये दूषणमाह—**अनेकेषामपीति।** द्वितीये दूषणमाह—**गुणभूतलिङ्गेति।** 'प्रासा अग्निं भरत' इति मन्त्रस्येति शेषः। वस्तुतस्तु गुणभूतत्वमसिद्धमित्याह—**प्रातिपदिकार्थेति।**

प्रमाणाभावाच्च। एवं चैकवचनान्तपाशमन्त्रेण विकल्पोऽप्ययन्दोषदुष्टो न भवेदिति प्राप्ते—

नात्रोत्कर्षः, गुणभूतबहुवचनानुरोधेन प्रधानभूतानां बहूनामुत्कर्षे प्रमाणाभावात्। विभक्त्युपात्तलिङ्गसङ्ख्यान्वयित्वरूपसत्त्वसमाख्यानुरोधेन पार्ष्ठिकान्वयवेळायां लिङ्गसङ्ख्यादेः प्रातिपदिकार्थप्राधान्येनैवान्वयाच्च।

न चैवं लिङ्गाद्यनुरोधेन प्रधानभूतबहुतरेतरपदसङ्कोचस्याप्यनापत्तिः, गुणभूतानुरोधेन प्रधानभूतस्य सङ्कोचेऽपि प्रकरणादिबाधप्रसङ्गेनोत्कर्षे प्रमाणाभावात्। सङ्कोचे त्ववर्जनीयतया नान्तरीयकसन्निधिबाधेऽप्युत्कर्षे नान्तरीयकत्वाभावेन तद्बाधस्यान्याय्यत्वाच्च।

पूषादिपदानां तु गुणत्वाभावात् तद्व्यतिरेकेणेतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावाच्चोत्कर्ष इति वैषम्यम्। प्रकृते तु पशुपाशकर्मकोन्मोचनमात्रप्रकाशनस्यैवोपयोगित्वात् सङ्ख्यायास्स्वरूपेण प्रकाशनानपेक्षत्वात् सङ्ख्यावाचकपदवैयर्थ्यपरिहारार्थं तस्य पाशसङ्ख्याप्रकाशनोपयोगकल्पनेऽपि नेतरपदानां तद्व्यतिरेण प्रकृतोपयोग्यर्थाप्रतिपादकत्वमिति विशेषः।

अत एव बहुवचनं सुपां सुलुक्' इत्येवं स्वशक्यबहुत्वाश्रयीभूतपाशावयवअन्यपाशरूपावयविवृत्तित्वसम्बन्धेनैकत्वलक्षणार्थमेव। एवं च फलमुखत्वात् विषमशिष्टेऽपि

---

प्रकरणादिबाधेति। सङ्कोचे प्रातिपदिकस्य सामान्यविषयार्थकत्वबाधमात्रं न प्रकरणबाधोऽपि। उत्कर्षे तूभयबाध इत्यादिशब्दार्थः। नान्तरीयकत्वाभावेनेति। त्रयाणां पुंपशूनामर्थेऽवश्यं पठनीयो मन्त्रो दैवान्मेषीयागसन्निधावपि पठित इव भवतीत्यवर्जनीयतया लब्धो यो नान्तरीयको मेषीयागसन्निधिः तस्य बाधस्सङ्कोचे भवति। नैवं प्रकरणपाठोऽस्य नान्तरीयकः अन्यानुनिष्पादित्वाभावात् अतः तस्य मुख्यस्यैव सतः उत्कर्षे बाधो वक्तव्यः। स चान्याय्य इत्यर्थः। तस्येति। बहुवचनस्येत्यर्थः। तद्व्यतिरेकेणेत्यत्रापि तच्छब्दोबहुवचनपरः। सुपांस्विति। यद्यपि जात्यभिप्रायेण एकस्यामपि जात्याख्यायामिति (पा–सू. १–२–५८) स्मृत्या विकल्पेन बहुवचनविधानात् एकत्वे लक्षणा उपपद्यत इति प्रकृतौ निवेशवत् द्विबहुपाशकविकृतिष्वपि यथावस्थितप्रयोगोपपत्तौ नोहसिद्धिः, तथा च सुपांस्विति च्छान्दसविधिप्रवृत्तेः नैवावश्यकं

विकल्पो न दोषायेति ध्येयम्। इतरथोत्कर्षपक्षेऽप्येकवचनान्तमन्त्रस्यैवोहेन बहु-पाशिकायामन्यस्यामिव क्रतुपशुष्वपि बहुवचनान्तत्वोपपत्तेस्तत्पाठफलं मन्त्रत्वमात्र-सिद्धिरूपं मन्दं स्यात् ॥ ५ ॥

---

## (६)—अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ २० ॥

अत एव दर्शपूर्णमासयोः 'पत्नीं सन्नह्य' इत्येकवचनान्तो मन्त्र एकपत्नीकप्रयोग

---

प्रयोजनम्, तथापि तत्प्रत्याख्यानपक्षे तत्प्रयोगस्य व्यक्तिबहुत्वाभिप्रायेणैवावश्यनेतव्यस्य साधुत्वं एकपाशकप्रकृतावसम्भवीत्यतस्तदुपन्यास आवश्यकतया कृतः। तत्र यद्यपि बहुवचनानुपपत्त्या प्रातिपदिक एव अवयवलक्षणायां विकल्पोऽपि नापद्यते, तथापि प्रधाने सा अयुक्तेत्यभिप्रायेणैकत्व-लक्षणेत्युक्तम्। मन्दं स्यादिति। उत्कर्षपक्षे बहुवचनान्तस्य मन्त्रस्य यथावस्थितस्यैव पाठेन मन्त्रत्वानपायात् तद्भ्रेषे मन्त्रभ्रेषप्रायश्चित्तरूपं फलं यद्यपि लभ्यते, तथापि तद्विल-म्बितत्वात् मन्दगाम्येव न तु प्रयोगकाले विशेषभेदेन त्वरितमिति मन्दपदेन सूचितम्।

---

अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत।

अत्र वार्तिकतन्त्ररत्नयोः अधिकरणभेदे न्यायभेदोपपादनमित्थं कृतम्। द्वयोरभि-धानयोर्मन्त्रयोः एकस्मिन्नर्थे न्यायान्यायनिगदयोः विप्रतिपत्तिः तत्र पाशन्यायेन द्वयोरपि विकल्पः। यत्र त्वेक एव मन्त्रः तत्र पत्नीन्याय इति।

तदयुक्तम्। पाशाधिकरणे विकल्पस्य अधिकरणप्रतिपादनीयार्थशरीरान्तर्गतत्वा-भावात्। तत्र हि पाशप्रातिपदिकादिप्रधानानां प्रकृतिविकृतिसाधारणपाशाद्यर्थप्रतिपादकानां गुणभूतबहुवचनार्थानुरोधेन न विकृत्युत्कर्षमूलः सङ्कोचो युक्तः। किन्तु बहुवचनमेवौप-चारिकमङ्गीकर्तव्यमित्येतावता बहुवचनान्तस्य मन्त्रस्य प्रकृतिसमावेशे अर्थादेकवचनान्तमन्त्रेण विकल्पः सम्पद्यते। न्यायशरीरन्तु गुणभूतानुरोधेन न प्रातिपदिकादिसङ्कोच इत्येतावन्मात्रमेव। तत्तु पत्नीमन्त्रेऽप्यविशिष्टम्। इहापि गुणभूतबहुवचनानुरोधेन एकपत्नीकप्रयोगविषयतया पत्नी-प्रातिपदिकसङ्कोचायोगात्। तत्र क उपयोगो मन्त्रगतद्वित्वैकत्वविकल्पार्थानाम्। अतो न न्यायभेदो युक्त इत्यभिप्रायेणाह—अत एवेति। पूर्वाधिकरणे गुणभूतानुरोधेन प्रधानो-

**इव द्विबहुपत्नीकप्रयोगयोरप्यविकारेणैव प्रयोक्तव्यः।** न च लिङ्गेनैकपत्नीकप्रयोग एव **मन्त्रोऽङ्गं, द्विबहुपत्नीकप्रयोगयोस्तूहेनातिदिश्यत इति युक्तम्; प्रयोगयोः परस्परं प्रकृतिविकारभावे प्रमाणाभावात्, लिङ्गस्य वक्ष्यमाणरीत्या सर्वसाधारणत्वाच्च। यत्र ह्युपदेशाख्यप्रापकप्रमाणस्यैकमात्रविषयत्वं, अन्यत्र च कार्यमुखेनातिदेशतः प्राप्ति-स्तत्रैवोहो न तु प्रापकप्रमाणस्य सर्वविषयत्वे।** अत्र च पाशन्यायेन **प्रातिपदिकादि-लिङ्गस्य सर्वविषयत्वोपपत्तेरेकवचनानुरोधेन सङ्कोचायोगान्नास्य प्रापकप्रमाणस्यैक-पत्नीप्रयोगमात्रविषयत्वम्।**

**न च क्रतुपशूनां समानविधानत्वकृत्वाचिन्तायां 'प्रास्मा' इत्यस्य लिङ्गानुरोधेन मेषीवर्जे सङ्कोचवदिहाप्येकवचनानुरोधेन मन्त्रसङ्कोचोपपत्तिरिति वाच्यं,** विना कारणं **पुंलिङ्गस्य लक्षणायां प्रमाणाभावेन तत्र सङ्कोचोपपत्तावपि प्रकृते सङ्कोचे प्रमाणा-भावात्।** न ह्यत्र **द्विबहुपत्नीकप्रयोगे एकवचनस्य लक्षणा, प्रत्येकव्यक्तिगतैकत्वाभि-**

---

त्कर्षो न युक्तः। किन्तु गुणभूतमेवौपचारिकमिति प्रधानभूतप्रातिपदिकमेवानुरोध्यमिति यतः सिद्धं अत एवेत्यर्थः। विशेषशङ्कान्तरकरणमात्रेण तु अविकरणभेदं दर्शयितुमाशङ्कते—**न च लिङ्गेनेति।** एकत्वप्रतिपादनरूपलिङ्गेनेत्यर्थः। **अयमर्थः।** बहुवचनं तावत् गुणभूतं असम्भवन्मुख्यार्थप्रधानभूतप्रकृतिसमवेतप्रातिपदिकार्थाविरुद्धमुपचारेण कथञ्चिन्नीतम्। इह तु एकवचनं सम्भवन्मुख्यार्थं प्रकृतिसमवेतप्रातिपदिकार्थाविरुद्धं किमित्युपचारेण नेतव्यम्। यदि तु अविरुद्धप्रातिपदिकार्थमप्युपचारेण नेतव्यमेकवचनं तदा पशुना यजेतेत्यत्रापि तदापत्त्या द्विबहुपशूनां साधनत्वापत्तिः। अतोऽविवक्षायां कारणाभावात् विवक्षितैकपत्नीसन्नहनप्रका-शनस्य द्विबहुपत्नीप्रयोगेऽसम्भवात् नाविकारेण मन्त्रप्रयोगः किन्तु विकारेणैवेति विशेषा-शङ्काहेतुमुक्तं विवृणोति—**अत्र च पाशन्यायेनेति।** **अयं भावः।** यथैव हि प्रकृतिसम-वेतैकपाशरूपपाशप्रातिपादिकार्थविरुद्धं बहुवचनं असम्भवन्मुख्यार्थं एवमिहापि प्रकृतिसमवेत-पत्नीमात्रपरप्रातिपदिकार्थविरुद्धमसम्भवन्मुख्यार्थं भवत्येवैकवचनम्। **नह्यत्र** द्विबहुपत्नीनां प्रकृति-प्रयोगसमवेतत्वं नास्ति। येन द्विबहुपत्नीपरपत्नीपदं न भवेत्। एकपत्नीकप्रयोगस्येव द्विबहु-पत्नीकप्रयोगस्यापि प्राकृतत्वानपायात्, अतोऽविशेषप्रवृत्तप्रातिपदिकार्थविरुद्धं एकवचनं गुणभूतं न प्रातिपदिकार्थसङ्कोचकं भवितुमर्हतीत्यविकारेणैव प्रयोग इति। **विना कारणमिति।** पुंपशूनादायापि समवायसम्भवेन सर्वथा निवेशानुपपत्तिरूपकारणाभावादित्यर्थः। एवं सत्यपि प्रकृते एकवचनं न बहुवचनवल्लाक्षणिकमस्तीत्याह—**नह्यत्रेति।** **अयमर्थः**— यद्येकवचनं बहुवचनवत् लक्षणयाऽऽश्रीयते तदा एकपत्नीकप्रयोगे मन्त्रानापत्तिः। एवमेवैकवचनं कदाचित्

**प्रायेण तदुपपत्तेः। यथैव हि शुक्ला घटा इत्यादौ शुक्लगुणस्य प्रत्येकवृत्तित्वेनान्वयः तथैकवचनाभिहितस्यैकत्वस्यापि प्रत्येकव्यक्तिवृत्तित्वेनान्वये न काचित् क्षतिः। न चैवं 'बहुषु बहुवचनम्' इत्याद्यनुशासनस्य निर्विषयत्वापत्तिः, बहुत्वस्य शाब्दबोधविवक्षायां तदुपपत्तेः।**

---

शक्त्या एकत्वप्रतिपादकम्, कदाचिल्लक्षणया द्वित्वबहुत्वप्रतिपादकमिति स्वीकारे च वैरूप्यापत्तिः। अत एकवचनं प्राकृतयावत्पत्नीगतसङ्ख्यालक्षकं सत् अजहत्स्वार्थलक्षणया एकपत्नीकप्रयोगेऽपि प्रयुज्यत इति कल्पनीयम्। तदपेक्षया प्रत्येकव्यक्त्यभिप्रायेणैव नेतुमुचितमिति।

एतेन यथा एकस्मिन् बहुवचनं अवयवापेक्षं एवमेकवचनमपि लक्षितजात्यपेक्षमित्यनूह इति **वार्तिकतन्त्ररत्नोक्तमपास्तम्**, विनैव लक्षणां निर्वाहे तदङ्गीकारस्यायुक्तत्वात्।

यदपि पक्षान्तरं तत्रैवोक्तम्। यद्यप्येकत्वं विवक्षितं तथापि प्राकृतद्विबहुपत्नीकप्रयोग गतद्वित्वबहुत्वस्य समवेतार्थस्य तेन प्रकाशनाऽसम्भवात् अवैरूप्याय अदृष्टार्थमेवोच्चरितं न समवेतसङ्ख्याभिधानार्थम्। तथा च प्राकृतद्विबहुपत्नीकप्रयोगे इव वैकृतेऽपि तादृशप्रयोगेऽनूह इति। **तदपि शिथिलमेव**। तथात्वे कदाचिदेकवचनान्तमन्त्रस्य एकपत्नीक प्राकृतप्रयोगे समवेतार्थकत्वसम्भवेऽपि बहुवचनान्तपाशमन्त्रगतबहुवचनस्य कथमपि प्राकृतपाशगतैकत्वाभिधानेऽसामर्थ्येन कदापि समवेतार्थकत्वासम्भवेनादृष्टार्थत्वस्यैवापत्त्या द्विपाशायामूहानापत्तेः। **अथोच्येत** न केवला प्रकृतिः प्रयोक्तव्या न केवलं प्रत्यय इति कस्मिंश्चिद्विभक्तिवचने प्रयोक्तव्ये प्रथमातिक्रमणे कारणाभावात् एकवचनं केवलं साधुत्वार्थं प्रयुज्यमानं युज्यते; अदृष्टार्थमविवक्षितञ्चेति वक्तुं पाशगतबहुत्वस्य साधुत्वार्थत्वकल्पने साधुत्वार्थमेकवचनप्रयोगस्यैवापत्तेः, अदृष्टार्थत्वादिकल्पनाऽसम्भवात् अगत्या लक्षणया एकत्वरूपसमवेतार्थप्रकाशकत्वं प्रकृतावेव वक्तव्यमिति भवत्येव द्विपाशायां द्विवचनान्तोह इति। **तथापि 'पवित्रे स्थ'** इति मन्त्रगतद्विवचनस्य प्रकृतावन्यसङ्ख्यपवित्रस्याप्यङ्गत्वादविवक्षितत्वं अदृष्टार्थत्वञ्च सिद्धान्ते उपपादितमसङ्गतमापद्येत, तत्रापि साधुत्वार्थमेकवचनस्यैवापत्तौ द्विवचनप्रयोगस्यादृष्टार्थत्वावि [दि] कल्पनस्यायुक्तत्वमिति वक्तुं शक्यत्वात्। अतोऽत्रैकवचनस्य अदृष्टार्थत्वात् अविवक्षितत्वाच्च प्रकृतौ विकृतौ चानूह इति नैव प्रसाधनीयम्। अपि तु एकपत्नीगतमेकत्वं साधारणप्रवृत्तपत्नीप्रातिपदिकार्थानुरोधेन अग्रिमाधिकरणशास्त्रदीपिकादर्शितया रीत्या प्रत्येकव्यक्तिगतैकत्वाभिप्रायेण समवेतसङ्ख्याप्रकाशकमेव सत् द्विबहुपत्नीकप्राकृतप्रयोगसाधारण्येन नीयमानं नैव विरुद्धम्। एवं तादृशवैकृतप्रयोगेप्यविरुद्धमेवेति प्रकृताविव

**न चैवं 'पशुना यजेत' इत्यादौ द्वित्रिपशुग्रहणेऽपि बाधकानापत्तिः।** प्रथमातिक्रमे कारणाभावेनैकवचनस्यैच्छिकपश्वन्तरव्यावृत्तिफलकत्वोपपत्तेः। अतश्च द्विबहुपत्नीक-

---

विकृतावप्यनूह इत्येव युक्तम् । अत एव उत्तराधिकरणारम्भे पूज्यपादैः एकवचनस्य समवेतार्थकत्वमङ्गीकृत्यैव विचारः प्रदर्शयिष्यते । अत एव यत्र 'पवित्रे स्थ' इत्यादिमन्त्रगतद्विवचनस्य द्वित्वातिरिक्तसङ्ख्याप्राकृतपवित्रान्तरपरत्वस्य कथमप्यसम्भवः तत्रागत्या पाशगतबहुत्वस्य एकत्व इव प्राकृतपवित्रमात्रगतसङ्ख्यायां एकतरनिश्चितैकपदार्थत्वेन लक्षणाऽसम्भवाददृष्टार्थमेव द्विवचनं वक्तव्यम् । पाशमन्त्रे तु निश्चितैकत्वरूपे तत्सम्भवाल्लक्षणयापि दृष्टार्थत्वसम्भवेन तत्कल्पनं युक्तमिति वैषम्यात् । पवित्रमन्त्रे दृष्टार्थत्वादेव प्रकृताविव विकृतावप्यविकारेण प्रयोगः ।

यद्यपि "पवित्रे करोति" इति प्रकृत्य "ते द्वे द्वे भवतः अथोऽपि त्रीणि स्युः" इति श्रुत्यनुसारेण त्रीन्वेति कात्यायनसूत्रेण पवित्रत्रयस्यापि पवित्रद्वयेन सह विकल्पे उक्ते सति यवप्रयोगे व्रीहिमन्त्रस्येव पवित्रत्रयपक्षे 'पवित्रे स्थ' इति मन्त्रस्य लोप एव युक्तः । ततश्च पक्षेऽपि द्विवचनसमवेतार्थत्वसम्भवे नादृष्टार्थत्वकल्पनं युक्तम् ; अत एव पितृभूतिना तथैवाङ्गीकृतम् । तथापि गुणभूतद्विवचनानुरोधेन प्रधानभूतपवित्रप्रातिपदिकार्थसङ्कोचस्यायुक्तत्वात् द्विवचनस्य लक्षणाऽसम्भवे अदृष्टार्थत्वकल्पनमेव युक्तम् । अत एव कर्केण पवित्रत्रयपक्षेऽपि मीमांसकमतेन मन्त्रप्रयोगो लिखितः । **प्रथमातिक्रमे कारणाभावेनेति ।**

अयमर्थः । पशुप्रातिपदिकं हि यथाऽनेकपश्वभिधायि, तथा एकपश्वभिधाय्यपि भवत्येव । तत्र प्रकरणे यदि नानापशव आम्नाताः स्युः, तदाऽविशेषप्रवृत्तबहुपश्वभिधायिपशुप्रातिपदिकार्थानुरोधेन एकवचनं साधुत्वमात्रार्थं, प्रत्येकवृत्ति वा कल्प्येत । नह्येतदस्ति पशुना यजेतेति विधानकाले एकस्मिन्नपि पशुप्रातिपदिकार्थाविरोधात् । प्रथमातिक्रमे कारणाभावेनैकातिरिक्तसङ्ख्याव्यावर्तकतया एकत्वविशिष्टपशुप्रधानपरत्वेन एकवचनस्य सम्भवति विशेषकरत्वेन साधुत्वार्थकत्वादिकल्पनेन हिंसानिषेधबाधनं प्रमाणवदिति वैषम्यमिति ।

अत्र च प्राचीनैः कृता द्विबहुपत्नीकप्राकृतप्रयोगविषयिणी ऊहानूहचिन्ताऽयुक्ता । अतिदिष्टपदार्थेष्वेवोहसम्भवस्याध्यायादौ प्रतिज्ञातत्वेनोपदिष्टपदार्थविषयतद्विचारकरणस्यायुक्तत्वात् । अतोऽत्र एकवचनस्य प्रयोगसम्भवेन सङ्ख्याभिधानपरत्वपूर्वपक्षे यवप्रयोगे व्रीहीणां मेधेति

प्रयोगे एकवचनान्तस्यैव मन्त्रस्य प्रयोगोपपत्तेर्न तत्रोहो, न वा 'व्रीहीणां मेध' इतिवत् लोप इति सिद्धम् ॥ ६ ॥

---

## (७)—विकृतौ चापि तद्वचनात् ॥ २१ ॥

एवं प्रकृतावेव समवेतार्थकत्वेन द्विबहुपत्नीकप्रयोगयोरपि मन्त्रस्याविकारे सिद्धे विकृतौ द्विबहुपत्नीकप्रयोगयोरपि प्रत्येकव्यक्तिगतत्वेनैवैकवचनस्य प्रयोगोपपत्तेर्नोहः ।

न चैवमनेकपाशिकायां विकृतावप्येकवचनान्तस्य पाशमन्त्रस्योहानापत्तिः, एकवचनस्य प्रत्येकव्यक्तिगतत्वेनोपपत्तेरिति वाच्यं, प्रकृतौ पाशस्यैकत्वेन तद्गतैकवचनस्यापूर्वसाधनव्यक्तिपरिच्छेदकीभूतसङ्ख्याप्रकाशकत्वेन विकृतावपि तादृशसङ्ख्याप्रकाशनार्थमूहावश्यंभावात् । प्रकृते त्वेकवचनस्य प्रमाणान्तरावधृतपत्न्यनेकत्वावरुद्धप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रवृत्त्यवगतेः न परिच्छेदकीभूतसङ्ख्याप्रकाशकत्वमिति वैषम्यम् ॥ ७ ॥

---

मन्त्रस्येव द्विबहुपत्नीकप्राकृतप्रयोगे एकवचनान्तमन्त्रस्य लोप इत्येव पूर्वपक्षकरणं प्रत्येकव्यक्तिवृत्तितयाप्येकवचनार्थस्य द्विबहुपत्नीकप्राकृतप्रयोगेऽबाधान्न लोप इति च सिद्धान्तस्थापनं युक्तमिति प्रयोजनान्तरकथनव्याजेन दर्शयति—न वा व्रीहीणां मेधेतिवदिति । ततश्च सूत्रस्थमविकारपदं लोपाख्यविकाराभावपरतया व्याख्येयम् । उत्तराधिकरणे चोहविवक्षया उपोद्घातोऽयमिति नासङ्गतिरपीति ध्येयम् ।

---

### विकृतौ चापि तद्वचनात् ।

व्याख्यातप्रायमेतदधिकरणम् । न परिच्छेदकीभूतसङ्ख्याप्रकाशकत्वमिति । पत्नीपदार्थे ह्येकत्वसङ्ख्या न द्वित्वादिव्यावर्तकतयाऽन्वेति, तथाविधप्रयोगस्यापि प्राकृतत्वात्; अतः परिचायकविधयेति तादृशप्राकृतार्थनदरूपस्यास्त्येव विकृतावपि सम्भव इति वैषम्यमित्यर्थः ।

यत्त्वत्र शास्त्रदीपिकायां एकवचनान्तस्य पत्नीमन्त्रस्य वैकृतद्विबहुपत्नीकप्रयोगेऽनूहेन प्रयोग इति सिद्धान्ते 'न चासाधुत्वम्' इत्याशङ्क्य, 'द्वयोरेकवचनस्य च्छान्दसत्वात्; पाशे तु द्वयोः बहुवचनप्रयोगस्य छान्दसत्वाभावात् असाधुत्वं स्यादिति विशेष' इति समाहितम् । अनेन च पाशमन्त्रवैलक्षण्यमुपपादयता प्रकृतावेव द्वयोरेकवचनं च्छान्दसमित्युक्तं भवति । विकृतौ च्छान्दसविधिप्रवृत्त्यभावस्यैव पूर्वमुपपादितत्वात् । तत्र यदि द्वयोरेकवचनं च्छान्दस-

## (८)—अध्रिगौ सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २२ ॥

एवं क्रतुपशूनां समानविधानत्वपूर्वपक्षे 'प्रास्मा' इत्यध्रिगुप्रैष एकवचनान्त एव तेषु प्रयोक्तव्यः पत्नीशब्दवत्; न त्वेकवचनानुरोधेनैकपशुक एव दैक्षादौ, एकवचनस्य प्रत्येकव्यक्त्यभिप्रायेण गणेऽपि श्रुत्यैव सम्भवात्। अत एव यस्य पुँलिङ्गस्य श्रुत्या स्त्रीपुंसगणे असम्भवस्तत्रात्यन्तनिषिद्धलक्षणायां प्रमाणाभावात् मेषीवर्जं पुंपशुष्वेव संकोच इति वैषम्यम्।

असमानविधानत्वसिद्धान्ते तु 'प्रास्मा' इत्ययं वचने लिङ्गे च 'प्रैभ्यो अस्या अग्निं भरतात्' इत्येवमूहितव्य एव। तदेतत् तार्तीयस्य समानविधानत्वविचारस्य प्रयोजनमात्रकथनम् ॥ ८ ॥

---

विधिविधेयं तदा द्वित्वमेवाभिदध्यादेकवचनं नैकत्वमपीति एकपत्नीप्रयोगे मन्त्रानापत्तिः। नहि च्छान्दसविधिः कदाचिदेकत्वार्थे एकवचनं कदाचित् द्वित्वार्थे विदधाति। एकतरासम्बद्धार्थपरपदसाधनायैव तद्विधिप्रवृत्तेः। अतोऽत्र कथञ्चित् प्राकरणिकपत्नीगतयावत्सङ्ख्यारूपार्थे च्छान्दसमेकवचनम्। तद्यादृशं प्रकृतावासीत् तादृशं विकृतावप्यस्त्येवेति न तस्यामूहापेक्षा। पाशे तु प्राकरणिकैकत्वातिरिक्तसङ्ख्याया अभावात्, एकवचनं एकत्वातिरिक्तद्वित्वादिसङ्ख्यारूपार्थे नैव च्छान्दसं प्रकृताविति द्विपाशायां विकृतौ प्राकृतच्छान्दसरूपाप्रवृत्तेः युक्त एवोह इत्यभिप्रायेणैव तद्द्रष्टव्यम्। वस्तुतस्तु पूर्वोक्तरीत्याऽनिश्चितार्थे लक्षणाऽसम्भवात्, अन्यथा 'प्रास्मा' इत्यत्रापि पुलिङ्गस्य लिङ्गसामान्ये लक्षणापत्त्या मेषीवर्जनानुपपत्तेः अयुक्तमेवैतच्छान्दसत्वाभिधानमिति ध्येयम्।

---

### अध्रिगौ सवनीयेषु।

अत्यन्तनिषिद्धलक्षणायामिति। यद्यपि चैकत्वं प्रकृते बहुत्वलक्षकं भवेत् तथापि तस्या लक्षणाया [निषिद्धत्वात्त्यागः]

यत्तु एकवचनोपपत्त्यर्थं 'गौश्चाश्वश्चे'ति गुणसूत्रगतभाष्यानुसारेण शास्त्रदीपिकायां 'अपि च जात्याख्यायामेकस्मिन् बहुवचनं बहुषु चैकवचनं स्मर्यत' इति हेत्वन्तरमुपन्यस्तम्, तन्न जात्यभिप्रायेणैकवचनोपपत्त्याश्रयणे जातेरेकत्वात् एकवचनस्य द्व्येकयोरित्यनेनैव सिद्धत्वादस्याति ? हेत्वन्तरमुपन्यस्तम्।

---

(९)—प्रतिनिधौ चाविकारात् ॥ २३ अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २४ ॥ तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात् ॥ २५ ॥ उक्तं च तत्त्वमस्य ॥ २६ ॥

यत्र तु अवयवसादृश्येन प्रतिनिधिनियमः, यथा नीवारपूतीकादौ, तत्र व्रीह्यादिशास्त्रेणैव नीवारादिगतव्रीह्यवयवसमानजातीयावयवानामपि साधनत्वावगतेः, संस्कारविधीनां मुख्यद्रव्यसमानविधानत्वस्य तृतीये स्थापितत्वात् 'व्रीहीणां मेध' इति मन्त्रोऽप्यविकारेणैव प्रवर्तते न तु नीवारणामित्येवमूहितव्यः। एवं सोमपदघटितमन्त्रा अपि, प्रतिनिधौ मुख्यस्थानापत्त्यतिदेशे प्रमाणाभावात्। न च नीवारगतव्रीह्यवयवादौ व्रीहित्वजातौ प्रमाणाभावेन तत्र कथं व्रीहिपदप्रयोगः, पुरोडाशप्रकृतित्वस्य षष्ठ्यर्थत्वेन व्रीहिपदवाच्यव्रीहित्वजातेः प्रकृतित्वायोगे व्रीहिपदेन लक्षणया व्रीहित्वसाधनताक्षिप्तसाधनताकत्वसम्बन्धेन व्रीह्यवयविन इव तदवयवानामप्युपादानेन नीवारगतव्रीह्यवयवानामपि प्रकाशनोपपत्तेः। 'व्रीहिभिर्यजेत' इत्यनेन हि व्रीहित्वजातेस्साधनता शब्देनोच्यते तदाश्रयावयविनस्तदवयवानां च साधनता त्वर्थादाक्षिप्यते इत्युक्तं तृतीये।

---

प्रतिनिधौ चाविकारात्।

तदवयवानामप्युपादानेनेति। यथैव व्रीहित्वजातेः प्रकृतित्वासम्भवे तदाक्षिप्तव्रीहित्वजात्यवच्छिन्नावयविनि लक्षणा। एवमवयविनोऽपि स्वतः प्रकृतित्वादर्शनात् तदाक्षिप्तावयवलक्षणापि द्वितीया आवश्यिकीति व्रीह्यवयवानां मेधेत्यर्थकस्य व्रीहीणां मेधेति मन्त्रस्य नीवारगतव्रीह्यवयवप्रकाशकत्वं नानुपपन्नमित्यर्थः। प्रतिनिधेर्मुख्यस्थानापत्त्यतिदेशे प्रमाणाभावादित्युक्तमेव साधयितुमाह—व्रीहिभिर्यजेतेत्यनेनेति। अयमर्थः। यद्यप्यर्थान्तरं नीवाराः, तथापि तेषां नात्र व्रीहिकार्यापन्नत्वेन ग्रहणं यतस्तद्धर्मान् लभेरन् किन्तु व्रीहिभिर्यजेतेत्यनेन व्रीहित्वजातेः शब्दतः साधनत्वावगमेऽपि अमूर्तायाः तस्याः साधनत्वासम्भवे तत्परिच्छिन्नावयविनः साधनत्वं नावयवसाधनत्वं विना युज्यते इत्यर्थात् व्रीह्यवयवानामेव यागसाधनत्वं बोधितमिति यथा व्रीहिलाभे समग्रव्रीहिशास्त्रेणैव साधनत्वं प्राप्तं, तथा व्रीह्यलाभे सकलव्रीह्यवयवलाभाभावेऽपि ये नीवारगता व्रीह्यवयवाः ते विकला अपि सकलासम्भवात् कार्यार्थमुपादीयन्ते। नीवारास्तु नान्तरीयकतयैवोपादीयन्ते। यदा तेषां विकलावयवानामपि व्रीहिशास्त्रेणैव प्राप्तं साधनत्वमिति सर्वेषामपि व्रीह्यवयवेषु प्राप्तिः न तु स्थानापत्त्यतिदेशेन, येनोहः स्यादिति भावः।

**वस्तुतः पुरोडाशस्य व्रीह्यवयवतण्डुलप्रकृतित्वस्यैव सत्त्वेन व्रीहिपदेन व्रीह्यवयवाना-मेव लक्षणाच्च। सोमत्वादिकं त्ववयवावयविवृत्तिजातिरिति पूतीकगतसोमावयवेष्वपि साऽस्त्येव। पूतीकगतविजातीयावयवबाहुल्यात्तु सा नाभिव्यज्यते। अतस्तत्रापि नोहः।**

**यदि हि नीवारत्वादिना नीवाराणां प्रतिनिधौ साधनत्वं भवेत् तदा तेषां** साङ्गप्रधानकरणासम्भवे **कर्मविध्याक्षिप्तानां संस्कारविध्युत्तरप्रवृत्तिकतया समानविधानत्वा-भावात् भवेदप्यूहः।**

---

अधुना व्रीहिभिर्यजेत व्रीहीणां मेधेति वाक्यद्वयेऽपि नान्तरीयकावयविलक्षणाया आवश्य-कत्वाभावं दर्शयति—**वस्तुत** इति। व्रीहित्वजातिर्हि यद्यप्यवयवावयविसाधारण्येव, तथापि व्रीहि-त्वजातेः साक्षात् कार्यान्वयायोग्यायाः करणत्वादिनिर्वाहाय तत्परिच्छिन्नावयवानामेव पुरोडाशप्र-कृतित्वदर्शनात् त एवावयवा लक्ष्यन्ते लाघवात्। न तु तदर्थं अवयविनि लक्षणाऽऽश्रयणीया। **यद्वा** व्रीहीत्वजातिः अवयविवृत्तिन्येव तण्डुलावस्थायां व्रीहिव्यवहाराभावात। तथा च व्रीहित्व-जात्या यद्यपि साक्षान्नावयवा लक्षयितुं शक्यन्ते, तथापि स्वाश्रयसमवेतत्वसम्बन्धेन शक्यन्त एव लक्षयितुमित्यवयवानामेव साधनत्वेन विधानात् नीवारगतव्रीह्यवयवानामपि साधनत्वाविघातात् व्रीहीणां मेधेत्यविकारेणैव प्रकाशनं नानुपपन्नमिति भावः।

ननु सोमत्वादिजातेरप्यवयविवृत्तित्वस्यैवानेनन्यायेनापत्तेः पूतीकावयवेषु सोमत्वाभावे कथं सोमपदघटितमन्त्राणामविकारेण तत्र प्रयोग इत्याशङ्कां निरसितुमाह—**सोमत्वादिकन्त्विति।** तण्डुलावस्थायां व्रीहिव्यवहाराभावेन तदवयववृत्तित्वेन व्रीहित्वजातेरङ्गीकारः। इह तु सोमलतैकदेशेऽपि सोमव्यवहारात् अवयवावयविवृत्तित्वेन सोमत्वजातेरङ्गीकारात् पूतीकगत-सोमावयवेष्वपि तज्जातेः सत्वात् युक्तमेव तदवयवप्रकाशनं सोमपदेनेति न बाधकमिति भावः। **साङ्गप्रधानकरणासम्भवे** इति। यदि व्रीहयो लभ्यन्ते तदा तु तदुद्देश्यकावघातप्रोक्षणा-द्यङ्गसमूहसहितव्रीहिप्रकृतिकपुरोडाशेन शक्यत एव प्रधानयागानुष्ठानं कर्तुम्। यदा तु ते न लभ्यन्ते तदा मुख्यद्रव्याभावात् साङ्गप्रधानानुष्ठानासम्भवे प्राप्ते गुणभूतद्रव्यानुरोधेन प्रधानभूतयागलोपस्यान्याय्यत्वेन पुरोडाशप्रकृतित्वेनानियतयत्किञ्चिद्द्रव्याक्षेपस्यैव बाधकव्रीह्या-दिशास्त्रस्याप्रवृत्तौ प्राप्तेः नीवाराणां कर्मविध्याक्षेपलभ्यानां तदा नीवारत्वेनैव प्राप्तिः, न तु व्रीहिसादृश्येन व्रीह्यवयवतया व्रीहिशास्त्रेण इत्यर्थे सिद्धे संस्कारविधीनां प्रत्यक्षव्रीहिविधि-प्रवृत्तितुल्यप्रवृत्तीनां प्रत्यक्षविधिविहितव्रीहिविषयत्वेन चरितार्थानां विलम्बप्रतीतसाधनताक-नीवारविषयत्वकल्पने प्रमाणाभावात् उपदेशेन संस्काराप्राप्तौ मुख्यस्थानापत्त्यतिदेशेन संस्कार-

वस्तुतस्तु तदाऽपि नीवारेषु व्रीहिधर्मातिदेशे प्रमाणाभावः। सत्यपि व्रीहिकार्यापन्नत्वे लौकिकधर्मग्रहणेनैव तेषां निराकांक्षत्वात् यूपावटास्तरणबर्हिषीवातिदेशकल्पनानुपपत्तेः। अन्यथा यूपावटास्तरणेऽपि बर्हिस्साध्यत्वसादृश्यादतिदेशापत्तेः। फलचमसे तु 'तमस्मै भक्षं प्रयच्छेत्' इति लिङ्गादेवातिदेश इति वैषम्यम्।

यदि तु द्रव्यमात्रासम्भवे कर्मविधिमात्रालोचनयैव संस्कारविधिभ्यः पूर्वमेव नीवाराणां साधनत्वावगम इति विभाव्यते, तर्हि तेषां प्रोक्षणादिधर्मांशे समानविधानत्वेऽपि 'व्रीहीणां मेध' इति मन्त्रस्य यवप्रयोग इव नीवारप्रयोगेऽपि लोपो भवेत् न तूहः। इयमेव च द्वयी गतिः, यत्र नावयवघटितसादृश्येन प्रतिनिधिः, यथा अवघातप्रतिनिधितया नखनिर्लुञ्छनादौ, तत्र सर्वथैव धर्माणां लोपः 'अधिषवणमसि वानस्पत्यम्'

---

मन्त्रादिप्राप्तौ भवेदप्यूह इति भावः। निराकाङ्क्षत्वादिति। यद्यपि चानेन न्यायेन 'नैवारश्चरुः' इति विहितचरुप्रकृतिभूतनीवारेष्वपि न व्रीहिस्थानापत्त्या तदतिदेशेन धर्मलाभः स्यात्, तथापि न तत्र पृथक्स्थानापत्त्यतिदेशकल्पनया प्राकृतव्रीहिधर्मप्राप्तिः अपि तु चोदनालिङ्गातिदेशेन प्रकृतिवदित्येवं रूपेण सकलधर्मप्राप्तौ तदन्तर्गतत्वेन तत्तत्स्थानापन्ने तत्तत्प्राकृतधर्मप्राप्तौ निराकाङ्क्षत्वान्न लौकिकधर्मग्रहणम्। इह तु केवलं नीवाराणां पुरोडाशः कथं स्यादित्याकाङ्क्षया यावत् व्रीहिकार्यापन्नत्वेन स्थानापत्त्यतिदेशकल्पनया धर्मान्वयः, तावत् पूर्वमेव लौकिकैरेवावघातादिधर्मैः निराकाङ्क्षत्वान्न व्रीहिधर्मप्राप्तिरिति नोहसम्भव इत्यर्थः। अन्यथेति। यूपावटास्तरणस्य धर्माकाङ्क्षायां हविरासादनादिरूपप्राकृतबर्हिःकार्यापन्नत्वाभावेन स्थानापत्त्यतिदेशासम्भवेऽपि बर्हिःसाध्यत्वसादृश्यकल्पितातिदेशेन प्राकृतास्तरणसाधनरूपाणां लवनादिसंस्कारसंस्कृतानामेव बर्हिषां प्राप्त्यापत्तेः। अतस्तत्र यदि लौकिकधर्मग्रहणेनैव निराकाङ्क्षत्वान्नातिदेशकल्पना युक्ता, तर्हि प्रकृतेऽपि तुल्यमिति भावः। नखनिर्लुञ्छनादाविति। इदं हि नखनिर्लुञ्छनं न नखावपूतानामिति वचनविहितं वैकृतम्। तत्र वैकृतनीवारेष्विव आवश्यकप्रकृत्यतिदेशेन प्राकृतधर्मप्राप्तेरावश्यकत्वात्। अत एव मुसलस्थानापन्ननखेषु भवत्येव प्रोक्षिताभ्यामुलूखलमुसलाभ्यामिति वचनविहितं प्रोक्षणम्। किन्तु प्रकृतावेवावघातकरणासामर्थ्ये सति वितुषीभावकर्तव्यताक्षेपलभ्यं यत् अवघातस्थानापन्नं अवघातप्रतिनिधितयोपात्तं तदेव गृह्यते। तस्य चावघातधर्मविध्युत्तरत्वेनावघातधर्मसमानविधित्वाभावेऽपि लौकिकधर्म इति तद्धर्माणां सर्वेषामपि यदि हि नीवारत्वेत्यादिनोक्तरीत्या ऊहः। अथवा वस्तुतस्त्वित्यादिनोक्तरीत्या लोप एव। अथवा यदि त्वित्याद्यनुपददर्शितरीत्या धर्मानुष्ठानेऽपि अवघाताङ्गमन्त्रस्यैव

**इत्यादिमन्त्रमात्रलोपो वा। प्रकृते तु नीवारपूतीकादीनामवयवघटितसादृश्येन प्रतिनिधित्वात् द्रव्यशास्त्रेणैव साधनत्वावगतेस्संस्काराणामिव व्रीह्यादिपदघटितमन्त्रस्याप्यनूहेन प्राप्त्यविघातः। तदेतदपि तार्तीयाधिकरणस्य प्रयोजनमात्रकथनम्॥ ९॥**

---

लोप इत्येवं नीवारोपादाने संस्कारविधिभ्यः पूर्वं उत्तरं वा नीवाराणां नीवारत्वेन रूपेण साधनत्वावगम इति सम्भावनया द्वयी गतिरुक्ता। सैवेयं द्व्येव गतिरिति भावः।

अत्र चाधिकरणसमाप्त्यनन्तरं वार्तिकतन्त्ररत्नयोः प्रसङ्गादिदं विचारितम्। प्रैयङ्गवादिहविःषु व्रीहीणां मेधेति मन्त्रस्य किं नियतः प्रयोगः उतानियतः? इति सन्देहे यदि व्रीहीणां विकारः प्रैयङ्गवचरुः तत ऊहः। यदि तु यवानां ततोऽनभिधानं अप्रयोगो मन्त्रस्य। नह्ययं यवानामङ्गं, असमर्थत्वात्। नहि व्रीहिविकारा यवाः, समानविधानत्वात् व्रीहियवानां, येन ऊहेन मन्त्रः स्यात्। तेन व्रीहिविधेरेव वाक्यशेषोऽयं मन्त्रो न यवविधेः। तेन प्रकृतौ द्वेधैव शास्त्रार्थः—मन्त्रप्रकाशितैर्व्रीहिभिर्यजेत केवलैर्वा यवैरिति विकृतिष्वपि प्रियङ्गवो यदा व्रीहिविकारा विवक्ष्यन्ते तदा ऊहेन मन्त्रः प्रयुज्यते; यदा तु यवविकाराः तदा न प्रयुज्यते। तस्मात् द्रव्यान्तरवतीषु विकृतिषु पाक्षिको मन्त्रो न नियत इति पूर्वपक्षं प्राप्य उभयोर्व्रीहियवयोः कार्यं साधयत् प्रैयङ्गवं हविः उभयविकारात्मकत्वेन उभयस्थानापन्नं उभयोरपि धर्माणां ग्राहकमिति प्रकृतौ मन्त्रस्य यवेषु सामर्थ्याभावात् ऊहस्य कार्यप्रमाणकस्य यथोपदिष्टपदार्थाधीनकार्यायां प्रकृतावसम्भवेन मन्त्रस्य निवृत्तावपि प्रैयङ्गवे चरावूहस्य सम्भवे किमिति मन्त्रस्य लोपः, नियतो मन्त्र इति सिद्धान्तितम्।

तदिदं कण्वरथन्तराधिकरणभाष्यकारीयसिद्धान्तेन यदि युक्तम्, अथवा तदधिकरणवार्तिकसिद्धान्तेन प्रकृतौ विकल्पितयोः विकृतावपि विकल्पेनैव प्राप्त्या समुच्चयासम्भवात् यदेव व्रीहियवान्यतरद्रव्यं प्राप्तं तत्स्थानापन्नत्वेन विधीयमानं प्रैयङ्गवं हविः तद्धर्मानेव गृह्णीयादित्यनियत एव मन्त्रो युक्तः; उभयथापि कण्वरथन्तराधिकरणेनैव गतार्थं नेह प्रसाधनीयमिति पूज्यपादैरुपेक्षितम्।

---

## (१०)—संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥ लिङ्गदर्शनाच्च ॥

**दैक्षे अध्रिगुप्रैषे 'उदीचीनाँ अस्य पदो निधत्तात्। सूर्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्। अन्तरिक्षमसुम्। दिशश्श्रोत्रम्। पृथिवीं शरीरम्' इति श्रुतम्। तत्र पशुगणे अस्येत्येकवचने द्विबहुवचनेनोह्यो** निरपवादः; पद इत्यत्रानूह्योऽपि। चक्षुरादिपञ्चकविषये तूहानूहचिन्तायां—

सत्यप्यधिष्ठानभेदे **इन्द्रियं लाघवाद्व्यासज्यवृत्त्येकमेव कल्प्यते। अभिमतं च परेषाम-पीदं** प्राणवायौ। **अतश्च तस्यैकत्वादेकवचनं समवेतार्थकमेव पशुभेदे** तद्भेदादूहितव्यम्।

---

### संसर्गिषु चार्थस्य।

**निरपवाद इति।** प्रकृतौ दैक्षे पशोरेकत्वात् 'अस्य' इत्येकवचनं प्रकृतौ समवेतार्थमेवेति द्विपश्वादिषु प्राप्तं द्विवचनबहुवचनाभ्यामूहितव्यमेवेत्यर्थः। **पद इत्यत्रेति।** प्रकृतौ पशुपदानां चतुर्णां बहुत्वात् यया वृत्त्या पद इति बहुवचनेन प्रकाशनं कृतं तथैव पशुगणेऽपि प्रकाशनसम्भवात् बहुवचनान्तपाशमन्त्रस्य एकपाशकविकृताविवानूह इत्यर्थः।

ये तावत् सङ्गता एकीभवन्ति न तु घटादिवत् संयुक्ता अपि पृथगेवावतिष्ठन्ते ते संसर्गिणः; यथा आज्यपयस्तैलतोयतेजःप्रभृतयः। तेषु न स्वारसिको भेदाभेदव्यवहारः किन्तु सम्बन्धिभेदाधीनः; तादृशेषु चक्षुरादिषु अधिकरणविचारमाह—**चक्षुरादिपञ्चकेति।** अत्र च यावच्चक्षुरादिगतमेकवचनं समवेतार्थप्रकाशकं सत् प्रकृतौ न्यायनिगदं न भवति न तावत् द्विपश्वादिविकृतौ द्विवचनबहुवचनोहपूर्वपक्षस्सिद्ध्यति। तदर्थं प्राचीनैरेवमुपपादितम्। चक्षुः शब्दोऽत्र नाधिष्ठानवचनः तस्य सूर्यगमनाभावात्। तद्गतन्तु तेजः चक्षुश्शब्देनोच्यते। तच्चाधिष्ठानान्निर्गतमेकीभवति दीपद्वयप्रभावत्। तदेकत्वात् प्रकृतौ अधिष्ठानभेदे सत्यपि एकवचनं न्यायनिगदम्। पशुगणेषु तु पशुभेदात् तदुपाधिके चक्षुषोऽपि भेदे सति पशुसङ्ख्यावशेन द्विबहुवचनमूहितव्यमिति।

तदेतदयुक्तम्। जीवत्येव पशौ पर्यग्निकरणानन्तरमध्रिगुमन्त्रकरणकप्रैषोत्तरमेव संज्ञपनात्तानेन [ऊहः] ततः पूर्वं चक्षुर्निर्गमाप्रसक्तेः तत्प्रयुक्तैकत्वमादाय न्यायनिगदत्वासम्भवात्। अतो जीवदवस्थायामेवानिर्गतचक्षुष एव सत्यप्यधिष्ठानभेदे एकत्वमुपपाद्य समवेतार्थकत्वमुपपादयति—**सत्यप्यधिष्ठानभेदे इति। प्राणवायाविति।** यथा एकस्यैव प्राणसंज्ञस्य शरीरान्तरसञ्चारिणो वायोः तत्तच्छरीरभेदेन भेदव्यवहारः, तथा एकस्यैव चक्षुरादीन्द्रियस्य तैजसादेः अधिष्ठानभेदेन भेदव्यवहारः वास्तवन्तु वायुरिव चक्षुरेकमेवेति भावः। **तद्भेदादिति।**

प्राणपदवाच्यघ्राणं त्वधिष्ठानस्याप्येकत्वादेकमेवेति तत्र सुतरामूहः। शरीरस्य तु प्रत्यक्षत एकत्वात्ततोऽपि। न च चक्षुषो व्यासज्यवृत्तित्वे एकगोळकविनाशेऽपि चाक्षुषानापत्तिः, एकगोळकमात्रवृत्तिखण्डचक्षुरन्तरेणैव चाक्षुषोपपत्तेरिति प्राप्ते—

भिन्नदेशावस्थिताश्रयभेदे तदाश्रेयभेदस्य रूपादावौत्सर्गिकस्य त्यागेन व्यासज्यवृत्तित्वकल्पने प्रमाणाभावात्, अन्यथा सर्वप्राणिसाधारण्येनैवैकचक्षुःकल्पनापत्त्याऽस्मदिष्टसिद्ध्यापत्तेः प्रत्यधिष्ठानं नानैवेन्द्रियम्। तच्च प्रमाणान्तरवशात्तैजसादीत्यन्यदेतत्। तत्र च पत्नीन्यायेनैकत्वस्य प्रत्येकवृत्त्यभिप्रायेणाप्युपपत्तेरनूह एव।

वस्तुतस्तु—गोळकाधिष्ठितस्य सूर्यगमनासम्भवात् ततो निर्गतस्यैवात्र चक्षुःपदेनाभिधानात्। न च पर्यग्निकरणोत्तरमेवाभिगुप्रैषात्तदानीं चक्षुरादीनां गोळकस्थत्वात् न निर्गमनमिति वाच्यं; अनन्तरभाविसंज्ञपनफलस्यैव पूर्वमुच्यमानत्वेन बाधकाभावात्। अतश्च निर्गतस्यैव चक्षुषः प्रदीपप्रभावदनेकस्यापि संसर्गेणैकीभावात् प्रकृतावेकवचनं निर्वाह्यम्। ततश्च विकृतावपि तथैव सम्भवादनूहः। न हि निर्गतचक्षुषां प्रदीपानामिव भिन्नदेशावस्थानस्यैव कल्पनान्नैकीभावः। एकगोळकनिमीलने[1] तत्पुरःप्रदेशावस्थितघटादेर्गोळकान्तरस्थितचक्षुषा दर्शनेन निर्गतचक्षुषो विस्फारणकल्पनादेकीभावोपपत्तेः।

---

इन्द्रियभेदादित्यर्थः। अन्तरिक्षमसुमित्यनेन प्राणादिवायोरुपादानात् पृथक्प्राणपदेन स्वनिर्गमप्रवेशस्थानवृत्तित्वसादृश्येनावश्योपादेयं घ्राणेन्द्रियं गृह्यते इत्यपौनरुक्त्यमभिप्रेत्याह — प्राणपदवाच्येति। अस्मदिष्टसिद्ध्यापत्तेरिति। सर्वप्राणिसाधारणेन चक्षुरेकत्वे बहुपशुष्वपि सर्वेषां पशूनां चक्षुष एकत्वात् अविकृतस्यैव प्रकृतिवन्मन्त्रस्य प्राप्तेः अनूहरूपेष्टसिद्ध्यापत्तेरित्यर्थः। पत्नीन्यायेनात्र सिद्धान्तकरणे पुनरधिकरणारम्भो व्यर्थ इत्यतः प्राचीनसम्मतो भिन्ना [म्मताद्भिन्ना] मेव सिद्धान्तयुक्तिं परमार्थतो दर्शयति—वस्तुतस्त्विति। निर्गततेजोऽभिप्रायकश्चक्षुश्शब्द इति प्राचां सिद्धान्ते पूर्वपक्ष्युक्तामनुपपत्तिमाशङ्क्य परिहरति— न च पर्यग्नीति। पूर्वमुच्यमानत्वेनेति। गमयतादित्याद्याशीरर्थकलोडन्तप्रयोगेणाशास्यमानत्वेन पूर्वमुच्यमानत्वेनेति शेषः।

ननु प्रदीपप्रभावदनेकस्यापि संसर्गेणैकीभावकल्पनापेक्षया प्रदीपानामिव भिन्नदेशावस्थानकत्वमेव भिन्नानां चक्षुषां कल्प्यताम्। ततश्च निर्गमनोत्तरमपि भिन्नप्रदेशावस्थितचक्षुर्द्वित्वादेव च तस्य द्वित्वलक्षणया प्रकृतौ प्रकाशस्य द्विपशुविकृतावूहाभावेऽपि बहुपशुकविकृतौ स्यादेवोह इत्याशङ्कां परिहरति—नहीति। एकीभावोपपत्तिरिति। यदा हि एकं चक्षुः

---

1. C. निमीनेन

अत्र च तेजस्त्वादिवत् चक्षुष्ट्वादि क्रमप्यवयवावयविवृत्तिजातिः, तेन तत्तद्गोळकस्थित-तत्तच्चक्षुर्भिरारब्धोऽवयव्यपि चक्षुरेवेति नोहप्रसक्तिः। एवं प्राणपदवाच्यघ्राणेन्द्रियेऽपि बोध्यम्। शरीरे तु यद्यपि नैकीभावसम्भवः। तथाऽप्युच्यमानस्य कारणीभूतसूक्ष्म-

---

निमीलितं भवति तदा तद्वृत्तिचक्षुरिन्द्रियस्य तव मते गोळकाद्भिन्नदेशावस्थाने तत्पुरोवर्तिघटादेः प्रत्यक्षाभावात्; तस्यैव च घटादेः गोळकान्तरस्थितचक्षुरिन्द्रियेण प्रत्यक्षजननात्। गोल्कावस्थानदशायामन्वयव्यतिरेकेण एकस्मिन्नेव घटादिप्रदेशे द्वयोरप्यनिमीलितचक्षुषोः प्रसृमरत्वेन संसर्गेणैकीभावः। तद्वत् भिन्नदेशावस्थानेऽपि निर्गतचक्षुषां गोळकान्निर्गमनेन प्रसृमरत्वमेव कल्पते; न तु भिन्नदेशावस्थानम्। अतो दीपप्रभावत् संसर्गेणैकीभाव एव युक्त इत्यर्थः।

नन्वेकस्यापि चक्षुस्तेजसः संसर्गेणैकीभूतस्यापि तस्य चक्षुःपदवाच्यत्वे प्रमाणाभावा-दधिष्ठानगतयोरसंसृष्टयोरेव तेजसोः चक्षुःपदवाच्ययोः द्वित्वात् चक्षुर्वृत्त्येकत्वानुपपत्तावश्यं पाशाधिकरणन्यायेनैकवचनस्य द्वित्वलक्षणया प्रकृतौ प्रयोगेऽपि पाशमन्त्रस्य द्विपाशायामिवास्यापि बहुपाशकायां बहुवचनान्तोहापत्तिरनिवार्यैवेत्याशङ्कां परिहर्तुमाह—**अत्र च तेजस्त्वादिवदिति**। तथा च यथा प्रकृतौ निर्गततत्तच्चक्षूरश्मिभिः परस्परं संसर्गेणोत्पन्ने एकस्मिन्नवयविन्यपि चक्षुष्ट्वजात्यङ्गीकारेण चक्षुःपदप्रवृत्तिनिमित्तसत्त्वेन चक्षुःपदवाच्यत्वोपपत्त्या तस्य चैकत्वादेव विनैव लक्षणामेकवचनप्रयोगः तथैव बहुपाशकायां विकृतौ अनेकचक्षुरारब्धावयव्येकत्वमादाय प्रयोगस्सूपपाद एवेति नोहप्रसक्तिरित्यर्थः। घ्राणेन्द्रिये च यद्यपि प्रकृतावेकमेव तदिति न तदारब्धावयव्यन्तरैकत्वमादायैकवचनप्रयोगः तथापि विकृतौ बहुभिर्घ्राणेन्द्रियैरारब्धावयविन्यपि पूर्वोक्तचक्षुष्ट्वादिवत् घ्राणत्वस्य स्वीकारात् घ्राणगतैकत्वस्य प्रकृताविवाबाधादेकवचनप्रयोगोपपत्ते-रनूहप्रसक्तिमतिदिशति—**एवं प्राणपदवाच्येति**।

अत्र च यद्यपि लिङ्गशरीरस्य तैजसस्थूलशरीरनाशेऽपि कर्मजन्यफलभोगार्थमेव स्वीकारात् तस्य च तत्तदधिष्ठाननिर्गततत्तत्तेजःसमूहरूपस्य भविष्यत्स्थूलशरीरवर्तितत्तद्गोलकरूपतत्तदधिष्ठान-प्रवेशानुरोधेनासंसृष्टस्यैवाङ्गीकारो युक्तः; नतु तदारब्धावयव्यन्तरोत्पत्तिः, तथापि तदनुरोधेन अन्यत्र तथाङ्गीकारेऽपीह यज्ञियपशोः देहान्तरग्रहणे प्रमाणाभावात् तेजसां संसर्गे न काचित् क्षतिरिति ध्येयम्।

पृथिव्यां लयापरपर्यायगमनस्य प्रत्यक्षबाधितत्वात् प्रकृतावेव स्तुत्यर्थमुच्यमानतयाऽसमवेतार्थकत्वादनूहो द्रष्टव्यः। शरीरे ऊहं केचिदिच्छन्ति ॥ १० ॥

---

वस्तुतस्तु यामुनजलस्य गङ्गाप्रवाहसंसर्गेऽपि नैवावयव्यन्तरोत्पत्तिः प्रत्यक्षसिद्धा, येन तत्र यामुनत्वाङ्गीकारेण यामुनं जलमिति व्यवहारो भवेत्। प्रत्युत गङ्गाजलमिति व्यवहारात् गङ्गात्वमेव तत्राङ्गीक्रियते। एवमिहापि सूर्यादिगमनोक्त्या तत्तेजसि लीनस्यावयव्यन्तरोत्पादकत्वे प्रमाणाभावात् सौरत्ववायुत्वादिजातिमत्त्वेन सौरादिव्यवहारेऽपि चक्षुरादिव्यवहारे प्रमाणाभावेन अनेकस्य संसर्गेणैकत्वमादाय प्रकृतौ विकृतौ वा चक्षुरित्येकवचनप्रयोगोपपादनेनानूहसिद्धान्तकरणं युक्तम्। किन्तु चक्षुःशब्देन नात्र निर्गततेजोभिधानं, तस्य सौरे तेजसि लीनस्य तदानीं चक्षुरादिपदवाच्यत्वे प्रमाणाभावात्। अपि तु जीवदवस्थायामेवाधिष्ठानगतं चक्षुरादि तेजः मरणोत्तरं सूर्यादि प्रति गमयतादित्येवमप्याशासनसम्भवे वास्तवसूर्यादिगमनस्य तदानीमभावेऽपि बाधकाभावात्। अधिष्ठानगतचक्षुस्तोजोद्वयस्यैव चक्षुःपदेन पत्नीमन्त्रन्यायेन प्रकाशने कर्तव्ये एकवचस्यादृष्टार्थतया प्रत्येकव्यक्त्यभिप्रायेणैव नेतुं युक्ततया तथैव विकृतावपि नेतुं शक्यत्वेनानूहोपपत्तेरित्येव पूज्यपाददर्शिताधि[1] करणारम्भरीत्या युक्तमिति मम प्रतिभाति। स्पष्टार्थमन्यत्।

---

1. Ms. दर्शित करणारंभ

(११)—एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् ॥ २९ ॥ अविकारो वा बहूनामेककर्मवत् ॥ ३० ॥ सकृत्त्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३१ ॥

तत्रैव प्रैषे 'एकधाऽस्य त्वचमाच्छ्यतात्' इति श्रुतम्। तत्र षष्ठ्यन्तं द्वितीयान्तं च पशुगणे द्विबहुवचनान्तेनोहितव्यमित्यविवादम्। एकधाशब्दस्य त्वविकारोऽथवा अभ्यासात्मको भाक्त ऊह इति चिन्तायां—

एकधाशब्दस्य एकप्रयत्नसाध्यत्वे एकदेशकालकत्वे च लौकिकप्रयोगेण नानार्थकत्वावगतेः प्रकृतावेकत्वात्त्वचो देशतः कालतो वा साहित्यरूपार्थासम्भवेन त्वचस्साकल्यसम्पत्तये एकप्रयत्नसाध्यत्वस्यैव ग्राह्यत्वेऽपि विकृतावश्रुताभ्यासकल्पने प्रमाणाभावात् एकधाशब्देनार्थान्तरभूतं देशतः कालतो वाऽनेकत्वक्छेदनसाहित्यमेव शक्त्या प्रकाश्यत इत्यविकारादनूहः। यदि तूपकारपृष्ठभावेन पदार्थानामतिदेशात् प्रकृतौ यस्य शब्दस्य योऽर्थो निर्णीतस्तस्य तदर्थपृष्ठभावेनैव प्राप्तयवगतेर्नार्थान्तरप्रकाशनस्य प्रयोजनत्वकल्पनमुपपत्तिमदिति विभाव्यते, तदाऽस्तु एकप्रयत्नसाध्यत्वमेव विकृतावप्येकधाशब्दार्थः। तथाऽपि तु नाभ्यासः सकृदुच्चरितेनैवैकधाशब्देन सर्वत्वग्गतैकप्रयत्नसाध्यच्छेदनकत्वस्य वक्तुं शक्यत्वात्।

यद्यपि च सहितानां सर्वासां त्वचामेकप्रयत्नसाध्यच्छेदनकत्वं बाधितं, तथापि प्रतिप्रधानं गुणावृत्तेर्युक्तत्वादुद्देश्यानां त्वचां साहित्याविवक्षणाच्च प्रत्येकमेव सम्मार्गादिवत्तास्वेकप्रयत्नसाध्यच्छेदनकत्वस्यान्वयबोधोपपत्तेः नार्थोऽभ्यासेनेति प्राप्ते—

---

एकधेत्येकसंयोगात्।

यद्यपि प्राकृतपदस्य विकृतौ प्राकृतवृत्त्यैवार्थबोधकत्वं न वृत्त्यन्तरेणेति पूर्वं बहुशः साधितम्, तेनैव एकधापदस्यापि प्राकृतार्थप्रतिपादनानुरोधेन मुख्योहवत् पदाभ्यासोऽपि सिद्ध एवेति व्यर्थैवेयं चिन्ता, तथाप्यन्यत्र स्वाधीने शब्दप्रयोगे इतिन्यायेन शक्तपदप्रयोगसम्भवे न लक्षणाश्रयणमिति सम्भवेदूहः। प्रकृते त्वेकधाशब्दस्य नानार्थकत्वादर्थान्तरमादायापि एकस्यैवैकधाशब्दस्य स्वाधीने इति न्यायाविरोधेन प्रयोगोपपत्तौ नाभ्यासरूपोहः कार्य इति विशेषाशङ्कया युक्तेयं चिन्तेति सूचयितुं नानार्थकत्वमेकधापदस्योपपादयति—एकधाशब्दस्येति। एकदेशकालकत्वे चेति। एकदेशकालकृतं यत्साहित्यं तत्रापि 'एकधा गाः प्रापयती'ति प्रयोगात् नानार्थत्वमित्यर्थः। प्राचां सिद्धान्तयुक्तिमनूद्य पूर्वपक्षे दर्शयति— यदि त्विति।

प्रकृतौ यादृशनिर्णयं प्रति यादृशपदज्ञानस्य यादृशसामग्रीसत्त्वे फलोपधायकता विकृतावपि तादृशसामग्रीसत्त्व एव तादृशपदज्ञानस्य तादृशनिर्णयोपधायकत्वं वाच्यं, इतरथा प्रकृतिवद्भावानुपपत्तेः। तदिह प्रकृतौ एकधाशब्देन सहकार्यन्तरनैरपेक्ष्येणैव त्वक्त्वं विशेष्यतावच्छेदकीकृत्य त्वग्विशेष्यकैकप्रयत्नसाध्यच्छेदनकत्वप्रकारकः पर्याप्ति-संसर्गको निर्णयो जनितः। न चासौ विकृतौ सकृदुच्चरितेनैकधाशब्देन सहकार्यन्तर-नैरपेक्ष्येण सम्भवति। तस्य समुदितत्वक्त्वं विशेष्यतावच्छेदकीकृत्यापि तादृशबोध-जनकत्वात्। अतश्च तादृशबोधे बाधितविषयत्वप्रतिसन्धानस्याप्युक्तनिर्णये सहकारि-कारणता वाच्येति अधिकसामग्रीकत्वात् प्रकृतिवद्भावबाधापत्तिः। अतः प्राकृत-सहकारिकारणमात्रेण प्रत्येकत्वग्विशेष्यकनिरुक्तबोधजननार्थमेकधापदस्य यावत्त्वच-मभ्यास आवश्यक एव। सोऽयमभ्यासमात्रेण प्रकृतितोऽन्यथाभावादूह इति व्यवह्रियते। न त्वयं वस्तुतस्संस्कारोहादिसाधारणोहलक्षणाक्रान्त इति ध्येयम्॥ ११॥

---

अतश्च तादृशबोधे इति। एकप्रयत्नसाध्यच्छेदनकत्वप्रकारकत्वग्विशेष्यके प्रकृतिवद्विकृतौ बोधे जनयितव्ये बाधितविषयत्वप्रतिसन्धानस्याप्यधिकसामग्रीत्वं वक्तव्यम्; इतरथा समुदित-त्वग्विशेष्यकतत्प्रकारकबोधस्याप्यापत्तेः। अतो विकृतौ यथावस्थितप्राकृतैकधापदार्थबोधस्य सह-कार्यन्तरसापेक्षत्वेन प्रकृतिवद्भावभङ्गः स्फुट एवेति भावः। स्पष्टार्थमन्यत्।

---

(१२)—मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारस्स्यात् ॥ ३२ ॥ अपि वा द्विसमवायोऽर्थान्यत्वे यथासङ्ख्यं प्रयोगस्स्यात् ॥ ३३ ॥ स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात्पत्नयां द्वितीयशब्दस्स्यात् ॥३४॥ देवता तु तदाशीष्ट्वात् सम्प्राप्तत्वात् स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥ उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३६ ॥ उत्कृष्येतैकसंयुक्तो द्विदेवते सम्भवात् ॥ ३७ ॥ एकस्तु समवायात् तस्य तल्लक्षणत्वात् ॥ ३८ ॥ संसर्गित्वाच्च तस्मात् तेन विकल्पस्स्यात् ॥ ३९ ॥ एकत्वेऽपि गुणानपायात् ॥ ४० ॥

तत्रैव प्रैषे 'उपनयत मेध्या दुरः। आशासाना मेधपतिभ्यां मेधम्' इति श्रुतम्। केषांचित्तु शाखिनां 'मेधपतये मेधम्' इति। तत्र न तावच्छाखाभेदेनात्र मन्त्रभेदः एकदेशवैलक्षण्येऽपि शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञानबलेन तदेकत्वावगतेः। ततश्च तदर्थोऽप्येक एव वाच्यः। तेन मेधस्य पशोः पतिः यजमानो देवता वा अर्थो वाच्यः न तूभयम्।

न च मेधपतित्वस्य शक्यतावच्छेदकस्यैकत्वात् तदवच्छिन्नोभयाभिधानेऽपि न दोष इति वाच्यं, तथात्वेऽपीतरपदानां तत्तदर्थघटिततत्तद्वाक्यार्थविषयकविलक्षणबोधद्वयजनकत्वानुपपत्तेः। तथाहि—यजमानपरत्वे यजमानाय यो मेधः पशुः

---

मेधपतित्वं स्वामिदेवतस्य। अत्र प्राचीनैः शाखाभेदेनाम्नातयोः द्विवचनैकवचनान्तमन्त्रयोः मेधपतिशब्देन मेधस्य पशोः पतिः स्वामीत्यवयवयोगेनाग्नीषोमरूपं देवताद्वयं यजमानश्चेति त्रयमुच्यते। तत्र प्रकृतावेवैकवचनं द्विवचनञ्चानुपपन्नमित्यन्याय्यनिगदत्वात् कथञ्चिल्लक्षणयाऽदृष्टार्थतया वा नेयम्। तथैव विकृतिष्वप्यविकारेण शक्यत एव नेतुमित्यनूह इत्यर्थवत्त्वेनान्यायनिगदता युक्ता। तस्मात् द्विवचनान्तो देवतावचनः, तेनासौ देवताविवृद्धावूहितव्यः। एकवचनान्तस्तु स्वामिवचनः स्वामिविवृद्धावूहितव्य इति द्वितीयपूर्वपक्षः कृतः। तदिदं पूर्वपक्षद्वयमनुपपन्नमिति सूचयन् तृतीयपूर्वपक्षोपोद्धातमारचयति—तत्र न तावच्छाखाभेदेनेति।

भोगसाधनत्वेनासीत् तं मेध्याः भवन्तः ऋत्विजः दुरः यज्ञद्वारं चात्वालोत्करयोर्मध्यं उपनयत स्वकीयदक्षिणां यजमाननिष्ठं फलं वा आशासानास्सन्त इत्यर्थः। देवतापक्षे देवतायै मेधं पशुं आशासाना मेध्या भवन्तः तं दुरः प्रति उपनयत इत्यर्थः।

केचित्तु देवतापक्षे देवतायै पशुमाशासाना भवन्तो मेध्यास्तदीया दुरो यज्ञद्वाराणि हृदयादीनि उपनयत इत्यर्थ इत्याहुः। सर्वथा विलक्षणबोधद्वयजनकत्वानुपपत्तेरेकरूप एवार्थो वाच्यः।

न च बोधद्वयजनकत्वे सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वमिति नियमभङ्ग एव दूषकताबीजम्; न च तदत्रास्ति, शाखाभेदेन द्विश्श्रुतस्य सकृच्छ्रवणाभावादिति वाच्यं, तथाऽपि लिङ्गकल्पितश्रुतेरनेकत्वकल्पनागौरवभिया एकस्यैवार्थस्य वाच्यत्वात्। तदिह किंपरत्वमिति चिन्तायाम्—

देवताया विग्रहाद्यभावेन स्वामित्वापरपर्यायपतित्वानुपपत्तेर्यजमानपरत्वमेव। न च तस्यैकत्वेन द्विवचानानुपपत्तिः। पाशन्यायेन तदुपपत्तेः। वस्तुतस्तु—दम्पत्योर्व्यासज्यवृत्तिकर्तृत्वैक्यात् यजेतेतिवदेकवचनं, पत्नीयजमानाभिप्रायेण च वसानावितिवत् द्विवचनम्। अत एवैकपत्नीकप्रयोगे द्विवचनान्त एव मन्त्रः, अन्यत्र त्वेकवचनान्त एवेति नास्मन्मते विकल्पोऽपीति प्राप्ते—

यजमानपरत्वे पशोराशासनस्य तावत्सिद्धत्वेनैव वैयर्थ्यम्। दक्षिणादीनां चाश्रुतानां कल्पनात् न तदाशासनमपि सम्भवि। अतो देवस्वादिव्यवहारसिद्ध्यर्थं देवताया अपि स्वीकाराख्यसम्बन्धस्य तृतीये साधितत्वात् तमादाय मेधपतित्वोपपत्तेर्देवतापरत्वमेव। वचनं तु त्वदुक्तरीत्यैव देवतात्वस्य अग्नीषोमयोर्व्यासज्यवृत्तित्वादेकत्वोपपत्तेरधिष्ठानभेदेन च द्वित्वोपपत्तेर्समाप्युपपन्नमेव। कर्तृत्व इव च देवतात्वेऽपि मेधपतित्वं सामानाधिकरण्यादेवोपपन्नमिति न काचित्क्षतिः। एवं च विकल्पोऽपि फलमुखत्वान्न दोषाय।

---

प्रकाशकारैः कृतमर्थमनुवदति—केचित्त्विति। वेदभाष्ये तु मेधो यज्ञः तत्सम्बन्धिनो दुरो विशसनहेतीर्वा इत्यर्थान्तरमपि कृतम्। द्वयोरपि मन्त्रयोरेकरूप एवार्थो वाच्यः इति प्राचीनोक्तावनुपपत्तिमाशङ्क्य परिहरति—न च बोधद्वयेति। एकपत्नीकप्रयोगे इति। एकपत्नीकप्रयोगे यावत् द्विवचनान्तमन्त्रपाठः सम्भवति, न तावत् उभयवृत्तिव्यासक्तकर्तृत्वाभिप्रायेण क्लिष्टकल्पनया एकवचनान्तमन्त्रपाठो न्याय्यः, प्रकाशनरूपकार्यस्य द्विवचनान्तमन्त्रेणापि सिद्धेः तदनपेक्षणात्। पत्नीद्वययजमानप्रयोगे तु कथमपि द्विवचनान्तप्रयोगासम्भवेऽगत्या व्यासक्तकर्तृत्वाभिप्रायेणैकवचनान्तमन्त्रप्रयोग एवेति व्यवस्थासम्भवेन न विकल्पप्रसक्तिरित्यर्थः। एकवचनस्य व्यासक्तदेवतात्वपरत्वेऽपि तस्य देवतात्वस्य स्वतो मेधपतित्वासम्भवे कथं मेधपतिप्रातिपदिकार्थे तदन्वयः इत्याशङ्कां परिहरन्नाह—सामानाधिकरण्यादेवेति। मेधपतित्वा-

**प्रयोजनं पूर्वपक्षे सत्रे द्वयोरप्यूहो,** विकल्पश्च अर्थद्वयानुसन्धाने। **सिद्धान्ते त्वग्निमाधिकरणे वक्ष्यते ॥ १२ ॥**

---

वच्छिन्ने ह्येकत्वान्वयः तत्र मेधपतित्वं साक्षात्सम्बन्धेन यद्यप्यधिष्ठानवृत्ति तथापि सामानाधिकरण्यसम्बन्धेन तव मते यजमानपरत्वे कर्तृत्वे इव सम्भवत्येव देवतात्वेऽपीति युक्त एव तदवच्छिन्ने देवतात्वादावेकत्वान्वय इत्यर्थः।

वस्तुतस्तु अग्नीषोमयोः व्यासज्यवृत्तिदेवतात्वेऽपि तद्गतदेवतात्वेऽन्वयः एकत्वस्येति नार्थः। किन्तु देवतात्वस्य एकत्वात् तेन रूपेण यन्मिळितं तदेव मेधपतिशब्देनोच्यत इति तदभिप्रायेण प्रयुज्यमानमेकवचनं मेधपतित्वावच्छिन्नमिळितव्यक्तावुपपद्यत एवेति न देवतात्वे सामानाधिकरण्येन मेधपतित्वाङ्गीकारक्लेशोऽपि। अत एवोक्तं **तन्त्ररत्ने**—"यद्यप्यग्नीषोमौ देवता न सङ्घातः, तथापि तयोर्व्यासक्तं देवतात्वमिति देवतारूपेण तयोरेकत्वात् मेधपतिशब्दस्य देवतावचनत्वाद्युक्तमेकवचनम्" इति। **विकल्पश्चार्थद्वयानुसन्धाने इति।** यद्यपि सत्रे विकल्पेन प्राप्तयोः पूर्वपक्षे ऊहसाम्ये सति नानुष्ठाने विशेषः तथापि पत्नीयजमानरूपार्थानुसन्धानमपेक्ष्य प्राप्तस्य द्विवचनान्तमन्त्रस्योहः। दम्पत्योः व्यासज्यवृत्तिकर्तृत्वरूपस्य यजमानमात्ररूपस्य चार्थस्य वाऽनुसन्धानमपेक्ष्य प्राप्तस्यैकवचनान्तमन्त्रस्य ऊह इत्येवमर्थद्वयानुसन्धाने विकल्परूप एवानुष्ठाने विशेषो बोध्य इत्यर्थः। अत्र च **ऐतरेयिणो** यद्वचनमामनन्ति यजमानो मेधपतिरिति पूर्वपक्षपूर्वकं "यस्यैवाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिः। सम्पद्येकदेवत्यः पशुः स्यात् मेधपतये इति ब्रूयात्। यदि द्विदेवत्यो मेधपतिभ्यामिति। यदि बहुदेवत्यो मेधपतिभ्य इति" तन्नास्तीति कृत्वा चिन्त्यतेऽधिकरणत्रयमित्युक्तं तन्त्ररत्ने।

---

(१३)—नियमो बहुदेवते विकारस्स्यात् ॥ ४१ ॥ विकल्पो वा प्रकृतिवत् ॥ ४२ ॥

यत्र देवतात्वमेकं अधिष्ठानं त्वेकं बहु वा तत्र द्विवचनान्तस्याधिष्ठानपरत्वात् तदनुरोधेनोहः। एकवचनान्तस्य त्वविकार एव देवतात्वस्यैकत्वात्। यथा 'वायव्यं श्वेतमालमेत,' 'वैश्वदेवं धूम्रमालमेत,' 'स एतान् पशूनादित्येभ्य आलमेत' इत्यादौ। अत्र वायुरेकमधिष्ठानं, विश्वशब्दस्य सस्तवाचित्वात् बहवो देवा अधिष्ठानम्।

यद्यपि च शब्दस्यैव देवतात्वात् नात्र शब्दानां बहुत्वं तथाऽपि देवस्वादिव्यवहारसिद्ध्यर्थं कल्प्यस्य स्वीकारस्याप्यर्थनिष्ठस्यैव कल्पनात् स्वीकारघटितमेधपतित्वस्याप्यर्थ एवोपपत्तेरर्थ एवात्राधिकरणे परम्परया देवतात्वाधिष्ठानपदेनोच्यते इति तद्बहुत्वोपपत्तिः। एवमादित्यानामपि बहूनामेवाधिष्ठानत्वं बहुवचनानुरोधात्। न च शब्दस्य देवतात्वपक्षे चतुर्थ्युपात्तदेवतात्वे प्रातिपदिकलक्ष्यस्यादित्यपदस्यैवान्वयात् तस्य चैकत्वेन बहुवचनेनाप्येकत्वस्यैव लक्षणात् कथमधिष्ठानानेकत्वमिति वाच्यं, सत्यामपि लक्षणायां[1] स्वशक्याश्रयवाचकपदवृत्तित्वसम्बन्धेनैव लक्षणादाश्रयरूपेऽर्थे बहुत्वोपपत्तेः। अतश्च तत्र तत्राधिष्ठानसङ्ख्यानुरोधेन द्विवचनान्तस्योहः देवतात्वं त्वेकम्, अनेकत्वे प्रमाणाभावात्। 'आदित्येभ्यः' इत्यत्रापि न बहुत्वं विभक्त्युपात्तदेवतात्वान्वयि। अपि तु बहुत्वस्यार्थिकमर्थसम्बन्धं गृहीत्वा तल्लक्षितैकत्वमेवेति तत्रापि देवतात्वैकत्वम्।

---

नियमो बहुदेवते।

यत्र विकृतौ देवतात्वाधिष्ठानानि बहूनि तन्मात्र एव द्विवन्निगदस्योहः प्राचीनैरुपपादितः तत्समानन्यायादेकधिष्ठानेऽपि तस्योह इति दर्शयितुं उभयमप्युदाहरति—यत्र देवतात्वमेकमिति। समस्तवाचित्वादिति। न चैतावता विश्वेदेवपदस्य यौगिकत्वमिति भ्रमितव्यम्। तस्य आदित्यविश्ववसव इति त्रिकाण्डीसरणानुरोधात् यौगिकत्वनिरासेन गणविशेषे रूढत्वस्य स्वयमेव द्वादशे वक्ष्यमाणत्वात्। एवमादित्यपदेऽपि द्रष्टव्यम्। परम्परयेति। यथैव हि-शब्ददेवतात्वपक्षे यस्य शब्दस्य योऽर्थः तद्गतैकत्वानेकत्वमादायैकदेवत्यानेकदेवत्यव्यवहारः शास्त्रे, तथैवेहाप्यर्थगतैकत्वबहुत्वमादाय अधिष्ठानैकत्वबहुत्वव्यवहारो ज्ञेय इति भावः। तल्लक्षितैकत्वमेवेति। शब्दस्य देवतात्वादादित्यपदेनार्थपरेण आदित्यपदस्य लक्षणात् तद्वृत्त्येकत्वं विभक्त्युपात्तदेवतात्वान्वयीति युक्तं देवतात्वैकत्वमित्यर्थः। वस्तुतस्तु अर्थबहुत्वमादाया-

1. C. स्वाश्रय etc.

**अस्तु वा बहुवचनबलात् तत्र देवतात्वभेद इति न तदिहोदाहरणं किन्त्वग्रिमसूत्र एव।** तदेतत्पूर्वाधिकरणस्य [1]प्रयोजनकथनमात्रमिति मन्तव्यम्॥ १३॥

---

धिष्ठानबहुत्वस्य बहुवचनबलादेवात्रोपपादितत्वात् सामानाधिकरण्यसम्बन्धेनाधिष्ठानद्वारा बहुत्वस्य देवतात्व एवान्वयस्योचितत्वान्न देवतात्वैकत्वमिति पक्षान्तरमाह—**अस्तु वेति**। अत्र भाष्यकारेण बहुदेवत्ये पशौ द्विवन्निगदस्तावत् विकारेण प्रयोक्तव्य इत्यविवादम्। एकवन्निगदोऽपि किं तद्वदेव विकारेण प्रयोक्तव्यः एकवचनान्तता(या)तु निवर्तते; उताविकारेणैकवचनान्तत्वेनैव प्रयोक्तव्य इति संशयपूर्वकं पूर्वपक्षसिद्धान्तरचनया विचारितम्। तदयुक्तम्। पूर्वाधिकरणे एकवचनान्तमन्त्रस्य देवतात्वाभिप्रायकत्वे वर्णिते सति पुनर्विकारपूर्वपक्षस्यासम्भवात्। अतः पूर्वं साधितस्य देवतात्वैकत्वाभिप्रायमेकवचनमित्यर्थस्य प्रयोजनमात्रकथनपरं 'नियमो वा बहुदेवते विकारात् स्यात्', 'विकल्पो वा प्रकृतिवत्' इति सूत्रद्वयमिति वार्तिकोक्तं युक्तं मत्वा तदेव दर्शयति—**तदेतत्पूर्वाधिकरणेति**। अत्रेदमवधेयम्। पूर्वाधिकरणे हि देवतापरत्वे मन्त्रद्वयस्य स्थापिते देवतयोर्द्वित्वात् प्रकृतावनिविशमानस्य एकवचनान्तमन्त्रस्योत्कर्षमाशङ्क्य प्रकारत्रयोपपादनपरेण सूत्रत्रयेण परिहृतम्। **एकस्तु समवायात्तस्य तल्लक्षणत्वात्, संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात्, एकत्वेऽपि गुणानपायादिति**। तत्र अन्तिमसूत्रेण पाशन्यायोपपादनादेकवचनस्य द्वित्वे लक्षणा प्रतिपादिता भवति। अस्मिंश्च परिहारे एकदेवत्यबहुदेवत्येषु एकवचनान्तमन्त्रस्येवोह एव प्राप्नोति। तमिमं परिहारमन्तिमत्वान्मुख्यत्वेन प्रतीयमानमपि, प्रकारान्तरेणाप्येकवचनोपपत्तौ लक्षणा अन्याय्येति मत्वा अमुख्यत्वेन वार्तिकतन्त्ररत्नयोः प्रथमत उक्त्वा प्रथमसूत्रोक्तं सङ्घाताभिप्रायमेकवचनमिति परिहारं व्याख्याय **संसर्गित्वाच्चेति** द्वितीयसूत्रोक्तं परिहारं व्याख्यातुं सङ्घाताभिप्रायतायामस्वरसोद्भावनपुरस्सरो ग्रन्थः "यद्यप्यग्नीषोमौ न सङ्घातः तथापि तयोर्व्यासक्तं देवतात्वमिति देवतारूपेण तयोरेकत्वात् मेधपतिशब्दस्य च देवतापरत्वात् युक्तमेकवचनम्" इति। अस्माच्च ग्रन्थात् देवतात्वावच्छिन्नरूपेण यन्मिलितं रूपं तत्परो मेधपतिशब्दः। तदर्थे चैकत्वान्वय इति प्रतीयते। अत एव तत्सूत्रे भाष्यग्रन्थः—देवता नाम द्वावर्थौ संसृष्टौ, कदाचिदेका देवता भवति। यद्धि द्वयाय परिकल्पितं किञ्चित् द्रव्यं तत्र द्वयं देवता भवति; द्वावर्थौ संसृष्टौ एकतां यातः। तस्मादेकवचनान्तोऽपि प्रकरणस्य [रणे] ऽभिनिविशते पूर्वेण सह विकल्प्यत इति। **शास्त्रदीपिकायामपि** "अग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वं तेन देवतात्मना तयोरेकत्वात् अग्नीषोमौ देवतेतिवत्

---

1. A. प्रयोजनमात्रकथनं

एकवचनम्" इति ग्रन्थान्मिलितरूपैकत्वाभिप्राय एव प्रतीयते। अतश्चैतादृशग्रन्थपर्यालोचनया देवतात्वावच्छिन्नमिलितस्वरूपैक्याभिप्रायतायामेव तात्पर्यप्रतीतेः न देवतात्वैक्याभिप्रायतायामभिनिवेशः प्राचाम्। अत एव गणाभिप्रायदेवतास्वरूपाभिप्रायत्वपक्षयोः उपवर्णितयोः एकानुष्ठानफलकत्वमभिप्रेत्यैवास्मिन् प्रयोजनकथनसूत्रे भाष्यवार्तिकतन्त्ररत्नादिग्रन्थाः। एकवचनान्तोऽपि प्रकृतिवदिह द्विवचनान्तेन विकल्पयितुमर्हति। उक्तं हि—'गणाभिप्रायं तत् संसर्गित्वाद्वा देवतानाम्' इति भाष्यग्रन्थः। तथा "यस्मादेवं नात्र निराकरणीयमस्ति तस्मात् पूर्वस्य यद्देवतारूपैकत्वाभिप्रायमेकवचनमिति पूर्वमुक्तम्; तस्यैतत्प्रयोजनाधिकरणम्। यद्येकवन्निगदोऽपि द्विवन्निगदवत् अधिष्ठानापेक्षः स्यात् ततः तद्वदेव बहुदेवते विक्रियेत। गणाभिप्रायत्वात्तु न विकार इति प्रयोजनकथनमात्रम्" इत्यादिवार्तिकादिग्रन्थः। अत्र च यद्देवतारूपैकत्वाभिप्रायमेकवचनमिति पूर्वमुक्तं तस्यैतत्प्रयोजनाधिकरणमित्युपक्रमे देवतारूपैकत्वाभिप्रायप्रयोजनकथनात् "गणाभिप्रायत्वात्तु न विकार" इत्यन्तिमग्रन्थे गणाभिप्रायैकत्वकथनेनोपसंहाराच्च देवतारूपैकत्वाभिप्रायपक्षेऽपि मिलितरूपेणास्त्येव गणत्वमित्येवं प्रतीतिः स्फुटैव। अत एव 'अर्थान्तरे विकारः स्यात्' इत्यग्रिमाधिकरणे गणाभिप्रायैकत्वोपक्रमोपसंहारपर एव सर्वोऽपि वार्तिकग्रन्थः।

तद्गणे देवता यत्र तत्रानूहोऽस्य युज्यते।
देवतारूपभेदे तु भवेदूह इति स्थितम्॥

इति। अतोऽन्यथा सङ्घाताभिप्रायपक्षेऽनुपपत्तिसूचनपूर्वकं देवतारूपैकत्वाभिप्रायपक्षस्य पूर्वं स्थापितस्य गणाभिप्रायैकत्वप्रतिपादनपरमध्यतनोपसंहारग्रन्थेन विरोधस्य दुष्परिहरत्वापत्तेः। अतोऽत्र देवतारूपैकत्वाभिप्रायपक्षस्य मिळितदेवतास्वरूपैकत्व एव तात्पर्यं, न तु देवतात्वधर्मवृत्त्येकत्वाभिप्राये इत्यर्थे प्राचामभिप्रेते सति प्रकृतावेकवचनान्तमेधपतिशब्दस्य एकत्वप्रकारकमिळितदेवतारूपविशेष्यकबोधजनकत्वमेव प्राकृतसामग्रीवशात् क्लृप्तं, न तद्वत् एकदेवत्यवायव्यपश्वादावस्ति। स्वरूपेणैव देवताया एकत्वात्। अतश्च एकधाशब्दस्येव अविकृतस्य प्राकृतैकवचनान्तमन्त्रस्याप्रवृत्तेः तत्र बहुपाशायां बहुवचनान्तमन्त्रस्येवोहेनैव प्रवृत्तिः। तत्फलञ्च मन्त्रश्रेषप्रायश्चित्तप्राप्त्यप्राप्तिरूपमेवेत्येकदेवत्यपशौ एकवन्निगदस्योहानूहविचारमुपेक्ष्य प्राचां ग्रन्थेषु नियमो बहुदेवते विकारः स्यादिति सूत्रानुरोधात् बहुदेवत्येष्वेव तत्करणात् सूचितम्। अत एवाग्रिमाधिकरणे पादान्ते तन्त्ररत्ने श्लोकः—

तद्गणो देवता यत्र तत्रानूहोऽस्य युज्यते।
देवता रूपभेदे तु भवेदूह इति स्थितम्॥

इति। पूज्यपादैस्तु देवतात्वावच्छिन्नमिलितस्वरूपाभिप्रायत्वकल्पनापेक्षया लाघवात् देवतात्वाभिप्रायमेकवचनमित्यर्थस्यैव युक्तत्वेन गणाभिप्रायतामेकत्वस्योपेक्ष्य देवतात्ववृत्तित्वस्यैवोक्तेः प्रकृतौ यादृशार्थनिर्णायकत्वं तादृशार्थनिर्णायकत्वस्य विकृतावेकदेवत्यायामत्यागात् नोहः, किन्त्वविकृत एव प्रयोग इति मन्त्रश्रेषप्रायश्चित्तमेवेत्यभिप्रायेण वायव्य-पशूदाहरणं दर्शितम्।

यद्यपि च प्रकृतौ मेधपतये इत्यत्र एकत्वं द्वयोर्देवतयोरसत्वात् न साक्षान्मेधपति-प्रातिपदिकार्थेन वा, सामानाधिकरण्यसम्बन्धेन चतुर्थ्युपात्तदेवतात्वे वाऽन्वेतुमर्हतीत्यगत्या मेधपतित्वं सामानाधिकरण्यसम्बन्धेन देवतात्वे स्वीकृत्य मेधपतित्वावच्छिन्ने देवतात्वरूपे प्रातिपदिकार्थे, अथवा समानाधिकरणधर्माश्रयवृत्तित्वरूपप्रातिपदिकार्थघटितपरम्परासम्बन्धेन विभक्त्यर्थभूते देवतात्वे वान्वेतीत्याश्रीयते। वायव्ये पशौ तु तादृशान्वयकल्पने प्रमाणा-भावात् न तादृशार्थविवक्षया प्राकृताविकृतमन्त्रप्राप्तिः। किन्तु यथाश्रुतार्थविवक्षयाऽपि सम्भवत्येव प्राप्तिः; तथापि प्राकृतार्थग्रहणेऽपि विरोधाभावात्, तावतापि प्रकृतिवद्भावाबाधे सम्भवति नैव तद्बाधेन यथाश्रुतार्थस्यापि ग्रहणं युक्तमिति प्राकृतार्थविवक्षयैव तत्प्रयोगे न बाधकम्।

वस्तुतस्तु पाशमन्त्रयोस्तावत् नैकत्वविशिष्टपाशप्रकाशनं कार्यम्। तथात्वे तादृश-कार्याभावे पाशादिविकृतिषु तदतिदेशानापत्तेः। अतः एकवचनाम्नानेन तस्य प्रकाशनोद्देश्यत्व-सिध्यर्थं अपूर्वसाधनत्वेनैवान्वयात् अपूर्वसाधनीभूतपरिच्छेदकसङ्ख्यापरत्वेन सङ्ख्यापरिच्छिन्न-पाशप्रकाशनमात्रमेव कार्यम्। दैवाच्च पाशस्यैकवचनमपि समवेतार्थाभिधायीति विकृतौ पाशप्रकाशनरूपकार्यद्वारा प्राप्ते मन्त्रे पाशगतैकत्वाभावेन एकवचनस्यासामर्थ्येन विकृतौ द्विवचना-द्यूहः। एवं प्रकृतेऽपि न मन्त्रयोः द्वित्वविशिष्टे एकत्वविशिष्टे वा प्रकाशनं कार्यम्। तथात्वे वैफल्यातिदेशयोरनापत्तेः। अतोऽपूर्वसाधनीभूतसङ्ख्यापरिच्छिन्नं मेधपतिप्रातिपदिकार्थ-प्रकाशनमेव; अथवा अग्रिमाधिकरणवक्ष्यमाणरीत्या उभयोरुभयार्थप्रतिपादकत्वेन उभयार्थ प्रकाशनं कार्यम्। तत्र प्रकृतौ द्वित्वैकत्वयोः कथञ्चित् प्रयोगसमवेतार्थाभिधायित्वसम्भवात् एकद्विवचनप्रयोगेऽपि एकबहुदेवत्यायां विकृतौ तदसम्भवे ऊह एव। तत्र एकधाऽस्यत्वच-मित्यधिकरणे प्रकृतौ यादृशार्थनिर्णयं प्रति यादृशपदज्ञानस्य यादृशसामग्रीसत्वे फलोपधायकता, विकृतावपि तादृशसामग्रीसत्व एव तादृशपदज्ञानस्य तादृशनिर्णयोपधायकत्वं वाच्यम्। इतरथा प्रकृतिवद्भावानुपपत्तेरित्यादिभवदुपपादितरीत्या विकृतौ एकप्रयत्नसाध्यत्वप्रकारकत्वग्वि-

शेष्यकबोधस्याधिकसामग्रीजन्यत्वेन न प्राकृतार्थनिर्णायकत्वमेकधाशब्दस्य। तथा इहापि प्रकृतावेकवचनान्तमन्त्रगतैकवचनस्य देवतात्वविशेष्यकैकत्वप्रकारकनिर्णयोपधायकत्वस्य अनुपपत्तिप्रतिसन्धानमूललक्षणादिसामग्रीजन्यत्वेऽपि, विकृतौ वायव्ये पशौ मेधपतिप्रातिपदिकशक्यार्थगतैकत्वबोधे अनुपपत्त्यभावेन अनुपपत्तिप्रतिसन्धानमूललक्षणादिसामग्रीजन्यत्वाभावेन न्यूनसामग्रीत्वेन न प्राकृतार्थनिर्णायकत्वं युज्यते। तथाच प्राकृतार्थनिर्णायकत्वाभावे प्राकृतैकधाशब्दनिवृत्तौ एकप्रयत्नसाध्यत्वप्रकाशनकार्यानुरोधेन एकधापदान्तराणामभ्यासेनोहवत् इहापि प्राकृतार्थनिर्णायकत्वाभावे मेधपतिप्रकाशनकार्यानुरोधेन एकवचनान्तोह एव युक्तः। एतदभिप्रायेणैकपाशायां विकृतौ बहुवचनान्तमन्त्रस्य एकवचनान्तेनोहः; बहुपाशायामपि बहुवचनान्तेनैवोह इत्युक्तं प्राक्।

अत एवान्यूनाधिकप्राकृतसामग्रीजन्यार्थबोधकपदानामेव विकृतावनूहो युक्तः, यथाऽग्निदेवत्यादिविकृतिषु अग्न्यादिपदघटितमन्त्रेषु। यथा वा पत्नीमन्त्रस्य द्विबहुपत्नीकविकृतिप्रयोगे।

ननु प्रकृतौ एकवचनान्तमेधपतिमन्त्रस्याग्नीषोमात्मकप्रत्येकव्यक्त्यभिप्रायेणैवोपपत्तेः, किमिति क्लिष्टकल्पनया देवतात्वाभिप्रायत्वं गणाभिप्रायत्वं वा कल्प्यत इति चेत्। **उच्यते**। एकत्वं यदि सामानाधिकरण्यसम्बन्धेनास्मिन्पक्षे देवतात्वेऽन्वेति, तदा देवतात्वस्य व्यासज्यवृत्तित्वेन प्रत्येकवृत्तित्वाभावात् सामानाधिकरण्यासम्भवः। अत एव नैकत्वस्य साक्षात्प्रातिपदिकस्य च देवतात्वेऽन्वयः। एकस्मिन् अग्निरूपे सोमरूपे वा मेधपतौ देवतात्वाश्रयत्वाभावात्। अतो देवतात्वाभिप्रायं गणाभिप्रायमेव वा एकवचनमित्यलं विस्तरेण।

## (१४)—अर्थान्तरे विकारस्स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ ४३ ॥

यत्र तु देवतात्वान्यनेकानि अधिष्ठानं त्वेकमनेकं वा तत्रैकवचनान्तस्याप्यूहः यथा त्वाष्ट्रं पात्नीवतं, अग्नये पावकाय पशुमालभेत, आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुस्सौम्यः' इत्यादौ। अत्र त्वष्टृपत्नीवतोरग्निपावकयोश्चाधिष्ठानैकत्वेऽपि तद्धित-चतुर्थीभेदात् देवतात्वभेदः। तृतीयोदाहरणे तूभयभेदः। अतस्तत्रोभयोरपि मन्त्रयो-स्तत्तत्सङ्ख्यावशेनोहः। न चानयोर्मन्त्रयोरर्थद्वयपरत्ववशेनोहाङ्गीकारे प्रकृतौ विकृतौ

---

अर्थान्तरे विकारः स्यात्।

अत्र च देवतात्वमेकं, तदाश्रयो गणः संसर्गिरूपेण देवता, तदेकत्वाभिप्राय एक-वचनान्तो मन्त्रः प्राकृतो यत्रास्ति तादृशं देवतारूपं तत्र त्वविकारेणैव प्रयोक्तव्यः। यत्र तु पश्वैकादशिन्यां 'आग्नेयेन वापयति। मिथुनं सरस्वत्या करोति। रेतः सौम्येन दधाति। प्रजनयति पौष्णेन'। इत्यादिवचनैः देवतात्वभेदेन तदाश्रयस्य एकैकस्यैव प्रत्येकं देवतात्वम्। तत्र देवतात्वाश्रयगणस्य देवतारूपस्याभावादविकृतमन्त्रप्रयोगानुपपत्तेः देवतात्वानां तदाश्रयाणाञ्च बहुत्वादुभयोरपि मन्त्रयोः बहुवचनान्तोहः प्राचां मते यथा सिद्ध्यति, तथा देवतात्वैकत्वाभि-प्रायकैकवचनमिति मतेऽपि इति नात्र कश्चन भेद इति तदुदाहरणं प्रथमत उपेक्ष्यान्यत् सन्दिग्धोदाहरणं निश्चितार्थं कुर्वन् दर्शयति—यत्र तु देवतात्वानीति। तथा च गणाभि-प्रायैकत्ववादिमते देवतात्वभेदेऽपि तदाश्रयगणरूपिणो देवतात्वाश्रयाधिष्ठानैक्यमात्रेण एकवचन—द्विवचनान्तमन्त्रयोरुभयोरपि पूर्वोपपादितवायव्यपशूदाहरणरीत्या एकवचनान्तोह एव। देवता-त्वाभिप्रायैकत्ववादिमते तु देवतात्वयोर्द्वित्वादेकवचनान्तेनाधिष्ठानैक्यात् द्विवचनान्तस्य एकवच-नान्तेनोह इति विशेषः सिद्ध्यतीति भावः। एकवचनान्तस्याप्यूह इति। अपिना द्विवचनान्तमन्त्रस्यैकवचनान्तेनोहस्समुच्चीयते। आग्नेयः कृष्णग्रीव इति। इमानि पश्वैकाद-शिनीपशुविधायकानि वाक्यानि शास्त्रदीपिकालिखनरीत्या धृतानि। स्पष्टार्थमन्यत्।

इति श्रीपूर्वोत्तरमीमांसापारावारीण-
धुरीणश्रीखण्डदेवान्तेवासिकविमण्डन-
शम्भुभट्टविरचितायां भाट्टदीपिका-
प्रभावल्यां नवमाध्यायस्य
तृतीयः पादः

वा देवतात्वतदधिष्ठानरूपार्थभेदात्समुच्चयापत्तिरिति वाच्यं, उभयोरप्युभयार्थप्रतिपादकत्वेन विकल्पोपपत्तेः।

एकवचनान्तो हि देवतात्वे परंपरासम्बन्धेन मेधपतित्वं वदन् परम्परासम्बन्धघटकतयाऽधिष्ठानमप्युपस्थापयति। अग्नीषोमत्वादिना तदुपस्थितिस्तु मेधपतिपदादशक्यैव। द्विवचनान्तोऽपि अधिष्ठाने मेधपतित्वं वदन् स्वीकाराख्यसम्बन्धस्य देवतात्वाधीनत्वात् देवतात्वमप्युपस्थापयतीति सत्यपि विषयताभेदे उभयोरप्युभयोपस्थापकत्वाद्विकल्पोपपत्तिः॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
नवमस्याध्यायस्य तृतीयः पादः
समाप्तः

---

# अथ नवमाध्यायस्य चतुर्थः पादः.

(१)—षडिंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वात् गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसम्बन्धो विकारान्न समासस्स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ अभ्यासेऽपि तथेति चेत ॥ २ ॥ न गुणादर्थकृतत्वाच्च ॥ ३ ॥ समासेऽपि तथेति चेत् ॥ ४ ॥ नासम्भवात् ॥ ५ ॥ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥ वङ्क्रीणां तु प्रधानत्वात् समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ तासां च कृत्स्नवचनात् ॥ ८ ॥ अपि त्वसन्निपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥ अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥ आम्नातस्त्वविकारात्सङ्ख्यासु सर्वगामित्वात् ॥ १२ ॥ सङ्ख्यात्वेवं प्रधानं स्यात् वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १४ ॥ अभ्यासो वाऽविकारा-

त्स्यात् ॥ १५ ॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात्समासशब्दस्स्यात् ॥ १६ ॥

तत्रैव प्रैषे 'षड्विंशतिरस्य वङ्क्रयः। ता अनुष्ठ्योच्च्यावयतात्' इति श्रुतम् । तत्रास्य मन्त्रस्य करणमन्त्रत्वाभावेऽपि समवेतप्रकाशकत्वसम्भवेऽसमवेतार्थत्वस्यान्याय्यत्वाद-

---

### अथ चतुर्थः पादः

**षड्विंशतिः । तत्रैव प्रैषे इति ।** अत्र च ताः अनुष्ठ्य उच्च्यावयतात् इति पदत्रये अनुष्ठ्येत्यनुतिष्ठतेः प्रयत्नकर्मणः स्त्रियां आतश्चोपसर्गेण कप्रत्ययं कृत्वा अजन्तादाप् । तृतीयैकवचनान्तस्य सुपां सुलुगित्यादिना तृतीयैकवचनस्य ड्यादेशष्टिलोपश्च । च्यावयतेः उद्धरणकर्मणः मध्यमैकवचनस्य तातङादेशे रूपम् । तथाच ताः वङ्क्रीः अनुष्ठ्य प्रयत्नेन उद्धरतेत्यर्थः । **वेदभाष्ये** तु अनुष्ठ्य अनुक्रमेणेत्यर्थः कृतः ।

अत्र च "दैव्याश्शमितार आरभध्वं उत मनुष्या" इत्युपक्रमे बहूनां शमितॄणां प्रक्रान्तत्वप्रतीतेः, उपनयतेति बहुवचनेन मध्येऽपि परामर्शाच्च, क्वचित् आच्छयतात् उच्च्यावयतादित्याद्येकवचनानि बहुत्वार्थे छान्दसानि द्रष्टव्यानि । अत्राधिकरणे प्राचीनैः पञ्च पक्षा उक्ताः— षड्विंशतिरस्येत्युभयपदाभ्यासः, अथवाऽविकारेण प्रयोगः, अथवा षड्विंशतिपदगतमेकवचनं द्विवचनबहुवचनाभ्यामूहितव्यम्, अथवा अस्येत्येतत्पदमभ्यसितव्यम्, अथवा सर्वपशुगता वङ्क्रीः समस्य तासामियत्ता वक्तव्येति । तत्र अकरणेन अध्रिगुणा प्रकरणे समाम्नानात् प्रकरणिनः उपकर्तव्यम् । तत्कथमुपकुर्यादित्यपेक्षायां यथा शक्नुयादित्युपबध्यते । किञ्च शक्नोत्ययमुपकर्तुमित्यपेक्षायां अक्रियस्य कार्यजनकत्वाऽयोगात् क्रियाप्रधानेनानेन मन्त्रेण यथासमाम्नातैः पदैः अभिधानक्रियामात्रं शक्यं कर्तुं न त्वर्थप्रकाशनं अकरणत्वात् । तत्र वङ्क्रिषड्विंशत्यभिधानात् **यथाऽदृष्टं प्रकृतौ,** विकृतावपि भविष्यत्येवादृष्टमिति द्विपश्वादिविकृतिषु अविकार इति द्वितीयः पक्षः । तत्रानेन न्यायेन सर्वत्रैवाध्रिगुप्रैषेऽविकारप्राप्तौ पूर्वाधिकरणेषु तत्प्रैषगतकतिपयपदोहविचारस्य सर्वस्य कृतस्य शिथिलत्वापत्तेरयं पक्षः सर्वथैवादौ दूषणीय इति मत्वा तं पक्षं दूषयति—**तत्रास्य मन्त्रस्येति । समवेतप्रकाशकत्वसम्भवे इति ।** यदि वङ्क्रिषड्विंशशब्दयोः **प्रकृतौ** समवेतार्थो नाभविष्यत् ततोऽदृष्टार्थता कल्प्येत । अस्ति तु समवेतोऽवदान-

**विकार एव पशुगण इति तावदनाशङ्कयम्। विकारोऽपि कीदृग्विध इति चिन्तायां—**

**प्रकृतिदृष्टपदान्यथात्वे प्रमाणाभावादश्रुतपदान्तरकल्पनानुपपत्तेः यावत्पशुगतसमस्तवङ्क्रिप्रकाशनार्थं 'षड्विंशतिरस्य' इतिपदद्वयावृत्तिरेव। अत एव प्राकृतपदबाधे प्रमाणाभावात् न क्वचिदपि एकवचनोहः। 'अदितिः पाशं, मेधपतये मेधम्' इत्यादावपि अभ्यासेनैव सर्वपाशादिप्रकाशनोपपत्तेः, अश्रुतद्विवचनाद्यध्याहारापेक्षया श्रुतस्यैवाभ्यासकल्पने लाघवाच्च। अन्यथा द्विधा त्रिधा इत्येवमूहेनैव प्रकाशनोपपत्तौ एकधापदस्याप्यभ्यासानापत्तेः।**

**न चैकत्वादीनां प्रकृतावेकत्वत्वादिनाऽनुद्देश्यत्वात् अपूर्वसाधनीभूतसङ्ख्यात्वेन प्रकाशने च विकृतावपि पशुबहुत्वादेरपूर्वसाधनीभूतस्य प्रकाशनार्थं बहुवचनादिप्रक्षेपावश्यंभाव इति वाच्यं, 'आग्नेयं कृष्णग्रीवं सौम्यं बभ्रुम्' इत्यादौ पश्वेकत्वस्यैव तत्तदपूर्वसाधनत्वेन बहुत्वस्याविहितत्वात् 'प्राजापत्यान्' इत्यादावपि यागबहुत्वार्थमेव बहुवचनोपादानेनातिदेशप्राप्तस्य पश्वेकत्वस्यैव तत्तदपूर्वसाधनत्वाच्च। अतश्च तत्प्रकाशनार्थमावृत्तिरेव श्रुतपदस्य युक्ता, न तु सूर्यादिपदवत् पदान्तरप्रक्षेपः।**

---

सम्बद्धोऽर्थः पार्श्वयोरवद्यतीति वचनात्। तेन बङ्क्रिशब्दस्तावत्समवेतार्थः। स च वङ्क्र्यर्थः स्वभावात् प्रकृतौ षड्विंशत्यैव परिच्छिन्नः। तेन सङ्ख्याशब्दोऽपि समवेतार्थः तस्य च वङ्क्र्यर्थस्य स्वसङ्ख्यापरिच्छिन्नस्य अवदातुः शमितुः स्मरणमेव प्रयोजनं दृष्टं लभ्यते। अन्यथा विस्मृत्य विकला उद्धरेत्। अतोऽवदेयानां वङ्क्रीणामियत्तापरिच्छिन्नानां प्रकाशनार्थं प्रकृतावध्रिगुवचनम्, तद्वच्च विकृतावपि कर्तव्यं विकारं न सम्भवतीति विकारो येषु पक्षेषु सम्भाव्यते त एवात्र पक्षा ग्राह्या इत्यर्थः। अनेनैव न्यायेन सर्वत्रैवाध्रिगुप्रैषे तथा पाशमन्त्रयोरपि समवेतप्रकाशकत्वसम्भवं ज्ञापयितुं सामान्यतः **समवेतप्रकाशकत्वसम्भवे** इत्युक्तम्। **अनाशङ्क्यमिति**। निस्सन्दिग्धमित्यर्थः। प्रकाशनार्थमस्य मन्त्रस्यैवावृत्तिरूपो विकार इति तृतीयः पक्षः ; स निर्युक्तिक एवेति प्रसङ्गाद्वक्ष्यते। अतोऽवशिष्टे पूर्वपक्षकोटौ पक्षद्वये **शास्त्रदीपिकायां** षड्विंशतिपदस्य अस्यपदस्य चाभ्यास इत्याद्यः प्रधानः पूर्वपक्षः; इतरे तु सम्भवमात्रेणोपन्यस्य दूष्यन्ते इत्याद्यपक्षस्य सयुक्तिकत्वमुक्तम्। तदयुक्तमिति ज्ञापयितुं आद्यपक्षं प्रथमत उपन्यस्य तत्रास्वरसोद्भावनपूर्वकं वचनमात्रोह इति द्वितीयः पूर्वपक्षः सयुक्तिकत्वेनोपपादनीयः अग्रे। तत्र पाशाधिकरणसिद्धान्ताक्षेपेण आरम्भणीय आद्यः पूर्वपक्षः, तत्सिद्धान्तव्यवस्थापनेन निराकरणीय इति निर्युक्तिकं मत्वा प्रथमतस्तमेवोपपादयति—**प्रकृतिदृष्टेति**। **पदद्वयवृत्ति-**

यत्तु मूले एतत्पक्षसाधनार्थं षड्विंशतिसङ्ख्यापशूभयसम्बन्धप्रधानमिदं वाक्यं प्रतिपशु भेदेन तत्सम्बन्धं प्रकाशयितुमभ्यसनीयमिति युक्तिरुपन्यस्ता, सा सम्बन्धस्य षष्ठ्यर्थस्य गुणत्वेन प्राधान्यशङ्कानुपपत्तेर्वाक्यार्थरूपस्य चाशाब्दत्वेन सुतरां तदनुपपत्तेः। प्राधान्येऽपि च तस्य प्रतिपशूहेनापि प्रकाशनोपपत्तेरभ्यासे प्रमाणाभावादुपेक्षिता।

---

रेवेति। तथा च षड्विंशतिरस्यास्य वङ्क्रय इत्यावृत्तिरित्यर्थः। सा सम्बन्धस्येति। यद्यप्यत्र तन्त्ररत्नवार्तिकादौ द्वयोः समभिव्याहारगम्यो यो वाक्यार्थरूपः सम्बन्धः तस्यैव प्राधान्यमङ्गीकृतं, न षष्ठ्यर्थसम्बन्धस्येति षष्ठ्यर्थसम्बन्धप्राधान्यखण्डनं परानभिमतदूषणमिव भाति, तथापि विकल्पमुखेनास्यापि प्राधान्यस्य खण्डनं प्राचीनाभिमतपूर्वोक्तचतुर्थपक्षनिरासेऽपि समानमिति ज्ञापयितुमिहैवोपन्यस्तम्। तथाच सम्बन्धप्राधान्यं वदता किं षष्ठ्यर्थस्य सतः प्राधान्यमुच्यते, उत वाक्यार्थस्य सतः? उभयथापि न सम्भवतीत्यभिप्रायः। तेन षष्ठ्यर्थस्य सम्बन्धस्य गुणत्वे तं प्रति प्रकृत्यर्थत्वेनान्वितोऽपि पशुः सुतरां गुणत्वान्न प्रधानमिति।

एतेन वङ्क्रिसङ्ख्याविशिष्टपशोरेवात्र प्राधान्यात् वङ्क्रिसङ्ख्ययोश्चादृष्टार्थमुच्चारणेन प्रधानभूतपशुप्रकाशनार्थमस्यपदस्य विकृतौ द्विपश्वादौ आवृत्तिरित्यपास्तम्। षष्ठ्यन्तपशुशब्देन पशोः पारार्थ्यस्यैव बोधनात्। अथोच्येत इन्द्रस्य नु वीर्याणि प्रवोचमित्यत्र पुरोनुवाक्यायां इन्द्रपदे षष्ठीसत्वेन वीर्यविशेषणत्वेन प्रतीयमानोऽपीन्द्रः तात्पर्यवृत्त्या प्रधानम्; स्तोत्रशब्देषु गुणप्राधान्येऽपि पुरोनुवाक्यायां देवताभूतस्य गुणिनः इन्द्रस्यैव प्रकाशनेन दृष्टार्थत्वलाभात्। एवमिहापि शब्दतो गुणत्वेऽपि तात्पर्यवृत्त्या पशोः प्राधान्यमिति, तथापि इन्द्रवत् पशोरग्रे उपयोगाभावेन तत्प्रकाशनानुपपत्तेः शब्दावगतगुणत्वबाधे प्रमाणाभावात् न तात्पर्यवृत्त्यापि तस्य प्राधान्यम्। अपि तु शब्दतः तात्पर्यवृत्त्या च वङ्क्रीणामेव तदिति वक्ष्यते। किञ्च प्रकृतपूर्वपक्षे शामित्रे संस्कार्यत्वेनोपयोक्ष्यमाणपशोः प्राधान्यस्वीकारेऽपि न षड्विंशतिष्षड्विंशतिरस्यास्य वङ्क्रय इत्येवं रूपोऽभ्यासस्सिद्ध्यतीत्याह—प्राधान्येऽपि चेति। तथाच प्रतिपशु सम्बन्धप्रकाशनार्थं सम्बन्धवाचकपदाभावे तत्सम्बन्धिपदद्वयाभ्यासः षड्विंशतिष्षड्विंशतिरस्यास्येत्येवंरूपः कर्तव्यः। तत्रैकपशुके प्रकृतयथावस्थितप्रयोगे सम्भवेऽपि द्विपश्वादौ प्रतिपशुसम्बन्धं प्रतिपादयितुं षडिंशतिरस्य षडिंशतिरस्येत्येवमूहस्यैवापत्तौ न तादृशाभ्यासः सिद्ध्यतीति। ननु माभूत् तादृशोऽभ्यासः किन्तु भवदुपपादितोहितप्रयोगसदृशः पदद्वयाभ्यास एवास्त्विति चेन्न। तथात्वेऽपि प्रतिपशु षड्विंशतिसङ्ख्यापशूभयसम्बन्धप्रकाशनार्थं षड्विंशत्यनयोरित्यूहापत्तेरनिवार्यत्वात्।

अत्र उक्तयुक्त्यैव पदद्वयाभ्यासः प्रसाध्यत इति प्रथमः पक्षः।

द्वितीयस्तु पशुगणे एकप्रयोगविधिपरिगृहीतानामनेकेषां साङ्गानां यागानां यौगपद्यावगतेरर्थप्रकाशनकार्यस्यापि यौगपद्यावगमात्तदनुरोधेन युगपदनेकप्रकाशकपदप्रक्षेपस्यावश्यकत्वात् न क्वचिच्छ्रूयमाणस्यैवाभ्यासः। 'अदितिः पाशं' इत्यादौ तु गुणानुरोधेन प्रधानप्रातिपदिकस्याभ्यासे प्रमाणाभावादपि नासौ, अपि तु बहुवचनाद्यूह एव। यद्यपि च बहुत्वं न कस्यचिदङ्गं तथाऽपि पाशप्रातिपदिकेनानेकपाशोपादाने साधुत्वार्थं तत्प्रक्षेपस्यैवावश्यकत्वात्।

न चैकवचनान्तपत्नीशब्दवत् प्रत्येकव्यक्त्यभिप्रायेणैकवचनप्रयोगः, तस्य पाशैकत्वानेकत्वसन्देहजनकतया निर्णायकत्वाभावात् प्रकृतिवद्भावबाधप्रसङ्गेनाप्रयोजकत्वात्।

अत एव 'द्विधाऽनयोस्त्ववाचाच्छ्यतात्' इत्यूहाङ्गीकारेऽप्येकैकत्वचि प्रपत्नद्वयसाध्यच्छेदनकत्वशङ्काजनकतया निर्णायकत्वाभावादेवागत्या एकधापदेऽभ्यासाङ्गीकरणम्। प्रकृते तु विवक्षितार्थविषये संशयजनकत्वाभावात् यौगपद्यसम्पत्तये ऊहाङ्गीकरणमेव युक्तम्। तत्रापि षड्विंशतिप्रातिपदिके अन्यथात्वे प्रमाणाभावात् षड्विंशती षड्विंशतयः इत्येवं वचन एवोहः।

---

यदि तु अश्रुतद्विवचनाद्यध्याहारापेक्षयाऽभ्यास एवोचित इत्युच्यते तदा मदुक्तयुक्त्यैव निर्वाहे सिद्धे किं सम्बन्धप्राधान्याडंबरेणेति भावः। पाशाधिकरणसिद्धान्तेन द्वितीयं पूर्वपक्षमाह—द्वितीयस्त्विति। अदितिः पाशमित्यादौ त्विति। तु शब्दोऽत्र न षड्विंशत्यस्यपदयोः वैलक्षण्यद्योतकः, पाशमन्त्र इवात्रापि गुणत्वप्रधानत्वसाम्येनोक्तेः। एतादृशे विषये तु सुतरां नाभ्यास इति षड्विंशत्यादिपदसाधारण्यं वक्तुं पाशमन्त्र एव तदुक्तमिति ध्येयम्। अपि त्विति। ननु पाशगतैकत्वस्य परिच्छेदकतया क्रियाङ्गभूतस्य प्रकाशनार्थं प्रवृत्तं पाशमन्त्रगतपाशप्रातिपदिकगतमेकवचनं अपूर्वसाधनीभूतपाशपरिच्छेदकसङ्ख्यान्तरप्रकाशने कर्तव्ये उह्यते। तद्धर्मावच्छिन्नभिन्नवृत्तित्वात्। प्रकृते तु बहुत्वस्य क्रियाङ्गपरिच्छेदकत्वेनाविहितस्य प्रकाशने प्रयोजनाभावात् तत्पृष्ठभावेनैकवचनस्य प्रकाशकत्वेन प्राप्त्यभावे नोहः प्राप्नोतीत्याशङ्कां उहानङ्गीकारेऽपि बहुवचनान्तप्रयोगोपपादनव्याजेन परिहरति—यद्यपीति। प्रकृतिवद्भावबाधप्रसङ्गेनेति। बहुपाशायामपि प्राकृतः एकवचनान्त एव प्रत्येकव्यक्तिरूपार्थान्तरविवक्षयाऽविकृतो मन्त्रः प्रयोक्तव्यः, तदा एकधापदस्य अनभ्यास इव च पूर्वोपपादितदिशा प्रकृतौ यथा निश्चयेन पाशगतपरिच्छेदकैकत्वबोधकत्वमासीत् तथेह विकृतौ न जातं, किन्तु पाशबहुत्वे सत्यपि एकत्वसन्देहजनकमपीति न प्रकृतितुल्यता सिद्ध्यति। पत्नीमन्त्रे तु प्रकृतावेव

सङ्ख्याप्रधानत्वाच्चास्य वाक्यस्यायमर्थो निर्णीयते। तथा हि—सर्वत्र द्वौ त्रयः इत्यादयस्सङ्ख्याशब्दाः सङ्ख्येयप्रधाना एव, विंशत्याद्यास्तु सङ्ख्याप्रधानाः। दृष्टार्थता च तत्प्राधान्ये 'अन्यूनयोः पार्श्वयोरवद्यति' इति वचनात्साकल्यावगमेन तत्प्रकाशनस्य व्यङ्ग्यत्वात्। अतः प्रधानभूतषड्विंशतिप्रातिपदिके नान्यथाभावः।

न चैवं विंशतिर्गवामितिवत् वङ्क्रीणां गुणत्वे वङ्क्रिशब्दस्य षष्ठ्यन्तत्वापत्तिः, सङ्ख्याप्राधान्येऽपि देवदत्तादयः षट् 'पञ्चपञ्चाशतस्त्रिवृतस्संवत्सराः' इत्यादौ लक्षणया सङ्ख्येयशब्दस्य सङ्ख्यासामानाधिकरण्यदर्शनेन वङ्क्रिमल्लक्षणया वङ्क्रिशब्दस्यापि सामानाधिकरण्योपपत्तेः।

न च लक्षणाभियैव सङ्ख्येयवङ्क्रिप्राधान्यं विंशतिर्गाव इतिवदिति वाच्यं, तथात्वेऽपि षड्विंशतिशब्दस्य सङ्ख्येयसामानाधिकरण्यसम्पत्तये तल्लक्षणाङ्गीकारस्यावश्यकत्वात्,

---

द्विबहुपत्नीकप्रयोगानुरोधेन यादृशमेव विकृताविति वैषम्यात् प्रकृतिवद्भावबाधः स्फुट एवेति भावः। विंशत्याद्यास्त्विति। यदा हि सङ्ख्या आत्मानमुपसर्जनीकृत्य सङ्ख्येये वर्तते तदा विंशतिर्गाव इति प्रयोगः। यदा पुनः सङ्ख्येयं न स्पृशति शब्दः, तदा विंशतिर्गवामिति प्रयोगः। एवमुभयथा प्रयोगेण विंशत्यादिशब्दानामुभयपरत्वेऽपि षड्विंशतिपदेन किं ग्राह्यमित्यपेक्षायामाह—दृष्टार्थता चेति। ननु वङ्क्रिपदे प्रथमानिर्देशेन तत्सामानाधिकरण्यात् षड्विंशतिपदस्यापि विंशतिर्गाव इत्यत्र विंशतिपदस्येव सङ्ख्येयप्राधान्यपरत्वमेव वक्तव्यम्। अन्यथा वङ्क्रिपदे षष्ठ्यापत्तेरित्यभिप्रायेणाशङ्कते—नचैवमपीति। समाधत्ते—सङ्ख्याप्राधान्ये इति। यथैव परिषच्छब्देन समुदायवचनेन देवदत्तादिपदानां तद्वत्त्वलक्षणया सामानाधिकरण्यं, यथावा संवत्सरपदस्य तद्वत्त्वलक्षणया पञ्चपञ्चाशच्छब्देन, एवमिहापि वङ्क्रिमल्लक्षणयोपपद्यत एव तत्। वङ्क्रिमत्वञ्च समवायित्वसम्बन्धेन षड्विंशतिसङ्ख्यायां सम्भवतीति न बाधकम्। यद्यपि पञ्चपञ्चाशत इति पदेन सङ्ख्यावच्छिन्नाभिधानात् उपपद्यत एव संवत्सरपदसामानाधिकरण्यं, तथापि पञ्चाशत्सङ्ख्यावच्छिन्नेषु पञ्चत्वसङ्ख्यान्वयासम्भवात् पञ्चशब्दार्थान्वयानुरोधेन पञ्चाशत्सङ्ख्यापरत्वमेव वक्तव्यम्; तत्सामानाधिकरण्यार्थं सा आवश्यिकीति षष्ठे उक्तमिति भावः। अत्र सिद्धान्तपक्षे स्थित्वा प्राचीनैः लक्षणैव दोष इत्यापादितं तदनूद्य दूषयति—न च लक्षणाभियैवेति। [यथा] गुणवाचकानां नीलादिशब्दानां विना लक्षणां गुणिवाचकपदसामानाधिकरण्यं, एवमिहापि सङ्ख्यारूपगुणवाचकषड्विंशतिपदस्य वङ्क्रिपदसामानाधिकरण्यं नैव लक्षणां विनेति षड्विंशतिपदस्य सङ्ख्येयवङ्क्रिपरत्वे तवापि

नामार्थयोः पार्ष्ठिकान्वयवेलायामप्यभेदेनैवान्वय इति नियमानङ्गीकारे तु ममापि वङ्क्रीणां समवेतत्वसम्बन्धेन सङ्ख्यायामन्वयोपपत्तेर्न लक्षणा।

न च वङ्क्रिशब्दस्य वङ्क्रिमल्लक्षणया सङ्ख्याविशेषणत्वे तस्या एकत्वेनैकवचनापत्तिः, बहुवचनस्य स्वशक्याश्रयसमवेतवृत्तित्वसम्बन्धेनैकत्वलक्षणार्थत्वात्। तव मतेऽपि सङ्ख्येयप्राधान्ये षड्विंशतिरित्येकवचनेन स्वशक्याश्रयसमवायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणाया आवश्यकत्वाच्च।

न चैवं विनिगमनाविरहः, वङ्क्रिपदे जघन्यत्वस्यैव नियामकत्वात्। अतश्च प्रधानभूतषड्विंशतिपदेऽन्यथाभावानुपपत्तेः षड्विंशती अनयोर्वङ्क्रय इत्येवं वचनोह एवेति प्राप्ते—

'ता अनुष्ठ्योच्यावयतात्' इति वङ्क्रीणामेव परामर्शात् तासामेव प्राधान्यं, सङ्ख्या तु तद्विशेषणत्वेनोपात्ताऽपि साकल्यसूचिकेति नाद्दष्टार्थतापत्तिः। एवं च षड्विंशतिपदगतैकवचनस्य बहुत्वलक्षणार्थत्वेनासमवेतार्थत्वात् नैवोहसम्भावना।

---

लक्षणादोषस्तुल्य इत्यर्थः। **नियमानङ्गीकारे त्विति।** अस्मन्मते हि समानाधिकरणनामपदार्थानां सर्वेषामपि प्रथमतो भावनायामेवान्वयः, न तु परेषामिव परस्परमभेदेन, अभेदस्तु पार्ष्ठिको बुध्यते—या अरुणा सा एकहायनीति। तथाविधाभेदान्वयार्थं अरुणापदस्य गुणवाचकस्यापि गुणिपरत्वं लक्षणया आश्रयणीयम्। यदि तु पार्ष्ठिकोऽऽभेद एव बुध्यते इति नियमोऽपि न स्वीक्रियते, किन्तु शक्यार्थस्यारुण्यरूपगुणस्य एकहायनीपरिच्छेदद्वारा भावनायामन्वये एकहायनीवृत्तित्वबोधे एव तात्पर्यमिति स्वीक्रियते, तदा आरुण्यस्य समवायित्वसम्बन्धेन एकहायन्यामिव इहापि तुल्यन्यायतया सङ्ख्याप्राधान्यनिर्वाहाय वङ्क्रीणां समवेतत्वसम्बन्धेन षड्विंशतिपदार्थे सङ्ख्यायामन्वयेन लक्षणाऽऽपद्यत इति भावः। **स्वशक्याश्रयेति।** प्रथमस्वपदं बहुवचनपरम्; द्वितीयमेकवचनपरमिति विवेकः। **परामर्शादिति।** ता इति स्त्रीलिङ्गतच्छब्देन वङ्क्रीणामेव परामर्शः। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वनियमात् इत्यतः तासामेव प्राधान्यमित्यर्थः। **नैवोहसम्भावनेति।** यद्यपि पाशानिति बहुवचनस्यापि एकत्वलक्षणार्थत्वात्, अनेन न्यायेनासमवेतार्थत्वापत्त्या द्विपाशायां नोहस्सम्भवति, तथापि तत्रैकत्वस्य प्रयोगसमवेतत्वेन लक्षणया भवति तत्प्रकाशनम्। इह तु वङ्क्रिगतबहुत्वप्रकाशनस्यैव प्रयोजनाभावे

अपि तु षड्विंशतिप्रातिपादिक एव समवेतार्थत्वादूहः। अतश्च द्विपञ्चाशदनयोः वङ्क्रय इति समस्य वचनमेव युक्तम्। किञ्च प्रकृतावप्येकैकस्मिन् पार्श्वे त्रयोदश त्रयोदश वङ्क्रयस्सन्- मस्यैव षडिंवशतिपदेनोक्ता इति इहापि समस्यैव सर्वाः प्रकाशयितव्याः इति गम्यते।

यद्यपि च न्यायसिद्धमपीदं समासवचनं 'एकधा षड्विंशतिरिति द्विर्बहूनाम्' इत्याश्वलयनसूत्रमूलभूतश्रुत्या सुब्रह्मण्यानूहवदाम्नानो कर्तुमुचितं तथापि 'षड्विंशतिरिति समासेन वा' इति [1]'साङ्ख्यायनसूत्रमूलभूतश्रुत्या पक्षे समासस्याप्यभ्यनुज्ञानाच्च

---

सुतरां षड्विंशतिसङ्ख्यावच्छिन्नवृत्तिबहुत्वप्रकाशने प्रयोजनाभावात् अन्यूनावदानग्रहणाय षड्विंशतिसङ्ख्याया एव प्रकाशनावश्यकत्वे तेनैव बहुत्वप्रकाशनस्यार्थिकत्वेन षड्विंशतिपद- गतैकवचनस्य साधुत्वार्थमुच्चरितस्य कथञ्चित् बहुत्वलक्षणायामपि न बहुत्वप्रकाशकत्वं प्रकृतावेवेति न विकृतावूहसम्भावनेति तात्पर्यं द्रष्टव्यम्। अत एवात्र पाशाधिकरणवैलक्षण्येन प्राति- पदिकोह एवेत्याह—अपि त्विति। ननु यद्यपि वङ्क्रीयत्तापरमिदं तथापि प्रतिपशु भेदेन वङ्क्रीणामुद्धरणात् भेदेनैव पशोर्वङ्क्रयः इयत्तया वक्तव्या इति षड्विंशतिपदाभ्यास एवात्र न्याय्य इत्याशङ्कां परिहरन् युक्त्यन्तरमाह—किञ्चेति। तथाचोद्ध्रियमाणप्रयोगसमवेतपार्श्वमात्रगतसर्व- वङ्क्रिसङ्ख्यारूपापूर्वसाधनविशेषमात्रप्रकाशकत्वेन यथैव प्रकृतौ द्वयोः पार्श्वयोः त्रयोदशसु त्रयोदशसु वङ्क्रिषु पृथगुद्ध्रियमाणास्वपि समस्तानामेवेयत्ता उक्ता-षड्विंशतिरस्य वङ्क्रय इति तथा विकृतिष्वपि उद्धारभेदमतं स्वीकृत्य प्रयोगसमवेतसमस्तवङ्क्रीयत्ताप्रकाशनं कर्तव्यम्। ततश्च द्विपञ्चाशदनयोर्वङ्क्रय इति द्विपश्वादौ; त्रिपश्वादौ अष्टसप्ततिरेषां वङ्क्रय इति ऊहस्सिद्ध इति भावः। एकधेति। द्विबहुपशूनां सम्बन्धिनौ एकधाषड्विंशतिशब्दौ द्विर्ब्रूयात्। विभक्त्यूहसमस्यवचननिवृत्त्यर्थं षड्विंशतिपदाभ्यासो नियम्यत इति वृत्तौ सूत्रार्थो द्रष्टव्यः। सुब्रह्मण्यानूहवदिति। यथैवास्मिन्नेवाध्याये प्रथमपादे संयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेते- त्यधिकरणे इन्द्र आगच्छ हरिव आगच्छेति सुब्रह्मण्यानिगदे अग्निष्टुति अतिदिष्टे तत्राग्निदेवत्य- ग्रहाभ्यासेषु अग्निदेवतानिष्ठगुणप्रकाशनार्थं हरिवदादिपदेषूहं पूर्वपक्षीकृत्य हरिवदादिगुणानां वस्तुत इन्द्रेऽभावेन अदृष्टार्थमुच्चारणात् समवेतार्थप्रकाशकत्वाभावादनूह इति सिद्धान्तितम्। सोऽयमनूहन्यायः छन्दोगसूत्रे 'आगच्छ रोहिताश्व बृहद्भानो धूमकेतो' इत्यूहितपाठात् तत्स्मृत्या यथाऽऽम्नासीकर्तुमुचितः तथेहापीति भावः। तथापि षड्विंशतिरिति। साङ्ख्यायनसूत्रे

---

1. C. शाङ्खायन

विरोधः। अत एव पक्षेऽभ्यासोऽपि द्विवारमेव न तु यावत्पशु। एकधाशब्देऽप्येवमिति द्रष्टव्यम्। वीप्सयैव यावत्पश्वेकप्रयत्नच्छेद्यत्वनिर्णयोपपत्तेः ॥ १ ॥

---

(२)—अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥ तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥ ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥ १९ ॥ तस्यां तु वचनादैरवत्पदविकारस्स्यात् ॥ २० ॥ सर्वप्रतिषेधो वा असंयोगात्पदेन स्यात् ॥ २१ ॥

अश्वमेधे सवनीयपशुरश्वस्तूपरगोमृगौ चेतरौ विहितौ। तेषामेकप्रयोगत्वात् तन्त्रेणाध्रिगुप्रैषे पठनीये अश्वस्य चतुस्त्रिंशद्वङ्क्रिकत्वात् इतरयोः प्रत्येकं षड्विंशतिवङ्क्रिकत्वात् पूर्ववत्समभ्यवचने षडशीतिरेषां वङ्क्रयः इति प्राप्तम्। तत्रायं मन्त्रस्समाम्नातः —'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्याविशस्ता' इति। अयं लिङ्गप्रकरणाभ्यां वङ्क्रिविशसनप्रैष एव विनियुज्यते। न तु याज्यादौ। अतश्चौपदेशिकेनानेनातिदेशप्राप्तस्याध्रिगोरश्वविषये वङ्क्रिप्रकाशनमात्रांशे बाधात् अश्वस्यायं मन्त्रोऽन्ययोस्तु द्विपञ्चाशदनयोर्वङ्क्रय इति समास इत्यपि प्राप्तम्। तत्रेदमपरं वचनं 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति। तदनेन किं विधीयत इति चिन्तायां—

---

षड्विंशतिपदं द्विः पठितमिति षड्विंशतिरित्येकं पदं द्वितीयस्याप्युपलक्षणम्। तेन षड्विंशतिपदाभ्यासोऽथवा समासेन प्रयोग इति पक्षद्वयमित्यर्थः। द्विवारमेवेति। षड्विंशतिपदे वीप्सया प्रयोग एव। अस्येति पदैकवचने तु द्विवचनबहुवचनोह एवेति भावः। एकप्रयत्नत्वनिर्णयेति। एकप्रयत्नत्वेत्येतत् वङ्क्रिगतषड्विंशतिसङ्ख्याया अप्युपलक्षणम्।

---

अश्वस्य चतुस्त्रिंशत्।

तूपरगोमृगाविति। शृङ्गरहितस्तूपरः। गोमृगो गवयः तद्द्रव्यकौ यागावित्यर्थः। अत्र प्राचीनैः 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यस्य प्रतिषेधविधित्वमङ्गीकृत्यैव चतुस्त्रिंशत्पदघटिता-

न तावदत्र प्रतिषेधविधिः। स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा स्यात्, तदर्थप्रतिषेधो वा? उभयथाऽपि विहितप्रतिषेधे विकल्पापत्तेरसम्भवः। अन्त्ये ऋग्लक्षणापत्तिश्च। ऋक्प्रतिषेधे च षडशीतिरित्येवं समासस्यैव प्राप्तेः षड्विंशतिपदयुक्ताध्रिगुप्रैषस्याप्राप्तत्वेन तस्यापि विधाने वाक्यभेदापत्तेश्च। षड्विंशतिपदेन षडशीतिपदोपेताध्रिगुप्रैषलक्षणया तस्यानुवादत्वे च लक्षणैव दोषः। अतो न गिरागिरेतिवत् न चतुस्त्रिंशदिति निषेधानुवादः। षड्विंशतिरिति च षड्विंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे इतरपदवद्विधानम्। तद्वदेव च निषेधानुवादबलाच्च चतुस्त्रिंशत्पदस्थानापन्नत्वम्। विधानबलाच्च मन्त्रान्तर्गतषड्विंशतिपदेनाश्ववङ्क्रिसङ्ख्यालक्षणायामपि न दोषः।

न चैवकारेण विधिशक्तिप्रतिबन्धात् न षड्विंशतिरित्यस्य विधित्वमिति वाच्यं, एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात्। 'अत्र ह्येवावपन्ति' इत्यादौ तद्युक्तेऽपि विधिदर्शनाच्च। न चैवकारेण स्वार्थ एव विधेयत्वापादनेन षड्विंशतिपदे विधेयत्वप्रतिबन्ध

---

पूर्वमन्त्रे चतुस्त्रिंशत्पदनिषेधपूर्वकषड्विंशतिरित्येव ब्रूयादित्यनेन षड्विंशतिपदमात्रस्य तत्स्थाने विधानात् 'षड्विंशतिर्वाजिनो देवबन्धोः' इत्येवाश्ववङ्क्रिप्रकाशनार्थः पाठः। प्राकृताध्रिगोर्निवृत्तिरित्येकं पूर्वपक्षं कृत्वा चतुस्त्रिंशदिति प्रथमपदेन तद्घटितां समस्तामेवर्चं प्रतिषिध्य प्राकृतषड्विंशतिपदघटिताध्रिगुरेव पठनीयः। तथा च तूपरगोमृगयोः वङ्क्रिप्रकाशनार्थं 'द्विपञ्चाशदनयोर्वङ्क्रिय' इत्येवमूहितः पाठः। अश्ववङ्क्रिप्रकाशनार्थन्तु षड्विंशतिरश्वस्य वङ्क्रय इति द्वितीयः पूर्वपक्षः कृतः। तत्र प्रतिषेधविधिमाश्रित्य पूर्वपक्षद्वयकरणमप्ययुक्तमित्याह-- न तावदत्रेति। ननु प्रतिषेधविधित्वपक्षे विकल्पदोषापत्तेः षड्विंशतिपदस्य चैवकारोपनिबद्धत्वेन विधानाशक्तेः किन्तर्ह्यत्र विधेयमित्यत आह---अतो न गिरागिरेतिवदिति। अस्तु षड्विंशतिपदस्य चतुस्त्रिंशत्पदस्थानकत्वं तावतापि अश्वीयवङ्क्रीयत्तायाः तेन कथं प्रकाशनमित्यत आह- विधानबलाच्चेति। यत्त्वत्र द्वितीयपूर्वपक्षे स्थित्वा आपादितं प्राचीनैः-- नत्वत्र षड्विंशतिपदं इतरपदवच्छक्यं विधातुं एवकारोपबन्धात्। एवमर्थविशेषणं हि ब्रूयादिति न स्वयं विधिक्षमम्। एवकारार्थश्च निवृत्तिः। तस्मात् षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते। एवं कृत्वोद्देश्यमिति तु शक्नोत्यैरपदं विधातुमिति। तदनूद्य दूषयति---न चैवकारेणेति। अनश्वाश्ववङ्क्रीयत्ताप्रकाशनार्थमतिदेशप्राप्तस्य चतुस्त्रिंशत्पदघटितोहितस्य, अथवा समासेन षडशीतिपदेनोहितस्याध्रिगुप्रैषस्य औपदेशिकेन 'चतुस्त्रिंशद्वाजिनो देवबन्धो' इति प्राप्तेन मन्त्रेण बाधात् निवृत्तावपि विशेषमन्त्र एव षड्विंशतिपदस्य चतुस्त्रिंशत्पदस्थाने विधानमात्रेण तावत्पदमात्रनिवृत्त्या

इति वाच्यं, षड्विंशतिपदस्यैव विधित्वमङ्गीकृत्यैवकारस्यैवायोगव्यावृत्तिरूपं फलमादाय चतुस्त्रिंशत्पदव्यावृत्त्याऽन्ययोगव्यावृत्तिरूपं फलमादायैव वाऽनुवादत्वोपपत्तेः। अतश्चाश्वे 'षड्विंशतिर्वाजिनो देवबन्धोः' इति मन्त्रः, इतरयोस्तु प्राकृत एव समासेनेति प्राप्ते—

न तावदत्रैवकारोऽयोगव्यावृत्त्यर्थकतयाऽन्ययोगव्यावृत्त्यर्थकतया वाऽनुवादः, वैयर्थ्यापत्तेः। पदमात्रेण स्तुत्यनुपपत्तेश्च। अन्ययोगव्यावृत्त्यनुवादस्य निषेधेनैव सिद्धौ पुनरनेन करणे सुतरां वैयर्थ्याच्च। निरुक्तद्विविधैवकारार्थविधौ चायोगव्यावृत्तेस्तावत् षड्विंशतिपदस्य पक्षेऽप्यप्राप्तत्वादयोगस्याप्रसक्तत्वेन विधानासम्भवः। षड्विंशतिपद-विधानावश्यकत्वे तत एव तस्याः प्राप्तत्वाच्च। अत एव नान्यनिवृत्तिः, तद्विधाने विकल्प-स्यावश्यकत्वाच्च। अत एव 'अत्र ह्येवावपन्ति' इत्यादावेवकारार्थविधौ न तौ पद्यौ करोतीतिवत् विकल्पापत्तिरित्युक्तं कौस्तुभे।

वस्तुतस्तु निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपता स्वविषयस्य अनुवाद्यतैव वा अनुभवसिद्धा। शब्दशक्तिवैचित्र्यस्यानुभवसिद्धस्यापह्नोतुमशक्यत्वात्। न च

---

अवशिष्टमन्त्रो वैशेषिक एव षड्विंशतिपदयुक्तः पठनीयः नतु समस्तवैशेषिकत्र्यङ्गमात्रस्य निवृत्त्या प्राकृताध्रिगुपाठ इत्यभिप्रायेण पूर्वपक्षमुपसंहरति—अतश्चाश्वे इति। पक्षेऽप्यप्राप्तत्वादिति। एवकारस्यानुवादत्वे वैयर्थ्यात् विधेयत्वमेव प्राचामभिमतं वक्तव्यम्। तत् द्विविधस्याप्येवका-रार्थस्य न सम्भवति। प्रकृतितः समस्तवङ्क्रीयत्ताप्रकाशनार्थं षडशीतिपदोहेनैवाध्रिगोः प्राप्तत्वेन, अथवा अश्ववङ्क्रीयत्ताप्रकाशनार्थं वैशेषिकस्यैव मन्त्रस्य प्राप्तेः। षड्विंशतिपदस्याप्राप्तत्वादेव पक्षेऽयोगाप्रसक्त्या तद्व्यावृत्तिविध्यसम्भवात्, समासेनैव पक्षे षड्विंशतिपदायोगप्रसक्तिमादाय तद्व्यावृत्तिविधानन्त्वग्रे आशङ्क्य निराकरिष्यत इत्यर्थः। ततश्च निषेधस्यानुवादत्वसिध्यर्थं षड्विंशतिपदविधानं वक्तव्यम्। तर्हि न एवकारार्थविधानं सम्भवतीत्याह—षड्विंशति-पदेति। यथैव षड्विंशतिपदविधानान्न तस्यायोगप्रसक्तिः येन तद्व्यावृत्तिर्विधेया तथैव तद्विधाने ऽन्यस्याप्यप्रसक्तेः अन्यनिवृत्तिरविधेयेत्याह—अत एवेति। न केवलं षड्विंशतिपदविधाना-वश्यकत्वात् विकल्पापत्तिभयाद्वा अविधानमेवकारार्थयोः; अपि तु शब्दशक्तिवैचित्र्यादपि एवकारार्थस्यानुवाद्यत्वमित्याह—वस्तुतस्त्विति। षड्विंशतिपदं प्राप्तं केनचिद्धेतुना निवृत्तं षड्विंशतिरित्येव ब्रूयादित्यनेनानुवादरूपेणैव प्रतिप्रसूयते—षड्विंशतिरिति यथाश्रुतमेव ब्रूयात् इति विवरणात्। अतश्च सर्वस्याप्यस्य प्रतिप्रसवविषयस्यानुवादत्वमनुभवसिद्धम्। स च प्रतिप्रसवः पूर्वपक्ष्युपपादितरीत्या वैशेषिके मन्त्रे वा स्यात्, उत प्राकृताध्रिगौ समासेन षडशीतिपदप्राप्त्या

वैशेषिकमन्त्रे षड्विंशतिपदस्य प्रतिप्रसवस्सम्भवति। न च प्राकृत एवाध्रिगौ षड्शीतिपदप्राप्तौ तस्य प्रतिप्रसवः; तथात्वे न चतुस्त्रिंशदिति निषेधानुवादानुपपत्तेः। वैशेषिकमन्त्रेणाश्वांशे प्राकृताध्रिगुवाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च। तूपरगोमृगयोर्द्विपञ्चाशत्पदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिस्तदवस्थैव।

आश्वलायनमताङ्गीकारे तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः। अत एवकाररूपतात्पर्यग्राहकानुरोधेन षड्विंशतिपदे स्वपदोपलक्षितषड्शीतिपदोपेताध्रिगुप्रैषलक्षणया तस्यैव प्रतिप्रसवः। सोऽपि न विधेयः, एवकारेणानुवाद्यत्वावगमात्। तत्प्राप्तिश्चेत्थं—न चतुस्त्रिंशदित्ययं वैशेषिकमन्त्रप्रतिषेधविधिः चतुस्त्रिंशत्पदेन लक्षणया तदादिसर्वमन्त्राभिधानात पदमात्रप्रतिषेधे तत्र षड्विंशतिपदप्राप्त्यभावेन षड्विंशतिरित्येव ब्रूयात्' इत्यस्यानुवादत्वानुपपत्तेः। अतो वैशेषिकमन्त्रप्रतिषेध एवायम्। अतश्च न तौ पशौ करोतीतिवत् विहितप्रतिषिद्धत्वात् विकल्पः। अभावपक्षे च अतिदेशप्राप्तस्य

---

ऽर्थान्निवृत्त्या पुनर्विधानरूपेणाध्रिगुप्रैषे वा? नाद्यः, वैशेषिके मन्त्रे षड्विंशतिपदघटितस्य कदाप्यभावेन तन्निवृत्तिप्राप्त्युपजीविप्रतिप्रसवानुपपत्तेरित्यभिप्रेत्याह—न च वैशेषिके मन्त्र इति। द्वितीयमाशङ्क्य निरस्यति—न च प्राकृत एवेति। यदि ह्यत्र चतुस्त्रिंशत्पदेन षड्विंशतिपदानिवृत्तिः प्राप्ता स्यात् तदा षड्विंशतिपदविधानेन प्रतिप्रसवरूपिणा तत्स्थाने षड्विंशतिपदविधानात आर्थिकचतुस्त्रिंशत्पदनिवृत्तेर्लाभेन निषेधानुवादस्सम्भवेत्। इह तु समासवचनेन न्यायप्राप्तेन पठितमपि षड्विंशतिपदं निवृत्तमिति तद्विधानेन समासवचननिवृत्त्यनुवादसम्भवेऽपि न चतुस्त्रिंशत्पदनिवृत्त्या 'न चतुस्त्रिंशत' इति निषेधानुवादस्सम्भवतीत्यर्थः। किञ्च अश्ववद्वीयत्ताप्रकाशनसाधारण्येनाध्रिगोः समासस्य प्राप्तौ खलु तन्निवृत्त्यर्थं षड्विंशतिपदप्रतिप्रसवविधानं कर्तव्यम्। तत्प्राप्तिरेव न सम्भवतीत्याह—वैशेषिकमन्त्रेणेति। यतश्च कथमपि षड्विंशतिपदमात्रविषयत्वस्य प्रतिप्रसवेऽनिर्वाहः अत आह—अत एवकारतात्पर्येति। षड्विंशतिपदप्राप्त्यभावेनेति। वैशेषिकमन्त्रे चतुस्त्रिंशत्पदमात्रप्रतिषेधे तद्रहित एवावशिष्टो मन्त्रः प्राप्नुयात न तु तत्स्थाने षड्विंशतिपदप्राप्तिः येनानुवादः स्यादिति भावः। विहितप्रतिषिद्धत्वादिति। न गिरागिरेत्ययं तु निषेधानुवाद एव। इरापदस्यैव तु विधिः। तन्निषेधेऽपि तस्य प्राप्त्यभावादनुवादत्वानुपपत्तेः। इह तु निषेधविधिरेव षड्विंशतिरित्येतत्तु अनुवाद एव। निषेधश्च [ध्यस्य] प्राप्तिश्च न शास्त्रमन्तरेण सम्भवतीत्यतः अवश्यं वैशेषिकमन्त्रस्य प्रायकरणपाठानुमितं वाक्यं कल्प्यताम्। तस्मिन् कल्पितेऽपि शास्त्रत्वानपायात् विहितप्रतिषिद्धत्वाद्विकल्प

षडशीतिपदोपेतस्याध्रिगोरेव न्यायेन प्राप्तत्वात् षड्विंशतिरित्येवेत्यनुवादः।

आश्वलायनमते तु षड्विंशतिः षड्विंशतिः चतुस्त्रिंशदेषां वङ्क्रयः इत्येवमाकारकाध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणात्तस्यैवायमनुवादः।

एतेनैवकारयुक्तवाक्येनोक्तविधाध्रिगुप्रैषस्यैव प्रतिप्रसवविधिः; वाचनिकेन च अध्रिगुप्रैषेण पाठप्राप्तस्य वैशेषिकमन्त्रस्य बाधात् न चतुस्त्रिंशदिति निषेधो नित्यानुवादः। वैशेषिकमन्त्रस्य वाचस्स्तोमादौ विनियोगाच्च न वैयर्थ्यमपि। एवं च विकल्पोऽपि नाष्टदोषदुष्टो भविष्यति। एवकारस्यायोगव्यावृत्तेरन्ययोगव्यावृत्तेर्वाऽनुवादो भविष्यतीत्यपास्तं, निषेधपूर्वकैवकारस्थले एवकारसम्बन्धस्यानुवाद्यत्वप्रतीतेः तादृशस्थले यच्छब्दादिवदेवकारस्यापि स्वसम्बन्धिविधिप्रतिबन्धकत्वात्॥

अत एव 'उपवासाः पतन्ति' इत्युक्ते उपवासानेव कुरु न तु प्रवासं गच्छ इत्यत्र प्रवासनिवृत्तिरेव विधेया न तूपवास इत्यनुभवसिद्धम्। यत्र तु न निषेधपूर्वकता तत्रानुभवबलादेवकारसम्बद्धस्यापि विधाने न काचित्क्षतिः, यथा 'अत्र ह्येवावपन्ति' इत्यादौ। प्रकृते तु एवकारसम्बन्धिनोऽध्रिगुप्रैषस्याविधेयत्वात् न चतुस्त्रिंशदित्येव निषेधविधिः। शास्त्रप्राप्तस्य निषेधाच्च 'न तौ पशौ करोति' इतिवद्विकल्पः। षड्विंशतिरित्येवेत्ययं अकरणपक्षे न्यायप्राप्तानुवादस्सन् अकरणप्रशंसया करणस्यैव निन्दार्थवादः। एवं च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति। विकल्पस्तु बहुवचनान्तपाशमन्त्रवन्न विरुध्यते॥

न चैवमध्रिगुप्रैषस्याविधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्राख्यान्यनिवृत्तिरूपस्य विधेयत्वोपपत्तेः न चतुस्त्रिंशदित्यस्यैवानुवादत्वं किं न स्यादिति वाच्यं, एवमपि शास्त्रप्राप्तनिवृत्तेरविशेषेण विकल्पस्यापरिहार्यत्वात्॥

अत एव 'अत्र ह्येवावपन्ति' इत्यादावप्राप्तपरिसङ्ख्यैवाङ्गीकृता कौस्तुभे। तन्त्ररत्नकारस्य तु तत्रैवकारार्थविधिमङ्गीकुर्वतस्तत्र विकल्पापत्तिस्तद्वदेवेह तदनापत्तिरित्ययं

---

इत्यर्थः। इत्येवमाकारकेति। तूपरगोमृगपशुद्वयानुरोधेन पूर्वलिखिताश्वलायनसूत्राच्च षड्विंशतिपदस्याऽऽवृत्तिरस्तु। न त्वेतावता अश्ववङ्क्रीयत्ताप्रकाशनार्थं प्राप्त ऊहो निवार्यते इत्यभिप्रेत्य षड्विंशतिः षड्विंशतिः चतुस्त्रिंशदेषां वङ्क्रय इत्येवमाकारत्वमविरुद्धं ज्ञेयम्। एतेनेति। प्रकृतितः षडशीतिपदोपेतमन्त्रस्य प्राप्तस्य वैशेषिकमन्त्रपाठेन अश्वांशे बाधे सति द्विपञ्चाशदनयोर्वङ्क्रय इत्येवं रूपेण भवति प्राप्तिः। तत्राश्वांशे निवृत्तस्य षड्विंशतिरित्येवब्रूयादित्यनेन पुनः प्रतिप्रसवविधानाच्च षडशीतिपदोपेतस्यैव पाठोऽस्त्वित्याशङ्काभिप्रायः। कौस्तुभ इति। मन्त्राधिकरणे अर्थवादपादे इति शेषः। तन्त्ररत्नकारस्येति। अत्रान्य-

**पर्यनुयोगो दुरुद्धरः न तु मम। न च तवापि विनिगमनाविरहतादवस्थ्यं एवकारस्यायोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानार्थकतया सन्दिग्धार्थकत्वेन निस्सन्दिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात्। अतस्सिद्धोऽश्वमेधेऽप्यध्रिगावूहः। अत्र च सूत्रव्याख्यानुरोधेन किञ्चिद्वैलक्षण्येन भाष्यकारेणैकाधिकरण्यं वार्तिककारेण च अधिकरणद्वयमाश्रितम्। तत् प्रमेयमात्रलेखनप्रवृत्तेन मयोपेक्षितम्॥**

---

निवृत्तिरूपैवकारार्थविधानेन न चतुस्त्रिंशदिति निषेधस्यानुवादत्व, अथवा निषेधविधानेन एवकारार्थस्यानुवादत्वमित्यत्र प्रथमोच्चरितत्वं नियामकमङ्गीकृत्य वैशेषिकमन्त्रप्रतिषेधविधिरेव युक्तः; एवकारघटितन्तु अनुवादः स्तुत्यर्थ इति तन्त्ररत्ने साधितम्। तत्र एवकारार्थविधाने विकल्पापत्तिः अस्ति वा, न वा? आद्ये अत्र ह्येवावपन्तीत्यत्रापि तव एवकारार्थान्यनिवृत्तेर्विधानात् विकल्पापत्तिः। द्वितीये तद्वदेव विकल्पानापत्तौ अन्यनिवृत्तेरेव विधानस्य युक्ततरत्वेन निषेधविधिपक्षे विकल्पदोषस्याधिकस्य प्राप्त्या प्रथमोच्चरितत्वस्याकिञ्चित्करत्वमिति न तन्मते विनिममनाविरहपरिहार इत्यभिप्रायः 'न च तवापि' इत्यग्रिमाशङ्कास्थनवापीति पदेन सूचितः। **अध्रिगावूह इति।** वैशेषिकमन्त्रस्य विकल्पात् अकरणपक्षे षड्शीतिपदोपेतोऽध्रिगुः, तत्करणपक्षे तु तूपरगोमृगानुरोधेन द्विपञ्चाशदनयोर्वङ्क्रय इति पदोपेतोऽध्रिगुः; अश्वांशे तु वैशेषिको मन्त्रश्चेत्येवमूह इत्यर्थः। अत्र च, अश्वस्य चतुस्त्रिंशत् तस्य वचनाद्वैशेषिकम्,

> तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात्,
> ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः,
> तस्यान्तु वचनादैरवत् पदविकारः स्यात्,
> सर्वप्रतिषेधो वाऽसंयोगात्पदेन स्यात,

इति पञ्च सूत्राणि। अत्र च प्रथमसूत्रं पूर्वपक्षं कृत्वा पञ्चसूत्रीयमेकाधिकरणत्वेन भाष्यकृता व्याख्याता। वार्तिककारेण तु प्रथमसूत्रं अधिकरणान्तरपरतया व्याख्याय उत्तरचतुस्सूत्री एकाधिकरणत्वेन व्याख्याता। तदस्य व्याख्याभेदस्योपेक्षणीयतायां हेतुं दर्शयति— **अत्र किञ्चिद्वैलक्षण्येनेति।**

---

## वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ २२ ॥

अध्रिगुप्रैष एव 'वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः' इति श्रुतम्। तत्रोरूकपदेन किं उलूकस्याभिधानं किं वा वपाया इति चिन्तायां—

वपायामुरूकशब्दप्रयोगाभावादन्यत्र वेदे लकारस्थाने रेफदर्शनाल्लोकेऽपि च रोमाणि लोमानीत्यादौ रलघटितपदयोस्समानवृत्तिकत्वदर्शनात् उरूकपदेनोलूकाभिधानं, ततश्चोलूकबुद्ध्या वनिष्ठुं माच्छिन्दतेति मन्त्रार्थः। ततश्च वपाऽनेकत्वे नोरूकशब्दस्योह इति प्राप्ते—

न तावद्वनिष्ठोस्सर्वथैव लवनं निषिद्ध्यते हृदयादिवत्तस्य हविष्ट्वेन लवनस्यावश्यकत्वात्। नाप्युलूकसादृश्यबुद्धिर्लवनकाले निषिद्ध्यते अदृष्टार्थत्वापत्तेः। अत उरूकशब्देनावयवयोगेन वपाभिधानमेव। वपोद्धरणकाले वपां मन्यमाना भ्रान्त्या वनिष्ठुं मा छिन्दतेत्यर्थः। वनिष्ठोर्वपायागोत्तरकालं लवितव्यत्वात्। अतस्तस्य पूर्वं लवनप्रतिषेधवचनं दृष्टार्थं भवति। अवयवयोगश्च उरुशब्दो विस्तीर्णवाची दीर्घश्छान्दसः। कास्मशब्दो मेदोवाची नामैकदेशे नामग्रहणात् कशब्दोऽपि तद्वचन एव; ततश्च पदद्वयमिदं समासो वा। विस्तीर्णं मेदो वपाख्यं च तदर्थः।

न च रूढ्या योगबाधः, रेफघटितस्य पदस्योलूकेऽपि रूढ्यभावात्। अतश्च वपानेकत्वे उरूणि कानीति पदद्वयपक्षे, उरूकाणीति समासपक्षे ऊहः कार्यः॥ ३॥

---

### वनिष्ठुसन्निधानादुरूकेण।

वनिष्ठुमस्येति। स्थविष्ठान्त्रं वनिष्ठुशब्दार्थः। अन्यत्र वेदे इति। इहैव माराविष्टेति पदे लाविष्टेत्यर्थके लकारस्य स्थाने रकारस्य दर्शनादित्यर्थः। तस्य हविष्ट्वेनेति। एतच्च वनिष्ठोः हृदयादिवत् हविष्ट्वाभिधानं "वनिष्ठुर्हि यागार्थतया लवितव्य एव विहित" इति तन्त्ररत्ने यागार्थतोक्त्यनुरोधेन अनवधानकृतमेव।

वस्तुतस्तु हृदयं, जिह्वा, वक्षः, यकृत्, वृक्यद्वयं, सव्यं दोः, उभे पार्श्वे, दक्षिणा श्रोणिः गुदतृतीयमिति क्रमेणाम्नातानामेव एकादशानामङ्गानां यागसाधनत्वेन हविष्ट्वम् वनिष्ठोस्तु षडवत्तसम्पादनेन वनिष्ठुमग्नीधे ददातीति वचनादग्नीधो दानमात्रमेव। एतेन एकादशावदानान्तर्गतत्वात् वनिष्ठोर्लवितव्यत्वमिति प्रकाशकारोक्तमप्यपास्तम्।

---

## (४)—प्रशसाऽस्यभिधानम् ॥ २३ ॥ बाहुप्रशंसा वा ॥ २४ ॥

तत्रैव प्रैषे 'प्रशसा बाहू' इति श्रुतम्। अत्र कृणुतादित्यनुषज्यते। तत्र प्रशसा इत्यनेन किं करणीभूतश्शास उच्यते उत प्रशस्तत्वमिति चिन्तायां प्रशंसायामदृष्टार्थत्वापत्तेः प्रशसेति तृतीयान्तं अकारलोपेन ह्रस्वेन च शासवाची। शासशब्दश्च 'असिं वै शासमाचक्षते' इत्यादिलिङ्गादसिवचनः। ततश्च असिना खड्गेन बाहू छिन्द्तेति प्रैषार्थः।

यद्यपि च स्वधितिरेव पशुप्रकरणे सामान्यतश्छेदने विहितस्तथाऽपि बाहुच्छेदने मान्त्रवर्णिको विशेषविधिरनेन न विरुध्यते। अतश्चाश्वमेधे 'शतं राजना हरिततसरवोऽसयो भवन्ति' इति असिबहुत्वस्य विधानात् तदनुरोधेनोह इति प्राप्ते—

भाष्यकारादिभिरेवं समाहितं प्रत्यक्षविहितस्वधितिसत्त्वे मान्त्रवर्णिकशासविधिकल्पनायां गौरवात् प्रशसापदं प्रशस्तत्वपरमेवेति। तत्तु स्वयमेव 'दशप्रयाजानिष्ट्वाऽऽह च शासमाहर' इति वाक्यस्य लिखितत्वात् शासस्यापि पशौ विहितत्वेनोपेक्षितम्।

वस्तुतस्तु बोधायनादिसकलकल्पपर्यालोचनया शासपदस्य स्वधितावपि शक्त्यवगमात् बाहुच्छेदनेऽपि स्वधितेरेव प्रसक्तेर्न मान्त्रवर्णिकद्रव्यान्तरकल्पना।

यत्तु 'असिं वै शासमाचक्षते' इति लिङ्गं तत् स्वधितेरेव असितुल्यत्वेन स्तुत्यर्थम्।

असिशब्दस्य निघण्टौ स्वधितिपर्यायत्वेन पाठाद्वा शासशब्दस्य स्वधितिपर्यायत्वसूचनार्थं न विरुध्यते। अतश्च शासस्य बाहुच्छेदने करणत्वसत्त्वेऽपि प्रशसेति पदेन न तदभिधानम्। तकारमात्रलोपस्य बाहुलकत्वे सम्भवति अकारलोपस्य ह्रस्वस्य च बाहुलकत्वाङ्गीकारे प्रमाणाभावो द्वितीयाद्विवचनान्तत्वाङ्गीकारेण बाहुसामानाधिकरण्ये सम्भवति वैयधिकरण्यस्यान्याय्यत्वाच्च। द्विवचनस्य आकारादेशस्तु स्वतन्त्रसूत्रविहित इति न तस्य बाहुलकत्वम्। एवं च 'शला दोषणी' इत्यादिप्रायपाठोऽपि

---

### प्रशसास्यभिधानम्।

कृणुतादिति। श्येनमस्य वक्षः कृणुतादिति पूर्वत्र विद्यमानं कृणुतादिति पदं उत्तरत्र सर्वत्रानुषज्यत इत्यर्थः। अकारद्वयलोपेनेति। शाकारे विद्यमानस्याकारस्य ह्रस्वे (लोप) अन्त्यस्याकारस्य च लोपे व्यत्ययानुशासनेन कृते अवशिष्टस्य प्रशस्शब्दस्य हलन्तस्य तृतीयैकवचनं प्रशसेत्यर्थः। हरितत्सरव इति। त्सरुः खड्गमुष्टिः। हरितमुष्टयो राजता असय इत्यर्थः। स्वतन्त्रसूत्रविहित इति। सुपां सुलुगिति स्वतन्त्रसूत्रेण विहितं तदुक्तमेव। बाहुलकन्त्वनन्यगतिकं तदपेक्षयेति न युक्तमित्यर्थः। प्रायपाठोऽपीति। दोषणीति द्वी-

सङ्गच्छते। अतश्च प्रशासापदेन प्रशास्तत्वाभिधानात् तस्य चाविकलत्वसूचनार्थतया दृष्टार्थत्वात् बाहुविवृद्धावूहः। तत्रापि प्राकृतपदस्य बाहुद्वये छान्दसत्वात् बाहुबहुत्वे द्विपाशकायां विकृतौ बहुवचनान्तपाशमन्त्रस्येवाप्रवृत्तेः स्वाधीने शब्दप्रयोगे इति न्यायेन प्रशास्तान् बाहूनित्यूहः, पूर्वपक्षे च प्रशासैरिति द्रष्टव्यम्।

इदं च महाभाष्यस्वारस्यात्कान्तधातोरिव सान्तधातोरपि तुल्यन्यायत्वात् क्विब्विचौ न स्त इत्यङ्गीकृत्य शासपदस्यैव शसेति छान्दसमित्यापाद्य प्रशंसार्थत्वमुक्तम्। यदा तु महावार्तिकस्वारस्यात् बहुतरप्रयोगाच्च सान्तधातोः क्विब्विचाविष्येते तदा पठ्यमान-स्वरानुगुण्यात् शसु हिंसायां इत्यनुशिष्टस्य हिंसार्थकस्य शस्धातोः लुप्तक्विबन्तस्य तृतीयान्तरूपाश्रयणेऽपि छान्दसत्वकल्पनाभावात् हिंसासाधनस्वधितिकरणकत्वावगतेः याज्ञिकसम्मतश्शासवृद्धावेवोहोऽनुसन्धेयः ॥ ४ ॥

---

यान्तसामानाधिकरण्यात् शलेत्याकारान्तमन्यथानुपपन्नं आकारादेशेन द्वितीयान्तत्वेन निश्चितं, तत्प्रायपाठात् प्रशासेत्येपि तद्वदेव ज्ञेयमित्यर्थः। इति द्रष्टव्यमिति। पूर्वपक्षे प्रकृतिवत् हलन्तबहुवचनान्तप्रयोगवारणाय 'स्वाधीने' इति न्यायोक्तिः। इदञ्च ऊहसङ्गतिद्योतनाय प्रयोजनमुक्तम्। वस्तुतस्तु पूर्वपक्षे असिना च्छेदनं, सिद्धान्ते तु इतराङ्गच्छेदनवत् स्वधितिनैवेति स्पष्टमेव भिन्नं तत्रभ्यत इति ध्येयम्। ऊहोऽनुसन्धेय इति। तथा च तदानीं प्रशोभिरित्यूहितप्रयोगो द्रष्टव्यः।

वस्तुतस्तु कर्तरि क्विपः प्राप्तावपि करणे क्विपो विधानाभावेन करणार्थकत्वमपि क्विपः छान्दसमेवाङ्गीकर्तव्यम्। तदपेक्षया शला दोषेणेत्यादिप्रायपाठात् द्वितीयान्तमेव च्छान्दसं युक्तम्। अत एव पूज्यपादलिखितखडीपुस्तकेऽस्य ग्रन्थस्यानुपलम्भादपि उपेक्ष्यतैव साध्वीति ध्येयम्।

## (५)—श्येनशलाकश्यपकवषस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ कात्स्न्र्यं वा स्यात्तथाभावात् ॥२६॥ अध्रिगोश्च तदर्थत्वात् ॥२७॥

तत्रैव प्रैषे 'श्येनमस्य वक्षः कृणुतात्' इति श्रुतम्। तत्र श्येनपदं इवशब्दानुषङ्गेण वक्षस उपमार्थमित्यविवादम्। इवशब्दार्थश्च सादृश्यमित्यपि। तच्च बहुतरधर्म-स्सम्भवे कतिपयधर्मैरन्याय्यत्वादाकारविशेषेणैव। अतश्च वक्ष उद्धृत्य कर्तनादिना श्येनाकारतां सम्पाद्य यष्टव्यमिति। वक्षोविधिस्तु पशुवत् प्रकृतिवेनैन प्राप्तं

अवदानवाक्येऽपि 'अथ वक्षसः' इति श्रवणात् तस्यैव हविष्ट्वप्रतीतेर्न कर्तनादिना तन्नाशश्शक्यः कल्पयितुम्। तेन सादृश्यसम्पत्तिरविकलोद्धरणादेव जायत इति अविकलोद्धरणं प्रकाशयितुमेव सादृश्यानुवादो दृष्टार्थत्वात्। इतरथा श्येनाकारताया मान्त्रवर्णिक्या विधाने गौरवमदृष्टार्थता चाऽऽपद्येत।

एवं 'शला दोषणी, कश्यपेवांसा, कवषोरू, स्रेकपर्णा अष्ठीवन्ता' इत्यादिष्वपि द्रष्टव्यम्। शला शलाके, कश्यपेव कच्छपाविव। कवषा गतिसाधनाश्वादियान-सदृशे। स्रेकपर्णा करवीरपर्णाकृती। अष्ठीवन्ता अस्थिसंयुक्तौ। अत्र च पूर्वपक्षे सिद्धान्ते च श्येनादीनामुपमानत्वस्यावश्यकत्वात् तत्रापि चेवशब्दश्रवणेन सिंहो देवदत्त इतिवत् गौणत्वाभावात् 'सिंह इवैते वीराः' इतिवत् वक्षोविवृद्धौ अनूहितश्येनपदे-

---

### श्येनशलाकश्यप।

**इवशब्दानुषङ्गेणेति।** यद्यपि पूर्वत्र इवशब्दो नोपलभ्यते, येन तदनुषङ्गः क्रियेत तथापि 'कश्यपेवांसा' इत्युत्तरत्र मध्ये पठितस्य तस्य पूर्वोत्तरयोरनुषङ्गाभिप्रायेणैतद्द्रष्टव्यम्। **सादृश्यानुवाद इति।** छागस्य वक्षःस्थलं श्येनाकारतया सिद्धमेव भवति। एवमन्य-माण्यङ्गानि तत्तदुपमानसादृशान्येव भवन्ति। तदेव सादृश्यमत्रानूद्यते अविकलोद्धरणार्थ-मित्यर्थः। **अश्वादियानेति।** एतच्च गतिसाधनाश्वादियानाकारताकर्तव्यतापूर्वपक्षाभिप्रायेणोक्तम्। **वस्तुतस्तु** कवतिर्गत्यर्थे इति निरुक्तभाष्यकृल्लिखनात् सिद्धान्ते गतिसाधने कृत्स्न इत्येवार्थो युक्त इति **प्रकाशकृतः।** अत्र तन्त्ररत्ने अध्रिगुप्रसङ्गादिदमधिकरणमित्युक्तेः पक्षद्वयेऽप्यूहो नास्तीति सूचितम्। तदुपपादिकां युक्तिं दर्शयति —**अत्र चेति।** **इतिवद्गौणत्वाभावादिति।** यदि सिंहपदवत् श्येनादिपदानि गौणानि स्युः तदा विशेष्यबहुत्वे बहुवचनोहितवक्षः पदादि-समानाधिकरण्यात् ऊहितानि प्राप्नुयुः। न त्वेतदस्तीत्यर्थः। एतेन पूर्वपक्षे सिद्धान्ते च श्येनादिपदानां गौणत्वमङ्गीकृत्यैव पूर्वपक्षे कर्मसमवेतानेकाकारतोक्तौ न्यायप्राप्तमप्यूहपदमपवदितुं

नैवोपमानमित्यत्रानूद्य एव श्येनादिपदानां न्यायसिद्धः कल्पसूत्रकारसम्मतश्चेति यद्य-पीदमधिकरणं नातिविचारोपयोगि तथाऽपि प्रासङ्गिकत्वान्न दोषः ॥ ५ ॥

---

(६)—प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥२८॥

अग्निहोत्रे 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतोऽहुतेऽग्नि-होत्र उद्वायेत्' इति श्रुतम्। तत्र किमिदं प्रायश्चित्तं दर्शाद्यर्थं प्रणीतस्याग्नेरग्निहोत्रकाले उद्वाने भवति न वेति चिन्तायां—

---

संसर्गिणा(वि)मिवोपमानानामपि अनूद्यत्वं अन्यत्राप्रतिपादितमिहैव प्रतिपाद्यते इति तन्त्ररत्नोक्त-मस्याधिकरणस्य प्रासङ्गिकत्वं अयुक्तमिति प्रकाशकारोक्तमपास्तं वेदितव्यम्। इवशब्दानुकर्षणं विना तेषां पदानां केवलं सिद्धान्ते गौणत्वाङ्गीकारेणानूद्यत्वस्य ब्रह्मणापि साधयितुमशक्यत्वात्। अत एव श्येनशलाकश्यपकवपोलस्त्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानादिति पूर्वपक्षसूत्रमपि नैषां पदानामाकृतिवचनत्वोक्त्या गौणताप्रतिपादकं, कश्यपपदे इवपदस्यैवोपादानेन तदसम्भवात। अतः प्रसिद्धपदं इवपदं; तत्सन्निधानात् अनुषङ्गात् आकृतिवचनं आकृतिकर्तव्यतावचनमित्येवम्पर-मेवेति पूज्यपादैः सूचितम्, एवंकात्स्न्यं वा स्यात् तथा भावादिति सिद्धान्तसूत्रव्याख्यापरं 'नवा एतदस्याकृतिवचन' इति भाष्यं सङ्गच्छते, प्रासङ्गिकत्वोक्तिस्तन्त्ररत्नगतापीति दिक्।

---

प्रासङ्गिके प्रायश्चित्तं न विद्यते।

अत्र प्राचीनैः अग्निविशिष्टोद्वाननिमित्तकमिदं कर्म अग्निहोत्रस्यारादुपकारकं, उत उद्वानपरीताग्निनिमित्तकं तस्यैवाग्नेरुत्पादकमिति संशय्य, लिङ्श्रुत्या उद्वानस्य निमित्तत्वप्रतीतेः, उद्वानस्य क्लृप्तत्वेनासंस्कार्यत्वात्, अग्नेस्तु विशेषणत्वेन कार्यान्वयाभावात् आरादुपकारक-त्वमेव। अनिमित्तस्य च प्रकरणेनविशेषणाऽयोगात् दर्शार्थस्याप्युद्धृतस्याग्नेः उद्वानसङ्गातं निमित्तमिति कर्तव्येयमिष्टिरिति पूर्वपक्षं कृत्वा सिद्धान्तितम्। विनाशरूपस्योद्वानस्य चिन्तित मिषा [निषिना] दिषु सर्वदा सत्वेन अग्निनाशस्यापि च अवयवशः सर्वदा सत्वेन नित्यत्वात, कादाचि-त्कत्वव्याप्यनिमित्तत्वानुपपत्तेः; उद्वानपरीताग्नेस्तु कदाचिदेव साकल्येन उद्वानव्याप्तावेव सम्भवात् निमित्तत्वोपपत्तेः, उद्वानपरीतस्याग्नेः कार्यायोग्यस्य उत्पत्त्यर्थयमिष्टिः अग्निहोत्राङ्गं, अग्निहोत्रार्थस्य

यच्छब्दसमभिव्याहृतेन लिङ्गपदश्रुत्या निमित्तत्वमुद्धानस्य प्रतीयते। न च तदुद्धानमात्रस्य नाशापरपर्यायस्य सम्भवति यत्किञ्चिन्नाशस्य सर्वदा सत्त्वेन कादाचित्कत्वव्याप्यनिमित्तत्वस्यासम्भवात्। अतो हविरार्तिन्यायेन प्रतियोगितासम्बन्धेनाग्निर्विशेषणम्। तथापि चाग्नेरवयवशो नाशस्य सर्वदा सत्त्वादग्नित्वावच्छिन्नजगद्वर्तिसर्वाग्निनाशस्य च कदाऽप्यसम्भवात् अवश्यं करिष्यमाणाग्निहोत्रप्रयोगोपयोग्यग्नित्वावच्छिन्नप्रतियोगिताकनाशस्यैव प्रकरणादिना निमित्तत्वावसायादुक्तप्रयोगोपयोग्यवयविनाश एवेदम्।

अवश्यं चायमर्थो भेदनहोमादावपि वक्तव्य एव। प्रकृतप्रयोगोपयोगिकपालनाशस्यैव निमित्तत्वात्। अतस्तद्वदेवेदमारादुपकारकमग्निहोत्राङ्गम्।

अस्तु वा नष्टस्याग्नेरुत्पादकाकांक्षायां वैमृधन्यायेन पदान्तरकल्पनयाऽस्याग्निहोत्रापेक्षितादृष्टरूपाग्न्युत्पादकत्वकल्पनया सन्निपत्योपकारकत्वमेव। भेदनहोमस्य दृष्टरूपकपालजनकत्वस्य बाधितत्वादारादुपकारकत्वमिति विशेषः।

अत एवाग्न्युत्पादनप्रयोजनाभावादग्निहोत्रे हुते एतत्प्रायश्चित्तवैयर्थ्यापत्तेः अहुते अग्निहोत्र इत्यनुवादः। भेदनहोमस्तु कपालकार्ये निष्पन्नेऽप्युद्वासनात्पूर्वं भवत्येवेति विशेषः। सर्वथा दर्शार्थं प्रणीतस्याप्यग्नेरग्निहोत्रोपयोगित्वात् निमित्तसंस्कार्ययोरुभयोरपि सत्त्वेन तदर्थं कर्तव्यैवेष्टिः। न च तथाऽपि दर्शादौ वैधसमन्त्रकोद्धरणाभावादुद्धृताग्निनाशाभावेन निमित्ताभावः, उद्धृतत्वस्य हविरुभयत्ववदग्निविशेषणत्वेनाविवक्षितत्वादिति प्राप्ते—

---

चाग्नेः उत्पादनं कुर्वती अग्निहोत्राङ्गं स्यात्, नान्यार्थस्य। तस्माद्दर्शार्थेनाग्नावुद्धृते उद्वाने नैतत्प्रायश्चित्तमिति तत्राग्न्युद्वा [स] नस्य श्रुत्या निमित्तत्वप्रतीतेः त्यागे प्रमाणाभावेन उद्वा(स)न विशिष्टाग्नेर्निमित्तमादाय सिद्धान्तव्यवस्थापनाऽयोगात् संस्कारार्थत्वस्येष्टावङ्गीकारेऽपि पूर्वपक्षोपपादनस्य कर्तुं शक्यत्वाच्चायुक्तं पूर्वपक्षसिद्धान्तकरणमित्यभिप्रेत्य अग्न्युद्वा (स) नस्यैव निमित्तत्वाङ्गीकारेण पूर्वसिद्धान्तपक्षावुपपादयितुं तस्य कादाचित्कत्वं साधयति— यच्छब्दसमभिव्याहृतेनेत्यादिना। अतो हविरार्तिन्यायेनेति। एतेनापूर्वसाधनहविष्ट्वावच्छिन्नप्रतियोगिताकार्तेः पञ्चशरावनिमित्तत्वे सूचिते सति समभिव्याहारगम्यमपि हविषः आर्तिं प्रति विशेषणत्वमनङ्गीकृत्य आर्तेरेव हविर्विशेषणत्वेन आर्तहविषो निमित्तत्वं प्रकाशकारैः षष्ठे उपपादितं परास्तमिति सूचितम्। यावता विना न कादाचित्कत्वव्याप्यनिमित्तत्वनिर्वाहः तावन्निमित्ततबोधकशास्त्रतात्पर्यमवश्यं कल्प्यमित्यभिप्रेत्याह— अवश्यञ्चायमर्थ इति। अग्न्युत्पादकत्वं प्रायश्चित्तेष्टेरङ्गीकृत्यापि पूर्वपक्षसिद्धिं दर्शयति— अस्तु वेति। तथाचाग्निहोत्रप्रकरणात्

**नात्रोद्धतत्वमुद्देश्यविशेषणं करिष्यमाणप्रयोगोपयोग्युद्धतत्वावच्छिन्नप्रतियोगिताकविनाशस्यैव निमित्तत्वात्। वैधस्यैवोद्धरणस्य निमित्तकोटिप्रवेशाच्च नातिप्रसङ्गः। उद्धतश्चाग्निरेवेति अग्निपदं नित्यानुवादः।** इतरथा **अजस्रपक्षे** उद्धतत्वा**भावात् उद्धृत इत्यस्य पाक्षिकानुवादत्वापत्तः। गार्हपत्यादिनाशेऽपि ज्योतिष्मतीष्ट्यापत्तेश्च। अतश्च दर्शार्थं प्रणीतेनैवाग्निहोत्रानुष्ठानादुद्धरणस्य** प्रसङ्गसिद्धकार्यतया **लोपेन निमित्ताभावादेव न नैमित्तिकानुष्ठानम्।** अपि तु **अन्वाहिताग्निनाशप्रायश्चित्तमेव।**

**अत्र च पूर्वपक्षे उद्धताग्न्यभावमात्रेणान्यथात्वाद्भाक्तोहप्रसक्तेः सिद्धान्ते तदपवादात् सङ्गतिः ॥ ५ ॥**

---

अग्निहोत्रोपयोग्यग्निनाशे निमित्ते अग्निहोत्रोपयोग्यग्न्युत्पादिकेयमिष्टिः। यदा च दर्शार्थं पौर्णमासार्थं वाऽन्वाधानेन गार्हपत्यात् प्रणीत एवाहवनीये सायंप्रातरग्निहोमौ भवतः। तस्मिन् होमकाले तस्य प्रणीतस्याग्नेः नाशे अग्निहोत्रोपयोग्यग्निनाशत्वसद्भावेन निमित्तसत्वात् अग्निहोत्रोपयोग्यग्न्युत्पादनस्याप्यग्निहोत्रार्थमपेक्षणेन संस्कार्यरूपलाभाच्च सुलभैव तत्प्राप्तिरिति पूर्वपक्ष्यभिप्रायः। उद्धृतत्वावच्छिन्नप्रतियोगिताकनाशस्य निमित्तत्वे प्रमादात् अमन्त्रकोद्धरणानन्तरं तन्नाशेऽपीष्ट्यापत्तिं प्राप्तां वारयति—**वैधस्यैवेति।** उद्धृत इति पदेन उद्धरणसंस्कृत इति प्रतीतेः वैधस्यैव संस्काररूपस्य समन्त्रकस्य निमित्तकोटौ निवेशात् न पूर्वापादितातिप्रसङ्ग इत्यर्थः। **इतरथेति।** यद्यप्यग्निनाशमात्रं निमित्तं तस्य मते अजस्रधृताहवनीयनाशेऽपि प्रायश्चित्तमिष्टं, तदाऽनुद्धृतपक्षेऽपि तद्विधानात् उद्धृत इति पदं उद्धृतपक्षाभिप्रायेण नेयम्। ततश्च पाक्षिकानुवादत्वापत्तिस्तव। मम तु सा नेत्यर्थः। **प्रसङ्गसिद्धकार्यतयेति।** एतादृशे च पूर्वोक्ते विषये अग्निहोत्रार्थं तावन्न पृथगुद्धरणं, दर्शार्थोद्धरणेनैवोपकारलाभात्। यद्यपि चैतादृशेऽग्निनाशे अग्निहोत्रोपयोग्युद्धृतत्वावच्छिन्नाग्निनाशत्वमप्यस्ति तथापि यस्याग्निरुद्धृत इति विशेषणोपादानबलात् प्रकरणात् यस्येत्यनेनाग्निहोत्रकर्तुरेव उद्धरणसम्बन्धप्रतीतेः अग्निहोत्रार्थमुद्धृतस्यैव अग्नेर्नाशस्यैव निमित्तत्वावसायात् अग्निनाशस्य प्रकृते तदर्थोद्धरणाभावे विशेषणाभावप्रयुक्तविशेष्याभावविधयाऽसत्वात् निमित्ताभावो द्रष्टव्यः। करिष्यमाणप्रयोगोपयोग्युद्धृतत्वावच्छिन्नेति पूर्वफक्किकायामप्येवमेव व्याख्येयम्। अतश्चाग्निहोत्रार्थोद्धृताग्निनाशे निमित्ते अग्निहोत्रार्थाग्न्युत्पादिकाया इष्टेः तथाविधनाशसत्व एव प्रवृत्तेः एतादृशे विषये अन्यदेव प्रायश्चित्तमित्याह—**अपि त्विति।** तदुक्तं भाष्यकारेण—किं तदा तर्हि कर्तव्यम्? अविशेषविहितमग्नेरुपशमे प्रसज्यादिति। **भाक्तोहप्रसक्तेरिति।** ज्योतिष्मतीप्रयोगस्य पूर्वपक्षेऽन्यथा प्रसक्तेः भाक्तः प्रयोगोहो भवति। सिद्धान्ते तु नेति प्रयोगोहाभिप्रायमेतद्द्रष्टव्यम्। **तन्त्ररत्ने तु**

## (६)—धारणे च परार्थत्वात् ॥ २९ ॥ क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥

अनारभ्य 'धार्यो गतश्रिय आहवनीयः' इति श्रुतम्। तत्र गतश्रीत्वं ग्रन्थान्तरे अन्यथा व्याख्यातमपि तन्त्ररत्ने ग्रामश्रीत्वमिति व्याख्यातम्। तदिह यदा तन्निमित्तकं आहवनीयधारणे कृते अग्निहोत्रकाले स उद्धरेत् तदा तदुत्पत्त्यर्थं ज्योतिष्मतीष्टिः कर्तव्या न वेति चिन्तायां –

निमित्तसंस्कार्ययोस्सत्त्वात् कर्तव्या। न च धारणे कृते न प्रयोगोपयोग्युद्धरणाभावादकरणं, अनुद्धृतस्य धारणायोगेन ततः पूर्वं करिष्यमाणसर्वाग्निहोत्रप्रयोगार्थं तन्त्रेण समन्त्रकोद्धरणस्याक्षेपात्।

इदं धारणं न गतश्रीत्वे निमित्ते पुरुषसंस्कारार्थं फलकल्पनापत्तेः। धार्य इति यत्प्रत्ययेनाहवनीयस्य कर्मत्वावगतेश्च। षष्ठीश्रुतिस्तु निमित्तफलकल्पनया कर्तृत्वानुवादेनापि 'वैश्यस्य' इतिवन्नानुपपन्ना। किन्तु आहवनीयसंस्कारार्थमेव। आहवनीयस्य च धारणव्यतिरेकेणाधानेन जातत्वात् स्वरूपे आनर्थक्यप्रसक्तौ अहर्गणिकर्तृकेन क्रतुसम्बन्धोपस्थितकरिष्यमाणसर्वक्रत्वपूर्वसाधनीभूताहवनीयसंस्कारकत्वसिद्धिः। एवं च धारणस्य पुरुषार्थत्वोक्तिस्तन्त्ररत्नीया निरस्ता। अत एव करिष्यमाणकर्मणां यावज्जीवं सत्त्वात् गतश्रीत्वोत्तरं पुनर्दारिद्र्येऽपि यावज्जीवं धारणसिद्धिः। पुरुषार्थत्व-

---

ऊहसिद्ध्यर्थं पदार्थावान्तरकार्यनिरूपणं प्रस्तुतमिति तत्प्रसङ्गादिष्टेः निमन्त्र्यं कार्यं उताग्निसंस्कार इति निरूपणात् सङ्गतिरित्युक्तम्।

---

**धारणे च परार्थत्वात्।**

**ग्रन्थान्तर इति।** अयमर्थः—गतश्रीन् प्रकृत्य तैत्तिरीयश्रुतौ "शुश्रुवान् ग्रामणी राजन्य" इति त्रयाणां सङ्कीर्तनमस्ति। वेदवेदार्थज्ञानवान् शुश्रुवान्, ग्रामणीः वैश्यपरिवृढः राजन्यः क्षत्रियः। तत्र "ऋचस्सामानि यजूंषि साहि श्रीरमृता सताम्" इति श्रुत्यन्तरे वेदत्रय-तदर्थज्ञानवानेव शुश्रुवत्पदेनोच्यते नैकवेदवेदार्थज्ञानवानिति मतान्तरम्। एकवेदतदर्थ-ज्ञानवतोऽपि ग्रहणे ऋचस्सामानीति श्रुत्यविरोधात् तद्वतोऽपि ग्रहणं तेन पदेनेति मतान्तरमिति रुद्रदत्तादिग्रन्थान्तरे उपलभ्यते। एवञ्च गतश्रीपदं रूढमिव प्रतीयते तद्ग्रन्थेष्वित्यन्यथा व्याख्यातमिति। **तन्त्ररत्न इति।** यद्यपि तन्त्ररत्नग्रन्थे गतश्रीपदं ग्रामश्रीत्वार्थतया स्पष्टं न व्याख्यातं तथापि 'नन्वस्य यावदेव श्रीमत्ताऽनुवर्तते' 'न पुनः दारिद्र्येण गतश्रीत्वमपैति तस्य' इत्यादि-

**पक्षे तु यावज्जीवतायां** प्रमाणान्तरं मृग्यं **स्यात्। सर्वकर्मार्थेनापि च धारणेनाक्षिप्तं उद्धरणं कांस्यभोजिन्यायेनाग्निहोत्रोपकारकतया समन्त्रकमेवाक्षिप्यते।**

**न च यत्किञ्चित्कर्मार्थमुद्धृतस्याग्नेरेव गतश्रीत्वे निमित्ते धारणोपपत्तेर्न स्वतन्त्रोद्धरणाक्षेपकत्वमिति वाच्यं, मध्याह्नादौ यदा कस्यापि कर्मणो न करणं तदैव गतश्रीत्वरूपनिमित्तप्राप्तौ धारणस्यावश्यकत्वेन तदनुरोधेनोद्धरणाक्षेपस्यावश्यकत्वात्। अतो निमित्तसत्त्वात्कर्तव्यैव ज्योतिष्मतीग्निरिति प्राप्ते—**

**यदा कर्ममध्ये गतश्रीत्वं तदोद्धरणानाक्षेपकत्वादन्यदा चाक्षेपकत्वे वैरूप्यापत्तेः लाघवेन परप्रयुक्तोद्धरणोपजीविना धारणविधिना यत्किञ्चित्कर्मार्थमुद्धृतस्यैव गतश्रीत्वे**

---

तद्ग्रन्थे दारिद्र्यपदोपादानात् प्राप्तश्रीत्वमर्थो लभ्यत इत्यभिप्रायः। **प्रमाणान्तरं मृग्यमिति।** यद्यपि तन्त्ररत्नकृता "नन्वस्य यावदेवानुवर्तते तावदेवाग्निधारणम्। कथमाप्राणोपरमं धारणं कर्तव्यमित्युच्यते अत आह—न पुनर्दारिद्र्येण गतश्रीत्वमपैति तस्य, तस्मात् यावज्जीवमस्य धारणं नैमित्तिकमिति" अनया उपपत्त्या यावज्जीवं धारणं साधितम्। तथाप्ययमत्राभिप्रायः। यथैव हि वसन्तस्य निमित्तत्वेऽपि न निमित्तसत्त्वात् मधुमाधवयोर्मासयोः अनवरतं नैमित्तिकानुष्ठानं प्राप्नोति। सकृत्करणेनापि शास्त्रार्थसिद्धेः आवृत्तौ मानाभावात्। एवमिहापि श्रीप्राप्त्युपलक्षितकालीनगतश्रीत्वे निमित्ते सकृत् धारणानुष्ठानेनैव शास्त्रार्थसिद्धेऽर्थे [न] यावज्जीवानुष्ठाने प्रमाणमस्ति। मम तु पूर्वोक्तविधया तत्सुलभमिति।

वस्तुतस्तु संस्कारकत्वपक्षेऽपि यदर्थमुद्धृतः तत्कर्मोपयुक्ताहवनीयव्यक्तिसंस्कारकत्वस्यैवापत्तेः उपयोक्ष्यमाणसंस्कारकत्वस्याभ्यर्हितत्वेन वा तत्करिष्यमाणकर्मोपयोक्ष्यमाणाहवनीयव्यक्तिसंस्कारकत्वस्यानिवारणात् यत्कर्मार्थमुद्धृतोऽग्निः तत्कर्मसमाप्तिपर्यन्तं तस्य धारणं प्राप्तमेव न विधेयम्। किन्तु तदपवर्गे लौकिकत्वेन प्राप्तोत्सर्गबाधोऽयम्। तावतापि अग्रे करिष्यमाणव्यवहितैकतरकर्मापूर्वसाधनसंस्कारजननमात्रेणापि शास्त्रार्थसिद्धौ सर्वकर्माङ्गत्वे प्रमाणाभावः। अतो विधेयस्य धारणस्य उत्तरावधेः विधानाभावे जीवनपर्याप्त्यवधिकत्वसामर्थ्यानुरोधेनैव कथञ्चित् यावज्जीवं करिष्यमाणसर्वकर्मार्थत्वं निर्वाह्यमिति तेनैव पुरुषार्थत्वपक्षेऽपि सिध्यत्येव तदिति **मृग्यं स्यादित्यनेन** सूचितम्। **उद्धरणाक्षेपस्यावश्यकत्वादिति।** सर्वथा धारणान्यथानुपपत्त्या उद्धरणाक्षेपस्त्वावश्यक एव। तत्राग्निहोत्रहोमस्य प्रात्यहिकत्वे नास्ति तदर्थं समन्त्रकमुद्धरणम्। तदेव कांस्यभोजिन्यायेनाक्षिप्यते लाघवात्। तथाचाग्निहोत्रार्थमुद्धृतेऽग्नौ सति तदानीमेव प्राप्तश्रीयजमानेन तदग्निधारणं करिष्यमाण-

निमित्ते धारणविधानम्। अत एव तदनुरोधेन निमित्तस्याप्याहिताग्नित्वादिनेव जीवनस्य सङ्कोचो न विरुध्यते। अतो धारणविधिना अग्निहोत्रविधिना वा परप्रयुक्ताग्निलाभेनोद्धरणानाक्षेपात्करिष्यमाणाग्निहोत्राङ्गभूताग्निनाशे उद्धृतत्वावच्छिन्नप्रतियोगिताकनाशरूपनिमित्ताभावान्नेयमिति प्रकरणम्। न चान्यकर्मार्थं प्रणीतस्य धारणे निमित्ताभावेऽपि अग्निहोत्रार्थमेवोद्धृतस्य धारणे निमित्तसद्भावात् कथं प्रयोगान्तरे तन्नाशे प्रायश्चित्ताभावः। कपालनाशादिवत् यत्प्रयोगव्यक्त्युपयोगिनी योद्धरणव्यक्तिः तत्संस्कृतत्वावच्छिन्ननाशस्यैव तत्प्रयोगव्यक्त्युपयोग्यग्निसम्पादकतया ज्योतिष्मतीष्टिनिमित्तत्वात्, इतरथाऽतिप्रसङ्गापत्तेः। अतो नाजस्रेष्विदं प्रायश्चित्तम्। अपि तु सामान्यविहितं मनस्वतीहोमाद्येवेति सिद्धम्॥ ६॥

---

सर्वक्रत्वर्थं कार्यमिति शास्त्रार्थात् करिष्यमाणकर्मसु अग्निहोत्रप्रयोगाणामपि सत्वात् संस्कार्यनिमित्तयोरुभयोरपि सत्वेन अजस्रं धार्यमाणाग्निनाशेऽपि एतद्भवत्येव प्रायश्चित्तमित्यर्थः। अत एव तदनुरोधेनेति। तदनुरोधेन लाघवानुरोधेनेत्यर्थः। परप्रयुक्तोद्धरणोपजीविना धारणविधिना तावत्प्रतीक्षणीयं यावत्कस्यचित् कर्मण उद्देशेन उद्धृता भवन्त्यग्नयः तादृशोद्धृताग्निः गतश्रीः निमित्तमिति निमित्तसङ्कोचो जीवनमात्रस्य निमित्तत्वेऽपि परप्रयुक्ताग्निविद्यावत एवाधिकारानुरोधेन आहिताग्निविद्वद्वृत्तित्वेन जीवने निमित्ततासङ्कोचवत् नानुपपन्न इति भावः। अजस्रधारणाभावे यद्यपि अग्निहोत्रविधिनाऽऽक्षिप्यत एवोद्धरणं तथापि यत्किञ्चित्कर्मार्थोद्धृताहवनीयस्य अजस्रधारणपक्षे परार्थोद्धृताहवनीयेनैव प्रसङ्गतः कार्यसिद्धेः न तदाक्षेपकत्वमिति भावः। अग्निहोत्राङ्गभूताग्निनाशे इति। सत्यपीति शेषः। अग्निहोत्रार्थमेवोद्धृतस्येति। तथा च यदा सायमग्निहोत्रहोमार्थे उद्धृतोऽग्निः तस्य तदानीमेव प्राप्तश्रीयजमानेन धारणे कृतेऽपि प्रातरग्निहोमे हुते सति तदानीमुद्धृताग्नेर्धृतस्य नाशे प्रायश्चित्तापत्तिरित्यर्थः। अत्र च यदग्निहोत्रप्रयोगव्यक्त्यङ्गत्वेनोद्धृताग्निनाशनिमित्ते विधीयमानज्योतिष्मतीष्टिः तत्प्रयोगव्यक्त्युपयोग्याहवनीयोत्पादकत्वेन तत्प्रयोगव्यक्त्यङ्गमिति मीमांसकसिद्धान्ते किं यथायाज्ञिकाचारं अग्निहोत्रहोमः प्राक् उत्तरमिष्टिः, उत वैपरीत्यम्? आद्ये अग्निहोत्रहोमस्य जातत्वेन तन्निष्पादने प्रयोजनाभावः। द्वितीयेऽपि ज्योतिष्मतीष्ट्यर्थप्रणीताहवनीयेनैव प्रसङ्गसिद्धेः न तदुत्पादनापेक्षा। इष्ट्यनन्तरमग्नित्यागेन प्रणीताग्न्यन्तरेऽग्निहोत्रानुष्ठाने तु नास्याहवनीयस्य इष्टिजन्यत्वसम्भवः। अतोऽस्या इष्टेः आहवनीयोत्पादकत्वासम्भवात् भेदनहोमवत् आरादुपकारकाङ्गत्वमेवेति पूर्वाधिकरणपूर्वपक्षोपपादने पूज्यपादैः अनास्थाद्योतक 'अस्तु वा' इति पदेन सूचितम्।

---

## (७)—न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥

यदा दर्शार्थमग्निप्रणयनं क्रियते तदा तस्मिन्नेवाग्नौ सायंप्रातः क्रियमाणाग्निहोत्राङ्गमुद्धरणं तन्मन्त्रश्च 'वाचा त्वा होत्रा' इत्यादिः पठनीयो न वेति चिन्तायां—

दर्शार्थं प्रणीतस्याप्यग्नेरग्निहोत्राङ्गत्वात् तत्संस्कारकमुद्धरणं तदङ्गभूतश्च मन्त्रः प्रयोजकसत्त्वाद्भवत्येव। न च प्रणयनस्य प्रातः कालीनत्वादुद्धरणेऽपराह्णकालीनत्वाभावः। प्रधानाङ्गभूतोद्धरणाद्यनुरोधेन तदङ्गभूतकालस्य समयाध्युषितकालवदनादरणीयत्वात् ॥

वस्तुतस्तूद्धरणस्याग्नेर्वा अग्निहोत्राङ्गत्वाभावेऽपि प्रणयनाक्षिप्तार्थिकोद्धरणस्य तत्संस्कृताग्नेर्वा अग्निहोत्रोपकारकत्वस्य तावत्सत्त्वात् तावतैवेज्यार्थयोर्दधिपयसोः प्रणीताधर्मवत मन्त्रप्राप्त्युपपत्तिरिति प्राप्ते—

प्रातःकालक्रियमाणदर्शार्थाग्निप्रणयनवेलायामग्निहोत्रस्य निमित्ताद्यभावेनानुपस्थितत्वात् तदङ्गभूतोद्धरणस्य कालाभावेन सुतरामनुपस्थितेः न मन्त्रस्य तदानीं सम्भावना। न चाग्निहोत्रेणैव स्ववैगुण्यपरिहारार्थमकालेऽपि तदाक्षेपः। तस्य प्रसङ्गसिद्धाग्निलाभेन तदुद्धरणादिसंस्कारकार्यस्य लाभेन चोद्धरणस्यैवानाक्षेपे तन्मन्त्रादेस्सुतरामनाक्षेपात्, अतः प्रयाजानां पशुपुरोडाशे अनङ्गत्ववत् उद्धरणतन्मन्त्रादेरपि तस्मिन्नग्निहोत्रप्रयोगे सुतरामङ्गत्वाभावादेव न तदभावे वैगुण्यप्रसङ्गः। अतो न मन्त्रस्य कालान्तरत्वप्रयुक्तान्यथाभावात्मको भाक्त ऊहः, अपि तु बाध एवेति सिद्धम् ॥ ७ ॥

---

न तूत्पन्ने यस्य चोदना।

अग्निहोत्राङ्गमुद्धरणं कर्तव्यमिति नार्थः दर्शार्थमुद्धृतस्य पुनरुद्धरणासम्भवात्। किं तर्हि यस्मिन्नेवाग्नावुद्धरणं तदग्निहोत्राङ्गं भवति वा न वेत्यर्थो ज्ञेयः। समयाध्युषितकालवदिति। दैवान्मानुषाद्वाऽपराधात् षोडश्युत्कर्षे सति 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति वचनविहितसमयाध्युषितकालस्यैवानादरणीयत्वमित्यर्थः। प्रणीताधर्मवदिति। अभ्युदितेष्टौ दधिपयसोः प्रदेयत्वात् प्रदेयधर्मा दोहादयो भवन्त्येव 'सह श्रपयति'इति वचनबलात् सह श्रपणानुरोधेन तण्डुलश्रपणसाधनत्वस्याप्यर्थसिद्धत्वात् असत्यपि तत्प्रयुक्तत्वे तच्छेषत्वे वा साधनतासम्बन्धेनापूर्वसम्बन्धिश्रपणसम्बन्धित्वस्यापि सत्वात तयोः प्रणीताधर्मा अप्युत्पवनप्रणयनादयो भवन्तीति साधितं "परार्थे त्वर्थसामान्यं संस्कारस्य तदर्थत्वात्" इत्यधिकरणे अत्रैव द्वितीयपादे। तद्वदिहाप्यग्निहोत्रसाधनीभूतोद्धरणप्रयुक्ततन्त्रस्यापि भवत्येव प्राप्तिरित्यर्थः। तस्य प्रसङ्गसिद्धेति। उद्धरणाक्षेपो हि अग्निहोत्रहोमार्थावश्यापेक्षिताहवनीय-

(८)—प्रदानदर्शनं श्रयणे तद्धर्मभोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥ संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥ तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ अधर्मत्वमप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ परो नित्यानुवादस्स्यात् ॥ ३६ ॥ विहितप्रतिषेधो वा ॥ ३७ ॥ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

'आदित्यः प्रायणीयः पयसि चरुः' इत्यत्र 'पयसि' इत्यधिकरणत्वनिर्देशात् न पयसो हविष्ट्वं अपि तु चरोरेव, तद्धितसामानाधिकरण्येन तस्यैव देवतासम्बन्धात्। पयसस्तु श्रपणाधिकरणत्वमात्रं अतो न तत्र प्रदेयधर्माः। प्रणीताधर्मास्तु तत्र भवन्तीति प्राञ्चः॥

वस्तुतस्तु—संयवनार्थत्वात्तेषां चरौ च तदभावात् तेऽपि न भवन्त्येवेत्युक्तम्। प्रदेयधर्मप्राप्तयाशङ्का तु यद्यपि नान्या काचित् तथाप्यादित्यप्रकरणे 'अयजुषा वत्सानपाकरोति अपवित्रवति गां दोहयति' इत्यादिप्राप्तवत्सापाकरणाद्यनुवादेन यजुरादिपर्युदासविधिरेवोत्पत्तिवाक्ये सप्तम्यर्थाविवक्षातात्पर्यग्राहकः अभ्युदितेष्टिवदिति प्राप्ते –

---

सिद्ध्यर्थः। अथवा गार्हपत्याद्विभागार्थो वा स्यात्। न बल तदुभयमपेक्षितम्। प्रसङ्गसिद्धाहवनीयलाभे तत्प्रयोजनाभावात्। विभागस्य च दर्शार्थोद्धरणेन सिद्धत्वादित्यर्थः। स्पष्टार्थमन्यत्।

---

प्रदानदर्शनं श्रयणे।

प्रणीताधर्मास्त्विति। यद्यपि प्राचां ग्रन्थेषु पयसि प्रदेयधर्मनिराकरणमात्रमेव सिद्धान्तितम् न प्रणीताधर्मप्राप्तिपर्यन्तमपि, तथापि 'अधर्मत्वमप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः' इति सिद्धान्तसूत्रे स्पष्टं प्रणीतार्थे विधानस्य दर्शनात् प्रणीताकार्यकारित्वेन स्थानापत्त्या प्रणीताधर्मप्राप्तिपर्यन्तमपि सिद्धान्तव्यापारोऽवसीयते इत्यभिप्रायेणैतदुक्तम्। वस्तुतस्त्विति। प्रणीताधर्माणां 'प्रणीताभिः संयौति' इति वचनविहितसंयवनद्वाराऽपूर्वार्थत्वात् संयवनस्य चरावभावे द्वाराभावान्नैव प्राप्तिरिति 'परार्थे त्वर्थसामान्यम्' इत्यनुपदपूर्वलिखिताधिकरणे प्रागुपपादितमित्यर्थः। इतरस्य सर्वस्येति। लोकसिद्धपयोव्यावृत्तये गां दोहयतीत्येतावता

नित्यानुवादत्वेनाप्यस्योपपत्तेर्न सप्तम्यर्थाविवक्षा। वस्तुतस्तु लौकिकप्रसिद्ध-पयोग्रहणस्येव तदा प्रस्रवदोहनादिकर्तव्यताया अप्राप्तत्वेनावश्यविधेयत्वेऽपीतरस्य सर्वस्यैव नित्यानुवादत्वात् न सप्तम्यर्थविवक्षा। अतो न तत्र प्रदेयधर्माः। अभ्युदितेष्टौ तु उत्तराधिकरणे वक्ष्यते ॥ ८ ॥

---

## (९)—अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ४१ ॥ श्रृतोप-देशाच्च ॥ ४२ ॥

अभ्युदितेष्टावपि तर्हि सप्तमीनिर्देशात् दधिशृतयोरधिकरणत्वावगतेर्न प्रदेयधर्मा भवेयुः। 'सह श्रपयति' इत्यस्यापि पूर्ववदेव नित्यानुवादत्वोपपत्तेः। न च क्षोदिष्ठादि-द्रव्योद्देशेन तत्र देवतामात्रविधानात् दध्याद्यधिकरणत्वस्यापि विधौ वाक्यभेदापत्तेस्तस्य प्रदेयत्वमिति वाच्यं, द्रव्यद्वयोद्देशेऽपि वाक्यभेदत्वादवश्यम्भ्यात्। तद्वरं सप्तमीश्रुत्या विधेयानेकत्वनिमित्तवाक्यभेदस्यैवाङ्गीकारः। वस्तुतस्तु भावनान्तरस्यैव तत्र पक्षेऽङ्गी-कारात् अधिकरणत्वस्यापि विधौ न वाक्यभेद इति प्राप्ते -

---

दोहनविध्यावश्यकत्वेऽपि तत्र दोहने पवित्रवत्त्या अधिकरणत्वस्य समन्त्रकवत्सापाकरणादीनाञ्च प्रापकप्रमाणाभावादेवाप्राप्तेः निषेधासम्भवात् गां दोहयतीत्येतद्व्यतिरिक्तभागस्य नित्यानुवादत्व-मकामेन वक्तव्यमिति, न तत् सप्तम्यर्थाविवक्षायां तात्पर्यग्राहकमिति भावः।

### अभ्युदये दोहापनयः

अभ्युदितेष्टाविति। 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात् स त्रेधा तण्डुलान् विभजेत्। ये मध्यमाः तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्। ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुम्। येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं' इतिवाक्यविहितायामभ्यु-दयेष्टावित्यर्थः। यद्यपि पक्षे तदेवेदमामावास्यं कर्म, केवलन्तु तद्द्रव्यं पूर्वदेवतातोऽपनीतं देवतान्तरेण युज्यतेऽनपनीततयागार्थत्वमेव सतस्य कथं यागधर्मा न स्युः, स्पष्टमेव च सूत्र-कारेण चरुसंस्कारार्थतां दोहयोर्निरस्य प्रदानार्थतैव निर्णीता न तत्संस्कारार्थत्वादिति। तथा च प्रदेयधर्मा एव भवन्त्येवेति सिद्धमेव तथापि पूर्वाधिकरणसिद्धान्तेनात्र विशेषाशङ्कया पुनर्विचार-करणं युज्यत एवेति तर्हिपदेन सूचितम्। प्राचीनसिद्धान्तयुक्तिमनूद्य दूषयति— न च क्षोदिष्ठेति।

'यदि गृहीतं हविरभ्युदियात् अथो तत्रैतानेव तण्डुलान् सुफलीकृतान् दधि पयश्च' इत्यादिलिङ्गादपनयविधेश्च प्रकृतयागीययोरेव दधिपयसोर्भावनान्तरेऽपि प्रदेयत्वेनैवोपादेयत्वस्य षष्ठे व्यवस्थापितत्वादधिकरणत्वविवक्षानुपपत्तेर्भवन्त्येव प्रदेयधर्माः ॥ ९ ॥

---

(१०)—अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥ लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

'यः पशुकामस्स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इत्यत्रापि यद्यप्यपनयविध्यभावात् कर्मान्तरत्वं षष्ठे उपपादितं, तथाऽपि अभ्युदितेष्टितुल्यश्रुतित्वात् वत्सापाकरणश्रुतिबलाच्च सप्तम्यर्थाविवक्षया प्रदेयत्वावगतेः प्रदेयधर्मान् मन्वानस्योत्तरम्। वत्सापाकरणविधिबलेन हट्टस्थपयोव्यावृत्तावपि अधिकरणत्वाविवक्षायां प्रमाणाभावात् प्रदेयत्वानुपपत्तेर्न प्रदेयधर्माः आदित्यचरुपयोवत् ॥ १० ॥

---

(११)—श्रयणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ ४५ ॥ गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ अनिर्देशाच्च ॥ ४७ ॥ श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥ अर्थवादश्च तदर्थवत् ॥ ४९ ॥ संस्कारं प्रति भावाच्च तस्मादथ प्रधानं स्यात् ॥ ५० ॥

---

अपनयो वाऽर्थान्तरे विधानात्। स्पष्टार्थमेतत्। अत्र च अभ्युदये दोहापनयः स्वधर्मः स्यात् प्रवृत्तत्वात्, शृतोपदेशाच्चेति सूत्रद्वयं तुशब्दवाशब्दरहितं पूर्वपक्षपरं सत् पूर्वपक्षतया प्रदेयधर्मा दधिपयसोर्भवन्तीत्येतत्कथनार्थम्। अपनयो वा ऽर्थान्तरे विधानात् चरुपयोवत्। लक्षणार्था शृतश्रुतिः। इत्युत्तरसूत्रद्वयं वाशब्दबलात् पूर्वोपपादितपूर्वपक्षनिरासार्थं सत् दधिपयसोः प्रदेयधर्मा न भवन्तीति सिद्धान्तव्यवस्थापकं दृश्यत इति चतुः सूत्रैकाधिकरण्यं स्वरसतो भाति; तथापि षष्ठे दधिपयसोः प्रदेयताव्यवस्थापनपूर्वं चरुसंस्कारार्थत्वनिराकरणेन प्रदेयधर्मप्राप्तिसिद्धान्तव्यवस्थापनात् तदनुरोधेन षष्ठाविरोधिभिन्नाधिकरणत्वमेव वृत्तिकृता भाष्यकारेण चाङ्गीकृतमिति पूज्यपादैरपि तथैव दर्शितम्।

---

सोमे 'पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिनम्' इत्यादौ तृतीयया पयःप्रभृतीनां श्रयणं प्रति गुणत्वावगमात् सत्यपि सोमसंसर्गे देवतासम्बन्धाभावेन प्रदेयत्वानुपपत्तेः न प्रदेयधर्माः क्रयादयः ॥

न च प्रयाजशेषन्यायेन श्रयणस्य सोमसंस्कारकत्वे अदृष्टार्थत्वप्रसङ्गात् पयस्संस्कारकत्वावगतेस्तदन्यथाऽनुपपत्त्या यागे तस्य विनियोगकल्पनेन प्रदेयत्वावगतिः, पयस्संस्कारकत्वेऽप्यदृष्टार्थत्वस्य तुल्यत्वात्; उत्पत्तिशिष्टसोमावरोधे पयसो निवेशानुपपत्तेश्च। निषादस्थपत्यधिकरणन्यायेन तृतीयादौ लक्षणायां प्रमाणाभावाच्च। प्रयाजशेषवदुपयुक्तत्वाभावेनास्मदुक्तप्रयाजशेषन्यायाभावाच्च। तस्मान्नात्र प्रदेयधर्माः ॥ ११ ॥

---

(१२)—पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥ शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥ ५२ ॥ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥ प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात् तत्कारितत्वात् यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५४ ॥ क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५ ॥

---

श्रयणानान्त्वपूर्वत्वात्।

सक्तुभिर्मन्थिनमित्यादाविति। आदिपदेन 'धानाभिर्हारियोजनं, हिरण्येन शुक्रं, आज्येन पात्नीवतम्' इत्यादीनां सङ्ग्रहः। स्पष्टमन्यत्।

---

पर्यग्निकृतानामुत्सर्गे।

अत्र तन्त्ररत्ने अस्मिन्नधिकरणे पर्यग्निकृतानारण्यानुत्सृजन्तीत्येतदेवोदाहरणम्, पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवदित्यत्र सूत्रे पर्यग्निकृतानामिति बहुवचनोपादानेन बहूनामेवारण्यानामुदाहरणत्वप्रतीतेः, न तु त्वाष्ट्रपात्नीवतस्य, तस्यैकत्वादित्युक्तम्। तत्र एकस्मिन्नेव यागे पर्यग्निकरणसंस्कृता उत्स्रष्टव्या बहवः तेषामेवोपादाने सूत्रस्याल्पविषयत्वेन सङ्कोचापत्तेः महाविषयत्वसिद्ध्यर्थं ये ये पर्यग्निकरणसंस्कृता उत्स्रष्टव्या आरण्यपात्नीवतप्रभृतयः तेषां पर्यग्निकृतानामिति सूत्रस्थपदेन ग्रहणे बाधकाभावात्, आरण्यवाक्यवत् पात्नीवतवाक्यमपि

अश्वमेधे 'ईशानाय परस्वत आलभेत' इति प्रकृत्य 'पर्यग्निकृतानारण्यानुत्सृजति' इति श्रुतम्। तथा 'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्यान्यत्रापि 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति श्रुतम्। तत्रोभयत्राप्याद्यवाक्ये तावद्देवतासंयोगश्रवणादालम्भमात्रं विधीयते अपि तु याग एवेत्युक्तमेव द्वितीये ॥

द्वितीयवाक्ये तु न पर्यग्निकरणान्ताङ्गरीतिविधिरपूर्वत्वफलको द्वितीयोक्तोऽपि युज्यते। तथात्वे प्राकृतस्य पर्यग्निकरणादिधर्मजातस्य प्रकृतौ प्रदेयप्रकृतिसंस्कारकत्वेन क्लृप्तस्येह पशोः प्रदेयत्वेन तल्लिङ्गप्राप्तेरप्राकृतकार्यतया पशौ विधीयमानस्य क्लृप्तोपकारकत्वाभावेनातिदेशप्रतिबन्धकत्वासम्भवात्। तदभावे च प्रदेयप्रकृतिसंस्कारकत्वेनैव पर्यग्निकरणादिप्राप्तेस्तस्याविधेयत्वाच्च। न च पर्यग्निकरणान्ते प्रयोगत्यागाख्योत्सर्गविधिः, तथात्वे त्यागस्याप्यभावेनोत्पत्तिवाक्यावगतदेवतासम्बन्धबाधापत्तेः। न चोत्सृजतिना यागमनूद्याप्राकृतपर्यग्निकरणान्तोत्तरत्वविधिः हृदयाद्यङ्गेषु तद्विधौ पात्नीवतं इत्येकवचनानुपपत्तेः, पशौ तद्विधानस्य व्यर्थत्वापत्तेश्च। अतः पर्यग्निकरणोत्तरकाले यूपाद्विमोकरूपस्योत्सर्गस्य प्राप्तस्यैवायमनुवाद इत्याक्षेपे प्राप्ते -

आज्यभागन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानेऽपि नात्र पशोः प्रदेयता, प्रमाणाभावात्; उत्पत्तिवाक्यगतदेवतासम्बन्धस्य दैक्षवत् प्रदेयप्रकृतित्वेनैवोपपत्तेः। यद्यपि नात्र विशसनादिकं तत्तात्पर्यग्राहकं तथापि पर्यग्निकरणमेव प्रदेयप्रकृतिसंस्कारकतया क्लृप्तं पशोः प्रकृतित्वतात्पर्यग्राहकम्। सम्भवति च विशसनाद्यभावेऽपि पश्वारम्भकाणामेव हृदयाद्यङ्गानां स्वदेशस्थितानामेव देवतोद्देशेन स्वत्वत्यागः। अतश्चाप्राकृतकार्यकारितानापत्तेस्सम्भवति पर्यग्निकरणान्ताङ्गरीतिविधानेन अपूर्वता ॥ १२ ॥

---

अत्रोदाहरणं भवत्येवेत्यभिप्रेत्याह—तथा त्वाष्ट्रं पात्नीवतमिति। क्लृप्तोपकारकत्वाभावेनेति। क्लृप्तोपकारकाङ्गपुनश्श्रवणं हि इतराङ्गपरिसङ्ख्यार्थं भवति। न चेदं प्रकृतिवत् पर्यग्निकरणं प्रदेयप्रकृतिभूतोपकारजनकम्। अवयविनः पशोरेवेह यागसम्बन्धेन हृदयादिप्रकृतित्वेनोपयोगाभावात्। अतो नेतरपरिसङ्ख्याफलकत्वमस्य विधेः सम्भवतीति भावः। पशौ तद्विधाने इति। हृदयादिप्रकृतिक एव पशौ यदि पात्नीवतमित्येकवचनानुरोधात् अप्राकृतं पर्यग्निकरणं विधेयं, तदा तादृश एव पशौ प्रकृतित एव तत्प्राप्तमिति व्यर्थस्तद्विधिः। अतः साक्षादेव प्रदेये पशौ अप्राप्तं प्राकृतं पर्यग्निकरणं विधेयम्। तदा नेतराङ्गपरिसङ्ख्या सिद्ध्यतीति भावः। ननु माभूत् परिसङ्ख्याफलकत्वं, किन्तु साक्षात्प्रदेये पशावेवाप्राप्तं पर्यग्निकरणं विधीयतामित्यत आह—प्राप्तस्यैवायमनुवाद इति। यथाप्राप्त्याऽनुवादत्वे सम्भवति न विशिष्टविधिगौरवमाश्रयणीयमिति भावः। स्वत्वत्याग इति। तथा च प्रकृतौ

(१३)—आज्यसंस्थाप्रतिनिधिः स्याद्द्रव्योत्सर्गात् ॥ ५६ ॥ समाप्तिवचनात् ॥ ५७ ॥ चोदना वा कर्मोत्सर्गादन्यैस्स्यादविशिष्टत्वात् ॥ अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥ संस्था तद्देवतत्वात्स्यात् ॥ ६० ॥

---

विशसनाम्नानात् पशोः पृथग्भूतैः हृदयाद्यवयवैर्याग आसीत्। इहतु जीवत्येव पशौ विद्यमानानां तत्तदङ्गानां प्रदेयत्वभावनया त्यागानुष्ठानमिति विशसनाभावेऽपि हृदयादिप्रकृतित्वेनैव विधानं नानुपपन्नमिति भावः।

---

**आज्यसंस्थाप्रतिनिधिः।**

अत्र च प्राचीनैः 'आज्येन शेषं संस्थापयति' इति वचने शेषसंस्थोपादानबलात् पूर्वकर्मासमाप्तमेव यत् तदाज्येन समापनीयमित्यर्थप्रतीतेः न पर्यग्निकरणान्ताङ्गमात्रं कर्तव्यम्। अपि तु पशुना उपक्रान्तस्य यागस्य अग्नीषोमीयविध्यन्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः परित्यागः पशोर्विधीयते। तस्मिन्नुत्सृष्टे साकाङ्क्षस्य कर्मशेषस्याज्येन समापनं विधीयत इति पशोःप्रतिनिधिः आज्यं, न तु कर्मान्तरं आज्यद्रव्यकमेव तत्। तथात्वेऽनुपक्रान्तस्य कर्मणः स्वरूपस्यैव वक्तव्यत्वौचित्येन शेषसंस्थापदयोरनुपपत्तेरिति पूर्वपक्षं प्रापय्य, पूर्ववाक्ये पात्नीवतमिति देवतासम्बन्धानुरोधेन देवतोद्देशेनैव पर्यग्निकरणानन्तरं त्यागात्, मुख्येनैव पशुना उपक्रान्तयागस्य समाप्तेः प्रतिनिध्यपेक्षाया एवाभावे न तत्प्रतिनिधित्वेन विधिः आज्यस्य, देवतोद्देशेन चोत्सर्गस्तु उत्पत्तिवाक्येनैव प्राप्त इति न पर्यग्निकरणवाक्येन विधीयते। अतः अतिदेशप्राप्तपर्यग्निकरणान्ताङ्गरीतिविधानेन इतराङ्गपरिसङ्ख्यैवेति कर्मशेषस्याप्रसक्त्या 'आज्येन शेषम्' इति कर्मान्तरविधायकमिति सिद्धान्तितम्। तत्र 'ईशानाय परस्वत आलभेत' इति वाक्ये पूर्वाधिकरणे द्रव्यदेवतासम्बन्धकल्प्ययागविधौ स्थिते, तेनैव न्यायेन पात्नीवतवाक्येऽपि यागविधानस्य सिद्धत्वात्, केवलं देवतामनुद्दिश्य पर्यग्निकरणोत्तरं पशोः त्यागमात्रस्याशङ्कितुमशक्यत्वेन पूर्वपक्षानुत्थानात्, देवपशुत्यागविधाने सिद्धान्ते स्थिरीकृतेऽपि यागशेषस्याभावेन समापनाऽयोगेन शेषशब्देनानुपादानेऽपि यागोत्तराङ्गाणां शेषशब्देन ग्रहणोपपत्तेः तावतापि पर्यग्निकरणव्यतिरिक्ताङ्गपरिसङ्ख्यायाः कर्मान्तरविधेश्चायुक्तत्वमिति पूर्वपक्षस्संभवत्ये-

पात्नीवतवाक्ये पुनराक्षेपः। तत्र हि 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्युक्त्वा 'आज्येन शेषं संस्थापयति' इति श्रुतम्। अपूर्वत्वे हि शेषसंस्थानुपपत्तेः पर्यग्निकरणवाक्ये पर्यग्निकरणाव्यवहितोत्तरमेव प्रधानयागकर्तव्यताऽपकृष्य विधीयते तत्करणे च विशसनादिपदार्थलोपेऽप्यन्याङ्गलोपे प्रमाणाभावात् शेषं यत् स्विष्टकृत्प्रयाजादि तत् आज्येन संस्थापयतीति विधीयते॥

यद्यपि च प्रयाजादावाज्यं प्राप्तमेव। तथाऽपि स्विष्टकृद्वनस्पतियागादावाज्यविधिर्न विरुध्यते। न च विशसनाभावादेव त्र्यङ्गासम्भवात् 'यस्य सर्वाणि हवींषि' इत्यनेनैव स्विष्टकृत्यप्याज्यप्राप्तिश्शङ्क्या; नाशादिनिमित्ताभावेन तदप्राप्तेः। विशसनस्याङ्गप्रधान-साधारण्येन त्र्यङ्गार्थमपि प्राप्त्युपपत्तेश्च। वनस्पतियागादावाज्यविधेः एवमप्युपपत्तेश्च। न ह्यत्र कर्मान्तरत्वे किञ्चित्प्रमाणमस्ति प्रत्युत शेषसंस्थापदयोरनुपपत्तिरिति प्राप्ते

'यत्त्वग्रारं च वनस्पतिमावाहयासि अथ वैतौ यक्ष्यसि' इति पृष्ट 'त्वाष्ट्री नवमी प्रयाजेज्या वानस्पत्या दशमी अत्रैवैतावपि प्रौ विद्यात्' इति वनस्पतियागस्यान्तरेणा-

वेत्यभिप्रायेण प्राचीनोक्तपूर्वपक्षयुक्तिमुपेक्ष्य पूर्वपक्षमारचयति अपूर्वत्वे इति। पर्यग्निकरण-व्यतिरिक्ताङ्गपरिसङ्ख्ययाऽपूर्वत्वे हि यागप्रयोगस्य सर्वस्यैव पूर्वसमापनात् शेषसमापनयोरनुपपत्तिः। अतो न पर्यग्निकरणमत्र विधीयते; किन्तु अतिदेशप्राप्तपर्यग्निकरणाव्यवधानेन प्रधानयागाप-कर्षमात्रमेव विधीयत इत्यर्थः। वनस्पतियागादाविति। 'वनस्पतिं यजति' इति विधिना स्विष्टकृद्विकारो हि वनस्पतियागो विधीयत इति दशमे वक्ष्यते। तस्मिन् यद्यप्यतिदेशेन पृषदाज्यं प्राप्तं तथापि तद्बाधेन आज्यविधिः सम्भवतीति भावः। एवमप्युपपत्तेश्चेति। अङ्गैः [त्र्यङ्गैः] स्विष्टकृतं यजतीति विधिना अङ्गानां द्रव्यत्वेन प्राप्तिस्त् विशसनाभावादेव न सम्भवति। अत एव त्र्यङ्गाणां नाशाद्यभावेन न नाशादिनिमित्ताज्यविधिनाप्याज्यस्य प्राप्तिः। अस्तु वा द्रव्याद्यभावमात्र एव यस्य सर्वाणीति वचनप्रवृत्तिः, तथापि अङ्गप्रधानसाधारण्येन विहितस्य विशसनस्य त्र्यङ्गार्थमपि सम्भवात् अङ्गाभावो नास्तीति निमित्ताभावादेव न तत्प्राप्तिः। अत एव कदाचिद्विशसनेनाङ्गप्राप्तौ तन्निवृत्त्यर्थमेवाज्यविधिरयम्। वस्तुतस्तु परप्रयुक्त-द्रव्योपजीविनः स्विष्टकृद्यागस्य स्वातन्त्र्येण विशसनानाक्षेपकत्वात् प्रधानयागार्थविशसनाभावे त्र्यङ्गप्राप्तेरभावेन द्रव्याकाङ्क्षयैव स्विष्टकृद्यागेऽपि आज्यविधिरिति न किञ्चिद्बाधकमिति एवमपीति पदद्वयेन सूचितम्। प्रत्युतेति। अनुपक्रान्तस्वरूपस्यापूर्वकर्मणः स्वरूपस्यैव वक्तव्यत्वेन शेषसमापनपदेनाभिधानासम्भवादित्यर्थः। अङ्गान्तरानुग्रहवचनेनेति। होत्रा यथा त्वष्टु-

नुग्रहवचनेनाभावावगतेस्तस्य चापूर्वत्वमन्तरेणानुपपत्ते र्न पूर्ववाक्ये प्रधानापकर्षमात्र-विधिः अपि तु तदन्ताङ्गरीतिविधिरेवापूर्वत्वफलकः ।

यद्यपि चाक्रियमाणस्य वनस्पतियागस्य देवतावाहनमपि नैव प्राप्यते तथाऽपि सिद्धवन्निर्देशान्यथानुपपत्त्यैवावाहनविधिकल्पना । त्वष्टुस्तु प्रधानदेवतात्वादेवावाहना-विरोधः प्रक्षेपाभावाभिप्रायेण च नवम्याऽनुग्रहोक्तिः । अतश्च पूर्वकर्मणि शेषाभावेना-ज्यविधानानुपपत्तेर्गुणात्कर्मान्तरमेवेदमाज्यद्रव्यकमनुषक्तपत्नीवद्देवत्यमुपांशुयाजप्रकृतिकम् ।

---

रावाहनं क्रियते तथा वनस्पतेरपि कृतम् । तत्र प्रश्नः—किं त्वया उभयोरावाहनं क्रियते? तत्किमुभयोर्देवतयोर्यष्टव्यत्वमस्ति? अग्रे वनस्पतियागाभावात् तद्देवतावाहनं व्यर्थमेवेति प्रश्नार्थः । तत्रोत्तरम्—प्रकृतौ दैक्षे पशोर्जीवदवस्थायां दश प्रयाजानामनुष्ठानोत्तरं पशोः पर्यग्निकरणाद्यनुष्ठा-नपूर्वकं विशसनेन वपोद्धरणं कृत्वा एकादशप्रयाजानुष्ठानम् । तच्छेषेण वपामभिघार्य वपायागादयः । इह तु पर्यग्निकरणोत्तरतन्त्रस्य लोपः, तत्पूर्वतनदशप्रयाजानुष्ठानमेवेति क्रमे विद्यमाने प्रधानयागात् पूर्वमनुष्ठीयमाना अष्टौ प्रयाजेज्या अपेक्ष्य नवमी यैव प्रयाजेज्या सैव त्वाष्ट्री । यैव दशमी प्रयाजेज्या सा वानस्पत्त्या ज्ञेयेति । एवञ्च 'अत्रैवैतौ इष्टौ विद्यात्' इति लिङ्गेन नवमदशमप्रयाजेज्याभ्यामेव क्रमेण त्वष्टृवनस्पतिदेवत्ययागसिद्धिप्रतीतेः तदावाहनं न व्यर्थम् । न वा तावताप्यग्रे वनस्पतियाग इति पर्यग्निकरणेन कर्मसमाप्तिरेव प्रतीयत इति भावः । **सिद्धवन्निर्देशेति ।** 'वनस्पतिमावाहयसि' इति सिद्धवन्निर्देशानुपपत्त्या आवाहनविधिकल्पनेऽपि अदृष्टार्थमेव तदित्यर्थः । ननु त्वष्टृदेवत्यप्रधानयागस्य पार्थक्येनानुष्ठाने कथं नवमी त्वाष्ट्री-त्युपपन्नमित्यत आह—**प्रक्षेपाभावाभिप्रायेणेति ।** यद्यपि इज्या पृथगस्ति तथाप्यत्र याग-मात्रस्यैव सत्वेन प्रक्षेपाभावे सति नवमप्रयाजप्रक्षेपमात्रांशेऽनुग्रहं सूचयितुमुक्तं नवमीत्वं न व्याहतमिति ज्ञेयम् । **अनुषक्तपत्नीवद्देवत्यमिति ।** तथा च पूर्वस्मिन् पत्नीवद्यागे आज्यरूपगुणस्य करणत्वेन निवेशासम्भवात् पूर्ववाक्यगतपात्नीवतमिति पदानुषङ्गेण तृतीयार्था-विवक्षया पात्नीवतमाज्यं कुर्यादित्यवान्तरवाक्यार्थे द्रव्यस्य देवतासम्बन्धावगमोत्तरं यागलक्षणायां पात्नीवतेनाज्येन यजेतेति कल्पितविधिना विशिष्टयागान्तरं विधीयते । संस्थाशब्दस्तु सौर्य-वाक्ये निर्वपतिवत् यत्किञ्चिदनूच्चारणे कर्तव्ये सर्वस्यापि कर्मणः प्रारब्धस्य समाप्त्यव्यभिचारेण

शेषसंस्थाशब्दौ तु पूर्वस्य कर्मणोऽसमाप्तप्रायतया कथञ्चिदनुवादकाविति। सिद्धस्त्रिविध ऊहः ॥१३॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
नवमस्याध्यायस्य चतुर्थः पादः
अध्यायश्च समाप्तः

---

यागलक्षकस्सन्नुपात्त इत्यनुवादः; तदनुरोधिनी तृतीयापि। शेषशब्दोऽपि पूर्वस्मात् पशुयागादुत्पत्तिकर्तव्यतावान् तदनन्तरश्च क्रियमाणः तद्देवताकत्वाच्च तच्छेष इवेत्युपमया नेय इति न किञ्चिद्बाधकम्। तदेवं साधितं मुख्योहरूपमध्यायार्थमुपसंहरति— सिद्धस्त्रिविध ऊह इति।

इति श्रीमत्पूर्वोत्तरमीमांसापारावारपारीण-
धुरीणश्रीखण्डदेवान्तेवासि-
कविमण्डनशम्भुभट्टकृतायां
भाट्टदीपिकाप्रभावल्यां
नवमाध्यायस्य
चतुर्थः पादः
अध्यायश्च
समाप्तः

---